श्रीनरसिंहवाजपेयिकृतः

# नित्याचारप्रदीपः

## (पञ्चमभागकृत्यादिः)

सम्पादकः

पण्डितश्रीकुलमणिमिश्रश[illegible]




श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्

पुरी।

उत्कलाः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठप्रकाशनस्य
पञ्चमपुष्पम्

महामहोपाध्यायाग्निचिद्वाजपेयिश्रीनरसिंहमिश्रविरचितः

# नित्याचारप्रदीपः

( पञ्चमभागकृत्यादिः )

धर्मशास्त्रसाहित्याचार्यवेदशास्त्रिणा
शास्त्रचूडामणिप्राध्यापकेन
**पण्डितश्रीकुलमणिमिश्रशर्मणा**
सम्पादितः



प्रकाशकः

**डॉ० हरिहरझा**

साहित्याचार्यः व्याकरणाचार्यः M. A., Ph. D., D. Litt.
प्राचार्यः
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्
पुरी, उत्कलाः

*Publication No- 5*

SHREE SADASHIVA KENDRIYA SAMSKRIT VIDYAPEETHAM

# NITYĀCĀRAPRADĪPA

*by*

**Mahamahopadhyaya Narasimha Mishra Vajapeyee**

*Edited by*

Pt. Kulamani Mishra Sharma

Dharmashastracharya, Sahityacharya, Vedashastri,
Ex-Lecturer.in Dharmashastra
Shree Sadashiva Kendriya Samskrit Vidyapeetham, Puri, Orissa



*Published by*

Dr. Harihar Jha

Sahityacharya, Vyakaranacharya,
M. A., Ph. D., D. Litt, Principal,

Shree Sadashiva Kendriya Samskrit Vidyapeetham, Puri, Orissa
1984

# प्राक्कथनम्

विद्वन्मूर्द्धन्यस्य श्रीमतो नरसिंहवाजपेयिनः अयं नित्याचारप्रदीप एक उपादेयो ग्रन्थः 'एसिआटिक् सोसाइटि' द्वारा यद्यपि अस्य मुद्रणमारब्धं तथापि पूर्णतां न प्राप। अस्य पञ्चमभागप्रभृतिरंशः अद्यापि तमसाच्छन्नोऽभूत्। सौभाग्यादस्मदीये श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे अमुद्रित-ग्रन्थांशस्य मातृकाद्वयमासीत्। तयोरेका जीर्णकीटदष्टतालपत्रपुस्तकरूपा अपरा सदाशिवसंस्कृतमहाविद्यालयपण्डितसमितिद्वारा कर्गजपत्रेषु उद्धृता। तयोः संवादपूर्वकमयं नित्याचारप्रदीपः श्रीजगन्नाथदेवस्य निःसीमकरुणया सम्प्रति सम्पूर्णतया प्रकाशितोऽस्ति। अस्मिन् ग्रन्थांशे उत्पाताद्भुतादयोऽनेकेविषया निवेशिताः सन्ति, ये नूनं जनानामुपकारं साधयिष्यन्ति। अस्मिन् प्रकाशनकर्मणि संलग्नेभ्यो धन्यवादं प्रदाय विद्यापीठग्रन्थमालाया इदं पञ्चमपुष्पं विद्वज्जनानां मनांसि नितरां प्रीणयिष्यतीति आशास्य विरम्यते इति।

डॉ० हरिहर झा
प्राचार्यः
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्
पुरी (उत्कलाः)

दीपावल्युत्सवः
ता १२-११-१९८५

# प्राग्व्याहृतिः

विदितमस्ति तत्र भवतां समेषां विदुषां यदस्माकं गौरवोज्ज्वला पुण्यभूमिर्भारतदेशो धर्मप्रधानदेश इति सुचिरं विख्यातिमलभत । स च धर्म ऋगादिचतुरात्मभिर्नानाशाखोपबृंहितैर्निखिलज्ञानरत्नाकरैर्भगवद्भिर्वेदैस्तदनुगतमन्वादिस्मृतिभिश्च यद्यपि निर्बभौ, तथापि आचारे एवास्य सम्यक् प्रतिफलनमागतम् । अतएवैके विपश्चितो दृष्टिभेदेन आचारमेव धर्मस्य मूलमामनन्ति ।

"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनमिति" ।

आचारश्चायं श्रुतिस्मृतीतिहास-पुराण-पाञ्चरात्रागमायुर्वेद-ज्योतिर्वेदाद्यखिलशास्त्रप्रभावपरिपुष्टः सुविपुलं कलेवरं धत्ते । तस्य प्रख्यापनाय बहवः स्मृतिनिबन्धा रचिताः प्रदेशभेदेन भारतीयप्राचीनाचार्यैः ।

अत्राप्यस्माकमुत्कलदेशे शतानन्दशम्भुकरविद्याकर-बृहस्पति-नरसिंहवाजपेयि - विप्रमिश्र - विश्वनाथमिश्र - दिव्यसिंहमहापात्र-गदाधरराजगुरुप्रभृतयः पाण्डित्यपूर्णग्रन्थनिर्माणेन तन्मार्गमालोकितं कृतवन्तः ।

### नरसिंहवाजपेयिनः कृतयः—

एतेषु महामहोपाध्यायेन अग्निचिन्नरसिंहमिश्रवाजपेयिना अष्टादश निबन्धा प्रदीपसंज्ञया निबद्धा इति लोकमुखेषु उक्तिपरम्परा अस्ति । तेषु अष्टादशसु—

१. चयनप्रदीपः याज्ञिको ग्रन्थः । तदुपरि अस्मदीयस्थानापन्नः श्रीमान् डॉ० किशोरचन्द्रमहापात्रः शोधकार्यमकरोत् ।

२. भक्तिप्रदीपः तालपत्रपुस्तके प्रायश्चिशतपत्रपरिमितो यौवने मया व्यलोकि । नित्याचारप्रदीपस्य प्रथमभागकृत्ये १।२४६ पृष्ठे "सर्वं

चैतदस्माभिर्विस्तरेण भक्तिप्रदीपे प्रपञ्चितमिति नेह प्रणीयते" इति ग्रन्थकृतापि तस्य निर्देशो दत्तः । अन्येऽपि सप्तप्रदीपग्रन्थास्तत्र प्रदर्शिता यथा—

३. वर्षप्रदीपः । प्रथमभागकृत्ये १/७७ पृष्ठे ऋतुप्रकरणे "विस्तरेण चैतत् वर्षप्रदीपे प्रपञ्चितमस्माभिः" इति ।

४ प्रायश्चित्तप्रदीपः । द्वितीयभागकृत्ये २-१४१ पृष्ठे "जन्मान्तरमहापातकिनां तु तच्चिह्नासत्त्वेऽपि यथाकर्मानधिकारस्तथोक्तं प्रायश्चित्तप्रदीपेऽस्माभिः" इति ।

५. श्राद्धप्रदीपः । तृतीयभागकृत्ये २-२८८ पृष्ठे "विप्रब्राह्मणकश्राद्धं च कुर्वन्ति । व्यक्तं चैतदस्मत्कृते श्राद्धप्रदीपे" इति ।

६. प्रतिष्ठाप्रदीपः । तृतीयभागकृत्ये २-३९५ पृष्ठे पञ्चरात्रानुसारेण प्रतिष्ठाप्रदीपे अस्मत्कृते विस्तरेणोक्ता" इति ।

७. शाबरभाष्यप्रदीपः । तृतीयभागकृत्ये आहिताग्निप्रवासप्रकरणे २-५३४ पृष्ठे "सदाचारस्मृत्योर्विध्यर्थनिर्णायकत्वेन प्रामाण्यमिति शाबरभाष्यप्रदीपे प्रपञ्चितमस्माभिः" इति । अत्र यद्यपि 'शाङ्करभाष्यप्रदीपे" इति मुद्रितं, तथापि पाठान्तारानुगृहीतशाबरभाष्यप्रदीप इति पाठं युक्तं मन्ये ।

८. प्रतिमाप्रदीपः 'पुत्रलाभप्रयोगे ३२७ पृष्ठे बलभद्रलक्षणमस्मत्कृते प्रतिमाप्रदीपेऽनुसन्धेयमिति ।

९. शान्तिप्रदीपः । तत्रैव ३२७ पृष्ठे लक्षहोमश्चास्मत्कृते शान्तिप्रदीपे इति ।

१०. शान्तिकपौष्टिकप्रदीपः । अन्यत्र शान्तिकपौष्टिकप्रदीपस्य नाम दृश्यते ।

११-१२. एतद्भिन्नौ समयप्रदीपव्यवस्थाप्रदीपौ केदारनाथमहापात्रेण दर्शितौ । इत्थं साकल्येन नित्याचारप्रदीपमादाय त्रयोदश प्रदीपा विज्ञाता भवन्ति । अपरे पञ्च प्रदीपा नामतो न ज्ञायन्ते । उक्तेषु नित्याचारप्रदीप-चयनप्रदीप-प्रतिष्ठाप्रदीपा लभ्यन्ते । अन्ये प्रदीपग्रन्थाः क्वापि प्रच्छन्नाः कालगर्भे विलीना वेति संशयः ।

## नित्याचारप्रदीपः—

नित्याचारप्रदीपः नरसिंहवाजपेयिनः प्रदीपग्रन्थमालायामेकः प्रमुखग्रन्थः । स च विद्याकरवाजपेयिनो नित्याचारपद्धतिमनुकृत्य लक्ष्मीधरस्य कृत्यकल्पतरुमनुसृत्य प्रवृत्तः । यतोऽत्र बहुश एतौ नाम्ना ग्रन्थतश्च समुद्धृतौ । प्राचीनोऽपि प्रसिद्धोऽपि शम्भुकरश्चात्र नोदाह्रियते । शूलपाणेरप्यत्र चर्चा न लक्ष्यते, यस्य मतं विप्रमिश्र-दिव्यसिंहमहापात्र-गदाधरराजगुरुप्रभृतयः खण्डयन्ति ।

अत्र दक्षस्मृतिनिर्देशानुसारं सूर्यास्तावधिको दिवसभागः कर्मापेक्षया अष्टधा विभक्तः । रात्रिरपि सायंकाल-भोजनकाल-तदुत्तर-कालभेदेन विभक्ता । उक्तेषु विभागेषु शास्त्रविहितानि निषिद्धानि च कर्माणि तथा प्रसङ्गतश्चान्यान्यपि बहूनि शास्त्रतत्त्वानि प्रयत्नत उपनिबद्धानि । साग्निकविधेयानि वैदिककर्माणि, हरिहरादिदेवानां पूजावन्दनादीनि,रोगहराणि दानजपादीनि,ग्रहपूजादीनि, पुत्रप्राप्त्यर्थ-कानि च महत्त्वपूर्णानि कर्माण्यत्र संगृहीतानि । आचाराधिकारिकः सकलो विषयोऽत्रास्ते इति नापह्नवः । अत्र विभिन्नशास्त्रतत्त्वानि यद्यप्युदाहृतानि तथापि मीमांसादर्शनस्य महान् भागोऽस्ति । सर्वत्र विचारेषु मामांसामाश्रित्य निर्णयः क्रियते । सम्पूर्णे उत्कलदेशे नित्याचारप्रदीपस्य महती प्रतिष्ठा आसीत् । अतएव राज्यसंग्रहालये पुरातनपुस्तकालयेषु गृहेषु चास्य मातृका लभ्यन्ते, बाहुल्येन चतुर्थभा-गान्ता एव । पञ्चमभागादिभागो यः सम्प्रति प्रकाश्यते सोऽतीव विरलः राज्यसंग्रहालयादौ न लब्धः ।

## नरसिंहवाजपेयी —

नरसिंहवाजपेयी एकः सुमहान् पण्डित आसीदिति तस्य ग्रन्था सुदृढमवगमयन्ति । अष्टादशानां महत्वपूर्णग्रन्थानां कर्त्तृत्वेन स चिरजीवी आसीदिति अनुमीयते । नित्याचारप्रदीपस्य प्रारम्भे

षोडशभिः श्लोकैः स आत्मवंशस्य आत्मनश्च परिचयमदात्। ततः स कौत्सगोत्रीयो मिश्रोपाधिकश्चासीदिति ज्ञायते।

१. मृत्युञ्जयः—तस्य पूर्वतनः अष्टमः पण्डितमृत्युञ्जयमिश्रः शुद्धिमुक्तावलिग्रन्थस्य कर्त्ता देवप्रासादकर्त्ता याज्ञिकश्चासीत्।

२. गोपीनाथः— मृत्युञ्जयमिश्रस्य पुत्रः गोपीनाथमिश्रः।

३. जलेश्वरः— गोपीनाथपुत्रौ जलेश्वरनारायणौ। तत्र नारायणः अल्पीयसा कालेन सर्वां विद्यां लब्ध्वा षोडशवत्सरे योगमार्गेण नारायणे लीनः।

४. नरसिंहः—जलेश्वरवाजपेयिनः नरसिंह-धनञ्जय-गङ्गाधराखण्डल-मृत्युञ्जया पञ्च पुत्राः। तेषु ज्येष्ठः नरसिंहः संक्षेपशारीरके वार्त्तिकमकरोत्। षण्मासदीक्षाव्रतेन यज्ञनिरत आसीत्। वाराणस्यां गङ्गायां लीनोऽभूत्। स प्रदीपकृतः पूर्वतनः पञ्चमः।

५. देवानन्दः— नरसिंहमिश्रस्य देवानन्दबलभद्रादयः षट् पुत्राः। तेषु ज्येष्ठः देवानन्दः चयिनी यज्ञविद्याधुरीणश्चास। बलभद्रोऽपि भट्टतन्त्रे निपुणः। देवानन्दः ग्रन्थकर्त्तुः प्रपितामहः।

६. धराधरः— देवानन्दमिश्रचयिनिनः वामदेव-वर्द्धमान माधव-भुवनेश्वर-वीर-धराधर-गदाधर-रविनामानः अष्टौ पुत्राः। सर्वे ते विद्वांसः अग्निहोत्रिणः सच्चरित्राः प्रियाप्रियभेदभावशून्याः सात्त्विका आसन्। एषां षष्ठः धराधरमिश्रः नित्याचारप्रदीपकर्त्तुः नरसिंहस्य पितामहः।

७. मुरारिमिश्रः— धराधरमिश्रस्य विघ्नेश्वर - मुरारि - पीताम्बर-वासुदेव-नारायण-श्रीपति-केशव-चक्रेश्वर-जयदेव-कृष्णाख्याः दश पुत्राः समभवन्। एषु द्वितीयो मुरारिमिश्रः नृसिंहोपासक आसीत्। स नृसिंहवाजपेयिनः पिता।

८ नरसिंहवाजपेयी — वेदान्तविदः मुरारिमिश्रात् नरसिंहोपासनया नरसिंहः संजातः। स ज्येष्ठपितृव्यात् विघ्नेश्वरात् विद्या लेभे। उक्तं च ग्रन्थकृता—

"मुरारिपूजार्जितविद्ययोर्जितो मुरारिरासीच्छ्रुतिमौलिपारगः।
निरन्तरं श्रीनरसिंहसेवया नृसिंहनामाजनि तस्य चात्मजः ॥ २०
श्रीमद्विघ्नेश्वरगुरोः प्राप्तविद्येन तेन च।
नित्याचारप्रदीपोऽयं नृसिंहेन प्रणीयते ॥ २१ इति।

अस्य ग्रन्थकर्त्तुः नृसिंह इति नरसिंह इति च द्विधा नाम्नो व्यवहारोऽस्ति। अस्य सर्वे पूर्वजा धार्मिका याज्ञिका नानाशास्त्रविदः अग्निहोत्रिणश्चासन्। यज्ञविद्या तेषां कुलक्रमागता चासीत्।

नरसिंहः क्वचिदपि राज्ञां नाम न सूचयति। तेनासौ स्वाधीनचेता आसीत्, नृपानुगतो नासीत् इति प्रतीयते।

## प्रदीपकर्त्तुर्देशः

प्रदीपकारः स्ववंशवर्णनश्लोकेषु मृत्युञ्जयपण्डितविषये 'येनोत्कलो भूषित एष देशः' (५) इति स्ववृद्धप्रपितामहस्य नरसिंहस्य वर्णने "अद्वैतागममुत्कलेऽवतरयन्" इति च वारद्वयमुत्कलशब्दं व्यवजहार। तथा नित्याचारप्रदीपस्य मङ्गलाचरणे प्रथमं नीलाद्रिनाथं जगन्नाथं तदनु एकाम्रनाथं भुवनेश्वरदेवं लक्ष्मीनृसिंहौ गोपीनाथं च यथाक्रमं स्तौति। अत्र उत्कलदेशे मुख्यतया प्रसिद्धयोः श्रीजगन्नाथ-श्रीलिङ्गराज-देवयोः स्तवनेन वंशवर्णनप्रस्तावे वारद्वयमुत्कलशब्दकीर्त्तनेन च नरसिंहः स्वयमेवात्मानमुत्कलदेशजातं तथा पुरुषोत्तमभुवनेश्वरक्षेत्रयोर्मध्यवर्त्तिनं च व्यनक्ति। पुनश्च—

"प्रासादे स्वकृते हरिं परिचरन्नासीदमुष्मिन् कुले-
मीमांसार्णवकर्णधारतरुणो मृत्युञ्जयः पण्डितः" (६)

इति पद्ये ग्रन्थकृता प्रदर्शितः तत्पूर्वपुरुषमृत्युञ्जयपण्डितकृतः प्रासादः

पुरुषोत्तमक्षेत्रात् क्रोशषट्कदूरवर्त्तिनि साक्षिगोपालपश्चिमभागस्थे समशरखुराभिधे ग्रामे वर्त्तमानः गोपीनाथदेवस्य आलयो भवेत्। तत्रैव मन्दिरगात्रे वामभागे शिष्योपशिष्यवेष्टिता ब्राह्मणमूर्त्तिरद्यापि चकास्ति। तत्रापि किंवदन्ती प्रचलति यत् नरसिंहवाजपेयिपुत्रेण सोमेश्वरवाजपेयिना तन्मन्दिरं निर्मितं, स च सोमेश्वरखुरनामा ग्रामः संस्थापितः इति। कालक्रमेण तस्यापभ्रंशः समशरखुर इत्यभूत्। मृत्युञ्जयकृतजीर्णमन्दिरस्य नरसिंहपुत्रेण पुनर्निर्माणं नासम्भवम्। मद्गुरुपादैः प्रधानाचार्यपण्डितश्रीआनन्दमिश्रमहोदयैरपि नरसिंह-वाजपेयिन आवासः समशरखुरग्रामस्य समीपे देवमन्दिरस्य पश्चाद्भागे आसीदिति उक्तम्। अतएव तत्रैव नरसिंहवाजपेयिन उत्पत्तिरभूदिति निष्कर्षः।

## वाजपेयिनः कालः—

नरसिंह आत्मनः सुदीर्घं वंशक्रमं दर्शयन्नपि स्वस्य कालं तात्कालिकं नृपतिं वा न दर्शयामास। अतस्तस्य समयः सम्यक् ज्ञातुं न शक्यते। धर्मशास्त्रेतिहासकृता काणेमहोदयेनापि तद्विषये तूष्णींभावोऽवलम्बितः। अतएवात्र स्वर्गतस्य ऐतिहासिकस्य केदारनाथमहापात्रस्य निर्णय एव परं शरणम्। तन्मते नरसिंहः षोडशशताब्द्या मध्यभागे १५२०-१५८० मध्ये आसीत्।

ऐतिहासिको महापात्रः "आइन् इ आकवरी" पुस्तके वर्णित उत्कलीयो नरसिंहपण्डितः वाजपेयिनरसिंहान्नान्यः, इति मन्यते। यतः तद्वंशावलिश्लोकास्तमेवार्थं बोधयन्ति। यथा—

"विजित्य वादेन सभान्तराले तं गौडदेशागततार्किकेन्द्रम्।
मुकुन्दभूमीनृपतेर्जगाम नानाविधानुग्रहपात्रतां यः॥ २७
दिल्लीश्वरं यः परितोष्य वाग्भिः विद्याभिरष्टादशभिः प्रवीणः।
मुकुन्ददेवस्य प्रशस्तवाचः समानयत् सर्वजनस्य मध्ये॥ ३१

मुकुन्ददेवोऽयं उत्कलदेशस्य अन्तिमस्वाधीननृपतिः गजपतिमुकुन्ददेवः आकवरवादसाहस्य समकालिकः । स. १५५९ त: १५६८ पर्यन्तं राजत्वमकार्षीत् । अतस्तत्कालवर्त्तित्वेन नरसिंहोऽपि तात्कालिकः ।

अपिचात्र नरसिंहस्य उत्तरपुरुषत्वेनात्मानं परिचाययता श्रीमता शरच्चन्द्रमिश्रेण सम्प्रति भुवनेश्वरे उच्चमाध्यमिकविद्यालये संस्कृतं पाठयता नरसिंहस्तस्य पूर्वतनो दशम इत्युच्यते । स वदति तस्मात् पूर्वतनः षष्ठः रामचन्द्रमिश्रः मल्लविद्याधुरीणः, तस्य रामचन्द्रस्य पूर्वतनश्चतुर्थो नरसिंह इति । रामचन्द्रविषये रघुनाथ-राजगुरुकृतं पद्यमुदाहरति यथा—

''तस्याऽऽसीन्मल्लविद्यागुरुरखिलकलाकोविदो कोविदेन्द्रो
मिश्रः श्रीरामनामा द्विजकुलतरणिः कौत्सवंशावतंसः ।
नित्याचारप्रदीपं मुनिरिव विदधे धर्मशास्त्रप्रदीपं
तुर्यो यत्पूर्ववंशेष्वपि निगमगुरुर्वाजपेयी नृसिंहः ॥

(तस्य - खानखिमुण्डिराज्यनृपतेः)

एतेन प्रायः पञ्चपञ्चाशदवर्षवयस्कस्य शरच्चन्द्रस्य प्राचीनः दशमः नरसिंहः सप्तदशशतकस्य मध्यभागे स्थातुमर्हति । यदि नाम नरसिंहश्चास्य एकादशः स्यात्, पुनश्च दीर्घायुः स्यात् तर्हि षोडश-शताब्द्याः प्रान्तभागेऽपि जीवितुमर्हादिति सुधीभिर्विभावनीयम् । वस्तुतस्तु वाजपेयिनोऽस्य कालनिर्णयाय पुनरपि गभीरमनुसन्धान-मपेक्ष्यते ।

## मुद्रणम्

पुरा तालपत्रपुस्तकैरेव पठनपाठनव्यवहार आसीत् । सम्प्रति तालपत्रपुस्तकानि लिखितुं पठितुं च जना नेच्छन्ति न शक्नुवन्ति च । अतः उपादेयपुस्तकानां सर्वथा मुद्रणमावश्यकम् ।

अस्य ग्रन्थरत्नस्य प्रथमभागकृत्यं ८०४ पृष्ठात्मकं १९०७ ख्री. वर्षे वङ्गीयएसिआटिक् सोसाइटि (Asiatic Society) द्वारा विनोदविहारिभट्टाचार्याणां सम्पादकत्वेन मुद्रितम्। पुनश्च तयैव संस्थया १९२८ ख्री. वर्षे विनोदविहारिभट्टाचार्याणां तथा प्रथितयशसां महामहोपाध्यायश्रीसदाशिवमिश्राणां च सम्पादकत्वेन द्वितीयभागकृत्यादिचतुर्थभागकृत्यान्तो द्वितीयभागः ७२५ पृष्ठात्मकः प्रकाशमगात्। ततः परं ग्रन्थस्यावशिष्टांशः अद्यापि लोकलोचनं नागच्छत्।

अस्यैव अप्रकाशितस्य नित्याचारप्रदीपांशस्य समुद्धाराय सदाशिवसंस्कृतमहाविद्यालयाध्यापकानां पण्डितसमित्या बहुवर्षेभ्यः पूर्वं चेष्टितम्। २६-७-५४ दिवसे मीमांसाध्यापकस्वर्गतसुदर्शनपाठिनां सम्पादकत्वे प्रथममस्य तालपत्रादुद्धारविषयकः प्रस्तावो गृहीतः। पुनश्च ३०-७-५५ दिवसे मम सम्पादकत्वे तदेव कार्यं समारब्धम्। तालपत्रपुस्तकादुद्धारकेषु द्वौ उत्साहसम्पन्नौ पण्डितकाशीनाथमिश्रपण्डितनारायणमहापात्रौ दिवं गतौ। अन्ये विद्वांसः पण्डितश्रीचिन्तामणिमिश्रशर्माणः प्रधानाचार्योपाधिकाः सम्प्रति अत्र विद्यापीठे शास्त्रचूडामणिप्राध्यापकत्वेन विराजन्ते। तदानीमुद्धृतमपि पुस्तकं प्रकाशं न प्रापितमर्थाभावात्।

अथ संस्कृतमहाविद्यालयस्य केन्द्रीयविद्यापीठत्वे जाते शोधसहायकत्वेन सम्प्राप्तेषु श्रीनरसिंहबाबुजीदेउलेशास्त्रिषु अस्यैव मुद्रणं प्रथमं प्रस्तावितम्। श्रीदेउलेमहाभागाः अपरिचितान्यप्युत्कलाक्षराण्यभ्यस्य तस्य नागरलिप्या प्रतिलिपिं सम्पादितवन्तः। ततः संस्थानेन प्रकाशनादेशे लब्धे तात्कालिकप्राचार्यैः डॉ० जयदेवगाङ्गुलिशास्त्रिमहोदयैरस्या मातृकाया मातृकान्तरेण सह संवादः स्वयमारब्धः आयुष्मतः किशोरचन्द्रमहापात्रस्य तदानीन्तनशोधसहायकस्य साहाय्येन।

अथ समागतेषु साक्षादुद्योगमूर्त्तिषु प्राचार्य श्रीहरिहरझा-महोदयेषु तालपत्रमातृकाहस्तलिखितमातृकयोः ख,क,संज्ञया चिह्नितयोः

संवादार्थं मया सह श्रीन. वा. देउलेशास्त्रि-श्रीवैद्यनाथमिश्रौ नियोजितौ। ततः परं मया ग्रन्थं संशोध्य पाठान्तराणि निर्दिश्य, मुद्रितपाठानि अन्विष्य यथासम्भवमध्यायाङ्कादिसूचनापूर्वकं तानि सन्निवेश्य आशुबोधाय वाक्यपुञ्जान् वर्गीकृत्य प्रमाणप्रमेयांशौ स्थूलसूक्ष्माक्षराभ्यां प्रविभज्य पुस्तकस्यास्य प्रकाशनोपयोगिता सम्पादिता । मुद्रित-पुस्तकानां अध्यायश्लोकाद्यङ्का उद्धृतपाठानां दक्षिणपार्श्वे ( ) बन्धनमध्ये स्थापिताः ।

अथ प्रकाशितग्रन्थांशस्य शुद्धपाण्डुलिपिसम्पादनाय आयुष्मान् डॉ० जयकृष्णमिश्रः तदनु श्रीमान् सदानन्ददीक्षितश्च आचार्यमहोदयै-र्नियोजितौ यौ सम्प्रति यथाक्रमं श्रीजगन्नाथसंस्कृतविश्वविद्यालये श्रीजगन्नाथवेदकर्मकाण्डमहाविद्यालये चाध्यापकौ संजातौ । मुद्रित-पाठानुसन्धानकर्मणि श्रीमता जयकृष्णेन प्रभूतं साहाय्यं कृतम् । सम्प्रति आयुष्मता खगेश्वरमिश्रेणापि प्रकाशनस्य त्वरिततासम्पादनाय उद्यमः क्रियते । इत्थं बहूनामुद्यमेन विशेषतः आचार्यश्रीहरिहरझामहोदयाना-मदम्योत्साहेन च पुस्तकमिदं लोकलोचनमागच्छतीति सहायकेभ्यो गुरुभ्यः प्रणामं बन्धुभ्यो धन्यवादं शिष्येभ्य आशीर्वादं च प्रदाय नरसिंहग्रन्थानामाशुसमुद्धाराय भगवतः श्रीजगन्नाथदेवस्य कृपां प्रार्थये । इतिशम् ।

विदुषां विधेयः

**श्रीकुलमणिमिश्रः**

शास्त्रचूडामणिप्राध्यापकः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्

पुरी

संस्कृतदिवसः

ता ११.८.८४

# नित्याचारप्रदीपस्य विषयानुक्रमणिका

श्री नरसिंहवाजपेयिकृतः

# नित्याचारप्रदीपः

— ❋ —

श्रीकृष्ण[1]ः । अविघ्नमस्तु ।

[2]भगवति नरसिंहे दानवाधीशवक्षः-
स्थलविदलनकोपज्वालया दुर्निरीक्ष्ये ।
सकलभुवनदाहक्लेशभीतैरमर्त्यै-
र्विहितजघनवासा पातु वः श्रीः सहासा ॥

—❋—

## [3]पञ्चमभागकृत्यम्

[4]दक्षः (२-५/६)

"पञ्चमे च तथा भागे संविभागो यथार्हतः ।
देवपितृमनुष्याणां कीटानां चोपदिश्यते" ॥

यथार्हतो यथायोग्यम् । उद्वाहानन्तरं

[A]संवर्त्तः (३४/३५)

"ततः पञ्च महायज्ञान् कुर्याद्दहरहर्द्विजः ॥
न हापयेत्तु तान् प्राज्ञः श्रूयते हि श्रुतावपि ।"

---

**खपुस्तकपाठः—**

(1) श्री गणेशाय नमः (2) अयं श्लोकः नास्ति (3)अथ पञ्चम. (4)तत्र दक्षः

**मुद्रितपुस्तकपाठः—**

(A) कृत्यकल्प– नियत– पृ १४२ । तत्र श्रूयन्ते इति पाठः ।

संवर्त्तस्मृतौ तु "अतः पञ्चमहायज्ञान् कुर्यादहरहर्द्विजः ।
न हापयेत्तु तान् शक्तः श्रेयस्कामः कथञ्चन" ॥ इति ।

[A]व्यासः-

वैवाहिकेऽग्नौ कुर्वीत पञ्च यज्ञानशेषतः ।

आपद्यपि हि कष्टायां पञ्च यज्ञान् न हापयेत् ॥

स्वर्गापवर्गयोः प्राप्तिर्महायज्ञैः[1] प्रचक्षते ।

[B]गौतमः- (१-५-३.५)

"देवपितृमनुष्यभूतर्षिपूजकः । नित्यस्वाध्यायः ।

पितृभ्यश्चोदकदानम् । यथोत्साहम्[2] ।

मनुष्यपूजाऽतिथिपूजा । भूतपूजा - बलिरूपा । ऋषिपूजा - ब्रह्मयज्ञः । पञ्चयज्ञानुष्ठानासमर्थं प्रत्याह नित्यस्वाध्याय इ[3]त्यादि । ब्रह्मयज्ञ-तर्पणाभ्यां पञ्चयज्ञकार्यसिद्धिरशक्तस्येत्याशयः ।

जाबालिः[4]–

"अहन्यहनि कर्त्तव्यं पितृदैवतपूजनम् ।

हन्तेति हन्तकारं च मनुष्येभ्योऽपि याचनम् ॥'

मनुः- (३-६८.६९)

"पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।

कण्डनी चोदकुम्भश्च वध्यन्ते[D] यास्तु वाहयन् ॥

तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।

---

खपुस्तकपाठः—

(1) पञ्चयज्ञैः (2) ०त्साहमन्यत् (3) इति वचनात् (4) जाबालः

मुद्रितपुस्तकपाठः—

(A) कृत्यकल्प–नियत पृ १४१ । (B) यथोत्साहमन्यत् (१-५-५) कृत्यकल्प-नियत-पृ १४३ । (C) पावनम् –कृत्यकल्प–नियत १४३ (D) वध्यते ।

पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्''॥

अत्र नित्यकर्मणामुपात्तदुरितक्षयः फलम् । उपात्तदुरितं च सूनाजन्यं प्रस्तुतम् । तथा च तत्क्षय[1] एव फलम् । तदभावे दुरितान्तरक्षय इत्यर्थः । छन्दोगपरिशिष्टे कात्यायनः (२-२५.२८)

पञ्चानामथ सत्राणां महतामुच्यते विधिः ।
यैरिष्ट्वा सततं[2] विप्रः प्राप्नुयाद् ब्रह्मणः पदम् ।(२५)
देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् ।
महासत्राणि जानीयात् त[3] एवेह महामखाः ॥ (२६)

इदं च सततानुष्ठानरूपावृत्तिप्रयोगफलम् । ब्रह्मणः प[4]दं संयोगपृथक्त्वेन बोध्यम् । तथा—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । (२७)
श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथाऽपि वा ।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते । (२८)

अध्यापनस्य ब्रह्मयज्ञत्वं वैकल्पिकम् । तर्पणस्य पितृयज्ञत्वं । बलिदाननित्यश्राद्धाशक्तस्य । बलिदानमात्रं पितृयज्ञः इत्यर्थः ।

**मनुः**– (३-७३.७४)

''अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्म्यं हुतं प्राशितं च पञ्चयज्ञान् प्रचक्षते ॥ (७३)
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।

---

**ख पाठः**—

(1) तत्क्षयः फलम् (2) सन्ततं (3) तत्सर्वं हि महातपः । (4) पदमिति ।

**मुद्रित पाठः**—

(A) ''तत्सद्म शाश्वतम्'' कृत्यकल्प-नियत. पृ १४५ ।

ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम्" ॥ (७४)

हारीतस्मृ[A]तौ-

"यच्छिष्टं प्राश्नाति स यजमानभागः ।
तस्यैतदाहुः प्राशित"मिति ॥

यज्ञशेषभोजनं प्राशितमित्युक्तम् । तत्रैव तदेतद्वचोक्तम्—

'सायं प्रातरुपक्लृप्तं प्रजा[1]नां यो निर्यात्यामृतमनृणोऽत्ति विद्वान् । भागं देवेभ्योऽप्रदा[2]योपक्लृप्तमघं पापीयानश्नुतेऽप्रचेताः । तस्मादहरहर्जुहुयादन्नाभावे येन केनचिदाकाष्ठात् । देवेभ्यश्चापो निसर्गात् । पितृभ्यश्चापां[B] निवापात् । भूतेभ्यश्चापां[C] निसर्गात् । मनुष्येभ्यश्चो[3]दपात्राणि दद्यात्' ।

तदेवमावश्यकत्वमृचोक्तम्—

"तथा[4] च शतपथश्रुतिः (११ का. ३ प्र. ब्रा १-२)

"पञ्चैव[5] महायज्ञाः । तान्येव महासत्राणि । भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति । अहरहर्भूतेभ्यो बलिꣳहरे[6]दि"ति । "तथैतं भूतयज्ञꣳ समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतं पितृयज्ञꣳ समाप्नोत्यहरहः स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञꣳ समाप्नोति" ।

आ उदपात्रादित्यन्नाभावे जलपात्रमपि दद्यादित्यर्थः । तथाऽऽकाष्ठादिति होमसाधनान्नाद्यभावे काष्ठमपि प्रतिनिधित्वेन जुहुयादिति । एतेनावश्यकत्वमुक्तम् ।

---

ख पाठः—

(1) प्रजानां निर्या. (2) प्रदायापक्लृप्त (3) श्चोदद्यात्
(4) 'तथा च इति नास्ति (5) पञ्च महा- (6) हरेत्

मुद्रित पाठः—

(A) कृत्यकल्प-नियत पृ १४६ (B) श्चापो (C) श्चापो

हारीतः[A]-

"देवान् पितॄन् ऋषींश्चैव भूतानि ब्राह्मणांस्तथा ।
तर्पयन् विधिना विप्रो ब्रह्मभूयाय कल्पते ॥"

मनुः (३-७५,७६)-

"दैवे कर्मणि युक्तो हि बिभर्तीदं चराचरम् । (७५)
अग्नौ [1]प्राप्या[B]हुतिः सम्यगादित्यमुपतिष्ठते ॥
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।" (७६)

शाता[C]तपः-

"लौकिके वैदिके वाऽपि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये ॥"

हुतोच्छिष्टपदेनाग्निहोत्राद्यनन्तरमपवृत्तकर्मा लौकिक इत्युक्तरूपाहवनीयादि-गृह्यते । जले क्षितौ चाग्निस्थापनाङ्गपरिसमूहनाद्यभावः ।

अत्र पठन्ति—

"पचनाग्निं न गृह्णीयात् परवेश्मनि जातुचित् ।
त[2]द् यज्ञे न तु यत् कुर्यादग्निदस्य तु तत् फलम् ॥
तस्माच्चुल्लीगतं वह्निं न कुर्य्यात्तु विनाशितम् ।
तद्विनाशे मथित्वा तु श्रोत्रियागारतोऽपि वा ॥"

प्र[3]सवाख्यपरिवेषः । केशान्तादू[4]र्ध्वं मृतपत्नीकस्य उत्सन्नाग्नेरनग्निकस्य च ग्रामा[5]दन्यग्निरित्यग्निमाहृत्य "पृष्ठो दिवि (ऋ १-९८-२) इत्यधिष्ठाप्य ततश्च सावित्रैः तत्सवितुः (शु.यजु. ३४-२) शश्वं सवितुः, विश्वानि देव सवितः (शु.यजु. ३४-३) इत्येतैः प्रज्वाल्य, एवं प्रणीतो भवति ।

---

ख पाठः-

(1) प्राप्ताहुतिः (2) तत्पाकेन (3) प्रजापतये प्रसवाख्यपरिशिष्टे विशेषः (4) दूर्ध्वमपत्नीकस्य (5) दन्वग्नि ।

मुद्रित पाठः-

A- कृत्यकल्प नियत पृ १४८ B- प्राप्ताहुतिः C- कृत्यकल्प० नियत १४९

पूर्ववदक्षतैर्हुत्वा पाकयज्ञार्थं श्रपयेदिति । अतएव अग्निसंस्कारं कृत्वा अक्षतैः "प्रजापतये स्वाहा" इति हुत्वा इदं प्रजापतये इति याजमानं कृत्वा चुल्ल्यां [1]वाऽन्यत्र वा रक्षित्वा तत्र प्रतिदिनं पाकः । तत आनीयैकदेशं तत्र वैश्वदेवः । एवं प्रतिदिनं तस्य रक्षणम् । नि[2]र्वापे पुनरयमेव प्रकारः । एतादृशो विधिरग्न्यर्थोऽग्निकर्माङ्गम् । न तु यावदितिकर्त्तव्यता कर्माङ्गं, येन प्रतिदिनमावृत्तिः स्यात् । तदुक्तमेव प्रणीतो भव[3]ति ।

न च यूपन्यायः । कर्मप्रकरणे अस्मा इति कर्त्तव्यताया अनाम्नात् । साग्नेरपि प्रवासेऽयमेव विधिः । अनग्निक[4]पदस्याग्निस[5]न्निधिराहित्यपरत्वात् । अन्यथाऽनग्निपदस्याकृताधानपरत्वेऽपत्नीकपदं व्यर्थं स्यात् । तेना[6]नग्नि-पदमसा[7]न्निध्याग्निकपरम् । अपत्नीकपदमनाहिताग्निपरम्[8] ।

**"पचनं यदि कुर्वीत प्रवसन्नाग्निमान् द्विजः ।**
**समारोपे कृते चाग्नौ वैश्वदेव[9]स्तु लौकिके ॥"**

इति विशेषविधानात् । सामान्यनिषेधस्य

**"न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते ।"**

इति[10] अस्याप्रवृत्तिः ।

न च **"वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।**
**पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही ॥"**

**मनुः (३-६७)**

इति वचनात् प्रवासे साग्नेः पाक एव दुर्घटः ।

---

**ख पाठः—**

(1) चुल्यामन्यत्र वा (2) निर्वापणे (3) भवतीति (4) अनग्निपद (5) सान्निध्य (6) अतोऽनग्नि (7) मसन्निधानाग्न्यनाहिताग्निपरम् (8) "पक्तिं चान्वाहिकीं गृही" इत्यधिकम् (9) वैश्वदेवं तु (10) इत्यस्यानुवृत्तिः ।

[1]न च "पचनं यदि कुर्वीते" त्यस्य निषेधातिक्रमप्रवृत्तपा[2]कानुवादेन तदाधारसं[3]स्कारकवैश्वदेवविधिपरत्वादिति वाच्यम् । "पक्तिं चान्वाहिकीं गृही" इत्य[4]स्य "अग्निहोत्रं जुहोति" "यवागुं पचति" इत्यत्र यवागुपाक-स्यादृष्टकल्पनाभयेनाग्निहोत्रार्थत्ववत् गृह्याग्न्याधारान्वाहिकपाकस्यापि पञ्चयज्ञार्थत्वात् प्रवासेऽप्यात्मार्थपाकसम्भवात् ।

न च केवलात्मार्थपाकस्य "अघं स केवलं भुङ्क्ते" (मनु ३-११८) इति निषेधादेवमपि साग्नेः प्रवासे पाको नि[5]षिध्यत इति वाच्यम् । अस्य यथाश्रुता[6]द्वा सम्भवात् पाकस्य सर्वार्थत्वेन स्मार्त्ताग्नौ कृतस्या[7]त्मार्थत्वात् । तेन पञ्चयज्ञाकरणस्यैव निन्देयम् । आत्मार्थपाकेनापि पञ्चयज्ञप्र[8]करणमनु-ज्ञातमेवेति संभवत्येव साग्नेरपि प्रवासे पाकः । [9]तदेवाभिप्रेत्याह—

**अङ्गि[A]राः– शालाग्नौ निर्वपेदन्नं लौकिके वाऽपि नित्यशः ।**
**यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते ॥**

शालाग्निरावसथ्यः, अ[10]न्यथा साग्नेर्मन्थनबिलम्बे समारोपेण[11] वा वैश्वदेव-लोपापत्तेः ।

**छन्दोगप[B]रिशिष्टे (२।३४,४७)–**

**सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।**
**अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥**
**अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ।**
**अनाहिताग्नेरप्येष युज्यते बलिभिः सह ॥**

---

**ख पाठः—**

(1) 'न च' इति नास्ति (2) दिनानु (3) 'संस्कारक' इति नास्ति (4) इति (5) निषिद्ध (6) -तार्थासम्भवात् (7) -स्याप्यात्मार्थत्वात् (8) ज्ञकरण० (9) एतदेवा० (10) 'अन्यथा' इति नास्ति (11) समारोपेऽप्येव०

**मुद्रित पाठः—**

A- कृत्यकल्प. नियत. पृ-१५० । B- कृत्यकल्प नियत-१४९

शाकलहोमो "देव[A]कृतस्यैनसोवयजनम् असि" इत्यादिमन्त्रकरणककाष्ठ (शकल) होमो ज्योतिष्टोमिकः। अनाहिताग्नेः श्रौतस्मार्त्ताग्निरहितस्य।

तथा–

"वैवाहिकाग्नौ कुर्वीत गृह्यं कर्म यथाविधि।
पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही॥(मनु. ३-६७)
[1]प्रातर्होमं ततः कृत्वा [2]समुद्धृत्य हुताशनात्।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत्॥"

तत्र विशेषः-

"आहृतो यदि संसृजेत् संसृष्टमुपशा[3]मयेत्।
असंसृष्टं जागरयेदेष धर्मः सनातनः॥"

चुल्लीं[4] तस्य स्मार्त्ताग्नावन्यन्तरसंसर्गे तत्त्यागः कार्य इत्यर्थः।

मनुः(४-२१)–

ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्॥

इह पूर्वोक्तपञ्च[5]यज्ञपुनःकीर्त्तनं स्नातकव्रतत्वार्थम्। तथा च तल्लोपे स्नातकव्रतलोपप्रायश्चित्तमपि भवति।

---

ख पाठः—

(1) 'एवं' इत्यधिकम् (2) 'तमुद्घृत्य हुताशनम्' (3) शान्तयेत् (4) चुल्लीतः (5) पञ्चमहायज्ञस्य।

मुद्रित पाठः—

A– तैत्ति. सं. ३-२-५-७ अत्र सायणभाष्ये कल्पः–'देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्याऽऽत्मकृतस्यैनसोऽवयजनमस्यन्यकृतस्यैनसोऽवयजनमस्यैनस एनसोऽवयजनमसि स्वाहेत्याहवनीये षट् शकलान्यभ्याधाय' इति। अत्र शकलानामभ्याधातारः सर्वे अपि हारियोजनभक्षिणः।

मनुः (४-२२.२४)

[1]एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रिये[2]ष्वपि जुह्वति ॥(२२)
वाच्येके जुह्वति प्राणं प्राणे वाचं [A]तथापरे ।
[3]वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम् ॥(२३)
ज्ञानेनैवापरे विप्रा यजन्त्येतै[B]र्महामखैः ।
ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा ॥ (२४)

अत्र श्लोकत्रयेण बाह्योपकरणानामत्यन्तासम्भवे मानसव्यापारेण पञ्चयज्ञानुष्ठानं प्रत्यवायपरिहारार्थं पञ्चयज्ञप्रत्याम्नातत्वेनाधिकारिभेदेनोक्तम् ।

तत्र प्रथमश्लोकेन मुमुक्षोः साधना[4]नुष्ठानाभिमुखस्य गृहस्थस्य प्रत्याहाररूपेण चक्षुरादिपञ्चबुद्धीन्द्रियाणां रूपाद्यभिमुखाः पञ्च वृत्तीः स्वस्वविषयेभ्यः प्रत्याहृत्य चक्षुरादिष्वेव लीनाः कर्त्तव्या, इति ध्यानम् । एवं पञ्चस्विन्द्रियेषु पञ्चविषयवृत्तिनिरोधनं पञ्चयज्ञानुष्ठानकार्यकरमित्युक्तं भवति । द्वितीयश्लोकेन साधनानुष्ठानशीलस्य मुमुक्षोः स्वाध्यायजपकाले श्वासप्रश्वासादेर्मन्दतरत्वेन प्राणस्य वाचि स्वाध्याये होमः इति विचिन्तनम् । प्राणायामाभ्यासकाले च वाग्वृत्तिनिरोधात् । [5]एतदृष्टिद्वयं पञ्चयज्ञकार्यकरत्वेनोक्तम् ।

---

ख पाठः—

(1) एतानेव (2) ष्वेव (3) वाचं प्राणे (4) साधनाभिमुखस्य (5) 'ॐ'प्राणेवाचो होम इति चिन्तनम् इत्यधिकम् ।

मुद्रित पाठः—

A- च सर्वदा B- मखैः सदा ।

तथा च [A]श्रुतिः– (कौषीतकी, उप. २-४)

यदा वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति, प्राणं तदा वाचि जुहोति। यावद्वै पुरुषः प्राणिति न तावदभिभाषितुं शक्नोति। वाचं तदा प्राणे जुहोति। एते अनन्ते अमृते आहुती जाग्रच्च[1] स्वपंश्च सततं जुहोतीति।

तृतीयश्लोकेन उत्पन्नत्वे ज्ञानस्य तत्त्वज्ञानमेव पञ्चयज्ञानुष्ठानकार्यकरत्वेनोच्यते [2]तत्प्रत्ययच्छायानुत्पादादिति।

श[B]ङ्खलिखितौ- "अत ऊर्ध्वं देवयज्ञः सर्वेषामुपदिश्यते।"

आश्रमधर्माविरोधेन प्रतिनियतानामोषधीनां कोद्रवचणकमाषमसूरकुलत्थोद्दा[C]रकवर्जं, नि[3]र्वपणाय तण्डुलान् प्रातः पत्न्यै दद्यात्, स्वयं वाधिश्रयेत्।

स्वयं वेति पत्नी चेत् पाकासमर्था। आश्रमधर्माविरोधेन इति वानप्रस्थस्य [4]फालकृष्टवर्जनाभिप्रायम्।

आपस्त[D]म्बः(२-२-३-१.३)–

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्त्तारः, भाषां कासं क्षवथुमित्यभिमुखेऽन्नं वर्जयेत्। केशा[5]नङ्गं वासश्चालभ्यापः स्पृशेत्।"

---

ख पाठः—

(1) 'च' इति नास्ति (2) 'तत्' इतिनास्ति (3) निर्वापाय

(4) फलं पूर्वजन्माभिप्रायम् (5) केशानन्तं वासश्चालभ्योपस्पृशेत्।

मुद्रित पाठः—

A- कृत्यकल्प. नियत. १५१ B- कृत्यकल्प. नियत. १५२

C- मसूरोद्दालककुलत्थ इति कल्पतरौ नियत. १५२ D आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्त्तारः स्युः ॥१॥ भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥२॥ केशानङ्गंवासश्चालभ्याप उपस्पृशेत्" आप. ध. (२-२-३-३)

तथा[A]– "परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षयेत्तदेव पवित्रमित्याचक्षते ।"

तथा- "सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् । तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनं, गृहमेधिनोपदर्शनीयम् ।"

छन्दोगपरिशिष्टे (२।१५३-१५४)--

"भूतप्रवाचने पत्नी यद्यसंनिहिता भवेत् ।
(रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः)
महानसेऽन्नं या कुर्यात् सवर्णा तां प्रवाचयेत् ।
प्रणवाद्यपि वा कुर्यात् कात्यायनवचो यथा ॥"

भूतप्रवाचनमित्युक्ते प्रश्नादिना स्वामी पत्नीं वाचयेत् 'सिद्धमन्नं भो' इत्यादिरूपेण । पत्न्यसंन्निधानेऽन्या या पाककर्त्री सवर्णा तां वाचयेत् । पत्नी वान्या वा यदि 'भूत' मित वक्तुं न शक्नोति तदान्यदप्योकारादि सम्मति-सूचकं ब्रूयादित्यर्थः ।

आपस्त[B]म्बः (२-६-१५-१३)

'य[1]स्य चाग्नौ न क्रियते यस्य चाग्र्यं न दीयते, न तद् भोक्तव्यम् ।'

---

ख पाठः-—

(1) यस्याग्रं न दीयते न तद् भोक्तव्यम् ।

मुद्रित पाठः—

A-"परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते॥९। सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् ॥१०॥ तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥११॥ गृहमेधिनो यदशनीयं तस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः आप. ध. सू. २-२-३-९.१२ ।

B- "यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद् भोक्तव्यम् ॥" आप० ध० सू० २-६-१५-१३ ।

विष्णु[A]धर्मोत्तरे—

"[1]सर्वान्नाग्रं समुद्धृत्य जुहुयात् प्रयतस्ततः ।
संस्कृतान्नैर्हविष्यैश्च हविष्यव्यञ्जनान्वितैः ॥"

छन्दोगपरिशिष्टे (१-१३१)

"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत् ॥"

गौरः सितसर्षपः । आदिपदान्मसूरचणकचणा अपि वर्जनीयाः ।

आप[2]स्तम्बः— (२-६-१५-१४.१६)

"न क्षारलवणहोमो विद्यते । त[B]थाऽपरान्न संसृ[3]ष्टस्य चाहविष्यस्य उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात् । हुतमहुतं चाग्नौ भवति ।"

क्षारलवणमुषरमृत्तिकाप्रभवं लवणम् । अपरान्नसंसृष्टस्य अ[4]हविष्य-भूतान्नान्तरसम्ब[5]न्धकस्य हविष्यस्यापि होमो न विद्यत इत्यर्थः । यदि क्षारलवणाद्येव तथाऽ[6]हविष्ये मासमसूरादेर्होमो न विद्यत इत्यर्थः । यदि क्षारलवणाद्येव होमीयं भवति तदा होमसाधनाग्नेरुष्मं भस्म उत्तरदिशि कृत्वा तत्राहुतं

---

ख पाठः—

(1) सर्वान्नग्रं प्रजुहुयादुद्घृत्य - - - (2) "आपस्तम्ब" इति नास्ति
(3) संसृष्टस्याहविष्यस्य च (4) अहविष्यापूतान्नान्तरसंसृष्टस्य (5)सम्बद्धस्य
(6) अहविष्यस्य माष० ।

मुद्रित पाठः—

A— "सर्वान्नमग्नावुद्धृत्य जुहुयात् प्रयतस्ततः" । विष्णुधर्मोत्तर (२-९२-३)
B- "०" तथाऽवशान्नसंसृष्टस्य च (१५) अहविष्यस्य होम उदीचीनमुष्णं भस्माऽपोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति । आप० ध० सू० (२-६-१५-१५-१६) ।

हुत्वा वैश्वदेवहोमः कार्यः। एवं चाहविष्यद्रव्येणापि वैश्वदेवकरणे भस्माहुति-होमात् सगुणता भवतीत्युक्तम्। न चाहविष्यद्रव्यनिमित्त वैश्वदेवहोम एव भस्माधिकरणे विधीयत इति वाच्यम्, उदीचीनत्व [1]उषसि भस्मनां प्राप्ते कर्मणि विधातुमशक्य[2]बलाद्धोमान्तरत्वात्। अपोहनं च भस्मसंस्कारत्वान्न विशेषणग्रहणक्षमम्। हविरार्त्तिनिमित्तपञ्चशरावस्य दर्शाङ्गत्ववत् वैश्वदेवा[3]ङ्गे भस्माहुतिः।

**"[A]आज्यं [4]द्रव्यमनादेशे जुहोतिषु विधीयते।**

**मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥"**

**(गोभिलस्मृ. १-११३)**

देवतायाश्च मन्त्रस्य च शब्दात्तद्धितचतुर्थ्योरभावे प्रजापतिर्देवतेति रूपलाभात् ना[5]रूपविधित्वम्।

न च हविष्यस्य वैश्वदेवाङ्गत्वेन क्षारलवणादीनां पुनः निषेधस्य प्रतिनिधिप्राप्तविषयत्वात्। वैश्वदेवे हविष्यप्राप्त्यभावात् वैश्वदेवस्य क्षारलवणादिसम्बन्धनिमित्तेनाङ्गमियमाहुति[6]रित्यसंभवादहविष्यभोजन-दोषपरिहारार्थं भोजननिमित्तिकैवेयमाहुरिति वाच्यम्। अहविष्यपदवाच्य-माषादितत्संसृष्टव्रीह्यादिक्षारलवणादिपर्युदासेनार्थसिद्धस्य हविष्याङ्गत्वे-नापस्तम्बेन विधानात्, क्षारलवणादेः पृथङ्निषेधपरत्वे मानाभावात्। क्षारलवणादिपर्युदासे हि तदतिरिक्तमङ्गं क्षारलवणादि न विहितं न निषिद्धं, तेन हविष्याभावे तस्य प्रतिनिधित्वेन प्राप्तिः केन वार्यते। दर्शे व्रीहियवविधानादर्थान्माषनिवृत्तौ "अयज्ञिया माषा" इति निषेधः प्रतिनिधिप्राप्तविषयः, वैश्वदेवप्रकरणबाधाच्च न भस्माहुतिर्भोजनदोष-नि[7]वृत्तिपरः। तथा कल्पनायां मानाभावात्।

---

**ख पाठः—**

(1) उष्णत्वं (2) शक्त्या फला। (3) देवाङ्गभस्मा॰ (4) हविरनादेशे (5) नारुचित्वं (6) हुतिरित्यसंवाद (7) विघातिका।

**मुद्रित पाठः—**

A- "आज्यं हव्यं" - - - "तन्त्रश्च देवतायाश्च" इति गोभिलस्मृतौ।

अतएव कल्पतरुAकारेण "यदि क्षारल[1]णाद्येव होमीयं भवति तदा भस्माहु[2]तीज्या वैश्वदे[3]वाङ्गत्वमेव" व्याख्यातम्। न चाहविष्यभोजने दोषः। महिषीक्षीरादेर्भक्ष्यत्वाभिधानात्। "यस्य चाग्नौ न क्रियते न तद्भोक्तव्य"मित्यस्य हविष्यप्रतिनिधित्वेना[4]हविष्यस्यापि होमीयत्वेन तन्निषेधपरत्वासंभवात्।

यत्तु Bशङ्खलिखितौ-

**श्रुतिस्मृतिसमापन्नं देवद्रव्यगुणान्वितम्।**
**देवतायै यथा क्लृप्तं प्रोक्षितं शिष्टभोजनम्॥**

नानेन हविष्यस्यैव भोज्यतोच्यते। अहविष्यमांसमाषादेरपि देवद्रव्यत्वेन हविष्यनियमालाभात्। तेन भोजनप्रकरणोक्तश्रुतिस्मृत्युक्तद्रव्यपरमेव। "प्रोक्षित"मित्यपि यथाविहितभोज्यसंस्कारानुवादत्वान्नाधिकप्रोक्षणविधि-परम्। केवलं तस्मात् "शुचिः परिमिताहारः[5] स्यादाहारशुद्धौ सत्त्वशुद्धि"-रिति आपस्तम्बवचनात् हविष्यभोजनं सत्त्वशुध्यर्थं काम्यम्।

**यमस्मृतावपि-**

**"अमृतं Cहोमशेषं तु हविष्यं भोजनं स्मृतम्।"**

इति हविष्यपदं वैश्वदेवहोमसम्बन्धानुवादपरम्।

---

**ख पाठः—**

(1) लवणादि (2) हुतिरिष्टा (3) देवानामेवेति (4) "अन्यहविष्यस्यापि होमीयत्वेन" इति (5) "हारस्तस्मादा०।

**मुद्रित पाठः—**

A- यदि तु क्षारलवणाद्येव होम्यं भवति तदा उदीचीनम् उत्तरदिग्-भागभवम्, उष्णं भस्मापोह्य तस्मिन् अग्नौ जुहुयाद् इत्यर्थः। कृत्यकल्प-नियत- १५६।

B- कृत्यकल्प० नियत० २२८ C- यज्ञशेषमिति कृत्यकल्प० नियत० २१५।

छन्दोगपरिशिष्टे-

पाण्याहुतिर्द्वादशपर्वपूरिका-

[A]द्रवा[1]दिका चेत् स्रुवपूरमात्रिका ।

दैवेन तीर्थेन च हूयते हविः

स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

यत्तु पठन्ति—

आर्द्रामलकमानेन कुर्याद्धोमं बलिं तथा ।

इति । तस्य प्रामाण्येन विकल्पः ।

वैश्वदेवाधिकारे विष्णुः (६७.१)-

सर्वतः पाकात्स[B]मुद्धृत्य जुहुयात् ।

विष्णुपुराणे (३-११-४१.४२)-

अप्पूर्वमग्नि[C]होत्रं च कुर्यात् प्राग् ब्रह्मणे ततः । (४१)

प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात् ॥

गृह्याभ्यः कश्यपायाथ ततोऽनुमतये क्रमात् । (४२)

अप्पूर्वं – जलसाधनकपर्युक्षणपूर्वम् अग्निहोत्रम् । अग्नौ हूयमानत्वात् वक्ष्यमाणहोमोऽग्निहोत्रपदवाच्यः । [2]तेन पर्युक्षणमात्रविधानाद्धोमसामान्येतिकर्त्तव्यतानिवृत्तिः ।

---

ख पाठः-

(1) द्रवादिना चेत्स्रुवमात्रपूरिका (2) एतेन ।

मुद्रित पाठः-

A-"कंसादिना चेत्" गोभिलस्मृतिः १-१३२ B-पाकादग्रमुद्धृत्य-विष्णुस्मृ.

C- अपूर्वमग्निहोत्रं च कुर्यात् प्राग्ब्रह्मणे नृप । ४१ विष्णुपु० ।

कल्पतरावपि- नियत- १६३ ।

**पारस्करः (२-६-१,२)—**

**"अथातः पञ्चमहायज्ञा वैश्वदेवादन्नात् पर्युक्ष्य**
**स्वाहाकारैर्जुहुयात् , ब्रह्मणे प्रजापतये, गृह्याभ्यः,**
**कश्यपायानुमतये ॥"**

वैश्वदेवाद[1]न्नादिति—वैश्वदेवसंबन्धित्वेन क्लृप्तादन्नादिति । तेन वैश्वदेवा[2]र्थः पाकः । [3]तत एवावकृतपर (?) प्रयुक्तद्रव्योपजीवित्वात् । न चैवं तन्नाशे वा न याग विलोपप्रसङ्गः नित्यत्वेनादृष्टसिद्ध्यर्थं द्रव्यान्तराक्षेपात् पादपांशुनाशे पांश्वन्तरेण यूपाञ्जनवत् ।

**छन्दोगपरिशिष्टे[A] (२-४४)—**

**पिण्डवच्च पश्चिमा[4] प्रतिपत्तिः ।**

[B]तथा (छन्दोगपरि० २-३५.३८)—

**"अमुष्मै नम इत्येवं बलिदानं विधीयते ।**
**बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥**

---

**ख पाठः—**

(1) वैश्वदेवान्ना० (2) वैश्वदेवार्थं ।

(3) तत एव बलिहरणादिकमिदं वैश्वदेवपदं च होमकर्मणो नामधेयम् । अथ भूतयज्ञः- वैश्वदेवहोमानन्तरं, विष्णुः(६७-४) "ततोऽन्नशेषेण बलिमुपहरेत्" तेन ,होमशेषद्रव्येणैव बलिः न बलीनां पृथग् द्रव्यप्रयोजकत्वम्, स्विष्टकृद्वच्च प्रयुक्तद्रव्योपजीवित्वात् । न चैवं तन्नाशे वाजिनयागवल्लोपप्रसङ्गः । नित्यत्वेनादृष्टसिध्यर्थं द्रव्यान्तराक्षेपात् पदपांशुनाशे पांश्वन्तरेण यूपस्याज्येनोपाञ्जनवत् । (4) पश्चिमबलिप्रतिपत्तिः ।

**मुद्रित पाठः—**

A- कृत्यकल्प- नियत-१६२ B- कृत्यकल्प- नियत- १६२, तत्र तदप्येके स्थाने "तमप्येके" इति पाठः ।

**स्वाहाकारनमस्कारवषट्कारा दिवौकसाम् ।**
**स्वधाकारः पितॄणां च हन्तकारो नृणां ततः ॥**
**स्वधाकारेण निर्वपेत पित्र्यं बलिमतः सदा ।**
**तदप्येके नमस्कारैः कुर्वते नेति गौत[1]मः ॥"**

[A]न वा[2] पराभ्यां बलयो भवन्ति, महामार्जारश्रवणप्रमाणात् । एकत्र चेत् कृत्स्ना भवन्ति इतरेतरमसंसक्ताश्च ।

पिण्डवदिति पिण्डानां यथा पश्चिमाप्रतिपत्तिरग्निक्षेपादिका, एवं बलि[3]दानमपि । [4]तथा बिडालकर्णप्रमाणादूना बलयो न भवन्ति ।

**आप[B]स्तम्बः—**

**"बलीनां तस्य तस्य देशस्य संस्कारो हस्तेन**
**परिमृ[5]ज्यावोक्षणान्युप्य परिषेचनम् ।"**

तस्य तस्येति वीप्साबलात्त[6]न्त्रेण न स्थानसंस्कारः न्युप्य निर्वापं कृत्वा परिषेचनम् ।

**गोभि[C]लः (१-४-६)—**

**"सकृदपो निनीय बलिं निदध्यात्**
**सकृदन्ते परिषिञ्चेदेकैकं वा ।"**

---

**ख पाठः—**

(1) गोतमः (2) न चापरातद्धर्वा (3) बलीनामपि (4) यथा (5) परिमृज्योल्लिख्य परि० (6) न तन्त्रेण स्थान० ।

**मुद्रित पाठः—**

A- "न चावराध्यां" कृत्यकल्प, नियत १६३ ।

B- बलीनां तस्य तस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात् परिषेचनम् । आप० धर्म० सू० २-२-३-१५ ।

C- सकृदपो निनीय चतुर्द्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् । (१ ४-६) ।

एवं च सर्व्वबलीनामादावन्ते च सकृदेव परिषेचनम् । प्रत्येकं वाऽऽदावन्ते [1]चेति विकल्पः । परि[2]मार्जनादि तु प्रत्येकमेव न तन्त्रेण ।

तथा **चापस्तम्बः (२-२-३-१८)–**

**"सकृदन्ते परिषेचनम्"**

**मार्कण्डेयपुराणे (२६-२१)—**

**"ततस्तोयमुपादाय तेषा[A]माचमनाय वै ।**
**स्थानेषु निक्षिपेत् [B]प्राज्ञो नाम्ना तूद्दिश्य देवताः ॥"**

एतच्च नामकीर्त्तनं परिषेचनाङ्गत्वेन विधत्ते ।

**पारस्करः (२-६-१.१५)—**

**"बलि[C]हरणं भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः**

---

**ख पाठः-—**

(1) वेति (2) मार्जनान्तं प्रत्येक० ।

**मुद्रित पाठः—**

A-'तेष्वेवाचम'इति । संस्कृतिसंस्थानप्रकाशने तु नित्याचारप्रदीपोक्तपाठः । B-प्राज्ञ स्ता स्ता उद्दिश्य । C-अथातः पञ्चमहायज्ञाः । १ । वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयादब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति ।२। भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै । ३ । धात्रे विधात्रे च द्वार्ययोः । ४ । प्रतिदिशं वायवे दिशां च । ५ । मध्ये त्रीणि ब्रह्मणेऽन्तरिक्षाय सूर्याय । ६ । विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्यस्तेषामुत्तरतः । ७ । उषसे भूतानां च पतये परम् । ८ । पितृभ्यः स्वधा नम इति दक्षिणतः । ९ । पात्रं निर्णिज्योत्तरापरस्यां निनयेद्यक्ष्मैतत्त इति । १० । उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त त इति । ११ । यथार्हं भिक्षुकानतिथींश्च संभजेरन् । १२ । बालज्येष्ठा गृह्या यथार्हमश्नीयुः । १३ । पश्चाद गृहपतिः पत्नी च । १४। पूर्वो वा गृहपतिः तस्मादु स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः । (पारस्करगृह्य० २-९-१.१५)

पृथिव्यै । धात्रे विधात्रे च द्वार्य्योः प्रतिदिशं वायवे
दिशां च । मध्ये त्रीन् ब्रह्मणेऽन्तरिक्षाय सूर्याय ।
विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यः उ[1]त्तरतः ॥
उषसे भूतानां भूतानां च पतये । पश्च उत्तरतः ।
पितृभ्यः स्वधा नम इति दक्षिणतः । पात्रं
निर्णिज्योत्तरापरस्यां दिशि निनयेत् यक्ष्मैतत्ते इति ।
उद्धृत्याग्रं ब्राह्मणाय प्रयच्छेद्धून्त इति ।"

"यथार्हं भिक्षुकानतिथींश्च संभ[2]जेरन्, बालज्येष्ठगृहा यथार्हमश्नीयुः पश्चाच्च गृहपतिः पत्नी च । पूर्वो वा गृहपतिः । तस्मात्स्वादिष्टं गृहपतिः पूर्वमतिथिभ्योऽश्नीयादि"ति श्रुतेः ॥

विष्णुपुराणे (३-११-४८।५५)—

"ततो[3]ऽन्यदन्नमादाय भूमिभागे शुचौ [A]पुनः ।
दद्यादशेषभूतेभ्यः स्वेच्छया तु[B] समाहितः ॥
देवाः मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसंघाः ।
प्रेताः पिशाचास्तरवः समस्ता
ये चा[4]न्य इच्छन्ति मयात्र दत्तम् ॥
पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो[5] विसृष्टं सुखिनो भवन्तु ॥

---

ख पाठः—

(1) उत्तरतः उषसे भूतानां च पतये (2) संविभजेरन् (3) अन्यदन्नमुपादाय (4) चान्नमि० (5) भ्योऽपि सृष्टं (क) ।

मुद्रित पाठः—

A- बुधः B- सु ।

येषां न माता न पिता न बन्धुर्न [A]चान्नसिद्धिर्न तथान्नमस्ति ।

तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते[1] यान्तु तृप्तिं मुदिता भवन्तु ॥

भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्न ततोऽन्यदस्ति ।

तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥

चतु[2]र्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः ।

तृप्त्य[3]र्थमन्नं हि मया [B]निसृष्टं तेषामिदं ते मुदिता भवन्तु ॥

इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः ।

[C]सर्वभूतोपकाराय गृही सर्वाश्रयो यतः ॥

श्वचाण्डालविहङ्गानां भुवि दद्यात्ततो[D] नरः"

अन्यदन्नमिति, बलिहरणोपयुक्तव्यतिरिक्तम् । स्वेच्छयेति काम्यत्वमुच्यते ।

"अन्नं भूमौश्वचाण्डालवायसेभ्यश्च निक्षिपेदि"

(या० स्मृ० १-१०८)ति स्मृत्यन्तरादेतानुद्दिश्यान्नत्यागमात्रम् । न चाण्डाला-

दिस्वीकर[4]णपर्यन्तम् । तेन योग्यस्थाने प्रक्षेपमात्रम् ।

वसिष्ठः (११-५)–

श्रोत्रियायाग्रं[E] दत्त्वा ब्रह्मचारिणेऽन[F]न्तरं पितृभ्यो दद्यात् ।

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।

अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥

(मार्कण्डेयपु० २९/३५-३६ इति कल्पतरु नियत० पृ-१७३)

---

ख पाठः—

(1) तेषामिदं ते मु० (2) चतुर्विधो (3) तत्तृप्तयेन्नं भुविदत्तमेतत्तेषा०

(4) स्वीकार ।

मुद्रित पाठः—

A- नैवान्न B- विसृष्टं C- भुवि सर्वोपकाराय D-नरेश्वर E- ०ग्रभागं

F- वानन्तरं ।

इति विष्णुपुराणात् ग्रासचतुष्ट[1]यमितमन्नं ब्राह्मणाय त्यक्तव्यम्। एवं[2] ब्रह्मचारिणे। इदं च बलिकर्मान्तर्गतं, नातिथिभोजनान्तर्गतम्। "एतदनन्तरमेवा"ति[A]थींश्च [3]सम्भावयेदि'ति पारस्करवचनात्।

याज्ञवल्क्यः (१-१०८)-

"सत्कृत्य भिक्षवे भिक्षा दातव्या [4]सव्रताय च।"

सव्रतो- ब्रह्मचारी।

[B]यमः—

"सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः।
गोप्रदानसमं पुण्यं तस्याह भगवान् यमः॥"

मनुः (३-९६)—

"भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत्॥"

वेदतत्त्वार्थविदुषे— ब्रह्म[5]ज्ञानिने इति।

"नश्यन्ति हव्यकव्यानि नराणामविजानताम्।
भस्मीभूतेषु विप्रेषु [6]हो[C]माद्यन्तानि दातृषु॥
विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु।
निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात्॥"

(मनुः ३।९७-९८)

---

ख पाठः—

(1) ०ष्टयपरिमित० (2) एवं च (3) भोजये० (4 सुव्रताय (5) ब्रह्मविज्ञानिने (6) हव्यकव्यादिदातृभिः।

मुद्रित पाठः—

A-'अतिथींश्च सम्भजेरन्' इति पारस्कर २-९-१२ B-कृत्यकल्प.नियत.१६७
C- मोहाद्दत्तानि दातृभिः।

इदं च बलिकर्मान्तर्गतभिक्षादाने ज्ञाननिष्ठपात्रविधिपरम् । नात्रान्येषां गुणहीनानां पात्रत्वम् ।

इति भूतयज्ञ ।

**विष्णुः**[A] (६७।२७-२८)

"भिक्षां दद्यात् । अतिथिपूजने च[1] परं यत्नमातिष्ठेत्।।"

[2]तेन बलिदानोत्तरमतिथिग्रहणं नित्यश्राद्धानन्तरं तु तद्भोजनम् ।

**विष्णुपुराणे**[B] (३-११-५६) भूतयज्ञानन्तरं ।

"[3]गोदोहमात्रं वै कालं ततस्तिष्ठेद् गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्ध्वं वाऽपि शक्तितः[4] ॥"

**शङ्ख**[C]**लिखितौ**—

"गोदोहमात्रं कालमन्वमाकाङ्क्षेदतिथिः श्रोत्रियो,
वेदव्रती, यतिधर्मा, नैष्ठिकः, समानवृत्ति-
[D]र्यीवाभ्यागच्छेत्तस्मिन् काले।"

श्रोत्रिय एकशाखाध्यायी, यतिधर्मा यतिः, नैष्ठिको ब्रह्मचारी, समानवृत्ति-स्तुल्यजीवनोपायः ।

---

**ख पाठः**—

(1) "च" नास्ति (2) येन (3) "तत्र" इत्यधिकम् (4) यत्नतः । गोदोह-मात्रकालमन्वाकाङ्क्षेद ।

**मुद्रित पाठः**—

A- भिक्षां च दद्यात् । अतिथिपूजने च परं फलमधितिष्ठेद् ।

B- "ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्ध्वं तु यथेच्छया" ।

C- कृत्यकल्प० (नियत० १७६) । D- र्योऽन्यो वा ।

# अथ नित्यश्राद्धम्

मनुशातातपौ शङ्खश्च प्रथमे—

"[1]दद्या[A]दहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि [B]पितृभ्यः प्रीतिमावहन् ॥"

(मनु. ३-८२, शङ्ख. १३-१६)

[C]अप्येकमाशयेद् विप्रं पित्र्यर्थे [2]पञ्च[D]यज्ञियम् ।
न चैवात्रा[3]शयेत् किञ्चिद् वैश्वदेवं प्रति द्विजम् ॥"

(मनु. ३-८३)

विष्णुपुराणे (३-११-६२)—

"पित्र्यर्थं चापरं विप्रमेकमप्याशये[E]द् द्वि[4]जम् ।
तद्दे[5]शं विदिताचारं संभूतं पञ्चयज्ञियम् ॥"

पद्मपुराणे (सृष्टि. १५-१३६.१४०)

"एकं वेदान्तगं विप्रं भोजयेच्छ्रद्धयान्वितः ।
तस्मि[F]न् [6]भुक्ते भवेत्कोटिविप्राणां नात्र संशयः ॥"

मत्स्यपुराणे (१६-५.६)—

"नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।
अदैवं तद्विजानीयात् पार्वणं पर्वसु स्मृतम् ॥"

---

ख पाठः—

(1) कुर्यादह. (2) वेदपारगम् (3) ऽऽशयेत् (4) द्विजः (5) तुद्देशं विदिता चासंभूतं पातीनयज्ञियम् (6) भुक्तं ।

मुद्रित पाठः—

A- कुर्याद्-मनुस्मृतौ शङ्खस्मृतौ च B- पितॄणां- शङ्खः C- एकमप्या० D- पाञ्चयज्ञिके E- शयेन्नृप । तद्देश्यं विदिताचारसम्भूतिं पाञ्च-यज्ञिकम् ॥ F- तस्य भुक्ता ।

छन्दोगपरिशिष्टे कात्यायनः (२-३०.३२)—

"अप्येकमाशयेद् विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥
अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।
पितृ[A]भ्यश्च मनुष्येभ्यो दद्यादहरहर्द्विजः ॥
पितृभ्य इदमित्युक्त्वा स्वधा[B]कारेण कारयेत् ।
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः ॥"

[1]संभवे वर्गद्वयाय ब्राह्मणद्वयम्, मनुष्येभ्य इति सनकादिभ्य इत्यर्थः । "मनुष्येभ्यो निवीत्यन्नं हन्तेत्युत्सृजेदि"ति स्मृत्यन्तरात् ।

इदं च नित्यश्राद्धाङ्गं तत्प्रकरणात् ।

"नित्यश्राद्धमदैवं स्यान्मनुष्यैः सह गीयते ॥"

इति स्मृतेश्च । नात्र ब्राह्मणस्य पात्रत्वनियमः "उद्धृत्ये"त्यभिधानात् । मनुष्येभ्यश्च षोड़शग्रासपरिमितमन्नं हन्तकारसंबन्धात् ।

शातात[C]पः—

"ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्च[D]तुर्गुणम् ।
पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥"

अत्र विद्याकरपद्धतौ—

"अप्तिलैः पाणिना[2] वार्घो देयोत्सर्गोऽक्षमस्तथा ।
स्वधावाचनमित्येतन्नित्यश्राद्धे चतुष्टयम् ॥"

---

ख पाठः—

(1) अप्येकमिति संभवे (2) पाणिनैवार्घोदेयोत्सर्गोक्षयस्तथा ।

मुद्रित पाठः—

A– पितृभ्यो ऽ० B– स्वधाकारं च-कल्पतरु-नियत-१६९

C– कृत्यकल्प– (नियत-१६७) D- तु चतु० ।

अत्र क्लृप्तोपकारप्राकृतपदार्थार्घादिचतुष्टयवि[1]धानादतिदेशाकाङ्क्षाविरहात् श्राद्धेतिकर्त्तव्यान्तरातिदेशाभावः, आज्यभाग विधानादिव गृहमेधीये। तेन निमन्त्रणादिनिवृत्तिः। एवं च "ब्रह्मचारी भवेत् श्राद्धे मुक्त्वा श्राद्धं तु नैत्यक"मिति नित्यानुवादः। एवं वैश्वदेवनिषे[2]धोऽपीत्य"तिथ्या संतिष्ठत" इत्युक्त्वा नानुयाजान् यजतीतिवन्नित्यानुवादः। एवं श्राद्धीयद्रव्यनियमस्याप्यभावः प्रमाणाभावात्।

**आपस्तम्बः (२-२-१५-१६)—**

**"यस्याग्नौ न क्रियते यस्य[3] [A]चाग्र्यं न दीयते न तद्भोक्तव्यम्।"**

यस्याभोज्यस्य।

**विष्णुस्मृ[B]तौ (६८-२४)-**

**"यन्न दद्यात्तन्नाश्नीयादि"ति**

तत्रादत्तस्य भोजननिषेधादभोज्यस्य महिषीक्षीरादेरपि हेय[4]त्वमेव। न च महिषीक्षीरादेर्भोज्यता सूतकादिविषयेऽप्युपपन्नत्वात् नित्यश्राद्धदेयता[5]पादिकेति वाच्यम्। उपदेशातिदेशाभावेन नित्यश्राद्धे तद्वर्जनमप्रामाणिकमिति भक्ष्यतासंकोचे मानाभावात्। अत एव भोज्यं मांसमपि तत्र देयम्।

**"देवान् पितॄन्[C] समभ्यर्च्य खादन् मांसं न दोषभाक्"**

(५-३२) इति मनुना नित्यश्राद्धाभिप्रायेण भोज्यतानुज्ञानात्।

---

**ख पाठः—**

(1) निधान (2) निषेधेऽपीलान्तातिथ्या- (3) यस्या न दीयते (4) देयत्व. (5) पाकादिके।

**मुद्रित पाठः—**

A- चाग्रं। B- "लवणश्च यत्र दद्यात् तन्नाश्नीयाद्" इति।
C- "पितॄंश्चार्चयित्वा खादन् मांसं न दुष्यति" इति।

विशेषतश्च—

"मांसमन्नं तथा ग्राह्यं गृहे [1]यच्च प्रसाधितम् ।"

इति स्मरणम् ।

यत्तु (मनु. ३-८२)—

"[A]दद्यादहरहः श्राद्धमन्नादि[2]नोदकेन वा ।
पयोमूलफलै र्वापि मांसवर्जमदैवतम् ॥"

इति तदुदाहृतमांसदानपरवचनविरोधाद् वानप्रस्थविषयं काम्यमांसवर्जन-संकल्पकर्त्तृविषयं वा । न तु सर्वविषयम् ।

नन्वेवं सति पार्वणधर्मानतिदेशात् कथं षट्पुरुषत्वम्? वचनान्तरादेव ।

"तच्च षट्पुरुषं ज्ञेयं पिण्डपा[3]त्रविवर्जितम् ।
यत्र पूज्यास्तु पितरस्त[4]त्र मातामहा अपि ॥"

ऋष्यशृङ्गः—

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥"

इत्यनारभ्यवादाच्च ।

तथा—

"पिता भुङक्ते द्विजकरे मुखे भुङक्ते पितामहः ।
प्रपितामहस्तु तालुस्थः कण्ठे मातामहः स्मृतः ॥
प्रमातामहस्तु हृदये वृद्धो नाभौ प्रतिष्ठितः ।"

---

ख पाठः—

(1) यच्चोपसाधितम् (2) ॰द्येनो॰ (3) ॰दान॰ (4) तथा ।

मुद्रित पाठः—

A- कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥

एतस्यार्थवादत्वादेवं ध्यायेदित्येवं विधिपरत्वाच्च तस्य। [1]दृष्टे सत्यदृष्टकल्पनानवकाशात्[2]। उत्सर्गे पिण्डं प्रत्येकं देवतात्वम्। ऐन्द्रवायवादीनां ग्रहणे कीर्त्तनान्यथानुपपत्त्या सोमयागदेवतात्ववत् तेन [3]यागकाले इदं पित्रे इदं पितामहाय इत्येवं त्याग आवश्यक इत्यस्य स्मारकं वाक्य[4]मिति। पितृपितामहादि प्रत्येकपदं युक्तमेव प्रयोक्तव्यम्।

**"पितृभ्य इदमित्युक्त्वा स्वधाकारेण चार्चयेत्।"**

इत्येतत्तु छन्दोगपरिशिष्टवाक्यम् [5]अर्घ्यस्वधावाचनादिविषयम्। अथवा उत्सर्गवाक्येऽपि पितृभ्यः स्वधेत्येवं रूपे "पिता भुङ्क्ते द्विजकरे" इत्यादिविशेषचिन्तनमदृष्टार्थं स्यात्। न च [6]त्यागस्य स्मारकत्वेन दृष्टार्थत्वम्। तथा सति तत्स्मारकवाक्यस्य पितृभ्यः स्वधेत्येवमाकारकत्वेऽदृ[7]ष्टार्थतापत्तेः। अर्घादिविषये सावकाशत्वाच्च न प्रधानवाक्ये[8] देवतापदबाधकत्वमिति विवेकः।

**विष्णुपुराणे (६-१३-३६)—**

**"प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।**
**क्रियन्ते याः क्रियाः [A]सर्वा उच्यन्ते तन्नपोत्तराः॥"**

**तथा – "पुत्रादे[9]रेव चोत्तरा" (विष्णुपु. ३-१३-३८)**

इति तत्रैवानुक्रान्तानां पुत्रपौत्रभ्रातृसंततिदुहि[10]तृतत्तनयानां कर्तृत्वमुक्तम्।

---

**ख पाठः–**

(1) तद दृष्टे (2) ०काशात्तदुत्सन्नं प्रत्येकं (3) त्याग० (4) वाक्यमपि (5) अर्घ्यस्वधावाचनाद्यङ्गविषयतान्यथा तूत्सर्ग० (6) त्यागस्मारकत्वेन (7) त्वाददृष्टार्थतापत्तेः (8) वाक्यदेवता (9) पुत्राद्यै (10) दौहित्र।

**मुद्रित पाठः–**

(A) पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥

तेनास्य प्रेतसंस्कारप्रायपाठात् प्रेतसंस्कारक[1]त्वेऽपि पितृव्यादीनामपुत्राणां भ्रातृव्यत[2]त्सन्तत्यादयः सर्व एव नित्यश्राद्ध[3]दर्शाष्टकादिश्राद्धं कुर्वीरन्।

न च संस्का[4]रकत्वादेकेन करणेऽन्यस्य वैयर्थ्यम्, कर्तृनियमस्य कर्तृसंस्कारफलत्वात्। शेषप्र[5]तिपत्तिरूपस्याभिघारणस्य हविराघारनियमकृतहविःसंस्कारकत्वात् सर्वहविष्षु प्रतिपत्तिवत्। तेन गृहस्थप्रकरणे गृहस्थधर्मत्वेनोक्तत्वात् पुत्रपौत्रैः सर्वैः पितृश्राद्धकरणवत् पुत्रादिकर्तृनियमस्य फलाकाङ्क्षायां कर्तृनिष्ठ एव संस्कारः कल्प्यते। तेनापुत्रपितृव्यादेः सर्वैरेव भ्रातृपुत्रादिभिः कर्त्तव्यं नित्यश्राद्धम्। एवममावास्यादिश्राद्धमपि कर्त्तव्यम्। न चैवं पुत्रवतः पितृव्यस्य भ्रातृपुत्रेण करणप्रसंगः। पुत्राभाव एव भ्रातृपुत्राधिकारात्। [6]एतद्वैश्वदेवकर्म जीवत्पितृकेण नित्यश्राद्धवर्जं कर्त्तव्यम्। [7]पितृबलिस्तु स्यादेव। श्राद्धस्यैव निषेधात्।

यत्तु-

"[A]येभ्यो वाऽपि पिता दद्यात् ते[8]भ्यो वाऽपि प्रदापयेत्"।

[9]तत्तु-

"न जीवत्पितृकः श्राद्धं कुर्यादग्निमृते द्विजः।
येभ्यो वाऽपि पिता दद्यात् तेभ्यो दद्यात्तु साग्निकः॥"

इति सुमन्तुवचनात् साग्निकविषयम्। तस्यापि वैकल्पिकम्।

"न जीवन्त[10]मति दद्याद्"ति

प्रत्यक्षश्रुतिदर्शनादकरणसमाचारः।

---

**खपुस्तकपाठः—**

(1) संस्कारत्वे० (2) भ्रातृसन्तत्याश्रयः (3) नित्यश्राद्धं दर्शाष्टकादिश्राद्धे च कुर्वीरन् (4) संस्कारत्वा० (5) प्रमाणशेष० (6) एतच्च वै- (7) पित्र्यबलि. (8) ०भ्यः पुत्रः (9) तत्र (10) जीवति सति।

**मुद्रितपुस्तकपाठः—**

A- नित्याचारपद्धतिः २१६। श्राद्धकल्पतरौ तु मनुनाम्ना वर्त्तते पृ २३६।

यद्वा "उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः"

इति मैत्रा[A]यणीयगृह्यपरिशिष्टात् नित्यश्राद्धानधिकारः।

मृते पितरि पितामहे जीवति–

"पिता यस्य तु वृत्तः स्याज्जीवेद् वाऽपि पितामहः।
[B]पितुस्तु नाम संकीर्त्य कीर्त्तयेत् प्रपितामहम्॥"

इति विष्णु[C]वचनात् वृद्धप्रपितामहप्रवेशेन श्राद्धम्। न च वृद्धप्रपितामहप्रवेशे मानाभावः। त्रिपुरुषनियमस्यैव मानत्वात्। एवं मातामहे जीवति प्रमातामहादित्रयमुद्दिश्य श्राद्धम्।

तत्रापि—

"[D]पितरो यत्र पूज्यन्ते तत्र मातामहा अपि"।

इति त्रिपुरुषनियमस्यैव मानत्वात्।

न च "न जीवत्पितृकः श्राद्धं कुर्यात्।"

इति वचनाज्जीवन्मातामहस्य श्राद्धनिषेधोऽस्ति।

[1]["[E]सपितुः पितृकृत्येषु अधिकारो न विद्यते।"

---

ख पाठः—

(1) [ ] बन्धनमध्यस्थपाठो नास्ति।

मुद्रित पाठः-

A- उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। ... ... इति मैत्रा० परि० (पृ-२३६) इति वैजयन्त्याम् (पृ-७७२)।

B- "पितुः स्वनाम" नित्याचारपद्धतिः २१९।

C-विष्णुस्मृतौ नास्ति। मनुस्मृतौ (३-२२१) वर्त्तते, तत्र 'तु वृत्तः' इति स्थाने "निवृत्तः" इति, "स्तु" स्थाने 'स" इति पाठः॥
श्राद्धकल्पतरौ तु मनुनाम्ना वर्त्तते पृ २३६।

D- केशव वैजयन्ती पृ-७३५ E- केशव वैजयन्ती- ७५/१।

इति विष्णु[A]वचनात् ।

"[B]न जीवन्तमतिदद्यादि"ति

जीवत्पितृकमात्रविषयत्वात् ।

यत्तु विष्णुवचनम्-(७५-१.३)

"जीव[C]ति पितरि येभ्यः स दद्यात्तेभ्यः ।
पितरि पितामहे जीवति येभ्यः पितामहो दद्यात् ॥
पित्रादित्रये जीवति नैव कुर्यात् ।"

एतदपि साग्निकविषयम् ।

अत्र यद्यपि ] पितरि मृते प्रपितामहे च जीवति व्यवस्था नोक्ता, [1]तथापि

"त्रीन त्रीन् पिण्डान् विभज्य दद्यादि"ति

कात्यायनवचनात् त्रित्वनियमात् प्रपितामहपदं वृद्धप्रपितामहोपलक्षणम् । एवं च मातामहे मृते प्रमातामहे जीवति वृद्धप्रमातामहे जीवति व्यवस्था-ऽवगन्तव्या ।

---

ख पाठः—

(1) तत्रापि ।

मुद्रित पाठः—

(A) विष्णुस्मृतौ नास्ति । किन्तु-"सपितुः पितृकृत्येषु अधिकारो न विद्यते । न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः" ॥ कात्यायन स्मृ.(१६-१२) छन्दोगपरिशिष्टे कात्यायनः— "सपितुः पिण्डकृत्येषु अधिकारो न विद्यते" । कृत्यकल्प० श्राद्ध० २३९ ।

B- "न जीवन्तमतीति श्रुतेः" । कात्यायन श्रौतसू० (४-१-२७) ।

C- "पितरि जीवति च श्राद्धं कुर्यात् । स येषां पिता कुर्यात् तेषां कुर्यात् ।१ पितरि पितामहे च जीवति येषां पितामहः । २ । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्" ॥ (७५-१.३)

न च तत्र मानाभावः। तत्रापि—

"त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्त्तते"।

(मनु ९-१८६)

इत्यस्यातिदेशात् [[1] पित्रादित्रयश्राद्धे यावत् प्रकरणाधीतमनारभ्यविहित-मङ्गं तत्सर्वं मातामहश्राद्धेऽतिदिश्यते।

यदाह विष्णुः— (७५-७)

"मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः"। इति

एवञ्च मातामहादित्रये जीवति श्राद्धानधिकारः।

"पित्रादित्रये जीवति नैव कुर्यादि-"

त्यस्यातिदेशात्। आभ्युदयिके तु—

"पिता पितामहश्चैव तथैव प्रपितामहः।
[A]त्रयस्त्वश्रुमुखाश्चैते पितरः परिकीर्त्तिताः॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोषिताः।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥"

इत्यस्य ब्रह्मपुराणवाक्यस्य मृतपितृपितामहप्रपितामहकविषयत्वा-[2]सम्भवेनाऽपि पित्रादित्रये जीवति तदूर्ध्वपुरुषत्रयप्रवेशेन वृद्धिश्राद्धपरत्वात्तस्य मातामहवर्गे चातिदेशात्। मातामहादित्रये च मात्रादित्रये च जीवति वृद्धिश्राद्धं च[3] स्यादेवेति सर्वं सुस्थम्।

---

**ख पाठः—**

(1) [ ] बन्धनमध्यस्थपाठो नास्ति (2) संभवेन (3) "च" नास्ति।

**मुद्रित पाठः—**

A– "त्रयोप्यश्रुमुखाश्चैते" इति कालसार–पृ-३१३।
"त्रयो ह्यश्रुमुखा" इति, सुखैधिताः" इति कल्पतरौ विशेषः। श्राद्ध–२६८

अत्र[1] गृहस्वामिनोऽनुपनीतत्वे पञ्चयज्ञानधिकारः ।

"अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन्नि"ति

(६-२-६-२२)

जैमिनिना स्मार्त्तकर्ममात्रे उपनीताधिका[2]रप्रतिपादनात् । संवर्त्तन चोद्वाहानन्तरं "तत पञ्चमहायज्ञानि"ति प्रतिपादनात् ।

यत्तु मनुवचनम्—(२-१७२)

"नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते" ।

इति तत्सपिण्डीकरणान्तप्रेतसंस्कारपरम् । यद्यपि पार्वणश्राद्धानन्तरं "एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वस्वि"ति मान[A]वम्, तदपि दर्शादिश्राद्धपरमेव । नित्यश्राद्धे तूपदेशातिदेशयोरभावादकरणम् ।

"अनुपनीतोऽपि कुर्वीत [3]मन्त्रवत् पैतृमेधिकम् ।

यद्यसौ कृतचूडः स्याद् यदि च स्यात् त्रिवत्सरः ॥"

इति सुमन्तुवचनमप्येवंपरमेव ।

अत्र पितृपुत्रभ्रात्रादीनामविभक्तानामेकेन करणे सर्वेषां प्रत्यवायपरिहारात् सर्वैः पृथक् वैश्वदेवादि न कर्त्तव्यम् ।

तदुक्तं—(बृहस्पति. व्यव० २६-५)

"एकपाके निवसतां पितृदेवद्विजार्चनम् ।

एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे ॥"

---

ख पाठः—

(1) तत्र (2) ०कार उक्तः (3) यद् भवेत् पैतृ० ।

मुद्रित पाठः—

A- वचनमिदं मात्स्यमिति श्राद्धतत्त्वे (पृ- १९१), कृत्यकल्प० श्राद्ध. २३। ।

अत्र एकपाकपदेन तद्धेतुभूतो[1] विभागप्रतियोगित्वेनोपस्थितोऽविभागो लक्ष्यते। तेनाविभागे निमित्ते वैश्वदेवः तन्त्रेण[2] विधीयते। एवं[3] विभक्तानां गृहे गृहे इत्ययमनुवादः। अत एव (उशनाः)

**"[A]नवश्राद्धं सपिण्डं च श्राद्धान्यपि च षोडश।**
**एकेनैव च[4] कर्त्तव्यं संविभक्तधनेष्वपि॥"**

एतत् प्रेतक्रियाविभागोत्तरमपि तन्त्रतासिध्यर्थं वचनम्। वचनान्तरेण विभक्तानां तन्त्रतासिद्धेः। अन्यथेह "संविभक्तधनेष्वपी"त्यनर्थकं स्यात्।

**तथा हारीतः—**

**"सपिण्ड़ीकरणं यावत् प्रेतश्राद्धानि षोड़श।**
**पृथङ् नैव सुताः कुर्युः पृथक् द्रव्या अपि क्वचित्॥"**

अत्रापि "पृथक् द्रव्या अपी"ति।

अत्र वदन्ति– "एकपाके निवसता"मिति वाक्यं न वैश्वदेवतन्त्रतापरम्। किन्तु मानवे विभागप्रकरणे—

**"एवं सह वसेयुर्वा पृथग् वा धर्मकाङ्क्षया।**
**पृथग् विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया॥"(९-१११)**

इति [5]विभागस्य यद्धर्मसाधनत्वमुक्तम्, तदुपादानात् अयमर्थवादः। तच्चिन्त्यम्, न हि मानवे "तस्माद्धर्म्या पृथक्क्रिये"ति वाक्यसंनिधाविद-माम्नातमस्ति, येन तदेकवाक्यतयार्थवादः स्यात्। सत्यप्यर्थवादत्वे एकपाके

---

**ख पाठः—**

( ) "विभक्तानामिति पदोपात्त" इत्यधिकम् (2) "एव" इत्यधिकम् (3) "च" इत्यधिकम् (4) तु (5) संविभाग०।

**मुद्रित पाठः—**

A– "नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोड़श।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि" ॥ इति उशना
इति वैजयन्त्याम्। विष्णुस्मृ० ३२८।

पित्राद्यर्चनपृथक्करणाभावस्य लोकसिद्धत्वाभावेन

**"उपरि हि देवेभ्यो धारयती"ति**

विधित्वमेव स्यात्। न ह्येकस्मिन् पाके सर्वैर्भोक्तुं शक्यते पृथक् पञ्चयज्ञानुष्ठानं कर्त्तुं न शक्यत इति लोके प्रसिद्धम्। किञ्च यदि विभागस्य पञ्चयज्ञानुष्ठानपार्थक्य[1]हेतुत्वं नास्ति, केन धर्महेतुत्वम्। तीर्थस्नानजपादीनामविभागेऽपि वृद्धिसंभवात्। किन्तु पाकसाध्यपञ्चयज्ञादिद्वारा यो धर्मस्तद्[2]-वृद्धिहेतुत्वेनैव विभागस्य धर्मसाधनत्वम्।

तन्त्रत्वे हि प्रत्यवायपरिहारेऽपि ब्रह्मलोकादिफलान्तरं नास्ति। प्रतिपुरुषं कामनाभेदेन काम्यफलान्तरानुत्पा[3]दनात्। भेदेनानुष्ठाने तु यस्य यत्कामना तत्फलमपि स्यादिति धर्मवृद्धिः।

[4]एवं च—

**"पृथक् हि वर्धते धर्म"**

इति (९-१११) मनुवचनमपि तन्त्रत्वे प्रमाणम्। किं च दम्पत्योः समानेऽप्यधिकारे

**"धर्मे चार्थे च कामे च नातिचरितव्ये"ति**

स्मृत्या सहानुष्ठानवत् सर्वेषां साधारणधनत्वात् पित्र्यनुवृत्तिपरत्वात् पितुरूर्ध्वं ज्येष्ठानुवृत्तिपरत्वात् वा स्वातन्त्र्याभावात् तन्त्रत्वमिति वक्तुं शक्यते। तदुक्तं—

**"ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवे[A]रन् यथैव पितरं तथा"। (मनुः ६-१०५)**

इति एतदनन्तरमेवोक्तम्।

---

**ख पाठः—**

(1) पाकहेतुत्वम् (2) ०द् विवृद्धि (3) ०नुत्पादात् (4) एवं पृथग्।

**मुद्रित पाठः—**

A- जीवेयुर्-।

"एवं सह वसेयुर्वे"ति (९-१११)।

न चैवमाधानमप्येवमविभक्तानां तन्त्रं स्यात्। "[1]आदधीते"त्येकत्वस्य विवक्षितत्वात्। तत्साध्ययज्ञानां सुतरां तन्त्रत्वाप्रसङ्गः। पुरुषसूक्तपूजादौ च पाकसाध्यत्वाभावादेवतन्त्रत्वप्रसङ्ग इति।

एवं प्रवासे गृहान्तरावस्थाने वा पृथक् पाके यदविभक्तानां पृथक् वैश्वदेवकरणम्, तद्वैश्वदेवस्य पाकनिमित्तत्वभ्रान्तिमूलम्। न हि वैश्वदेवस्य पाको निमित्तं किन्तु पुरुषार्थयोरेव[2] पाकवैश्वदेवयोः शास्त्रीयपरम्परा-सम्बन्धः। एतद् वैश्वदेवकर्म श्राद्धदिने तदुत्तरकाले कर्त्तव्यम्।

मनुः समग्रं श्राद्धमुक्त्वा— (३-२६५)

"ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः"॥

विष्णुपुराणेऽपि- (३-१५-४९)

"ततस्तु वैश्वदेवाख्यां कुर्यान्नित्यक्रियां बुधः॥"

आदित्यपुरा[A]णे—

"पितॄन् संतर्प्य विधिवद् बलिं दद्याद्विधानतः।
वैश्वदेवं ततः कुर्यात्पश्चाद् ब्राह्मणभोजनम्॥"

"पितॄन् संतर्प्ये"ति वचनात् पार्वणश्राद्धोत्तरत्वं लभ्यते।

न चैतद् वैश्वदेवकर्म श्राद्धाङ्गत्वेन विधीयते इति[3], प्रकरणान्तरे प्रयोजनान्यत्वमिति भेदाद्वैश्वदेवोत्तर[4]मेवेति वाच्यम्। तथा सति

---

ख पाठः—

(1) "आदधीतेन" त्वेक० (2) "एव" इति नास्ति (3) "न च" इत्यधिकम् (4) ०त्तरत्वमे-।

मुद्रित पाठः—

A- कृत्यकल्प० श्राद्ध-२२६।

श्राद्धाङ्गत्वे नित्य[1]क्रियाविरोधापत्तेः। नापि श्राद्धे वैश्वदेवपूर्वत्वविधिः, तच्छब्दोपात्तस्य श्राद्धस्य पञ्चमीविहिततसिलाऽवधित्वप्र[2]तीतिबाधापत्तेः। [3]न च

"दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेते"

त्यत्र [4]सोमे दर्शपौर्णमासोत्तरत्वं[5] वैश्वदेवाङ्गत्वेन विधीयते इति वाच्यम्। तथा सति श्राद्धप्रकरणबाधापत्तेः। तस्मादेवं वाच्यम्। यथा ज्योतिष्टो[6]मे "तदन्ते सायमाहुति"रिति ज्योतिष्टोमाङ्गत्वेन नित्यसायमाहुत्यन्तता विधीयते नाग्निहोत्रान्तरं न वाग्निहोत्राङ्गकालः, तथा श्राद्धाङ्गत्वेन वैश्वदेवगतमुत्तरत्वं विधीयते। वैश्वदेवस्य श्राद्धोत्तरानुष्ठानेनैव श्राद्धं सगुणं भवति इति।

न चान्यार्थक्रियागतनियमस्य कथमन्यकर्माङ्गत्वम्। विधानादेव। पुरुषार्थभोजनगतपयोव्रतादिनियमानां सोमाङ्गत्वात्। तेन सर्वसोमविकारेषु सायमाहुत्यन्तवत् सर्वश्राद्धोत्तरत्वं वैश्वदेवस्य सिद्धम्। केवलं

"पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणो"ति

कालादर्शप्रामाण्यात् मातृश्राद्धात्पार्वणात्मकादपि पूर्वं नित्यश्राद्धम्। सर्वैकोद्दिष्टानां [7]चात्र वचनान्नित्यश्राद्धानन्तरं करणम्।

**जाबालिः—**

"पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्।"

इति नित्यश्राद्धमपि पार्वणम्। नित्यश्राद्धानन्तरं गोग्रासदानम्। तच्च काम्यम्।

---

ख पाठः—
(1) क्रियापदविरो॰ (2) "प्रतीति" इति नास्ति (3) "न" इति नास्ति (4) सोमस्य (5) श्राद्धोत्तरत्व विधिवत् (6) ज्योतिष्टोमेन यजेत इत्येतत् साय॰ (7) "चात्र" इति नास्ति।

तथा च ब्रह्मपु[A]राणे—

"सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि ॥"

गोग्रासदानमात्रेऽयं मन्त्रः ।

"[B]गवां कण्डूयनं ग्रासं घासमाह्निकमेव वा[1] ।
दत्त्वा भवेन्महापुण्यं गोप्रदानसमं नृणाम् ॥"

गवामाह्निकदाने तु भविष्यपुराणोक्तो मन्त्रः । तस्योत्पत्तिशिष्टत्वेन ब्रह्मपुराणीयस्य तेन विकल्पायोगात् ।

तथा च भवि[C]ष्यपुराणे—

"तृणोदकादिसंयुक्तं यः प्रद[2]द्याद्गवाह्निकम् ।
कपिला[D]दानस्य फलं प्राप्नुयान्नात्र संशयः ॥
पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसम्भवे ।
प्रतीच्छेमं मया दत्तं सौ[3]रभेयि नमोऽस्तु ते ॥"

इदं च स्वगोपरगोसाधारणम् ।

---

ख पाठः—

(1) च (2) प्रयच्छेद्ग० (3) सौरभेय ।

मुद्रित पाठः—

A- कृत्यकल्प-नियत-१७४ B- कल्पतरौ ग्रासघासयोर्व्यत्ययः नियत १७४ C-कृत्यकल्प-नियत १७४ D- "कपिलाशतदानस्य" इति कल्पतरौ ।

यत्तु महा[A]भारते (अनु. ६८-११)—

"घासमुष्टिं परगवे साब्नं दद्यात्तु यः सदा ।

अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥"

इदं च [1]फलं चाकर्मकसंनिधानवति परगोसंप्रदानकम्, पृथगेव दानान्तरम् ।

गोग्रासदानानन्तरम्— बलिकर्म । अनन्तरं स्वीकृतस्यातिथेर्भोजनम् ।

नित्यश्राद्धानन्तरं वसिष्ठः (११-६)

"ततोऽतिथीन् भोजयेत् श्रेयांसं श्रेयांसमानुपूर्व्येण ।"

मनुर्विष्णुश्च प्रथमे (मनुः ३-९९, १००, १०१)

"संप्रा[B]प्ताय त्वतिथये प्रदद्यादासनोदके ।

अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥

(म० ३-९९ वि० ६७-४५)

[C]अग्निं हुत्वा विधानेन यत्पुण्यफलमश्नुते ।

तेन तुल्यं विशिष्टं वा ब्राह्मणे तर्पिते फलम् ॥

---

ख पाठः—

(1) फलांशकर्मसंनिधानवति ।

मुद्रित पाठः—

A— कृत्यकल्प० नियत-१७३ ।

"ग्रासमुष्टिं परगवे दद्यात् संवत्सरं तु यः ।

अकृत्वा स्वयमाहारं व्रतं तत् सार्वकामिकम् ॥ ११

स हि पुत्रान् यशोर्थं च श्रियं चाप्यधिगच्छति ।

नाशयत्यशुभं चैव दुःस्वप्नं च व्यपोहति ॥ १२ (महाभा० अनु-६८-१२)

B- "सायं प्रातस्त्व" विष्णुः C- श्लोकोऽयमुभयत्र नास्ति ।

कल्पतरौ नियत-१७५ अस्ति ।

शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽन[1]र्चितो वसन् ॥ (३-१००)
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥" (३-१०१)

शङ्खलिखितौ–

"यथा प्रणीतश्चाप्र[2]णीतो[A]ऽग्निर्दैवतम्,
एवं विद्वांश्चा[3]विद्वांश्च ब्राह्मणः पूज्य एव सर्वेषाम् ।
यत्र हि ब्राह्मणो न भुङ्क्ते तद् हुतम[B]ग्नावहु[4]तमेवास्य
तद्धविः । तत्र हि[5C] देवा अपि न गृह्णन्ति [D]स्वभागम् ।
अतिदेवा हि[6] ब्राह्मणाः । ब्राह्मणानां हि[E]
प्रसादात् देवा अपि स्वर्गमजय[7]न् ।"

तथा— "वयो[F]वि[8]त्तविद्यातपः संपन्नाय पाद्यमर्घ्यमाचमनीय-
मन्नविशेषां[G]श्च तस्मै दद्यात् । सहासीत ।
प्रदोषेऽनुज्ञाप्य शयीत । पूर्वं प्रतिबुध्येत ।

---

ख पाठः—

(1) तर्पितो (2) "अप्रणीतः" इति नास्ति (3) "च" इति नास्ति (4) ०वपहत० (5) "हि" इति नास्ति (6) "हि" इति नास्ति (7) ०मयजन् । (8) "वित्त" इति नास्ति !

मुद्रित पाठः—

A- ०तश्चाग्निहि दै- B- ०मप्यग्ना- C- हि नास्ति D- स्वं भा-
E- हि नास्ति ( कृत्यकल्प० नियत- १७७ ) F- वयोवर्ण०
G- ०षान् तस्मै शक्तितो दद्यात् ।

प्रस्थितमनुव्रजेत् । [A]वेद्युद्यानारामप्रपातडागदेवगृह-
महाद्रुमस्था[1]ननदीनामन्यतरस्मि[B]न् प्रदक्षिणीकुर्यात्
वाचमुत्सृज्य पुनर्द[C]र्शयेत् ॥"

वेद्या[2]दीनामप्यन्यतमस्मिन् स्थाने पुनर्दर्शयेति वाचमुत्सृज्य प्रदक्षि[3]-
णीकुर्यादित्यर्थः ।

हारीतः[D]—

"अतिथिश्चे[E]दागच्छेत् यतिर्वैखानसः समानवृत्तिः
स्नातको वा तस्य स्वागतमर्घ्यं पाद्यमाचमनी[F]यं च
प्रदाय याश्चौषधयः [4]सन्ति[G]ताश्चोपहरेत् ।
[H]तृप्तं प्रयान्तमनुविष्णु[5]क्रमाननुक्रामति ।
मोदन्ते [I]तस्य पितरः पितामहाः प्रपितामहाः
तेनानुज्ञातो निवर्तेत वसेच्चेद् विधिवत् परिचरणम् ॥"

स्नातको [6]वाऽकृतविवाहः । समानवृत्तिर्गृहस्थः ।

विष्णुक्रमाः दिवि विष्णुः [7]क्र७स्व इत्यादिमन्त्रकरणकपादन्यासाः
यज्ञाङ्गरूपाः । ते च पित्रादितृप्त्यर्थत्वेन काम्याः ।

---

ख पाठः—

(1) स्थानानामन्यतमस्मिन् (2) उद्यानादीनामप्यन्यतम- (3) ०क्षिणं कु०
(4) पवित्राः (5) विष्णुक्रमान् क्रामति (6) "वा" इति नास्ति ।
(7) व्यक्र७स्व ।

मुद्रितपाठः—

A– समेत्य न्यायतो निवर्त्तेत वेद्युद्यानारामसभा- B– ०स्मिंश्च प्रदक्षिणं-
C–०र्शनायेति D-कृत्यकल्प०(नियत १७८) E-०श्च यदा- F-०नीयमासनं च
G: सन्निहिता स्ता, H– तं प्रयान्तमनुव्रजन् I- अस्य ।

आपस्तम्बः—(२-४-९-२.४)

"यानवन्तमायानाद्, यावन्नानुजानीयादित[A]रम् ।
अप्रतिभायां सीम्नो निवर्त्तेत ॥"

यानारोहणपर्यन्तमनुव्रजनम् । इतरं यानरहितं तावदनुव्रजेद, यावन्नानुज्ञा निवर्त्तस्वेति । अनुज्ञादानेऽतिथेरप्रतिभायां सीमान्तमित्यर्थः ।

पुनः हारीतः सर्वदेवमयत्वमतिथेरुक्त्वा—

"यदासनादिभिरर्चयति अग्निं यज्ञं च तेन प्रीणाति ।
यत् पादाभिषेचनं कुरुते पितृ स्तेन प्रीणाति ।
[B]यदन्नेन[1] पूजयति प्रजापतिं तेन प्रीणाति ।
[2]यदेनं यान्तमनुयाति तेन सर्वान् कामाना[3]प्नोति ॥"

दक्षः—(३-५.६)

"सुधाव[4]स्तूनि वक्ष्यामि [C]विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥ (५)
अभ्युत्थानमिहागच्छ पूर्वालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ॥" (६)

---

ख पाठः-—

(1) नाभिपूजयति (2) "एनं" इति नास्ति (3) अवाप्नोति
(4) विधानं तु प्रवक्ष्यामि ।

मुद्रित पाठः—

A- दितरः । अप्रती- ।
B- यदन्नेनाभिपूजयति प्रजापतिं तेन प्रीणाति ।
यदेनं यान्तमनुयाति श्रेयस्यो ब्रह्मवर्चस्यस्तेन सर्वान् कामानवाप्नोति ॥
कृत्यकल्प० नियत-१७९
C- शिष्टे च गृहमागते ।

तथा— (३-८)

"पादशौचं तथाभ्यङ्गमाश्रयः शयनं तथा ।
मृज्जलं [1]गर्धिने देयमेतान्यपि [2]सदा गृहे ॥"

मनुः[A]—

"[3]प्रमिते स्वागतेनाग्निरासनेन शतक्रतुः ।
पितरः पादशौचेन भोजनेन प्रजापतिः ॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपात्रेण पिबन्ति पितरो जलम् ॥"

यतौ विशेषः [B]दक्षः— (७-४२.४३)

"जन्मप्रभृति यत्पापं गृहस्थेन तु सञ्चितम् ।
[4]विमार्जयति तत्सर्वमेकरात्रोषितो यतिः ॥ (४३)
[5]आश्रमे तु यतिर्यस्य विश्राम्यति मुहूर्त्तकम् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स[6] स्मृतः ॥" (४२)

---

ख पाठः—

(1) चार्थिने (2) सतां (3) प्रीयते (4) निर्मार्जयति (5) तथा- आश्रमेषु (6) तेन सः ।

मुद्रित पाठः—

A- कृत्यकल्प० नियत-१९८ । तत्र "प्रीयते" इति ।

B- "सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम् ।
निर्दहत्येवतत्सर्वमेकरात्रोषितो यतिः ॥ ७-४३
आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत् ।
किं तस्यान्येन धर्मेण कृतकृत्योऽभिजायते ॥ ७-४२

मनुः– (३-९५)

"यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद् [A]गुरौ।
तत्पुण्यफलमाप्नोति भिक्षां दत्त्वा च[B] भिक्षवे ॥"

पद्मपुराणे— (सृष्टि० १५. १४०-१४१)

"यः पात्रपूरणीं भिक्षां यतिभ्यः सम्प्रयच्छति।
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥"

नरसिंहपु[C]राणे— (५८- १००.१०१)

"अकृते वैश्वदेवे तु [1]भिक्षा[D]र्थे गृहमागते।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥
वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहति।
न तु भिक्षुकृतं [2]दोषं वैश्वदेवो व्यपोहति ॥"

[E]यमः—

"यत् किञ्चित् कुरुते ध्यायी दातुरर्द्धं प्रयच्छति।
तस्मान्महत् फलं दानं ध्यायिने स्नातके तथा ॥

---

ख पाठः—

(1) भिक्षौ च (2) पापं।

मुद्रित पाठः—

A- गुरोः B- द्विजो गृही।

C- अकृते वैश्वदेवे तु भिक्षौ भिक्षार्थमागते।
अवश्यमेव दातव्यं स्वर्गसोपानकारकम् ॥ (५८-१००)
उद्धृत्य वैश्वदेवान्नं भिक्षां दत्त्वा विसर्जयेत्।
वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् ॥ (५८-१०१)

D- भिक्षार्थमिति कृत्यकल्प० (नियत-१७१)।

E- कृत्यकल्प० (नियत० १९७)।

अश्वमेधसहस्रेण वाजपेयशतेन च ।
पुण्डरीकसहस्रेण योगिष्वावस[A]थे समम् ॥"

दक्षः— (७-४०.४१)

"वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते ।
तदा[1]वसथनाथस्य मूलान्यपि निकृन्तति ॥"

तथा— (७-३९)

"तपोजपैः कृशीभूतो व्याधिनावसथार्हकः ।"

मनुः – (३-१०५)

"अप्रणोद्योऽतिथिः सायं सू[2]र्यो[B]स्ते गृहमागतः ।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥"

तथा— (३-१०७)

"[C]आसनावसथं शय्यामनुव्रज्यामुपासनहौ ।
उत्तमेषूत्तमान् कुर्याद्धीने हीनं समे समम् ॥"

गुरौ विशेषः ।

आप[D]स्तम्बः— (२-२-५-४.११)

"समावृतो वेदाचार्योऽभ्या[3]गच्छेत्तमभिमुखोऽभ्यागम्य-

---

ख पाठः—

(1) तस्यावसथ० (2) सूर्योढे (3) यद्यागच्छे० ।

मुद्रित पाठः—

A- थो वरः B- सूर्योढे C- आसनावसथौ शय्यामनुव्रज्यामुपासनाम् ।
उत्तमेषूत्तमं कुर्याद्धीने......

D- समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत् पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् । ४ । आसने शयने भक्ष्ये भोज्ये वाससि वा संनिहिते निहीनतरवृत्तिः स्यात् ।५।

तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत् ।
पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् ।
आसने शयने भक्ष्ये भोज्ये वाससि [1]संनिहितेऽहीनतर वृत्तिः । तिष्ठन् सव्येन पाणिनानुगृह्याचार्यमाचामयेदन्यं[2] वा समुदेतम् । स्नानासनचंक्रमणस्मितेष्वनुचिकीर्षेत् । संनि[3]हिते मूत्रपुरीषवान्त[4]कर्मोच्चैर्भाषाहा[5]सनिष्ठीवन-दन्तधावनसिंघाण सभ्रू क्षेपण ताडननिष्ठादीनि, [6]दारे प्रजायां चोपस्पर्शनं भाषा विश्रम्भपूर्वाः परिव[7]र्जयेत् । वाक्येन[8] वाक्यप्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च ।"

उपसंगृह्य पादाविति शेषः । न बीभत्समान इति आचार्यचरणसंस्पर्शे घृणामकुर्वन् पादौ प्रक्षालयेत् । पुरस्कृत्य-सत्कृ[9]त्य मान्येन उपस्थाप्य मदीयं सर्वं तवेति निवेद्य । यथोपदेशं- यथाशास्त्रम् । सन्निहिते गुरौ तिष्ठन्नाचार्यमाचामयेन्नोपविष्टः । सव्येन पाणिनाऽनुगृह्य दक्षस्थजलपात्रं वामपाणौ कृत्वा आचमनं कारयेत् । अन्यं वा समुदेतं गृहागतमन्यमपि

---

**ख पाठः—**

(1) वाऽसंनि० (2) अन्यं समुदितम् इति नास्ति (3) तत्संनिधाने (4)वात० (5) ०हसननिष्ठीवनदन्तधावनसिंघाणभ्रू क्षेपताडननिष्ठ्यादीनि (6) दारेषु प्रजायाः (7) परिहरेत् (8) वाक्ये शब्दप्रति० (9) "सत्कृत्य मान्येन" इति नास्ति ।

**मुद्रित पाठः—**

तिष्ठन् सव्येन पाणिनाऽनुगृह्याचार्यमाचामयेत् । ६ । अन्यं वा समुदेतम् । ७ । स्थानासनचंक्रमणस्मितेष्वनुचिकीर्षन् । ८ । संनिहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःसृङ्णभ्रुक्षेपणतालननिष्ठ्यानीति । ९ । दारे प्रजायां चोपस्पर्शनभाषा विश्रम्भपूर्वाः परिवर्जयेत् । १० । वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेत् श्रेयसां च । आप०धर्म०(२-२-५-४.११)

एवं सत्कृत्याचामयेत् । अनुचिकीर्षेत्-आचार्यस्य स्नानाद्यनन्तरं स्वयं स्नानादि कुर्यात् । सन्निहिते गुरौ मूत्रपुरीषादि वर्जयेत् । दारे प्रजायां चोपस्पर्शनं संस्पर्शनम् अङ्गपरिष्वङ्गः । श्रेयसां च विद्यातपःसमृद्धानां गुरुवदातिथ्यमित्यर्थः ।

**गौतमः (१-५-२५,२६)**

**"आचार्यपितृसखीनां तु[1A] निवेद्य वचनक्रिया ।**

**ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः ।**

**संवत्सरे पुनः यज्ञविवाहयोरर्वाक् । राज्ञश्च**

**[2]श्रोत्रियस्या-श्रोत्रियस्यासनोदके ॥"**

आचार्यपितृसखी[3]नां निवेद्य संस्कारं कृत्वा वचनक्रिया यत्ते वदन्ति तत्क[4]र्म कर्त्तव्यम् । ऋत्विगादीनां गृहागमने मधुपर्कः कार्यः । संवत्सरे पुनरागमने मधुपर्कः न तु संवत्सरात्पूर्वमागमने इत्यर्थः । यज्ञविवाहयोरर्वागिति यज्ञविवाहयोरुपस्थाने संवत्सरादर्वागपि मधुपर्क इत्यर्थः । तथा श्रोत्रियस्य राज्ञः संवत्सरादर्वागपि मधुपर्कः । अश्रोत्रियस्यासनोपस्थानमात्रम् ।

**मनुः (३-११९,१२०)**

**"राजर्त्विक् स्नातकगुरुप्रियश्वशुरमातुलान् ।**

**अर्हयेन्मधुपर्केण प्रतिसंवत्सरान् पुनः ॥ (११९)**

---

**ख पाठः—**

(1) "तु इति नास्ति (2) श्रोत्रियायासनो श्रोत्रियस्य अश्रोत्रियस्यासनोदके

(3) सखादीनां (4) "कर्म" इति नास्ति ।

**मुद्रित पाठः—**

A- "च निवेद्य" इति ।

राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ ।
अर्हयेन्मधुपर्केण न त्वयज्ञ इति स्थितिः ॥" (१२०)

[A]बौधायनः (२-३-६-३७)

"ऋषिविद्वन्नृपाः प्राप्ताः क्रियारम्भे च ऋत्विजः ।
मातुलश्वशुरौ पूज्यौ संवत्सरगताविति ॥"

पुनर्बौधायनः-

"ब्राह्मणक्षत्रियविट् शूद्रानभ्यागतान् [1]यथाशक्ति पूजयेत् ।
यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् ।
यो वा प्रथम[2]मागतः स्यात् ॥"

युगपदागमने गुणवते दद्यात्, क्र[3]मेणागमने प्रथमागतायेति व्यवस्था ।

शङ्खलिखितौ-

"नाब्राह्मणोऽतिथिर्ब्राह्मणस्य श्रोत्रियाय गुणवत
आतिथ्यम् । राजन्यवैश्याभ्यां मित्रवत् ।
शूद्र[B]स्यानृशंस्यार्थम् ।"

ब्राह्मणेऽतिथिपूजाफलं मनुष्ययज्ञरू[4]पत्वात् । क्षत्रियवैश्यादौ सख्यादिवदन्नं देयम् । शूद्रस्य त्वन्नं स्वस्याक्रूरताख्यात्यर्थमित्यर्थः ।

---

**ख पाठः—**

(1) पूजयेद यथाशक्त्या (2) प्रथमाभ्यागतः (3) क्रमागमने (4) "रूप" इति नास्ति ।

**मुद्रित पाठः-**

A- क्रियारम्भे वरर्त्विजौ, कृत्यकल्प० नियत-२०७, "वरर्त्विजौ" इति "संवत्सरगतागतौ" इति च बौधा० धर्म० ।

B- शूद्राया- कृत्यकल्प० नियत- १९२ ।

**आपस्तम्बः (२-२-४-१६.२१)**

"शूद्रमभ्यागतं कर्मणि नियुञ्ज्याद् यथा[A]स्मै दद्यात् ।

दासा वा राजकुलादाहृत्यातिथिवत् शूद्रं पूजयेयुः ॥"

गृहस्थः शूद्रा[1]न् स्वयं च दद्यात् कर्म कारयित्वा दद्यात्, अथवा तस्य सेवकाः शूद्राः स्वामिगृहान्नीतवान्नं शूद्रमतिथिधर्मेण भोज[2]येयुरित्यर्थः । एतेन स्वयं कर्मकरणं विना शूद्राय न दद्यादित्यर्थः ।

एवं च

"शूद्रा[B]योच्छिष्टं वा दद्या (११-१०) दि"ति

वसिष्ठवचनमाश्रितशूद्रविषयम् ।

"न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।"

(मनु० ४-८०)

इति त्वनाश्रितशूद्रविषयं मन्तव्यम् ।

**शाताता[C]पः—**

"जन्मनैव महाभागो ब्राह्मणो नाम जायते ।

नास्त्येषां पूजनीयोऽन्यस्त्रिषु लोकेषु कश्चन ॥

तपोविद्याविशेषेण पूजयन्ति परस्परम् ।

अन्योन्यं गुरवो विप्रा अन्योन्यातिथयः स्मृताः ॥"

**मनुर्विष्णुः शातातपश्च द्वितीये** (मनुः ३-१०२.१०३) (विष्णुः ६७-३४.३५)

"एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।

अनित्यं हि [3]तिथि[D]र्यस्मात्तस्मादतिथिरुच्यते ॥

---

**ख पाठः—**

(1) शूद्राय (2) पूजयेयुः (3) स्थिति ।

**मुद्रित पाठः—**

A- अथास्मै B- "शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात्" वसिष्ठ- ११-१०

C- कल्पतरु- नियत- १९३ । तत्र प्रथमश्लोकार्धानन्तरं "नमस्यः सर्वभूतानां जन्मश्रेष्ठः पिता गुरु"रित्यधिकः ॥

D- स्थितो- कृत्यकल्प नियत- २०१ मनुस्मृतौ च ।

नैकग्रा[1]मि[A]कमतिथिं विप्रं साङ्गतिकं तथा।

उपस्थितं गृहे विद्या[2]द् भार्या यत्राग्नयोऽपि वा ॥"

साङ्गतिकः परिहासादिभिः सर्वैः सङ्गतः। एतौ काले हि प्राप्तावपि नातिथी। गृहे– नित्यनिवासस्थाने। न केवलं [3]गृह एव सतोऽतिथिः प्रवासेऽपि पाकाऽतिथिः। स्वस्याभावे यत्राग्नयो भार्या वा तत्राप्यतिथिपूजा कार्या इत्यर्थः।

एकरात्रे निवासेऽतिथिरित्युक्ते आपस्तम्बोक्तद्वितीयदिननिवासादि फलविशेषार्थम्।

तथा आपस्तम्बः (२-३-७-१६)

"एकरात्रं चेदतिथिं वास[B]यति पार्थिवान्
लोकानभिजयति। द्वितीयया [C]याम्यान्तरिक्षान्।
तृतीयया दिव्यान्। चतुर्थ्या परावतो लोकान-
परिमिताभिरपरिमितान् लोकान्[D] जयति।"

आप[E]स्तम्बः (२-४-८-३)

"न गृहे भुञ्जीतानवशेष्यातिथिभ्यः।"

आग[4]न्तुकेभ्योऽतिथिभ्यः क्षीरशाका[5]दीननवस्थाप्य न भुञ्जीतेत्यर्थः।

---

ख पाठः—

(1) ग्रामीण० (2) दद्यात् (3) गृहे वसतो (4) "आगन्तुकेभ्योऽतिथिभ्यः" इति नास्ति (5) ०रमाध्वीकादीनन०।

मुद्रित पाठः—

A– ग्रामीण B- वासयेत् C- ०न्तरिक्षान्

D- नभिजयति- कल्पतरु- नियत १८३। आपस्तम्बेऽपि कल्पतरूक्तपाठः।

E- न रसान् गृहे भुञ्जीतानवशेषमतिथिभ्यः। ३। आपस्त० ध०।

तथा (आप० २-४-८-४)

"नात्मार्थमभिरूपमन्नं पाचयेत् ॥"

केवलात्मार्थमित्यर्थः ।

[A]पराशरः—

"अचिन्तितमनाहूतं देशकाल उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥
क्षुधार्त्तस्तृषितः श्रान्तो दूरा[B]ध्वानमुपागतः ।
तं पूजयेत् प्रयत्नेन सोऽतिथिः स्वर्गसंक्रमः ॥"

देशो भार्यादिसहितः । कालो वैश्वदेवान्तः ।

[C]यमः—

"तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ॥
व्रती यतिर्वै[1]करात्रं निवसन्नुच्यतेऽतिथिः ॥"

पर्वाण्यमावास्यादीनि । उत्सवा विवाहादयः । [2]एतेन मृष्टान्नलोलुपा[3] न भवन्तीत्युक्तम् ।

---

ख पाठः—

(1) नैकरात्रं (2) तेन (3) "ये" इत्यधिकम् ।

मुद्रित पाठः—

A- "इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥ ४० ॥
दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ पराशरः(१-४१)

B- दूरादध्वन- कृत्यकल्प- नियत २०३ ।

C- कृत्यकल्प नियत-२०२ "व्रती यतिरेकरात्रम्" इति विशेषः ।

शातातपः[A]-

"प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
वैश्वदेवे तु सम्प्राप्ते सोऽतिथिः स्वर्गसंक्रमः ॥"

इद च यथोक्तातिथ्यलाभेऽनुकल्परुपेग ।

"द्विषन् द्विषतो वा नान्नमश्नीयाद् दोषेण[B] च
मीमांसमानस्य मीमांसितस्य[1] ।
पाप्मानमस्य भक्षयतीति विज्ञायते ॥"

इत्यापस्तम्ब (२-३-६-१९) वचनम् ।

"न मित्रमतिथिं कुर्यादि"ति

च मुख्यातिथिसंभवे द्रष्टव्यम् ।

यमः[C]—

"न पृच्छेद् गोत्रचरणं देशं नाम कुलं श्रुतम् ।

---

ख पाठः—

(1) "च" इत्यधिकम् ।

मुद्रित पाठः—

A- कृत्यकल्प- नियत-१९४ B-दोषेण वा, मीमांसितस्य वा, पाप्मानं हि तस्य, कल्पतरु-नियत-१८१ "दोषेण वा मीमांसमानस्य मीमांसितस्य वा । आप. ध. ।

C- कृत्यकल्प- नियत (पृ २००)

"न पृच्छेद्गोत्रचरणं देशं नाम कुलं श्रुतम् ।
अध्वनोभ्यागतं विप्रं भोजनार्थमुपस्थितम् ॥
देशं नाम कुलं विद्यां पृष्ट्वा योन्नं प्रयच्छति ।
न स तत्फलमाप्नोति दत्वा स्वर्गं न गच्छति ॥"
"देशं गोत्रं कुलं विद्यामन्नार्थे यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु त्रान्ताशी स निरुच्यते ॥"

देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति ।
न [1]स तत्फलमाप्नोति दत्त्वा स्वर्गं न गच्छति ॥"

तथा—

"देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु वान्ताशी स निगद्यते ॥"

शाता[A]तपः—

"चित्तं हि भावयेत्त[2]स्मिन् व्यासः स्वयमुपागतः ।"

आपस्तम्बः (२-३-७-१७)

"असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेत् आसनमुदकमन्नं श्रोत्रियाय ददा[B]नीत्येवं दद्यादेवमस्य समृद्धो भवति ।"

असमुदेतः अपकृष्टः अतिथिरस्मीति ब्रुवन् ।

वसिष्ठः—

"चण्डालपतितवायसेभ्यो भूमौ निर्वपेत् ।"

मनुः (४-३०)

"पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणाऽपि नार्चयेत् ॥"

पाषण्डिनो- वेदबाह्यशास्त्ररताः । विकर्मस्थाः- स्वाश्रमधर्मविहीनाः ।

---

ख पाठः—

(1) तस्य (2) तत्र ।

मुद्रितपाठः—

A- कृत्यकल्प-नियत- २०० B- ददामीत्येव दद्यादेवमस्य समृद्धं भवति ।

बैडालव्रतिकाः—

"धर्मध्वजी सदा लुब्ध"

इत्यादिरूपेण मनूक्ताः (४-१९५)। शठाः व्याजेन धर्मकारिणः। हैतुकाः वेदविरुद्धतर्कनिष्ठाः। बकवृत्तयः—

"अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्पर"

इत्येवं मनूक्ताः (४-१९६)।

एतेभ्यो यद्यप्यन्नमात्रं देयमेव तथाप्यादरो न कर्त्तव्यः। अत उक्तं नार्चयेदिति।

**तथा च ब्रह्मपुराणे—**

**"[A]देवैर्जिता दैत्या एव पाषण्डिनो जाता ॥**

इत्युपक्रम्य—

**नित्यं सत्पुरुषः कुर्यादेतेष्वभ्यधिकां दयाम् ॥"**

तथा—

**"दुःखाकुलं जगदेतत् विचार्य**

**नमोऽस्तु धर्माय इति ब्रुवंश्च।**

---

**मुद्रित पाठः—**

A- पूर्वं देवैर्जिता दैत्याः संग्रामाच्च पराङ्मुखाः।
कपालपाणयो जग्मुः केचिन्नग्नव्रतास्तथा ॥
केचिन्मुण्डा लोहिताक्षाः काषायवसनास्तथा।
सात्वताश्च दुराचाराः शौचाचारविवर्जिताः ॥
नरास्थिकेशसंछिन्नाः केचिद्व्याजेन दानवाः।
यज्ञेषु रक्षसां भागो देय इत्येव संस्मरन् ॥
विप्रेभ्यो मूर्त्तिमद्भ्यश्च देवेभ्यश्च गृहाद् बहिः।
नित्यं सत्पुरुषः कुर्यादेतेष्वप्यधिकां दयाम् ॥

दद्या[A]च्चान्नं सर्वगतं च विष्णुं
प्रणम्य वै [B]द्वादशवर्णमात्रम् ॥"

द्वादशवर्णो द्वादशाक्षरवासुदेवमन्त्रः। तेन "ॐ नमो भगवते वासुदेवाये"ति मन्त्रमुच्चार्य सर्वगतं विष्णुं प्रणम्य "नमोऽस्तु धर्माये"ति वदन् पाषण्डिभ्यः कृपयान्नं दद्यादित्यर्थः।

अतिथिपूजाव्यतिक्रमे दोषमाह

[C]यमः—

"येषामनश्नन्नतिथिर्विप्राणां व्रजते गृहात्।
ते वै खरत्वमुष्ट्रत्वमश्वत्वमुपपेदिरे ॥
यस्य चैव वसेद्विप्रो गृहे कश्चिदभोजितः।
न तस्य देवाः पितरो हव्यं कव्यं च [D]गृह्णते ॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
सुकृतं तस्य यत्किञ्चित् सर्वमादाय गच्छति ॥
अतिथि[1]र्यत्र वै ग्रामे भिक्षमा[E]णो यतस्ततः।
शेते निरशनस्तत्र ब्रह्महत्या विधीयते ॥"

तथा[F]

"न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च।

---

ख पाठः—

(1) यस्य।

मुद्रित पाठः—

A- ०दन्नं B- द्वादशपर्वमात्रम्। कल्पतरु० नियत- १७३।

C- कल्पतरु- नियत- १९८ D- भुञ्जते, E- ०णः प्रयत्नतो।

F- कृत्यकल्प- नियत- १९९।

अग्निहोत्रं जरत्कन्या द्वारे च पशुबन्धनम् ॥
अतिथिर्वैश्वदेवान्ते निर्दहन्त्य[1]वमानिताः ।"

अग्निहोत्रं स्वकाले तत्परिचरणाभावे। विवाहकालेऽप्यविवाहिता । द्वारे पशुबन्धनं स्वकाले घासोदकाद्यदाने ।

[A]देवलः-

"असत्कृतो निराशश्च सद्यो दहति तत्कुलम् ॥"

अतिथिरित्यर्थः ।

आप[B]स्तम्बः (२-४-८-१४), (२-४-६-१)

"अतिथिं विकृत्य यत्र गते भोजने स्मरेत्ततो
विरम्योपोष्य । श्वोभूते यथामानसं
भोजयित्वा तत् साधयेत् ॥"

अतिथिं विकृत्यातिथिमुपवेशयित्वा विस्मरणादिना तमभोजयित्वा भोजने क्रियमाणे अर्धभोजने स्मरणे भोजनाद्विरम्योपोष्य उत्तरदिने यथामानसं येनास्य रुचिर्भवति तेन तोषयित्वानुव्रजनादि कुर्यात् ।

शातातपः[C]-

"भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा ।
असंभवे सदा दद्यादुदपात्रमथापि वा ॥

---

ख पाठः-

(1) ०त्यवमानितः ।

मुद्रित पाठः-

A- कृत्यकल्प-नियत-२०० ।

B- अतिथिं निराकृत्य यत्र गते भोजने स्मरेत्ततो" २-४-८-१४
श्वोभूते यथामनसं तर्पयित्वा संसाधयेत् ॥ २-४-९-१

C- कृत्यकल्प- नियत-१९४ ।

ग्रासमात्रा भवेद्भिक्षा पुष्कलं तु चतुर्गुणम् ।
पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥"

अशक्तावुद्धृत्य किञ्चिदन्नं स्थापयेत् ।

दक्षः (३-९) नित्यकर्माधिकारे—

"[1]संध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवेक्षणातिथ्यमुद्धृतं वाथ शक्तितः ॥"

आहिताग्निगृहेऽतिथिपूजायां विशेषः ।

आपस्तम्बः— (२-३-७-१३.१५)

"आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेव तमभ्युपेत्य ब्रूयाद् व्रात्य क्वावात्सीरिति, व्रात्योदकमिति, व्रात्य तर्पय[A]स्त्वेति । पुराग्निहोत्र[B]होमादुपांशु जपेत् । व्रात्य यथा ते मनस्तथास्त्विवति । (१३)
व्रात्य यथा ते [C]वचस्तथास्त्विवति । व्रात्य यथा ते [D]कामस्तथास्त्विवति । (१४)
[2]अथो[E]द्धृतेष्वग्निष्वहुलेष्वतिथिरभ्यागच्छेत् स्वय[F]मेवाभ्युपेत्य ब्रूयात् व्रात्या[3]तिसृज [4]होष्यामीति । अतिसृष्टेन होतव्यमनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह ।'

---

ख पाठः—

(1) प्रातः संध्या जपो होमः (2)यस्योद्धृते (3)व्रात्य तिष्ठ (4)होष्यानीति ।

मुद्रित पाठः—

A-तर्पयंस्त्विवति । अत्र'अनुस्वार छकारी च्छन्दसा विति हरदत्तः ।'(उज्ज्वला)

B- होत्रस्य C- वचस्तथास्त्विवति व्रात्य यथा ते प्रियं तथास्त्विवति ।

D- निकाम- E. यस्योद्धृतेष्वहुतेष्वति F- स्वयमेनमभ्युदेत्य ।

व्रात्य इति पूजायां, व्रतमर्हतीति व्युत्पत्त्या । कावात्सीदिति [1]प्रश्नमन्त्रः । व्रात्योदकमिति उदकदानमन्त्रः । तर्पयस्वेति भोज्यदानमन्त्रः । अग्निहोत्रहोमात् प्रागागतेऽतिथौ व्रात्य यथा ते मनः इत्यादयो मन्त्रा उपांशूच्चारणीयाः । उद्धृतेषु अग्निहोत्रार्थमिष्ट्यर्थं वा कृतविहारेषु अनुज्ञया रब्धं वैदिकं कर्म कुर्यादित्यर्थः ।

स्वभोजनानन्तरमतिथ्यागमने विशेषमाह—

**मनुः (३-१०८)**

**"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।**
**तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥"**

वैश्वदेवे— सर्वार्थपाके, निर्वृत्ते— कृतप्रयोजने, यथाश[2]क्ति पक्त्वा शक्त्यनुरूपेणेत्यर्थः ।

बलिहरणं देवयज्ञपितृयज्ञयोरप्युपलक्षणम् । अयं च प्रतिषेधो नित्यानुवादः, बलिहरणस्य पुरुषार्थस्य कृतत्वात् पाकनिमित्तत्वाभावाच्च । अनेनैव लिङ्गेनाहरहः[3] क्रियमाणस्यानिमित्तकस्यापि वैश्वदेवस्य संयोग-पृथक्त्वेन पाकनिमि[4]त्तकत्वमप्यस्तु । तथा च बहुषूदाहृतेषु वाक्येषु पाकस्य वैश्वदेव[5]स्य स्वार्थग्रहणमिति प्रतिभाति । तत्र पाक[6]स्याङ्गत्वेन तत्सम्बन्ध-श्रवणोपपत्तेर्लिङ्गमात्रस्या [7]साधकत्वात् ।

---

**ख पाठः—**

(1) प्रश्नमनुः (2) यथाशक्तीति शक्त्या शक्त्यनु- (3) "०हः क्रियमाणस्या०" इति नास्ति (4) निमित्तत्व० (5) ०देवसम्बन्धश्रवणादिति प्रति० (6) पाकाङ्गत्वेन (7) साध्य० ।

# अथ देवयज्ञप्रयोगः

तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं यज्ञचतुष्टयार्थमेकमेव ।

"गणशः क्रियमाणे तु मातृणां पूजनं सकृ[1]दि"ति

छन्दोगपरिशिष्टात् । सिद्धेऽन्ने पत्नी "भूतमि"ति स्वामिने ब्रूयात् । तदभावेऽन्यापि[2] पाककर्त्री ।

"तत्सुभूतमन्नं विराट् तन्ममाख्याही"ति

प्रतिवचनं स्वामिनः । अन्नस्योपघातशङ्कायामग्नावधिश्रित्य प्रोक्षणम् । सर्वभोज्यहविष्यव्यञ्जनयुक्तहविष्यान्नात् तदभावेऽहविष्यादपि प्रतिनि[3]षिद्धमाषमांसादिवर्जहोमः ।

आवसथ्यसमीपे प्राङ्मुखस्योपवेशनम् । लौकिकाग्निपक्षे परिसमूहनादि पञ्चसंस्कारं कृत्वा पाकसाधनलौकिकाग्निस्थापनम्[4] । स्थण्डिलपक्षे भूम्यु[5]पलेपनम् । दक्षिणजानुपातनम् । मणिकोदकेनाग्निपर्युक्षणम् । लौकिकोदकेन वा ।

हस्तेन द्वादशपर्वपूरकमोदनमादाय—

"ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ।
ॐ प्रजापतये स्वाहा इदं प्रजापतये ।
ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यः ।
ॐ कश्यपाय स्वाहा इदं कश्यपाय ।
ॐ अनुमतये स्वाहा इदमनुमतये ।"

इति देवयज्ञः ।

---

ख पाठः—

(1) पृथगिति (2) "पि" नास्ति (3) प्रतिषिद्ध० (4) "जलपक्षे पात्रे कृत्वा जलस्थापनम्" इत्यधिकम् (5) भूमिलेपनम् ।

# अथ भूतयज्ञः

वक्ष्यमाणबलिदाने[1] सर्वत्र प्रत्येकं मार्जनमुपलेपनं च वैकल्पिकम्। बलिदानात् पूर्वं सर्वत्र बलिदेशे उदकदानम्। [2]सर्वत्र बलीनां समाप्तौ च प्रतिबलि[3] पूर्वापरोदकदानम्। हुतशे[4]षेणान्नेन बलयः मणिकसमीपे प्राक्संस्थं त्रयः। ॐ पर्जन्याय नमः इदं पर्जन्याय। ॐ अद्भ्यो नमः इदमद्भ्यः। ॐ पृथिव्यै नम इदं पृथिव्यै।

द्वारशाखासमीपयोः ओं धात्रे नम इदं धात्रे। ओं विधात्रे नम इदं विधात्रे। दक्षिणे चेद्[5] द्वारं प्राक्संस्थम्, [6]पूर्वे चेदुदक्संस्थम्। प्राच्यादिक्रमेण प्रादक्षिण्येन चतुर्दिक्षु ओं वायवे नम इदं वायवे इति बलिचतु[7]ष्टयम्। इदं वायवे इति सर्वत्र।

वायुबलीनामुत्तरतः। प्रतिदिशं प्रादक्षिण्येन दिग्भ्यः[8] यथालिङ्गम्। ओं प्राच्यै दिशे नम इदं प्राच्यै दिशे। ओं दक्षिणायै दिशे नम इदं दक्षिणायै दिशे। ओं प्रतीच्यै दिशे नम इदं प्रतीच्यै दिशे। ओं उदीच्यै दिशे नम इदमुदीच्यै दिशे।

बलीनां मध्ये प्राक्संस्थं बलित्रयम्। ओं ब्रह्मणे नम इदं ब्रह्मणे। ओं अन्तरिक्षाय नम इदमन्तरिक्षाय। ओं सूर्याय नम इदं सूर्याय।

तेषां त्रयाणामुत्तरतः प्राक्संस्थं बलिद्वयम्। ओं विश्वेभ्यो देवेभ्यो नम इदं विश्वेभ्यो देवेभ्यः। ओं विश्वेभ्यश्च भूतेभ्यो नम इदं विश्वेभ्यो भूतेभ्यः। एतयोरुत्तरतः प्राक्संस्थं। ओं उषसे नम इदमुषसे। ॐ भूतानां च पतये नम इदं भूतानां च पतये।

---

**ख पाठः—**

(1) देशे (2) सर्वबलीनां (3) "वा" इत्यधिकम् (4) शेषान्नेन।
(5) च द्वारम् (6) "पूर्वे... ... संस्थम्" इति नास्ति (7) ष्टयं सर्वत्र वा।
(8) "च" इत्यधिकम्।

ब्रह्मबलिदक्षिणतः कृतापसव्यं दक्षिणामुखस्य। ओं पितृभ्यः स्वधा नमः इति बलिदानम्। इदमस्म[1]त् पितृभ्यः। पात्रक्षालनोदकं गृहीत्वा यक्ष्मैतत्ते निर्णेजनजलं नम[2] इति ब्रह्मबलिवायुकोणे बलिः। इदं यक्ष्मणे।

अत्रावसरे पाक्षिको द्रविणोदःसंज्ञकमन्त्रजपः। उदकस्पर्शनं कृत्वाग्निमीक्षमाणस्य कृताञ्जलेर्जपः।

**"आरोग्यमायुरैश्वर्यं धृतिस्तेजो बलं यशः।**
**ओजो वर्चः पशून् वीर्यं ब्रह्म ब्राह्मण्यमेव च॥**
**सौभाग्यकर्मसिद्धिं च ज्ञातिश्रैष्ठ्यं सुकर्त्तृताम्।**
**सर्वमेतत् सर्वसाक्षिन् द्रवि[3]णोदो विधेहि नः॥"**

ततो ग्रासचतुष्टयपरिमितमन्नमुद्धृत्य इदमन्नं ब्राह्मणाय हन्तेति वाक्यमुच्चार्य गृहस्थाय ब्रह्मचारिणे वा उपस्थिताय दानम्। अनुपस्थितावपि उद्धृत्य स्थापनमित्येके।

[4]बलिशेषान्नव्यतिरिक्तमन्नं गृहीत्वा सर्वबलीनामुत्तरतः शुचौ देशे सर्वभूतेभ्यो बलिदानम्। तत्र मन्त्रः—

**(विष्णुपु. ३-११-४६.५३)**

**"देवाः मनुष्याः [5]पशवो वयांसि,**
**सिद्धाः सय[6]क्षोरगदैत्यसंघाः।**
**प्रेताः पिशाचास्तरवः समस्ता,**
**ये चान्नमिच्छन्ति मया तु[A] दत्तम्॥ (४६)**

---

ख पाठः—

(1) "अस्मत्" इति नास्ति (2) "नम" इति नास्ति (3) द्रविणोद० (4) दक्षिणेशानव्यतिरिक्त० (5) पितरो (6) सदैत्योरगभूत०।

मुद्रित पाठः—

A- प्रदत्तम् - हरिहरभाष्यम् ४४५, त्वदत्तम् - विष्णुपु० ३-११-४९।

पिपीलिकाः कीटपतङ्गकाद्या
बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ (५०)

येषां न माता न पिता न बन्धु-
र्नैवान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेत[1]
त्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ (५१)

भूतानि सर्वाणि तथान्नमेत-
दहं च विष्णुर्न यतो[A]ऽन्यदस्ति ।
तस्मा[B]दिदं भूतनिकायभूत
मन्नं प्रयच्छामि भवाय तेषाम् ॥ (५२)

चतुर्द[2]शो भूतगणो य एष
तत्र स्थिता येऽखिलभूतसंघाः ।
[C]तत्तृप्तयेऽन्नं [3]हि मया विसृष्टं,
तेषामिदं ते मुदिता भवन्तु ॥ (५३)'

इति प्रक्षेपः इदं सर्वभूतेभ्यः ।

एते च सर्वे बलयो महामार्जारकर्णप्रमाणाः । असक्तानामार्द्रामलकमानेन वा । लाघवेन एकत्र चेत् क्रियते परस्परम[4]संयुक्ताः । ततो गृहाद् बहिः[5]श्वचाण्डालादि योग्यस्थाने बलित्रयम् ।

---

**ख पाठः—**

(1) तेषामिदं ते (2) ०र्विधो (3) भुवि दत्तमेतत्तेषामिदं (4) रं न संसक्ताः (5) बलिभुक्श्व० ।

**मुद्रित पाठः—**

A- ततो- विष्णुपु० B- तस्मादहं C- तृप्त्यर्थमन्नं हि विष्णुपु० ।

"श्वा[A]नौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ॥"

श्वभ्यां नमः इदं श्वभ्याम् । चाण्डालेभ्यो नमः इदं चाण्डालेभ्यः ।

ऐन्द्रवारुणवायव्ययाम्यनैर्ऋतसंस्थिताः ।

वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥

वायसेभ्यो नमः इदं वायसेभ्यः । बलीनां [1]गोविप्रेभ्यो दानम् । अग्नौ जले वा प्रक्षेपः ।

इति भूतयज्ञः ॥

# अथ पितृयज्ञः

नित्यश्राद्धमहं करिष्ये इति संकल्पः[2] । षोडशग्रासपरिमितमन्नं सर्वव्यञ्जनाद्युपेतं स्थापयित्वा सनकसनन्दनसनातनकपिलासुरिवोढुपञ्चशिखेभ्य इदमन्नादिकं हन्तेति [3]कण्ठलम्बितयज्ञोपवीतस्योदङ्मुखस्य कुशजलाक्षतमादायोत्सर्गः । याजमानं ततोऽपसव्यकरणं वामजानुपातनम् । पितृभ्य दक्षिणा [4]मुखत्वम् । ब्राह्मणमुदङ्मुखमुपवेश्य तदभावे विष्टरम् । पितृभ्य एषोऽर्घः स्वधा नमः इति पाणिनैवाग्निलाभ्यां विप्रहस्तेऽर्घदानम् । समाचारात् गन्धपुष्प[5]दानम् । पितृभ्य इदं स्वधा नम इति ततोऽन्नव्यञ्जनादिपूर्णपात्रं कृत्वा तिलान् विकीर्य, द्विजकरस्थमन्नं पिता भुङ्क्ते । [6]द्विजमुखे पितामहो [7]भुङ्क्ते । तालौ प्रपितामहः । [8]कण्ठे मातामहः ।

---

**ख पाठः—**

(1) गोऽजविप्रेभ्यो (2) संकल्प्य (3) कण्ठलग्नयज्ञो० (4) ०णाभिमुखता (5) पुष्पादिदानम् (6) 'द्विज" इति नास्ति (7) "भुङ्क्ते" इति नास्ति (8) गले ।

**मुद्रित पाठः—**

A- द्वौ श्वानौ-हरिहरभाष्यम् ।

[1]प्रमातामहो हृदये । वृद्धप्रमाता[2]महो नाभौ [3]भुङ्क्ते इति चिन्तनम् । द्विगुणीकृतकुशतिलजलान्यादाय अमुकसगोत्रास्मत् पितः अमुकदेवशर्मन् अमुकसगोत्रास्मत्पितामहामुकदेवशर्मन् अमुकसगोत्रास्मत्प्रपितामह अमुकदेवशर्मन् अमुकसगोत्रास्मन्मातामहामुकदेवशर्मन्नमुकसगोत्रास्मत् प्रमातामहामुकदेवशर्मन्नमुकसगोत्रास्मद्वृद्धप्रमातामहामुकदेवशर्मन्निदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नम इत्युत्सर्गः । इदमस्मत् पित्रेऽमुकदेवशर्मणे [4]इदमस्मत् पितामहायामुकदेवशर्मणे इत्यादिरूपे[5]ण त्यागः ।

आगते ब्राह्मणे उपविष्टो कुश[6]तिलोदकान्यादाय पितृभ्य इदं घृताद्युपकरणोपेतमन्नमक्षय्यमस्त्विति ब्राह्मणहस्ते[7]दानम् । स्वधां वाचयिष्ये इति प्रश्नः । वाच्यतामिति ब्राह्मणस्योत्तरम् । विष्टरपक्षे स्वयमेवोत्तरदानम् । अस्मत् पितृभ्यः संपन्नः स्वधोच्यतामिति तिलप्रक्षेपः । अस्तु स्वधेति ब्राह्मणः । अच्छिद्रावधारणम् ।

असम्भवे[8] किंचित्किंचिदुद्धृत्य [9]सर्वभोज्येभ्यः पात्रे कृत्वा पित्रादिनामग्रहणपूर्वकमुत्सर्गो वा । एवमपुत्रपितृव्यादिभ्योऽन्नोत्सर्गः ।

इति पितृयज्ञः ॥

# अथ गोग्रासदानम्

तच्च गोप्रदानफलकामस्य ।

तत्र मन्त्रः—

"[A]सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥

---

ख पाठः—

(1) हृदये प्रमातामहः (2)नाभौ वृद्धप्रमातामहो (3)"भुङ्क्ते"इति नास्ति ।
(4) "इद .. ...शर्मणे" इति नास्ति (5) "रूपेण" इति नास्ति ।
(6) कुशोदकतिलान्यादाय (7)"जल" इत्यधिकम् (8)सर्वेभ्योऽन्नव्यञ्जनेभ्यो
(9) "सर्वभोज्येभ्यो" इति नास्ति ।

मुद्रित पाठः—

A- वचनमिदं ब्रह्मपुराणीयमिति कल्पतरौ० नियत- १७३ ।

इति तृणोदकान्नादिरूपं दिवसमात्रपर्याप्तमाहारं कपिलादानजन्यफलप्राप्ति-कामो गवे दद्यात्।

"[A]पञ्चभूते शिवे पुण्ये पवित्रे परमे शुभे।
प्रतीच्छेमं मया दत्तं सौरभेयि नमोऽस्तु ते॥"

इदं गवे ददानीति। ततो यथोक्तरूपस्यातिथेर्भोजनम्।

इति मनुष्ययज्ञः।

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे पञ्चमभागकृत्ये
पञ्चमहायज्ञप्रकरणम्॥

१०४

# अथ भोजनविधिः

[1]मनुः (३-११६,१८)

"[B]भुक्तवत्सु [2]पुत्रविप्रदासभृत्येषु चैव हि।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती॥ (११६)
देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग् भवेत्॥(११७)
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।(११८)

तथा (मनुः ३-२८५)

"विघसाशी भवेन्नित्यं नित्यं [C]चामृतभोजनः।(३-२८५)
[D]विघसं [E]भृत्यशेषं तु यज्ञशेषं तथामृतम्।

---

**ख पाठः—**

(1) "तत्र" इत्यधिकम् (2) च विप्रेषु स्वेषु (ख)।

**मुद्रित पाठः—**

A- भविष्यपुराणवचनमिति कृत्यकल्प- नियत- १७४।
B-भुक्तवत्स्वथ विप्रेषु स्वेषु C-त्रामृत-मनुः। कल्पतरौ "चामृत" नियत-२१४
D- विघसो E- भुक्त- मनुः। कल्पतरौ- भृत्य-क।

यमः—

"अमृताशी भवेन्नित्यं विघसाशीति[A] वा पुनः ।
अमृतं यज्ञशेषं [1]तु हविष्यं भोजनं स्मृतम् ॥
भृत्यशेषं तु योऽश्नीयात्तमाहुर्विघसाशिनम् ॥"

विघसाशित्वविकल्पः सूताद्यभिप्रायः । नित्यं यज्ञशेषभोजनम् । पञ्च[2]यज्ञानधिकारे तु भृत्यशेषभोजनमात्रेण प्रत्यवायपरिहारः इत्यर्थः ।

[B]जाबालिः—

"अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अहुत्वा च कृमीन् भुङ्क्ते अदत्त्वा विषभोजनम् ॥"

जपस्तर्पणोत्तरविहितः । स्नानं माध्याह्निकस्नानम् । होमदानवैश्वदेवनित्य[3]श्राद्धातिथिविषये—

याज्ञवल्क्यः (१-१०८)—

"भोजये[C]दागतान् काले सखिसम्बन्धिबान्धवान् ॥"

मार्कण्डेयपुराणे (२६-३६.४०)—

"कुटुम्बिनो भोजनीयाः स्वसमं विभवे सति ॥
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
सीदता यत् कृतं [D]पापं [4]तेन पापेन लिप्यते ॥"

स्वसमम्—आत्मभोजनतुल्यम् ।

---

ख पाठः—

(1) च (2) ०यज्ञाधिकारे (3) श्राद्धादिविषये (4) श्रीमता तेन ।

मुद्रित पाठः—

A- तु- कृत्यकल्प नियत–२१४ B- कृत्यकल्प- नियत- २१७ C- ०च्चाग० D- तेन तत्पापं स समश्नुते । कृत्यकल्प० नियत० ११५ ।

याज्ञवल्क्यः (१-१०५)–

"बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥"

[A]मनु(३-११४)र्विष्णु(६७-३९)श्च–

"स्ववासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥"

[1]एवं च अतिथिभोजनात्पूर्वं बालादिभोजनं नियतम् । स्ववासिनीः पितृगृहस्थिता विवाहिताः कन्याः । एवं च स्मृत्यन्तरेषु बालादिभोजनात् पूर्वमतिथिभोजनप्रतिपादनम् अतिथिभोजनस्य स्तुत्यर्थम् ।

"[B]गुरूनतिथिबालांश्च तर्पयेत् पूर्वमेव तु ।"

इति यमवचनमपि स्वभोजनादेतेषां प्राथम्यपरम् ।

बौधायनः (२-३-५-१७.१८)–

"[C]न त्वेकः कदाचिद् भुञ्जीत ।
अथान्नगीतौ श्लोकावुदाहरन्ति ॥
यो मामदत्त्वा पितृदेवताभ्यो
भृत्यातिथीनां च सुहृज्जनस्य ।

---

ख पाठः–
(1) एवं गृहातिथि ।

मुद्रित पाठः–
A- कल्पतरौ ग्रन्थोक्तपाठः- नियत० २११
सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः । मनुः
स्ववासिनीं कुमारीं च रोगिणीं गर्भिणीं तथा । विष्णुस्मृ०
B- कृत्यकल्प० नियत० २१२
C- न त्वेव कदाचिददत्त्वा भुञ्जीत । अथाऽप्यत्राऽन्न० । बोधा.धर्म०
न चैव कदा- कृत्यकल्प० नियत० २१६ ।

संप[A]न्नमिच्छन् विषमत्ति मोहा-
त्तमद्म्यहं [1]तस्य च मृत्युरस्मि ॥
हुताग्निहोत्रः कृतवैश्वदेवो
[B]भुक्तातिथिर्भृत्यजनावशिष्टम् ।
तुष्टः शुचिः श्रद्दधदत्ति यो मां
तस्याऽमृतं स्यां स च मां भुनक्ति ॥"

अत्र

"आत्मानं तर्पयेत् पश्चान्नियतो[C]ऽथाग्रतः शुचिः ।
स्त्रीशूद्रं भोजयेत् पश्चादेष धर्मः सनातनः ॥"

इति वचनाद् गर्भिणीव्यतिरिक्तस्त्रीणां स्वपत्नीप्रमुखाणां पश्चाद् भोजनम् ।

[D]पारस्करः— (२-६-१४.१६)

"पश्चाद् गृहपतिः पत्नी च । पूर्वो वा गृहपतिः ।
तस्मात् स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्यो-
ऽश्नीयादिति श्रुतेः[2] ।"

अयमर्थः– अतिथिभोजनानन्तरं [3]गृहस्थः पत्नी च युगपद् भुञ्जीयातामित्येकः पक्षः । पत्न्याः पूर्वो वा गृहपतिरित्यपरः । साक्षाद् भूतश्रुतौ[4] चातिथिभ्य

---

**ख पाठः–**

(1) तस्यापि च मृत्युरस्मि (2) "इति" इत्यधिकम् (3) गृहपतिः
(4) श्रुतेरतिथि० ।

**मुद्रित पाठः–**

A-०न्नमश्नन्विष० B-पूज्यातिथीन् C-वाग्यतः शुचिः-कृत्यकल्प०नियत० २१२
D-पूर्वो वा गृहपतिः । तस्माद्‌ स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः ।

इत्यत्रानन्तरमिति सम्बन्धः । तेनातिथिभ्योऽनन्तरं पत्न्याः पूर्वो गृहपतिः स्वाद्वश्नीयादिति श्रुत्यर्थः । इत्थमेव [A]कर्काचार्यव्याख्या ।

यत्तु श्रुत्यन्तरम्—

"पूर्वोऽतिथिभ्योऽश्नीयाद् यथा वै
[1]स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तदिति ॥"

तद्वैश्वानरप्रकरणाधीतत्वात्तदुपासकपरमित्याहुः ।

[2]अत्र स्वभोजनात् पूर्वं काम्यतया [3]विहितमन्नदानं कार्यम् । तच्च पात्रार्चनादिसहितम् । प्रतिग्रहकर्मयुक्तं च ।

तथा च—

"कृत्वापि सुमहत्पापं यः पश्चादन्नदो भवेत् ।
सर्वपापक्षयं कृत्वा लोकानाप्नोति चाक्षयान् ॥
[B]कृत्वापि पातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥
[C]आशंसन्तीह पितरः सुवृष्टिमिव कर्षकाः ।
कदास्माकं कुले पुत्रः पौत्रो वान्नं प्रदास्यति ॥
देवमुद्दिश्य विप्राय यो ददातीह भोजनम् ।
स देवः प्रीतिमांस्तस्य कामानिष्टान् प्रयच्छति ।
मृष्टान्नं मानवो दत्त्वा चाक्षयं फलमाप्नुयात् ॥"

इत्याद्युक्तफलार्थम् ।

---

ख पाठः—

(1) सायमहुत्वा० (2) अत्र च स्व० (3) विश्रुत० ।

मुद्रित पाठः—

A- "एवं हि श्रूयते—तस्मादुस्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति । तस्मात् स्वाद्वन्नाद्यदिष्टतमं गृहपतिरश्नाति । अतिथिभ्योऽशितेभ्यः पूर्वं पत्न्या इति" (कर्काचार्यव्याख्या) ।

B–महाभा० अनु० ६३-१६ C- महाभा० अनु० ६३-२० ।

एवं

"गर्भाधानादि सर्वेषु ब्राह्मणान् [1]दश भोजयेदि"त्यादि ।

यत्रापि[2] भोजनप्रयोजककर्तृत्वमुच्यते, तत्रापि प्रेरणादिनाऽन्यगृहे भोक्तुः प्रयोजकत्वे विध्यर्थानुष्ठानप्रसङ्गाद् भोज्यदाने[3]न भोजनप्रयोजकत्वपर्यन्त-विध्यर्थकल्पने गौरवाल्लाघवाद् भोज्यदानविधिरेवेति दानेतिकर्त्तव्यता । अन्नदानत्वाच्च[4] न दक्षिणा, वाक्यशेषे[5]ण फलवतामेव दानानां प्रस्तुतत्वा-दिति पात्रपूजादीतिकर्त्तव्यतान्तरं स्यादेव ।

अत्र च

"न [6]त्वेतत्स्वयमश्नीयाद् विष्णोर्न निवेदयेत् ।"

इति हयशीर्षे गृहार्च्चाप्रतिष्ठाप्रकरणेऽभिहितम् । नित्यपूजाया एवायमनुवादः । नानेन भोजननिमित्तं स्वभोजनात् पूर्वं पूजान्तरविधिः ।

एवम्—

"शुभं वाप्यशुभं वापि फल[7]पुष्पनिवेदनम् ।
देशकालोपपन्नं च भुक्त्वा भक्ष्यं स्वभोजने ॥
तद्दद्याद् विष्णुदेवाय श्रद्धापूतमकुत्सयन् ॥"

इति [8]यन्निषिद्धफलपुष्पादिकं स्वभोज्यमहिषीक्षीरादिविकारभूतं पिष्टकादि वा विष्णुदेयत्वेनोक्तं तद् भक्तिविशेषनिमित्तत्वेन निषिद्धफलपुष्पभक्ष्यादीना-मपि पूजायामेव देयतापरम् । सामान्यतो निषिद्धानामपि नैमित्तिकत्वेन विशेषविधानात् । सम्भवति च

"ततो गृहागतः कुर्यादभीष्टसुरपूजनम्" इति

---

ख पाठः—

(1) भोजयेद्दश (2) "भोजयेदि"त्यधिकम् (3) "न" नास्ति ।
(4) "०र्चनदक्षिणां दक्षिणावाक्ये" इत्यधिकम् (5) "ण" नास्ति ।
(6) न चैत० (7) मूल० (८) यन्न देशकालोपपन्नफलपुष्पादिकं स्वभोजने० ।

चतुर्थभागे यद्विहितं तत्र [1]पक्वान्नस्य दानं सर्वार्थत्वात् पाकस्य वैश्वदेवात् पूर्वमपि नैवेद्ये विनियोगो दोषाभावात् ।

न च भूत[2]वचनस्य पञ्चमभागे वैश्वदेवार्थं विधानात्ततः पूर्वं न पाकस्य विनियोग इति वाच्यम्, तस्य वैश्वदेवप्रकरणात्तदीयान्नसंस्कारत्वे तदुपयोग-भागसंस्कारस्य नैवेद्योत्तरमपि सम्भवात् ।

अतएव वैश्वदेवात् पूर्वमपि यतिभोजने तदूर्ध्वमेव भूत[3]वचनम् । एवं श्राद्धदिनेऽपि श्राद्धोत्तरमेव । तत्पूर्वकरणसमाचारस्य मूलं न दृश्यते ।

एवं नैवेद्यभक्षणमपि यद् विहितम्—

"जन्मजन्मान्तरा[4]भ्यस्त पापराशिं विनाशयेत् ।
विष्णूपयुक्तशेषान्नप्राशनं भक्तिचेतसा ॥"

इत्यादिना, तदपि मध्याह्नपूजानैवेद्यपरम् । तदनुरोधेन[5] पूजान्तराक्षेपः ।

●

## अथ भोजनधर्माः

यद्यपि भोजनं दृष्टार्थमेव तथापि तदाश्रिता धर्माः पुरुषस्य प्रत्यवाय-परिहारार्थाः । केचिददृष्टार्थप्राणाहुत्यङ्गभूताः ।

**भोजनाधिकारे बौधा[A]यनः (२-७-१२-२)—**

**"सर्वावश्यकावसाने संमृष्टोपलिप्ते शुचौ देशे ।"**

---

ख पाठः—

(1) यज्ञस्य दानसर्वा० (2) ०वाचनस्य (3) ०वाचनम् (4) भ्यास०

(5) "न" इत्यधिकम् ।

मुद्रित पाठः—

A– "सर्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य तद्भूतमा-ह्रियमाणं भूर्भुवस्सुवरोमित्युपस्थाप्य वाचं यच्छेत्" ।

बौधा०धर्म० २-७-१२-२

सर्वावश्यकानि संध्यादिपञ्चयज्ञान्तानि नित्यानि, भोजनात्पूर्वं भवन्तीत्यर्थः। तेन पञ्चयज्ञाद्युत्कर्षे षष्ठभागादावपि भोजनोत्कर्षः। एवं पारणादौ भोजनापकर्षे तेषामपकर्षः।

**देवलः—**

**"स्नात्वा प्रक्षाल्य पादौ च स्रग्गन्धालंकृतः शुचिः।**
**पञ्चयज्ञावशिष्टं तु[A] यो भुङ्क्ते सोऽमृताशनः॥"**

एवं चामृतभोजित्वस्य नित्यत्वात्तदुपपादकं स्रग्ग[1]न्धधारणमपि नित्यम्। गन्धमाल्यधा[2]रणं गृह्योक्तविधिना।

**"[B]दन्तधावना[3]दीनि नित्यमपि"**

इति पारस्कर (२-६-२७) वचनात्।

**आपस्तम्बः (१-५-१६-९)—**

**"भोक्ष्यमाणस्तु प्रयतोऽ[4]पि [C]द्विराचमेत् द्विः परिमृजेत्।"**

अत्र द्विःपरिमार्जननियमः। पङ्क्तावाचमने दोषमभिधाय

**ब्रह्मपुराणे—**

**"तस्माद् बहिरुपस्पृश्य स्वाचान्तः प्रविशेद् [D]गृहे।"**

---

**ख पाठः—**

(1) ०न्धादि (2) ग्रहण० (3) ०नादि नित्य० (4)"अपि" इति नास्ति।

**मुद्रित पाठः—**

A- "तु भुङ्क्ते यः" कृत्यकल्प० नियत० २१९।

B- "दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः"। पारस्क. २-६-२७।

C- "द्विराचामेद् द्विः परिमृज्येत्" आपस्त० धर्म० १-५-१६-९।

D- गृहम्- कृत्यकल्प० नियत० २२१।

दक्षः (२-५६.६८)—

"पञ्चमे च तथा भागे संविभागो यथार्हतः ।" (५६)

"संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेत् ॥" (६८)

भोजनं पञ्चमभाग एवेत्यर्थः ।

छन्दोग[A]परिशिष्टे (२-३३)—

"मुनिभिर्द्विरश[1]नं प्रोक्तं विप्राणां मर्त्यवासिनाम् ।

अहनि [2]च तमस्विन्यां सार्धप्रहरयामतः ॥"

अहनि दिवसपञ्चमभागे । तमस्विन्यां प्रथमसार्धप्रहरे ।

इदं च द्विरशनविधानं न नियमः । तथा सति सकृद्भोजने प्रत्यवायः स्यात् । किन्त्वदृष्टसंज्ञकफलकल्पनाभिप्रायेण परिसंख्यैव । अत एव भोज्या[3]भावे प्राणाहुतिमात्रस्यावश्यकत्वदर्शनात् ।

"प्राणाग्निहोत्रमन्त्रांश्च[B] निरुद्धे भोजने जपेदि"

(बोधा-धर्म २-८-१३-१३)ति ।

न तु भोजनाभावे किञ्चित्समाधानमुक्तम् । "पञ्च पञ्च नखा भक्ष्या" इतिवत् परिसंख्यायां [4]लक्षणायां लौकिकत्वेनादृष्टकल्पना[5]तो लघुत्वात् । अवघातादौ तत्प्रकरणात् क्रतूपकारस्य क्लृप्तत्वात् अदृष्टकल्पनावश्यक[6]त्वेन परिसंख्यात्वम् ।

---

ख पाठः—

(1) ०नमुक्तं (2) तत् (3) ०भावेन भोजनाभावे (4) लक्षणाया

(5) "ना" इति नास्ति (6) ०त्वे च न ।

मुद्रित पाठः—

A– कृत्यकल्प० नियत० २२४ ।

B- स्तु– बोधा, कल्पतरावपि नियत-२३७ ।

**तथा[1] मनुः[A]—**

**"सायं प्रातर्द्वि[B]जातीनामशनं श्रुतिचोदितम् ।**
**नान्तरा भोजनं [C]कुर्यादग्निहोत्रसमो विधिः ॥"**

अत्र सायंप्रातःशब्देन स्मृत्यन्तरोक्तदिनपञ्चमभागरात्रिसार्धप्रहर-[2]कालमुपादाय तदन्तराभोजननिषेधं [3]श्रुत्यैवाह । यद्वा गौणमुख्यरूपेण दिनमात्रकालीनरात्रिमात्रकालीन भोजनद्वयानुवादेन तृतीयभोजननि[4]वृत्तिं श्रुत्यैवाह ।

**तथा च विष्णुः (६८-४८)**

**"न तृतीयमथाश्नीयान्नापथ्यं च [D]कथञ्चन ।**
**नाति प्रगे नाति सायं न सायं प्रातराशितः ॥"**

अतिप्रगे- अतिप्रातः । एतच्च गौणत्वेन प्राप्तयोर्निषेधपरम् । प्रातराशितः- प्रातस्तृप्तः सायं न भुञ्जीत । एतच्च पुरुषार्थस्यैव भोजनस्य प्रातस्तृप्ति-निमित्तेन सायं वर्जनं स्नातकधर्मः ।

**मनुः (४-५५)**

**"नाश्नीयात् सन्धिवेलायाम् ।"**

---

**ख पाठः—**

(1) "च" इत्यधिकम् (2) "काल" इति नास्ति (3) श्रुत्यैवोक्तम्
(4) निवृत्तिः ।

**मुद्रित पाठः—**

A- मनुस्मृतेः २-५२ श्लोकात् परं प्रक्षिप्तः । कृत्यकल्प० नियत० २२४ ।
B- मनुष्याणाम०- कृत्यकल्प० नियत० २२४ ।
C- कार्यम०- कृत्यकल्प० नियत० २२४ ।
D- कदाचन - कृत्यकल्प० नियत० २४० ।

पुनर्विष्णुः (६८-६.१२)

"नाश्नीयाच्चाजीर्णे। नार्द्धरात्रे।

न मध्याह्ने। न सन्ध्ययोः।"

[A]तथा (६८-६.७)—

"प्रदर्शितश्चाग्निहोत्री यथाग्निहोत्रं हुतं मन्येत।

यदा हुतं मन्येत वैश्वदेवमपि॥"

होमज्ञानं च ऋत्विक्सम्पादनादिना। निरग्निरपि वैश्वदेवमित्यर्थः। निरग्नेः प्रवासे वैश्वदेवासम्भवाद्वा।

शिष्टाः पठन्ति—

"अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत्।

एकादश्यां दिवा रात्रौ नक्तं चैवान्यपर्वसु॥"

अन्यपर्वाणि-दर्शपौर्णमाससंक्रान्तयः। अष्टमीचतुर्दश्योस्तिथिकाले भोजन-निषेधः। एकादश्यां तूदयादूर्ध्वं कलाकाष्ठादिसत्त्वेऽप्यहोरात्रमभोजनम्। संक्रान्तौ तु संक्रान्त्युपलक्षिताऽहोरात्रे। एवं जन्माष्टमीशिवरात्र्यादावपि अहोरात्रभोजननिषेधः।

—×—

## भोजनदेशः

ब्राह्मे—

"तस्माद्बहिरुपस्पृश्य स्वाचान्तः प्रविशेद् [B]गृहे।

उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते॥"

---

मुद्रित पाठः—

A– प्रवसिताग्निहोत्री यदाग्निहोत्रं कृतं मन्यते तदाश्नीयात्। ६
यदा कृतं मन्येत वैश्वदेवमपि॥ ६८-७

B– गृहम्- कृत्यकल्प० नियत० २२१।

बौधायनः (२-३-५-२१)

"संवृते शुचौ देशे"

संवृते—वस्त्रादिना वेष्टिते, भोजनमित्यर्थः।

आपस्तम्बः (१-५-१७-५,७)—

"न नावि भुञ्जीत। तथा प्रासादे। [1]कृतभूमौ॥"

प्रासादे— प्रासादस्योपरि। [2]कृतभूमौ— पाषाणमयादौ मृत्तिकाप्रक्षेपेण [3]कल्पितायां भूमौ।

ब्रह्मपुराणे—

"हस्त्यश्वरथयानोष्ट्रप्रासादस्थो न भक्षयेत्।
श्मशाना[A]भ्यन्तरगतो देवालयगतोऽपि वा॥
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने।
नार्द्रवासा नार्द्रशिरा न[4] वाऽयज्ञोपवीतवान्॥
न प्रसारितपादस्तु [5]पादरोपितपाणिमान्।
नावसक्थिकसंस्थश्च न च पर्यङ्कास्थितः॥
न वेष्टितशिराश्चापि नोत्सङ्गे कृतभोजनः।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः॥
न चर्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान्॥"

विष्णुपुराणे (३-११-८१)

"[B]न चासन्दीस्थिते पात्रे न चादेशे नरेश्वर।"

आसन्दी—वेत्रादिनिर्मिता। अदेशे-रथ्यादौ।

---

ख पाठः—

(1) न कृत्रिमभूमौ (2) कृत्रिमभूमौ (3) कल्पितभूमौ (4) न चा यज्ञो० (5) पदा०।

मुद्रित पाठः—

A- ०नान्तर्गतो वापि- कृत्यकल्प० नियत० २४२।

B= नासन्दी संस्थिते पात्रे नादेशे च नरेश्वर= विष्णुपु०

विष्णुः (६८-४६)—

"नाश्नीयाद् भार्यया [A]सार्धं नाकाशे न तथोत्थितः ।
बहूनां प्रेक्ष्यमाणानां नैकस्मिन् बहवस्तथा ॥"

एकस्मिन् प्रेक्ष्यमाणे बहवो न भुञ्जीरन् ।

"[B]शून्यागारे वह्निगृहे देवागारे तथैव च ।
आकाशेऽनावृते देशे ......॥"

उशनाः—"खट्वारूढो न भुञ्जीत न चोत्तानः कथंचन ।"

[C]मनुः—

"एकवस्त्रो न भुञ्जीत कवाटमपिधाय च ।
भूमौ चानन्तरीकृत्य भिन्नपत्रे न चाशनम् ॥"

भूमौ पात्राभावे केवलभूमौ आसनाभावे वा ।

तथा[D] —

"नाहारमुपभुञ्जीत तिष्ठन् गच्छन् हसन्नपि ।
स्वग्रामे ग्रामतो वापि संनिकृष्टे मृते सति ॥
न भुञ्जीताशनं धीमान् नाधर्म्यं शोककारणात् ।"

स्वग्रामे-स्वग्रामिणे । ग्रामतः संनिकृष्टे–संनिकृष्टे ग्रामिणे ।

---

मुद्रितपाठः—

A- साकम्-कृत्यकल्प-नियत-२४६ ।

B- शून्यालये वह्निगृहे देवागारे कथञ्चन ।
पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत् ॥ विष्णुस्मृ० ६८-४७
कल्पतरौ तु ग्रन्थोक्तपाठः । नियत- २४७

C- कृत्यकल्प-नियत - २४७ । मुद्रित मनुस्मृतौ नास्ति ।

D । कृत्यकल्प-नियत-२४८ ।

याज्ञवल्क्यः (१-१३१)—

"न भार्यादर्शनेऽश्नीयात् ।"

वसिष्ठः (१२-३२)—

"भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते ।"

तथाच शतपथश्रुत्यग्निरहस्यकाण्डे—

"तस्माज्जायाया अन्ते नाश्नीयादवीर्यवान् वास्य पुत्रो जायते वीर्यवन्तमुह सा जनयति यस्या अन्ते नाश्नाति ।"

तेन वसिष्ठस्मृतौ "भार्यया सहे"ति भार्यासंनिधावित्यर्थः ।

यत्त्वङ्गिरोवचनम्—

"ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वापि कर्हिचित् ।
[A]न तत्र दोषं मन्यन्ते सर्व एव मनीषिणः ॥"

इति तद्विवाहकालविष[1]यमाचारोपष्टम्भादिति विज्ञानेश्वरः ।

"[B]ब्राह्मण्या भार्यया साकं क्वचिद् भुञ्जीत चाध्वनि"

इति ब्रह्मपुराणात्पात्रान्तराभावेऽध्वनीति लक्ष्मीधरः ।

विष्णुः (६८-४)—

"न गोब्रा[C]ह्मणोपरोधेऽश्नीयान्न च राजव्यसने ।"

---

ख पाठः—

(1) ०यं तथाचारो० ।

मुद्रित पाठः—

A– न तस्य दोषं मन्यन्ते = कृत्यकल्प-नियत-२४९
मिताक्षरायां (३-२८९) तु "दुच्छिष्टं वा कदाचने"ति पाठः । तत्र तद्विवाहविषयमापद्विषयं वा इति ।

B– सार्धम्—कृत्यकल्प-नियत-२४९ ।

C- ब्राह्मणोपरागे- विष्णुस्मृ०
तत्र "उपरागो वन्दीकरणमि"ति नन्दपण्डितः ।

[A]यमः—

"अश्नाति यो भृत्यजनस्य मध्ये
मृष्टान्नमेको रसगृध्नुबुद्धिः ।
दीनैः कटाक्षैरभिवीक्ष्यमाणो
व्यक्तं विषं हालहलं स भुङ्क्ते ॥"

हारीतः—

"न क्रुद्धो नान्यमना [B]नातिभाषमाणोऽश्नीयात् ।
न शिशून भर्त्सयन् नाप्रदाय प्रेक्षमाणेभ्यः ॥"

प्रकर्षेण साभिलाषमीक्षमाणेभ्यो बालादन्येभ्योऽपि ।

[C]ब्रह्मपुराणे—

"अप्येकपङ्क्त्यां नाश्नीयात्संवृतः स्वजनैरपि ।
भस्मस्त[1]म्भजलद्वारा मार्गैः पङ्क्तिं च भेदयेत् ॥"

[D]तथा—

"पञ्च ग्रासांस्तु भुङ्क्त्वादौ क्वचिद्वेश्मनि संकटे ।
पात्रमुद्धृत्य शेषं तु भक्षयेत्सांकराद् भयात् ॥

---

ख पाठः—

(1) ०स्तम्ब० ।

मुद्रित पाठः—

A- कृत्यकल्प-नियत-२४५ ।

B- नाभिभाष—कृत्यकल्प-नियत-२४४ ।

C- "अप्येकपङ्क्त्यां नाश्नीयात् संयुतः स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ।
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिं च भेदयेत् ॥"
कृत्यकल्प-नियत-२४३

D- कृत्यकल्प-नियत- २२६

पित्र्ये कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत् ।"

अयमर्थः— पञ्चग्रासानन्तरमपि पङ्क्तिदोषज्ञाने पात्रमुत्तोल्य स्वयमुत्थानमकृत्वोपविश्य गत्वा स्थानान्तरे भोजनं कार्यम् । पित्र्ये तु न गन्तव्यम् । पश्चात् प्रायश्चित्तं कार्यम् ।

इति देशः

४०४

[1]आसनम्

[A]देवलः—

"प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमधिष्ठितः ।"

एतेन वस्त्रचर्माद्या[2]सनादिनिवृत्तिः ।

"न भिन्नासनगतो न शयनगतः ।"

स्मृतिः—

"[3]लोहदग्धं वंशदग्धं वर्जयेदासनं बुधः ।"

तथा—

"अध्यास्य शयनं यानमासनं पादुके तथा ।
पलाशस्य द्विजश्रेष्ठ त्रिरात्रं तु व्रती भवेत् ॥"

उपवेशनं च—

"पादाभ्यां धरणीं गत्वा पादेनैकेन वा पुनः ।"

ब्राह्मे—

"चतुरस्रं त्रिकोणं वा[B] वर्त्तुलं चार्धचन्द्रकम् ।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥"

मण्डलद्रव्यं समाचारात् शुक्लचूर्णम् ।

---

ख पाठः—

(1) "अथ" इत्यधिकम् (2) ०सनान्तरनिवृत्तिः (3) लोहबद्धं

मुद्रित पाठः—

A—कृत्यकल्प-नियत-२१९ B- तु-कृत्यकल्प-नियत- २२१

श्राद्धप्रकरणे [A]ब्राह्मे—

"मण्डलानि च कार्याणि नैवारैश्चूर्णकैश्शुभैः ।
गौरमृत्तिकया वापि प्रणीतेनाथ भस्मना ॥
पाषाणचूर्णसंकीर्ण[B]माहृतं तत्र वर्जयेत् ।"

इत्यासनम्

## पात्रम्

[C]ब्राह्मे—

"पात्रेष्वर्थानुरूपेषु ।"

अर्थानुरूपेषु [1]वित्तानुसारेण स्वर्णरजतपित्तलादिरूपेषु ।

आपस्तम्बः (२-१६-३.४)

"औदुम्बरश्चमसः सुवर्ण[D]नाभप्रशस्तो
न चान्येनापि [2]भोजनम् ।"

प्रशस्तं भोजनमिति शेषः । अन्येन-[3]स्वस्वपुत्रादिनापि तत्र भोजने तदात्मनो न योग्यमित्यर्थः ।

एवं च—

"[E]करे कर्पटिके चैव आयसे ताम्रभाजने ।

---

ख पाठः—

(1) विभवानु० (2) भोक्तव्यम् (3) स्वस्य०

मुद्रित पाठः—

A- कृत्यकल्प–श्राद्ध-१६० B- माहृतं- कृत्यकल्प- नियत- १६०

C- कृत्यकल्प- नियत- २२४ ।

D- ०नाभः प्रशास्तः । न चान्येनापि भोक्तव्यम् । आप० धर्मसू०

E- "करे कर्पटके चैव शिलायां ताम्रभाजने ।
वटार्काश्वत्थपत्रेषु गृही भुक्त्वैन्दवं चरेत् ॥ केशववैजयन्ती ७९-१४

भुञ्जन् भिक्षुर्न दुष्येत लिप्यन्ते गृहमेधिनः ॥”

इति ताम्रपात्रनिषेधः सुवर्णाभताम्रपात्रव्यतिरिक्तपरः। अथ[1] वाऽऽपस्तम्बीय ताम्रपात्रविधिः पुष्टिकामस्य। पुष्टिकामनां विना निषेधः।

विद्याकरपद्धतौ–

“अश्वत्थवटपत्रेषु कुम्भीतिन्दुकपत्रयोः।”

वटाश्वत्थार्कपत्रेष्विति वा पाठः।

“कोविदारकपित्थेषु भुङ्क्त्वा चान्द्रायणं चरेत्।”

कोविदारकदम्बेष्वि”ति वा पाठः।

“पलाशपद्मपत्रेषु गृही भुङ्क्त्वैन्दवं चरेत्।
ब्रह्मचारियतीनां च चान्द्रायणफलं [2]लभेत् ॥”

[3]नारदीयपञ्चरात्रे वैष्णवाधिकारे–

“कांस्यपात्रे न भुञ्जीत न पद्मवटपत्रयोः।
पत्रपृष्ठे तु यो भुङ्क्ते पञ्चगव्यं समाचरेत ॥”

[4]पत्रपृष्ठनिषेधः (अ)प्रशस्तपत्रविषयः।

भोजनाधिकारे विष्णुः (६८-२०.२३)—

“न भिन्नभाजने (२०) नोत्सङ्गे (२१)
न भुवि (२२) न पाणौ (२३)।”

अत्र सुवर्णरजतशङ्खशुक्तिस्फटिकानां भिन्नमभिन्नमिति भिन्नपात्रनिषेधः सुवर्णरजतादिव्यतिरिक्तपरः।

---

ख पाठः—

(1) “वा” इति नास्ति (2) भवेत् (3) “नारदीय……पत्रयोः” इति नास्ति (4) अत्र-इत्यधिकम्।

[A]हारीतः—

"नाधिशयनासने चाश्नीयात् न कार्ष्णायसे
न मृत्पात्रे न भिन्नावकीर्णे ।"

अधिशयने-खट्वोपरि । अध्यासने—पीठे,अन्नं स्थापयित्वा (न) भुञ्जीतेत्यर्थः । अवकीर्णे— शूद्रादि[1]भुक्तभाजने [2]कृतभोजने । अत्र पाषाणपात्रस्यानिषिद्धत्वात् तत्र [3]भोजने [4]दोषाभावः ।

"एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥"

इति कांस्यपात्रस्य विहितत्वेऽपि वैष्णवमन्त्रजापकानां तत्त्याज्यम् ।

आभिमुख्यम्

विष्णुपुराणे (३-११-७७.७८)—

"विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ।
प्राङ्मुखोदङ्मुखो वाऽपि न चैवान्यमना नरः ॥"

प्राङ्मुखो भुञ्जीत उदङ्मुखो वा, न विदिङ्मुखः इत्यर्थः ।

मनुः (२-५२)—

"आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥"

ऋतं- सत्यं यज्ञ वा ।

"एवं च भुञ्जीत नैवेह च दक्षिणामुखो
न च प्रतीचीमभिभोजनीय"मिति

दक्षिणपश्चिममुखनिषेधो निष्कामस्य ।

---

ख पाठः—

(1) कृतभाजने (2) "कृतभोजने" इति नास्ति (3) भोक्तव्यं
(4) "दोषाभाव" इति नास्ति

मुद्रित पाठः—

A- "नाधिशयने नासने वाश्नीयात् ।" कृत्यकल्प- नियत- २२१

पुष्टिकामाधिकारे [A]आपस्तम्बः (२-८-१९-१.२)—

"वाग्यतो दक्षिणामुखो न भुञ्जीत । अनायुष्यं त्वेवं[1]मुखस्य भोजनं मातुरुपदिशन्ती"ति ।

एवं च सति निष्कामस्य मातृरहितस्य न दक्षिणामुखत्वम् । किन्तु पुष्टिकामस्य यशस्कामस्य वा । जीवन्मातृकस्य तु सर्वथा न दक्षिणामुखत्वमिति ।

विष्णुपुराणे (३-११-७५)—

"प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ।"

प्रशस्तरत्नानि-गारुडादीनि ।

[B]तथा –

"प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः ।
भुञ्जीत चार्द्रपादस्तु नार्द्रपादः स्वपेन्निशि ।
आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति ।।"

पञ्चार्द्रः- करचरणवदनार्द्रः । पुनः पादार्द्रताग्रहणमादरार्थं दीर्घायुष्य-फलार्थं च ।

तथा—

"भूमौ पात्रं प्रतिष्ठाप्य [C]ओंकारेण [2]तु संस्पृशेत् ।"

---

ख पाठः—

(1) 'मुखस्य" इति नास्ति (2) च

मुद्रित पाठः—

A- वाग्यतो दक्षिणामुखो भुञ्जीत । आप० धर्म० २-८-१९-१
अनायुष्यं त्वेवंमुखस्य भोजनं मातुरुपदिशन्ति । आप० धर्म०२-८-१९-२

B- विष्णुपुराणे विष्णुस्मृतौ वा नास्ति ।
कल्पतरौ तु यमनाम्ना पठितम् । (नियत- २२३)

C- कल्पतरौ ब्रह्मपुराणवचनत्वेन पठितम् । तत्र "मौनेनान्नं तु भोजयेत्" इति । नियत-२२४ ।

मनुः (२-५४)—

"पूजयेदशनं नित्यमद्या[A]च्चैवमकुत्सयन् ।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥"

पूजनं- नमस्कारः । अकुत्सनम्- अनिन्दा । हर्षः- कायिकः । प्रसादो- मानसः । [1]अभिनन्दनं, वचसा ।

ब्राह्मे—

"अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति [2]भ[B]क्त्याथ वन्दयेत् ॥
[C]अन्नं विष्णुः स्वयं [3]प्राह नित्यमेव जनार्दनः ।
प्राणार्थं मां सदा ध्यायेत् स मां संपूजयेत् सदा ॥
वामेन पाणिना पात्रं गृहीत्वा भूमि[4]संस्थितः ।
तेजोऽसीति जपं[5]स्तूर्णं प्रणमेदमृतं च यत् ।

---

ख पाठः—

(1) प्रतिनन्दनं (2) भुक्त्वापवनयेत् (3) ब्रह्म (4) संस्थितम् (5) ०स्त्वन्नं०

मुद्रित पाठः—

A- च्चैतद B- भक्त्या च- कृत्यकल्प–नियत-२२५

C- अन्नं विष्णुं स्वयं प्राह नित्यमेव जनार्दनः ।
यो मां ददाति प्राणाय भुञ्जानः शास्त्रविद् द्विजः ॥
प्राणार्थं मां सदा ध्यायेत् स मां सम्पूजयेत् सदा ।
वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम् ॥
तेजोसीति जपंस्त्वन्नं प्रणमेदमृतं च तत् ।

कृत्यकल्प० नियत– २२५

मार्कण्डेयपुराणे— (३४-२८)

"उपघातादृते दोषं नान्न[A]स्य परिकीर्त्तयेत् ।"

उपघातः— काकादि[1] स्पर्शनम् ।

तथा—

"श्रुत्वा परेरितं नाम भोजनादौ शुचि[2]स्थिते ।
अभीष्टदेवतानां च मुच्यते घोरकिल्बिषात् ॥"

शिष्टाः पठन्ति—

"धर्मराजचित्रगुप्ताभ्यां दद्यात् पिण्डद्वयं भुवि ।"

समाचारोऽप्येवम् ।

[B]ब्राह्मे —

"अपोशानं च गृह्णीयात् सर्वतीर्थमयं च तत् ।
अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च ॥
हस्तेन लङ्घयेन्नान्नं सोदकेन कदाचन ।"

शिष्टाः—

"नैवेद्यप्राशनादौ [3]तु दिव्यपादोदकाहुतिः ।
होतव्या जठराग्नौ तु स्वेन पाणिस्रुवेण [4]तु ॥"

तदपोशानेन सहेति केचित् । अन्ये तु पञ्चाहुत्यन्ते कुर्वन्ति ।

योगियाज्ञवल्क्यः (६-१४१)

"[C]प्राणोऽपानस्तथा व्यानः समानोदान एव च ।

---

ख पाठः—

(1) ०स्पर्शः (2) ०स्मिते (3) च (4) च

मुद्रित पाठः—

A- स्योदीरयेद् बुधः- मार्कण्डेयपु० । कृत्यकल्प- नियत-२२५

B- कृत्यकल्प- नियत-२२६

C- प्राणो व्यानस्तथाऽपानः समानोदान एव च ।
ओंकारपूर्वाः स्वाहान्ताः पञ्च दद्यात्तथाऽऽहुतीः ॥ यो० याज्ञ ९-१४१

ओंकारपूर्वैः स्वाहान्तैः पञ्च दद्यात्तथाऽऽहुतीः ॥"

इति वाक्यं प्रणवादिस्वाहान्तमन्त्रकथनार्थम् ।

ब्राह्मे प्राणाहुत्यधिकारे—

"प्राणे तृप्ते [A]च तृप्यन्ते नित्यं स्वर्गार्कचक्षुषः ।
व्याने तृप्ते [B]च तृप्यन्ति गोत्रेन्दुककुभस्तथा ॥
अपाने तृप्ते तृप्यन्ते वह्निवाग्भूमयः सदा ।
समाने तृप्ते तृप्यन्ते मनःपर्जन्यविद्युतः ॥
उदाने तृप्ते [1]तृप्यन्ते वाय्वाकाशौ च सर्वदा ।"

[2]एतत्कथनस्य प्रयोजनाभावादेवं ध्यातव्यमिति वाक्यार्थः । एवं चास्य पश्चा[3]हुतावेवंध्यानपरत्वात्प्राणादिक्रमोऽत्र न विवक्षितः । याज्ञवल्क्यवचनस्य च मन्त्रपरत्वादनन्यपरलिङ्गपुराणवाक्येन क्रमविधिः ।

लैङ्गे—

"प्राणायेति ततस्तस्य प्रथमा याऽऽहुतिः स्मृता ।
अपानाय द्वितीया च व्यानायेति ततोऽपरा ।
उदानाय चतुर्थी स्यात् समानायेति पञ्चमी ॥"

तथा हारीतस्मृतौ—

"[C]सर्वान् प्राणान् [4]प्रीणाती"ति

प्राणापानव्यानोदानसमानानां ग्रहणमिति [D]लक्ष्मीधरेण क्रमो दर्शितः ।

---

ख पाठः—

(1) तृप्येते (2) एवं कथ (3)हुत्यंगतैव एवं ध्यान० (4) प्राणान्ति यस्याः ।

मुद्रित पाठः—

A- तु B- तु तृप्यन्ते श्रोत्रेत्वक्ककुभस्तथा । कृत्यकल्प-नियत-२२७

C- कृत्यकल्प-नियत-२२९

D- "प्राणानिति प्राणापानव्यानोदानसमानानां ग्रहणम्" ।

कृत्यकल्प-नियत-२३१

बौधायनीयेऽप्येवमेव क्रमः । तत्र—

"आर्द्रामलकमानेन कुर्याद्धोमं बलिं तथा ।
प्राणाहुतिविधानं च मृदा गात्रविशोधनम् ॥"

इति दर्शनादुक्तपरिमाणमन्नं ग्राह्यम् ।

"सर्वकामप्रदा नित्यं तिलकेऽनामिका स्मृता ।
प्राणाहुतिविधौ सैव विज्ञेयाङ्गुष्ठयोगतः ॥"

इति वचनादनामिकाङ्गुष्ठाभ्याम् ।

"तस्मादुभाभ्यां हस्ताभ्यां पुरुषोऽन्नमत्ति ।"

इति श्रुतेर्वामेन पात्रालम्भनम् ।

[A]आपस्तम्बस्तु पात्रधारणे विकल्पमाह—

"[1]नापजिहीत ।" (२-८-१९-५)
सव्येन पाणिना न मुञ्चेत् ।
अपजिहीत । (२-८-१९-८)

मुञ्चेद्वा । प्रथमं पात्रधारणमुप[2]क्रान्तं चेन्न त्यागः । अधृत्वैव भोजनारम्भे न धार्य्यमिति [B]कपर्दिभाष्यम् ।

---

**ख पाठः—**

(1) "नापजिहीतापजिहीतेति" (2) ०न्यस्तं

**मुद्रितपाठः—**

A- नापजहीत । ७ । अपजहीत वा । ८ । आप० धर्म०

B- "यदि प्रथमं पात्रधारणपूर्वकं भोजनमुपक्रान्तं तदा धारणमेव । यदि प्रथममधृत्वैव भोजनमुपक्रान्तं तदाऽधारणमेवेति कपर्दी ।"

**विष्णुपुराणे (३-११-८७)-**

**"[A]पञ्चग्रासान्महामौनी प्राणाद्याप्यायनाय तत् ।"**

[1]ध्वनिवतो भयरूपशब्दनिवृत्तिः । [B]नि[2]गिरेदिति हारीतोक्तेर्द[3]न्तसंलग्नं न कार्यम् ।

**"पञ्चाहुतीस्तु जुहुयात् प्रलयाग्नि[C]निभे तथा ।"**

इति ब्रह्मपुराणात् प्रलयाग्निनिभत्वेन जठराग्निध्यानम् ।

अत्राहुतीर्जुहुयात्, प्राणाग्निहो[4]त्रशब्देभ्यो होमरूपत्वात् प्राणाद्युद्देशेन त्यागः । श्रुतिश्च—

**"तद्भक्तं प्रथममागच्छेत्तद्धोमीयमि[5]ति ।**

**[6]यत्तु[D] छान्दोग्यपरिशिष्टम्—**

**"आहुतिश्च[7]र्मप्रज्ञप्तिस्तोकगृहीतैरिति ।"**

---

**ख पाठः—**

(1) ध्वनिवतेऽस्ति मौनीत्युभयशब्दनिवृत्तिः (2) तं न दन्तैस्पृशेदिति हारीतोक्तेः (3) न दन्तलग्नं कार्यम् (4) ०त्रमित्यादिश० (5) "इति" इति नास्ति (6) अल छान्दो० (7) धर्मज्ञप्राप्ति०

**मुद्रित पाठः—**

A- पञ्चग्रासं महामौनं हि प्राणाद्याप्यायनं तत् ॥ विष्णुपु० "पञ्चग्रासान् महामौनं प्राणाद्याप्यायनाय तत्" अत्र महामौन ग्रहणात् सर्वथा ध्वनि निवृत्तिरभिमता" कृत्यकल्प-नियत- २२७

B- "समस्ता निगिरेत्"... ...निगिरेत्- न दन्तभिन्नां कुर्यात् । कृत्यकल्प-नियत- २३१ ।

C- निभेषु च - कृत्यकल्प - नियत - २२७ ।

D- तथा छन्दोगोपनिषदि वाक्यकारः - समां प्रथमाहुतिमिति । आहुति-धर्मप्रज्ञप्तिः स्तोकेन गृहीतैरिति । एतच्च वृद्धद्रविडविवरणकारेण व्याख्यातम् । कृत्यकल्प - नियत - २३१ ।

वृद्धद्रविडविवरणकारवचनम् । अनामिकाङ्गुष्ठाभ्यां ग्रहणात्स्तोकता निर्दिश्यते । [1]तथा ह्याहुतिर्गृह्यमाणा दृश्यत [A]इति । [2]अनेनाहुतिशब्द उपचारवृत्तिरुच्यते । श्रुतिस्मृतिविरोधात् । किन्त्वाहुति[3]रूपेण संभावनायैव । [4]अन्यस्य होमसाधनत्वदर्शनादिदमपि होमीयत्वमुक्तम् ।

इदं च पुरुषार्थभोजनप्रयुक्तान्नद्रव्यकहोमत्वा[5]देवाप्रधानकर्म न तु भोज्यसंस्कारो मानाभावात् । भक्तं होमीयमिति सम्बन्धमात्रे प्रत्ययोत्पत्त्या भक्तस्य कर्मत्वाप्रतीतेः केवलं "स[B] एवमहरहः सायं प्रातर्जुहुयादद्भिर्वा सायमिति" (२-७-१३-३.४) बौधायनोक्तेः । [6]रात्रौ भोजनाभावेऽप्युदकेन [7]कार्यम् । अतएवास्य न भोज्यसंस्कारता । तथा सति रात्रौ भोजनाभावे लोपापत्तेः ।

**बौधायनः (२-७-१३-१०.१४)—**

**"गृहस्थो ब्रह्मचारी च[C] योऽनश्नंस्तु तपश्चरेत् ।**
**प्राणाग्निहोत्रलोपेन [D]अवकीर्णी भवेत्तु सः ॥**
**अन्यत्र प्रायश्चित्तात् प्रायश्चित्ते तु तदेव विधानम् ।"**

**"अन्तरा प्रातराशं च सायमाशं तथैव च ।**
**सदोपवासी भवति यो न भुङ्क्ते कदाचन[E] ॥**

---

**ख पाठः—**

(1) तथा आहुति० (2) नानेना० (3) ०रूपता संपादनायैव
(4) अल्पहोमसाधनत्वदर्शनादिकमपि होमीयमित्युक्तम् ।
(5) त्वादेव प्रधानं कर्म न च (6) "स च" इत्यधिकम् (7) कार्यः

**मुद्रित पाठः—**

A– इति जयस्वामी । कृत्यकल्प-नियत-२३१ ।
B– "स एवमेवाहरहः" बौधा० धर्म० ।
C- "वा" बौधायनः
D- ह्यवकीर्णी । E- चनेति ।

**प्राणाग्निहोत्र[1]मन्त्रांस्तु निरुद्धे भोजने जपेत् ।**

**त्रेताग्निहोत्र[A]मन्त्रांस्तु द्रव्याभावे यथा जपेत्[B] ॥**

**स[C]एवमाचरंस्तत्र ब्रह्मभूयाय कल्पते ।"**

गृह[D]स्थोऽ[2]नाहिताग्निः । त्रेताग्नि[3]होत्रमन्त्रानिति लिङ्गात् ।

**"अन[E]ड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः ।**

**अश्नन्त एव सिद्ध्यन्ति नास्ति सिद्धिरनश्नताम् ॥**

इति वसिष्ठा(६-२१)दि स्मृत्यन्तराच्च । अनाहिताग्नेश्च "पुण्यान्यन्यानि कुर्वीत" (मनुः ११-५९) इति "[4]व्रतोपवासादिषु" इति विशेषेणाधिकारवचनात् । अन्यथा गृहस्थविषयोपवासविधीनां निरवकाशत्वापत्तेः । अतएव यत्राहिताग्न्युद्देशेनोपवासः प्राय[5]श्चित्तं विधीयते तदेव तस्य कार्यम् इति [F]लक्ष्मीधरः ।

वस्तुतोऽ[6]त्र तपःपदस्य काम्योपवासे प्रसिद्धिभूयस्त्वात् प्रायश्चित्तशब्देन नित्योपवासमात्रमुच्यते । तथा चैकादशीजन्माष्टम्यादिष्वप्याहिता-

---

**ख पाठः—**

(1) मन्त्रांश्च (2) ०त्रानाहिताग्निः (3) होम० (4) विशेषेणोपवासादिना आहिताग्नेरधि० (5) ०श्चित्तं च (6) "अत्र" इति नास्ति

**मुद्रित पाठः—**

A- मन्त्रान् वै- कृत्यकल्प- नियत- २३७

B– जपेदिति

C- एवमेवाचरन् ब्रह्म ।

D- स्थो आहिताग्निः- कृत्यकल्प० नियत० २३७

E– आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः" इति । वसिष्ठः ६-२१ वसिष्ठे- बौधायने च नैषां सिद्धिरिति पाठः २-७-१३-९

F- "अनेनेदमुक्तं भवति - यत्राहिताग्न्युद्देशेन विशेषविहित उपवासविधिस्तत्रैवोपवासकर्मणि तस्याधिकारो नान्यत्रेति । कृत्यकल्प-नियत-२३८

ग्नेरुपवासशिष्टाचारः संगच्छते। तेनायमप्यनुवाद एव। काम्यनिषेधे नित्ये प्रसङ्गाभावात्। प्राणाग्निहोत्रलोपापत्ति[1]दोषेऽप्यर्थवाद एव निषेधस्तुत्यर्थः। अन्तरा प्रातराशमित्यादिनोपवास एव तत्फलस्य तृतीयभोजननिवृत्त्यैव सिद्धत्वादिति स्तूयते। भोज्याभावेन भोजने [2]निरुद्धेऽपि प्राणाग्निहोत्रमन्त्र-जपेन प्राणाग्निहोत्रहोमसाधनवचनं च प्राणाहुत्यावश्यकत्वकथनद्वारा तल्लोपे साग्नेरुपवासो महादोषकर इति प्रतिषेधनिन्दाया एव शेषः। "ब्रह्मभूयाय कल्पते" इत्यपि प्राणाहुतिप्रशंसाद्वाराऽऽहिताग्न्युपवासनिषेधस्य गुणकीर्त्तन[3]मपि।

[4]एवं यत्राष्टम्यादौ दिवसे, दर्शादौ रात्रावेकादश्यादौ चोभयत्र भोजननिषेधः, तत्र प्राणाहुतेरपि भोजनात्मकत्वादेव निषेधः। न च विहित-निषेधे विकल्पः। अष्टम्यादौ [5]विशिष्य विध्यभावेन सामान्यप्राप्त्युप[6]जीव-कस्य निषेधस्य दर्शाङ्गानृतवदननिषेधवद्वि[7]कल्पानासञ्जकत्वात् नोपवासदिने प्रसङ्गः। भोज्याभा[8]वे विधिकारे सत्यकरणात् तन्मन्त्रजपोऽनुकल्पः। सूतकादौ च—

**"सूतके मन्त्रवत् कर्म स्मार्त्तं नैव समाचरेत्।**
**[A]आपोशानद्वयं मुक्त्वा तथा प्राणाहुतीर्नृप ॥"**

इति वचनात् करणम्। नास्तिक्यादिना तृतीयभोजने न प्राणाहुतिप्रसङ्गः। हविःशेषभक्षणादौ [9]तथा चाभावात्।

**"आपोशानेनोपरिष्टादधस्ताच्च विजानता।**
**अनश्नन्नममृतं चैव कार्यमन्नं द्विजन्मना ॥"** (१-१०६)

---

**ख पाठः—**

(1) दोषो० (2) निरुद्धो० (3) ०नमिति (4) एवं च यत्रा० (5) विशेष० (6) ०जीवस्य (7) ०कल्पना (8) ०भावेऽवधि (9) तदाचाराभावात्।

**मुद्रित पाठः—**

A- आपोशानद्वयं मुक्त्वा तथा प्राणाहुतीरपि" श्राद्धदीप (पृ-१४)

इति याज्ञवल्कीयेऽपोशानक्रियायां भोज्यस्य कर्मत्वात्संस्काररूपत्वेन तृतीयेऽपि भोजने प्रवृत्तिरित्याहुः।

अत्र बौधायनोक्ताः प्राणाग्निहोत्राङ्गभूताः पूर्वापरानुमन्त्रणादिमन्त्राः वैकल्पिकाः फलातिशयार्थाः।

विद्याकरपद्धतौ—

"[1]अनुच्छिष्टो न मृष्टान्नं ग्रासं ग्रासार्धमेव वा।
विष्णोर्निवेदितान्नं यो नित्यं भुङ्क्ते स मुक्तिभाक्॥
षड्भिर्मासोपवासैश्च यत्फलं परिकीर्त्तितम्।
विष्णोर्निवेदितान्नेन तुल्यं तद् भुञ्जतां कलौ॥"

इति वचनान्नैवेद्यं विष्णोरवश्यं भोज्यम्।

तथा—

"अलाभे तु विशुद्धान्नं भुञ्जीयात् प्रोक्ष्य मन्त्रवित्।
विष्णुभुक्तमिति ध्यात्वा वैष्णवस्तु विशेषतः॥"

अलाभे-परकीयपूजानैवेद्यालाभे। एवं यद्यपि नैवेद्यालाभे विष्णुभुक्तचिन्तनमुक्तं तथापि वचनान्तरेण तस्य नित्यता। अलाभ इति तु नैवेद्यभक्षणे कार्यापत्तिरुच्यते विष्णुभुक्तचिन्तनस्य।

तथा[2]—

"नानिवेद्य हरेः किञ्चित् समश्नीयात्तु पावनम्।
यद्यकस्मात् प्रवृत्तं तन्मनसाऽपि समर्चयेत्॥"

अकस्मात् प्रवृत्तं भोजनमध्ये यदानीतम्। [3]एतच्च चिन्तनम्, आपोशानात् प्राक्, सामर्थ्यात्। न च प्राणाहुतिः कथं स्यादिति वाच्यम्।

---

ख पाठः—

(1) अनुशिष्टान्न० (2) तथा च (3) एतद्वचनं।

"प्रापणेन महाविष्णोर्वैश्वदेवं करोति यः ।
प्राणाग्निहवनं चैव तेन लोका जितास्त्रयः ॥"

इति वचनात् ।

यत्तु—

"प्राणानां जुहुयादन्नमनिवेदितमन्वहम् ।
तृप्यन्ति हि सदा प्राणा अनिवेदितभोजनात् ॥"

इति तद्देवतान्तरनैवेद्यपरम् ।

अत्र नैवेद्ये [1]उच्छिष्टसृष्टान्नयोः पर्युदासात् दैवात् तथा भक्षणे न दोषो न फलम् ।

आ[A]पस्तम्बः (२-८-१६-५)—

"यावद् ग्रासं ग्रसन्नस्कन्दयन्
कृत्स्नं ग्रासं ग्रसेत् सहाङ्गुष्ठम् ।"

यावद् ग्रासं- यावद् ग्रसितुं शक्यम् ।

ब्राह्मे—

"सर्वाङ्गुलीभिरश्नीयान्नावधूयेत्करं क्वचित् ।
कुर्यात् [B]क्षीरान्नमाहारं न तु पश्चात् पिबेद्दधि ॥
जठरं पूरयेदर्धमन्नैर्भागं जलेन[C] तु[2] ।
वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥"

---

ख पाठः—

(1) तच्छिष्ट० (2) च ।

मुद्रित पाठः—

A- "यावद् ग्रासं सन्नयन्नस्कन्दयन्नाय जिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसति सहाङ्गुष्ठम् ।"

B- क्षीरान्नमाहारं न च - कृत्यकल्प० नियत० २४० ।

C- ०न च - कृत्यकल्प० नियत० २४१ ।

विष्णुपुराणे (३-११-८५,८६)—

"अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्।

लवणाम्लौ तथा मध्ये कटुतिक्ता[A]दिकं ततः॥

प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये च[B] कठिनाशनः।

अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति॥"

देवलः—

"न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं [C]स्वकम्।

पवित्रमथ हृद्यञ्च सर्पिराहुरघापहम्॥"

विष्णुः (६८-३६)—

"[D]नोच्छिष्टो घृतमादद्यात्।"

बौधायनः—

"कामक्रोधलोभमोहानप[1]हृत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात्, न पिण्डशेषं पात्र्यामुत्सृजेत्, मांसमत्स्यतिलमधुसंसृष्टं प्राश्य अप उपस्पृश्य अग्निमुपस्पृशेत्।"

अग्न्युपस्पर्शनं मांसादिभक्षणनिमित्तकम्। आचमनानन्तरं तस्य काल उक्तः उपस्पृश्येति।

---

ख पाठः—

(1) ०हृत्य।

मुद्रित पाठः—

A- दिकांस्ततः विष्णुपु० ०दिकांस्तथा-कृत्यकल्प नियत-२४०।

B- कठिनभोजनः - विष्णुपु०।

C- स्वयम् - कृत्यकल्प - नियत - २४१।

D- नोच्छिष्टश्च विष्णुस्मृ०।

[A]ब्राह्मे—

"[1]यस्तु पाणितले भुङ्क्ते यस्तु फुत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्य[2]श्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात् स्याच्च नातिबुभुक्षितः ।"

तथा—

"अन्नस्य जन्मकालुष्यं दुष्पक्तिं [3]न[B] च कुत्सयेत् ।
ग्रासशेषं न चाश्नीयात् [C]पात्रशेषं पिबेन्न तु ॥
शाकमूलफलेक्ष्वादिर्दन्तच्छेदैर्न भक्षयेत् ।
संचयेन्नान्नमन्नेन विक्षिप्तं पात्रसञ्चितम् ॥
वृथा न विकिरेदन्नं नो[D]च्छिष्टस्तु क्वचिद्व्रजेत् ।
न स्पृशेत् स्वशिरो विप्रः [E]स्वोच्छिष्टेनैव पाणिना ॥
तिलकल्कं जलं क्षीरं दधिक्षौद्रघृतानि च ।
न त्यजेदर्धजग्धानि सक्तू[F]श्चैव कदाचन ॥"

---

ख पाठः—

(1) यत्तु पाणितले भुक्तं यत्तु फूत्कारसंयुतम् (2) ०र्यश्च (3) च न

मुद्रित पाठः—

A- कृत्यकल्प - नियत - २४१
केशववैजयन्त्यां(६८-३२) तु- यस्तु पाणितले भुक्तं प्रसृताङ्गुलिभिश्च यः ।
यस्तु फुत्कारसंयुक्तं तस्य गोमांसवच्च तत् ॥

B- च न - कृत्यकल्प - नियत - २४२

C- पीतशेषं - कृत्यकल्प - नियत - २४२

D- नोच्छिष्टः कुत्रचिद् - कृत्यकल्प - नियत - २४२

E- सोच्छि० - कृत्यकल्प - नियत - २४२

F- श्चाथ - कृत्यकल्प - नियत - २४२

नातिबुभुक्षितः स्यात्- क्षुधाऽऽत्मानं न पीडयेत् । अन्नेन - पूपादिना पात्रे विक्षिप्तमन्नं न राशीकुर्यात् ।

महा[A]भारते—

"पानीयं पायसं सर्पिर्मधुशेषं दधीत्यपि ।
निरस्यं शेषमेतेषां न प्रदेयं तु कस्यचित् ।"

निरस्यं- त्याज्यम् । अत्र पानीयादीनां शेषः परिवेषणपात्रे भोज्यपात्रे तु न शेषपरिरक्षणम्, ब्रह्मपुराणवाक्यात् ।

बौधायनः (२-७-१२-८)—

"सर्वभक्ष्यापूपकन्दमूलफलमांसादीनि दन्तैर्नावद्येत् ।"

कन्दानि- सूरणादीनि । मूलानि- मूलकादीनि ।

हारीतः—

"नान्यमना नाभिभाषमाणोऽश्नीयात् ।"

बृह[B]स्पतिः—

"न स्पृशेद् वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥"

गोतमः (१-९-५७)—

"न रात्रौ प्रेष्याहृतम् ।"

---

मुद्रित पाठः—

A कृत्यकल्प - नियत - २४३

B- कृत्यकल्प - नियत - २४८

केशववैजयन्ती - ६८-३८

सर्वमेव द्रव्यं नाद्यादित्यर्थः ।

शिष्टाः—

"स्पृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुना ।
साष्टिकं पायसं भुक्त्वा सर्वपापैः प्रमुच्यते ॥"

एतत् काम्यम् ।

बौधायनः (२-७-१२-६.१०)—

"नातिसुहितः । अमृतापिधानम[A] सीत्यपः पीत्वा ।"

नातिसुहितो—नात्यन्तं तृप्तः ।

मनुः (२-५७)—

"[B]अनायुष्यमनारोग्यमस्वर्ग्यं चातिभोजनम् ।"

वृद्धशातातपः—

"यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
भूमौ निक्षिप्य तं ग्रासं [1]स्नानाद् विप्रो विशुद्ध्यति ॥
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति ॥"

अशुचित्वं - गुदस्रावादिना अशौचश्रवणेन वा ।

"चतुःषष्टैः पलैः शुद्धैः [2]कुण्डं प्रस्थचतुष्टयम् ।
[C]एतावद्यस्तु [3]निगिरेत्स कुण्डाशी पतत्यधः ॥"

[4]इति [5]एतदन्तं निषिद्धम् ।

---

ख पाठः—

(1) स्नात्वा (2) मिश्रं प्रस्थचतुष्टयी (3) भुङ्क्तेऽन्नं स (4) "इति" नास्ति (5) एतदत्यन्तं निषिद्धम्

मुद्रित पाठः—

A- 'मसि' इत्युपरिष्टादपः - बौधा० धर्म०

B- अनारोग्यमनायुष्य०

C- भवेत्तद् यस्तु - ब्रह्मपु० वचनमिति कृत्यकल्प० श्राद्ध० ९७

यत्तु—

"[A]अष्टौ ग्रासा यतेरुक्ता द्वादशारण्यवासिनाम् ।
द्वात्रिंशच्च गृहस्थानाममितं ब्रह्मचारिणाम् ॥" इति ।

अस्य श्रुत्याद्यभावेन भोजनाङ्गत्वेऽपि ग्रासनियमस्य क्रियारूपस्य क्रियापेक्षस्यैव पुरुषार्थसाधनत्वाल्लिङ्गोपस्थितभोजनाश्रितस्य तथात्वं वाच्यम् । एवं च भोजनद्वयाश्र[1]यकल्पने मानाभावेन [2]एकस्मिन्नेव भोजने द्वात्रिंशद् [3]ग्रासा एव शास्त्रार्थः ।

शिष्टाः—

"भुक्त्वा शेषं समादाय अवघ्राय क्षिपेद् भुवि ।
तृप्त्यर्थं नरकस्थानां मन्त्रेणानेन मन्त्रवित् ॥
रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् ।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम् ॥
अर्धं [4]त्यजति गण्डूषमर्धं त्यजति भूमिषु ।
प्रीणन्ति पितरस्तस्य ये चान्ये भूमिदेवताः ॥
हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
हतं दैवं च पित्र्यं च आत्मा [5]चैतेन [6]घातितः ॥"

गण्डूषममृतापिधानोदकम् ।

---

ख पाठः—

(1) ०श्रित० (2) एतस्मिन्० (3) ग्रास इत्येवं (4) पिबति (5) वैतेन (6) पातित

मुद्रित पाठः—

A- अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोडश ।
द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥ वसिष्ठः ६-२०

"अपोशाने तु चरमे गृहीते यः पयः पिबेत् ।
सपवित्रकरेणैतद्रक्तपानसमं भवेत् ॥"

"[1]अवगुण्ठित उच्छिष्टोऽमेध्यान्तरो नाभिभाषेत ।
मोर्ध्वंज्योतींषि वीक्षेत [1]नोच्छिष्टः कुत्रचिद् व्रजेत् ॥"

"भुक्त्वा[3]चामेद् यथोक्तेन विधानेन समाहितः ।
शोधयेन् मुखहस्तौ च [4]मृदद्भिर्घर्षणैरपि ॥
पादावसेचनोच्छिष्टे प्रक्षिपेन्न गृहाङ्गणे ।"

दन्तश्लिष्टं त्यक्त्वा शुचिः । अ[5]त्यागार्हस्य जिह्वामर्षेण पश्चात्त्यागे । निगिरणं त्यागो वा ।

"यस्तु गण्डूषसमये तर्जन्या दन्तधावनम् ।
कुर्वीतात्यन्तमूढात्मा पतते नरके स वै ॥

ब्रह्मपुराणे—

"विप्रस्त्वेवमुपस्पृश्य पादाङ्गुष्ठेन[A] दक्षिणे ।
हस्ताभ्यां [B]विधिवद् दद्यान्मन्त्रवच्चावनेजनम् ॥
अङ्गुष्ठमात्रः पुरुषोऽप्यङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणा[C]तु विश्वभुक् ॥"

---

ख पाठः—

(1) "तथा" इत्यधिकम् (2) न चोच्छिष्ट० (3) ०चम्य (4) मृद्भिसंघर्षणै० (5) अत्यगर्हितस्य

मुद्रितपाठः—

A- च-कृत्यकल्प-नियत-२५०

B- मन्त्रवद्द्याद्विधिवच्चावनेजनम्-कृत्यकल्प-नियत-२५०

C- प्रीणाति-बौधा० धर्म० २-७-१२-११

आपस्तम्बः (२-८-१९-८)–

"[A]आच[1]म्य द्वौ पाणी धारयेदाप्रोदकीभावात्"

प्रकृष्टोदकभावनिवृत्तिपर्यन्तम्। तदनन्तरमेव सुखार्थं करप्रोञ्छनम्।

विष्णुपुराणे (३-११-८८,८९)—

"भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा।
आ[B]चान्तः पुनराचामेत्प्राणान् प्रक्षाल्य मूलतः॥
स्वस्थः प्रशान्तचित्त[C]श्च कृतासनपरिग्रहः।
अभीष्टदेवतानां च[D] कुर्वीत स्मरणं ततः॥

स्मृतिः—

"भुक्त्वा [2]तैलार्द्रपाणिस्तु यस्तिष्ठेदविचक्षणः।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम्॥
मा करेण करं साक्षान्मार्जयेन्मा च चक्षुषा॥"

[E]ब्राह्मे —

"संमार्ज्य बाहु जानु च गो[3]प्रदानफलं लभेत्।"

---

ख पाठः–

(1) आचम्यादौ (2 चैवार्द्र°

(3) गोसहस्रफलं।

मुद्रित पाठः–

A- आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात्।

B- यथावत् पुनराचामेत् पाणी - विष्णुपु०

C- °स्तु D- तु E- कृत्यकल्प - नियत - २५०

[A]तथा—

"आचान्तोऽप्यशुचिस्तावद् यावत् पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद् यावन्नोमृज्यते मही ॥"

आपस्तम्बः (२-२-४-२४)—

"यत्र भुज्यते तत्स[B]मूहनं निर्हृत्या[1]वेक्ष्य तं देशम्
अमत्रेभ्योऽन्नं संकृष्याद्भिः [2]संश्रि[C]त्योत्तरतः शुचौ देशे
रुद्राय निनयेदेवं वास्तु शिवं भवति ।"

समूहनं - पतितान्नादिबहिष्करणं संमार्जन्या । [3]पात्रस्य निर्हरणं-पात्रस्य अवेक्षणम् । समाचाराद् गोमयोदकं दत्त्वा लेपनम् । अमत्राणि-[4]भाण्डानि । तत्रस्थमन्नं जलप्रक्षेपेणाप्लाव्य [5]गृहान्तरशुचिदेशे रुद्राय देयम् । वास्तुशिवत्वं तस्य फलम् ।

[D]हारीतः—

"पश्चात्पत्नी शेषं बलिं हरेत् ।"

पाकभा[6]ण्डशिष्टमिति जयस्वामी ।

---

ख पाठः—

(1) अभ्युक्ष्य (2) संयोगोत्तरतः (3) "पात्रस्य" इति नास्ति
(4) भाजनानि (5) गृहोत्तरशुचौ० (6) भाण्डशिष्टेनेति ।

मुद्रित पाठः—

A- कृत्यकल्प-नियत-२५०
B- ०समूह्य निर्हृत्याऽवोक्ष्य
C- संसृज्योत्तरतः - आप० धर्म०, संमृज्योत्तरतः – कृत्यकल्प– नियत-२५१
D- कृत्यकल्प – नियत - २५१

# भोजनक्रमः

पादप्रक्षालनम् । द्विराचमनम् । द्विरोष्ठमार्जनम् । अनुलेपनार्थं चन्दनग्रहणम् । तच्च गृह्योक्तविधिना ।
"प्राणापानौ मे तर्पय, चक्षुर्मे तर्पय, श्रोत्रं मे तर्पये"(पारस्क० २-६-१३)ति । [1]पितरः शुन्धध्वम्" (पारस्क० २-६-१४) इति नासिकामुखयोर्गन्धेन स्पर्शनम् । अनुलेपनगन्धस्य स्थापनम् । दक्षि[2]णामुखत्वम् । [3]अपसव्यम् । हस्तयोः [4]प्रक्षालनं कृत्वा तदुद[5]कं पश्चिमतः प्रक्षेपः । "पितरः शुन्धध्व-[6]मि"त्यनेन मन्त्रेण । गन्धेन गात्रानुलेपनम् ।

अथ जपः—

"[A]सुचक्षा अहमक्षिभ्यां सुवर्चा मुखेन
शुश्रुत् कर्णाभ्यां भूयासम"ति ।

पुष्पमालाग्रहणमनेन मन्त्रेण—

"या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय,
ता अहं प्रतिगृह्णामि यशसा च [B]बलेन च ।"
(पार० गृ० २-६-१८)

अथानेन मन्त्रेण शिरसि बन्धनम्—

---

**ख पाठः—**

(1) "पितरः शुन्धध्वम्" इति नास्ति (2) ०ण मु० (3) अपसव्यता
(4) क्षालनं (5) ०कस्य दक्षिणतः (6) ०मिति मन्त्रेण

**मुद्रित पाठः—**

A- सुचक्षा अहमक्षिभ्यां भूयासꣳ सुवर्चा
मुखेन, शुश्रुत् कर्णाभ्यां भूयासम् ॥" (पार०गृ० २-६-१४)

B- भगेन च - पार०गृ० २-६-१८

"यद् यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु ।
तेन संग्रथिता सुमनस आबध्नामि यशोमयि ॥
(पार०गृ० २-६-१९)

इति वर्त्तुलपवित्रस्य करे धारणम् । उत्तरीयधारणम् । यथोक्तदेशे वस्त्रादिना परिवृते कृतसंमा[1]र्जन उपलिप्ते कृतचतुरस्रमण्डले यथोक्तासने उपवेशनम् । पादाभ्यां धरणीं स्पृष्ट्वा वामेन वा । यथोक्तदिगभिमुखेनोपवेशनं कामनायाम् । निष्कामस्य प्राङ्मुखत्वम् ।

"यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनातु मा ।। (शु. य. १९-४१)
पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु मा ॥" (शु० य० १९-४२)

इत्याभ्यामासनाभिमन्त्रणम् । यथोक्तपात्रं मण्डले स्थापयित्वा प्रणवेन स्पर्शनम् । अन्नमानीयमानं दृष्ट्वा हर्षः । घृतेन पात्रोपस्तरणम् । पात्रे अन्ने, तदन्ने मनसि सन्तोषः । भद्रं जातमित्यभिनन्दनवाक्यम् । "अन्नाय नम" इति [2]नमस्कारः । "अस्माकं नित्यमस्त्वेतदि"ति जपः । अन्नोपरि [3]घृताघारणम् । उदकेन प्रोक्षणम् । प्राणार्थमन्नमिति ध्यानम् । वामेन पाणिना पात्रधारणम् ।

परमेष्ठी ऋषिः । अनुष्टुब् च्छन्दः । प्रजापतिर्देवता ।

"तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि ।
प्रियं देवानामनाधृष्टं देवयजनम् ।"

विष्णुरूपायान्नाय नम इत्यन्ननमस्कारः । धर्मराजाय नमः । चित्रगुप्ताय नम इति भूमौ बलिद्वयदानम् । क्षुद्भयाद् [4]भावकामस्य अन्नजन्यव्याध्यनुत्पत्ति-

---

ख पाठः—

(1) ०र्जनोपलेपे (2) अन्ननमस्कारः (3) घृताभिघारणम् (4) भक्षकामस्य

कामस्य वा "अन्न[1]पतेऽन्नस्य देही"ति मन्त्रेणान्नाभिमन्त्रणम्। सकलस्य भोज्यस्य विष्णू[2]पभुक्तत्वेन चिन्तनम्। भोजनमध्योपस्थितस्य द्रव्यस्य मनसा विष्णूपभोगंचिन्तनम्। जनार्दन [3]इति परेणोक्तस्य श्रवणम्। विष्णुपादोदकमिश्रजल[4]चलुग्रहणम्। सोदकहस्तेनान्नमलङ्घयतोऽमृतोपस्तरणमसि स्वाहेति जलचलुकपानम्। प्रलयाग्निनिभत्वेन जठराग्निध्यानम्।

अनामिकाङ्गुष्ठाभ्यामार्द्रामलकमानेनान्नमादाय प्राणे तृप्ते स्वर्गार्कचक्षुषां तृप्तिरिति ध्यात्वा "प्राणाय स्वाहे"ति निगिरणम्। दन्तस्पर्शनपरिहारेण इदं प्राणायेति त्यागः।

अपाने तृप्ते वह्निवाग्भूमीनां तृप्तिरिति ध्यात्वा "अपानाय स्वाहे"ति। व्याने तृप्ते श्रोत्रचन्द्रदिशां तृप्तिरिति ध्यात्वा "व्यानाय स्वाहे"ति। उदाने तृप्ते वाय्वाकाशयोस्तृप्तिरिति ध्यात्वा 'उदानाय स्वाहा"। समाने तृप्ते मनःपर्जन्यविद्युतां तृप्तिरिति ध्यात्वा 'समानाय स्वाहे'ति।

एवं महामौनेन पञ्चग्रासभक्षणानन्तरं प्रथमं विष्णुनैवेद्यभक्षणम्। एवं पञ्चग्रासनैवेद्यजलपानादिमिलित्वा द्वात्रिंशद्ग्रासभोजनम्। भोजनप्रकारश्चोक्तः।

एवं भुक्त्वा शेषमन्नमाघ्राय भूमौ क्षिपेदनेन मन्त्रेण—

"[A]रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम्।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम्॥"

---

**ख पाठः—**

(1) ०पते इति मन्त्रेण (2) ०पभुक्तचि० (3) इत्यपरेग (4) ०चलुक०

**मुद्रित पाठः—**

A- रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्।
अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठत्विति॥ कात्यायनपरिशिष्ट
भोजनसूत्र-१ सपरिशिष्ट पारस्करगृ० (पृ-८११)

"अमृतापिधानमसि स्वाहे"ति जलचलुकपानम् । जलगण्डूषस्य [1]पीतस्य भूमिदेवतातृ[2]प्त्यर्थमर्धस्य भूमौ प्रक्षेपः । तदुत्तरं न जलपानम् । तत्रैव स्थित्वा मृद्धिर्घर्ष[3]णेन नखमुखहस्तशोधनम् । दन्तलग्ननिर्हरणम् । कूर्परप्रभृति पाणिप्रक्षालनम् । प्राङ्मुखस्योदङ्मुखस्य वाऽऽसनस्थस्यैव पादप्रक्षालनादिसर्वाङ्गोपेतमाचमनद्वयम् । त्रिरावृत्तिः । द्रु[4]पदादिमन्त्रेण जलपानम् । अघमर्षणेन वा [5]त्रिवृद् गायत्र्या वा भूर्भुवः स्वरिति वा सोपांशुप्रणवेन वा । [6]ततो जलभक्षणनिमित्तं द्विराचमनम् ।

प्रातर्धर्मेण दन्तधावनमदृष्टार्थमेव । आचम्य हस्ताभ्यां दक्षिणा-[7]ङ्गुष्ठेऽवनेजनदानम् ।

तत्र मन्त्रः (कात्यायनपरिशिष्ट – भोजनसूत्र - ३)—

**"अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः [A]प्रीणातु [8]विश्वभुक् ॥"**

हस्तयोर्घर्षणजलेन चक्षुर्मार्जनम् ।

**"[9]सुजातं च सुकन्यां च च्यवनं [10]शक्रमश्विनौ ।**
**भोजनान्ते स्मरेद्यस्तु तस्य [11]चक्षुः प्रसीदति ॥"**

मांसमधुतिलसंसृष्टभक्षणनिमित्त[12]मप्युपस्पर्शनम् ।

**"भुक्त्वाद्भिः स्वानि संस्पृशेत्"**

इति मनुवचनात् [13]प्रसवाख्य (?) परिशिष्टोक्तविधिना इन्द्रियस्पर्शनम् ।

---

**ख पाठः—**

(1) पात्रस्यार्घं (2) ०ह्यर्थं भूमौ (3) ०णैः नखहस्तयोः शो० (4) "दि" नास्ति (5) त्रिरावृत्ति गा० (6) तत्र (7) ०ङ्गुष्ठस्यावनेजनदानम् (8) विश्वधृक् (9) शर्यातिं (10) शुक्र० (11) चक्षुर्न सीदति (12) ०मग्न्युपस्पर्शनम् (13) भृशवाख्य

**मुद्रित पाठः—**

A- प्रीणाति = बौधा० धर्म० २-७-१२-११

[1]स चैवम्— "[A]वाङ् मे आस्येऽस्त्वि"ति मुखस्य। "नसोः प्राणो मेऽस्त्वि"ति नासिक्योः। "अक्ष्णोश्चक्षुर्मेऽस्त्वि"ति चक्षुषोः। "कर्णयोः श्रोत्रं मेऽस्त्वि"ति श्रोत्रयोः। "बाह्वोर्बलं मेऽस्त्वि"ति बाह्वोः। "ऊर्वोरोजो मेऽस्त्वि"ति ऊर्वोः। "अरिष्टानि मेऽङ्गानि तनूस्तन्वा मेऽसह सन्त्वि"ति सर्वाङ्गानां स्पर्शनम्। पाण्योरूर्ध्वयोर्धारणं जलत्यागाय। [2]ततो वस्त्रेण प्रोञ्छनं वा। जानुबाहुसंमार्जनं गोदान[3]फलस्य। भोजनपात्रो[4]द्धारणम्। भोजनभूमेरुच्छिष्टकर्षणं [5]संमार्जनम्। भुक्त्वाचम्यासने सुखोपविष्टस्येष्टदेवतास्मरणम्।

विष्णुपुराणे (३-११-९०.९६)—

"अग्निरा[6]प्यायये[B]द्धातून् पार्थिवान् पवनेरितः।
दन्तावकाशं नभसा जरय[7]त्वस्तु मे सुखम्॥ (९०)
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च।
भवत्वेत[C]त्परिणतौ ममाऽस्त्वव्याहतं सुखम्॥ (९१)
प्राणापानसमानानामुदानव्यानयोस्तथा।
अन्नं तुष्टिकरं चास्तु [D]ममाऽस्त्वव्याहतं सुखम्॥ (९२)
अगस्तिरग्निर्वडवानलश्च

---

ख पाठः—
(1) तच्चैवम् (2) तद्भोगवस्त्रेण (3) ०फलकामस्य (4) ०द्धरणम्
(5) मार्जनं च। लेपनम् (6) ०प्यायणं (7) ०त्युदरेऽन्नकम्

मुद्रित पाठः—
A-"आचम्य प्राणान्सम्मृशति वाङ् म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति" (पारस्करगृ० १-३-२६)

B- धातुं पार्थिवः C- परिणतं D- ममाप्य०

भुक्तं ममान्नं जरयत्वशेषम् ।
सुखं च मे तत् परिणामसम्भवं
[A]यच्छत्वरोगं च ममास्तु देहे ॥ (९३)
विष्णुः समस्तेन्द्रियदे[1]वदेही
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेत-
[2]दारोग्यदं मे परिणाममेतु ॥ (९४)
विष्णुरत्ता [B]यथैवान्नं परिणामश्च वै [C]यथा ।
सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा ॥ (९५)
इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायास[D]प्रधानानि कुर्यात्कर्माण्यतन्द्रितः ॥ (९६)

वैद्यशास्त्रे—

"[3]भुक्तं महेन्द्रकण्ठेन वैश्वानरमुखेन च ।
[4]येन जीर्णोऽथ वातापी ह्यसुरो देवकण्टकः ॥
स मे भुक्तं च पीतं चाप्यगस्त्यो जरयिष्यति ।
अगस्त्यं कुम्भकर्णं च शनिं च बडवानलम् ॥
आहारपरिणामाय [5]संस्मरेयुर्वृकोदरम् ।"

इति गृहस्थसाधारणभोजनविधिः ।

—×—

---

ख पाठः—

(1) ०देह० (2) त्वारोग्यदं (3) उक्तं (4) 'गरुडस्य च कण्ठेन समुद्रस्य च वह्निना" इत्यधिकम् (5) संस्मरेच्च

मुद्रित पाठः—

A- यच्छन्त्वरोगो मम चास्तु देहे B- तथै० C- तथा D- ०प्रदायीनि

अथ बौधायनेन शालीनयायावरपदवाच्यगृहस्थविशेषाणाम् आत्मयाजि-शब्दवाच्यानां च ब्रह्मध्यानाभ्यासवतां गृहस्थानां प्राणाहुतौ धर्मविशेषा उक्ताः ।

"प्राणाहुतीर्व्याख्यास्याम" (बौधा० धर्म० २-७-१२-१) इत्युपक्रमात् "एवमहरहर्जुहुयादि"(बौधा० धर्म० २-७-१३-३)त्युपसंहाराच्च धर्माणां प्राणा[1]हुतिविशेषत्वावगतिः ।

एवं च—

**"स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सती"ति**[2]

तेषां वैकल्पिकत्वेऽपि फलातिशयार्थिनस्तत्र प्रवृत्तिः ।

स चैवम्—

प्राङ्[3]मुखत्वेनोपवेशनम् । उद्धृतस्यान्नस्य भूर्भुवस्वरोमित्यु[4]पस्थानम् । वाग्यमः । पात्रेऽन्नस्थापनम् । महाव्याहृतिभिः प्रादक्षिण्येन जलसेचनम् । सव्येन पाणिना पात्रं धृत्वा अमृतोपस्तरणमसीति जलपानम् । अथान्नेन प्राणाहुतयः ।

तत्र [5]मन्त्रः (बौधा० धर्म० २-७-१२-३)— "प्राणे निविष्टोमृतं Aजुहोमि ब्रह्मणि [6]प्रदाय प्राणाय स्वाहा'। अत्र प्राणपदस्थाने अपानव्यानोदानसमान-पदप्रक्षेपेण चत्वारो मन्त्राः । एवं पञ्चाहुतीर्हुत्वा तूष्णीं भोजनम् । अनति-तृप्तस्यामृतापिधानमसीति [7]जलपानम् ।

---

**ख पाठः—**

(1) ०हुतिशेषत्वा० (2) "विशेषाणां" इत्यधिकम् (3) ०मुखोदङ्मुखत्वेनो० (4) ०पस्थापनम् (5) मन्त्राः (6) पदाय (7) जलचलुकपानम् यथोक्त-माचमनम्

**मुद्रित पाठः—**

A– जुहोमि शिवो माऽऽविशाऽप्रदा०

"[1]प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनाऽन्नेना-ऽऽप्यायस्वे"ति (बौधा० धर्म० २-७-१२-१०)

पुनराचमनम् ।

"अङ्गुष्ठमात्रः पुरुष" (बौधा० धर्म० २-७-१२-११)

इति पाणिद्वयावनेजनस्य दक्षिणाङ्गुष्ठे दानम् । हुतानां प्राणाहुत्यन्नाना[2]-मामन्त्रणं वक्ष्यमाणमन्त्रैरूर्ध्वहस्तस्य—

"श्रद्धायां प्राणे निविश्याऽमृतं हुतं शिवो मा विश प्राणमन्नेनाप्यायस्व" (बौधा० धर्म० २-७-१२-१२)

अत्र प्राणपदस्थाने अपानादिपदप्रक्षेपेण चतुर्मन्त्रा इति पञ्च मन्त्राः ।

"ब्रह्मणि म आत्माऽमृतत्वायेति"

(बौधा० धर्म० २-७-१२-१३)

जीवब्रह्मणोरैक्यचिन्तनम् । अग्न्युपस्पर्शनम् ।

[3]अत्र[A]—

"यथा हि तूलकमग्नौ प्रोतं प्रलीयते ।

[4]तस्मात् सर्वाणि पापानि दह्यन्ते [5]ह्यात्मवेदिनः ॥"

इति कीर्त्तनात् सर्वपापक्षयरूप[6]गुणफलसंबन्धः प्राणाहुत्यङ्गानां संयोग-पृथक्त्वेनोच्यते । स चात्मयाजिन एव[7] शालीनयायावरयोः ।

---

ख पाठः—

(1) प्राणिनां (2) ०मनुम० (3) "अत्र" इति नास्ति (4) तद्वत् (5) आत्मवेदिनः (6) गुणसम्बन्धः (7) एव न

मुद्रित पाठः—

A- यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीप्यते ।

तद्वत् सर्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः ॥ (बौधा.धर्म.२-७-१३-१)

## अथ वैश्वानरविद्योपासकस्य ब्रह्मविदो ह्यतीतोक्तभोजनविधिः

"[A]एवं यो ब्राह्मणो भुङ्क्ते स पुण्यतमो भवति ।
पङ्क्तिपावनो भवति । उभयतः पक्षाणि तर्पयति ।
देवांश्च तर्पयति । पितॄंश्च तर्पयति ।
[1]मनुष्यांश्च तर्पयति । [B]अभोज्यं पुनाति ।
ब्रह्मणः सायुज्यं गच्छतीत्येवं ह्याहेति ।"

प्राङ्मुखस्योपवेशनम् । अहतवाससः शुक्लवाससो वा परिधानम् ।

"[C]चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः ।
[2]आधीतं बर्हिः । [D]तेजोऽग्निः । वाक्पतिर्होता ।
मन [E]उद्गाता । प्राणो हविः ।
[3]सामाध्वर्युः । वाचस्पते विधे[4]ना[F]मन् ।
विधेस्त्वस्मा[G]कं नाम । वाचस्पतिः सोमं पिबतु ।
[H5]इन्द्रं गच्छ स्वाहेति[6] दशहोतृमन्त्रः ।

---

**ख पाठः—**

(1) "मनुष्यांश्च तर्पयति" इति नास्ति । (2) अधीतं (3) सामान्यध्वर्युः
(4) ०मानुविधत्स्वा (5) चेन्द्रं (6) "इति" इत्यधिकम्

**मुद्रित पाठः—**

A- कृत्यकल्प-नियत-२३० B- अभोज्यस्यान्नं पु०-कृत्यकल्प.-नियत-२३०
C- मैत्रायणीसंहिता (१-९-१) इति कृत्यकल्प-नियत-२३१
[D- केतोऽग्निः । विज्ञातमग्निः E- उपवक्ता F- नामन् G- स्त्वस्माकं
H- अस्मासु नृम्णन् धा स्वाहा] बौधायनध. टिपण्यां (३-७-३-१५)

आह्रियमाणस्यान्नस्य तेजोऽ[1]सीत्यृचाभिमन्त्रणम् । पात्रे दीयमानान्नस्य "द्यौस्त्वा ददात्वि"त्यनुमन्त्रणम् । "पृथिवी त्वा प्रतिगृह्णात्वि"ति प्रतिग्रहः ।

"अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥
(ऋग् ३-२६-७)

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्योऽमृतस्य [A]नाम ।
यो मा [2]ददाति[B]इह देवमावाः अहमन्नमन्नमदन्तमद्मीति ॥"
(मैत्रायणसं० १-६-१)

गृहीतस्या[3][न्नस्यानुमन्त्रणम् ।

"[C]अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
[D]त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णोः परमं पदम् ॥
आपो ज्योतिरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ।"

अमृतोपस्तरणमसीति जलचलुकपानम् ] प्राणाय स्वाहेत्यादिभिः पञ्चभिः पञ्चाहुतिहोमः । आयुष्कामस्यायुषे स्वाहेत्यनेनैव मन्त्रेणानामिकाङ्गुष्ठाभ्यां दशाहुतिहोमोऽधिकः ।

---

**ख पाठः—**

(1) ०सीत्यभिम०  (2) ददाति स इह देन०

(3) बन्धन[  ]स्थपाठो नास्ति

**मुद्रित पाठः—**

A- नाभिः - कृत्यकल्प. नियत. २२८ B- .ति स इ देव-कृत्यकल्प. नियत. २२८
C- कृत्यकल्प० नियत० २२९

D- त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः"
कात्यायनपरिशिष्टे = भोजनसूत्र-१ (पृ ८१०)

## भोजनम्

अनतितृप्तस्य पूर्वव"दन्तश्च[A]रसी"त्यादि "भूभु[c]त्रस्वरो"मित्य[1]न्ते-ऽमृताभिघारणमसीत्यपां पानम् । यथोक्तमाचमनम् । "इदममृतयोनौ सज्योतिषि परमात्मनि जुहोमि स्वाहेति जलचलुकपानम् । [2]प्राणा[B] चात्मा तेन प्राणान् आप्यायस्वेति हृद[3]यस्पर्शनम् । प्राणानां ग्रन्थिरसीति [4]नास्यरन्ध्रयोरालम्भः । विष्णोर्जठरमसीति नाभ्यालम्भः ।

"[C]यो देवानामसि श्रेष्ठ [5]उग्रस्तं पितरो वृथाऽमृत-
मस्मभ्यं [6]रुद्रैतदस्तु हुतं ततः स्वाहे"ति

पुनः हृदयस्पर्शनम् । गाय[7]त्र्या त्रिजपः ।

"[D]आपो रसानां बहूनां रसभुक् समन्तान्न
[8]पापकर्मेति प्रीयतां विश्वभूमी"ति

जगत्कारणब्रह्मध्यानम् । पुनराचमनमिति । अत्राप्येवं यो ब्राह्मणो भुङ्क्ते एवंशब्दवाच्यस्येतिकर्त्तव्यताकलापस्य फलसाधनत्वं बोध्यम् ।

---

**ख पाठः—**

(1) ०न्तेनामृ० (2) प्राणाद्यात्मा तेऽन्नं तेन
(3) ०यस्य स्प० (4) नासारन्ध्र० (5) उग्रस्त्व०
(6) रुद्रैस्तदस्तु (7) ०त्र्याश्चि० (8) पानक०

**मुद्रित पाठः—**

A कृत्यकल्प-नियत-२३०

B- प्राणानाप्यायस्वेति - कृत्यकल्प० नियत० २३०, प्राणा आत्मानं-वीरमित्रोदय (आ०प्र०), प्राणाद्यात्मानम्-गृह० रत्ना०

C- 'यो देवानामसि श्रेष्ठ उग्र तंतिचरो वृषामृतत्वमस्मभ्यं रुद्रैतदस्तु हुतं तव स्वाहा ।" कृत्यकल्प० नियत० २३०

D- त्रिरपो वसाना बहूनां रसभुक् समस्तान्न पाककर्मेष्टिः प्रीयतां विश्वभुगिति । कृत्यकल्प-नियत-२३०

अत्र प्राणाग्निहोत्रोपासकस्य भोजनप्रकारः [1]स च स्वतन्त्रफलसाधनत्वादन्येषामपीत्येके । तथा च मन्त्रमुक्तावल्याम्—

**"प्रसङ्गाद् भोजनकाले प्राणाग्निहोत्रप्रकार उच्यते"**

इत्युक्तम् । तस्य [2]च फलं प्रपञ्चसारे—

**"सायं प्रातरनेन होमविधिना भोज्यानि नित्यं [3]जपन् ।**
**[4]प्राणान्न प्रमदोदरं प्रविशति प्राणाग्निहोत्री पुनः ॥"**

इति ।

वस्तुतस्तु—

**"संचिन्त्य क्षरितामृताक्षरशतार्धाम्भोवसिक्तं हवि-**
**स्तैर्जप्त्वा कुटिलान्तराधिरधिकं संदीप्तपञ्चानलः ।"**

इति पूर्वार्द्धात् वर्णहोमस्य प्रातः क्रियमाणस्य भोजनकालीनपञ्चाहुत्या[5]त्मकहोमस्य समुच्चयेन फलसम्बन्धावगमात् प्राणाग्निहोत्रोपासकस्यैवायं भोजनविधिः[6] ।

स चैवम्—

"गूदादूर्ध्वं मूलाधारे पूर्वनैरृतवायव्यगतकोणत्रिकोणमण्डलचिन्तनम् । तन्मध्ये शक्तिबीजस्य [7]हकारचिन्तनम् । तत्पार्श्वयु इकाररेफचिन्तनम् । तस्य त्रिकोणस्य मध्ये आवसथ्यकुण्डं पूर्वे सभ्यकुण्डम् । पश्चिमे आहवनीयकुण्डम् । उत्तरेऽन्वाहार्यपचनकुण्डम् । दक्षिणे गार्हपत्यकुण्डम् । तत्र प्राण एव गार्हपत्यो दक्षिणे । अपानोऽन्वाहार्यपचन उत्तरे । व्यानः आहवनीयः पश्चिमे । उदानः पूर्वे सभ्यः । समानत्रिको[8]णमध्ये [9]आवसथ्यः । तेषु कुण्डेषु क्षेत्रज्ञसंज्ञकज्योतिर्ध्यानम् । मूलाधारशक्तिगतबि[10]न्दुचिन्तनम् । ततः चिद्रूप[11]प्रभासुषुम्नामार्गेण गत्वा द्वादशान्तपदस्थेऽग्निषोमसूर्यतया

---

**ख पाठः—**

(1) सर्वस्वतन्त्र॰ (2) "च" इति नास्ति (3) भजन् (4) प्राणानप्रमत्तोदरं (5) ॰त्मकस्य होमसमुच्चयेन (6) विधिरिति (7) हकारस्य चि॰ (8)॰कोणः (9) आवसथ्ये (10) ॰विद्याचिन्तनम् (11) "प्रभा" इति नास्ति

ध्याते परब्रह्मणि संलग्ने [1]चिन्तनम् । तत्सम्पर्कात् क्षकारान्तपञ्चाशद्वर्ण-रूपामृतधा[2]रागलितेति ध्यानम् । ततोऽमृतोपस्तरणमसीति जलपानम् । ततोऽनामिकाङ्गुष्ठाभ्यामन्नमादाय तदन्नं वर्णमाला[3]रूपामृताम्भोवसिक्तं सान्नाय्यं हविरिति ध्यात्वा, वक्ष्यमाणमन्त्रेण तदन्नहिरण्य[4]रूपो दक्षिण-कुण्डे होमः ।

गार्हपत्ये प्राणे—

**"हिरण्यवर्णाः शुचयः पावका अग्निं विहत्या-**

**त्मानमुपचर्योर्ध्वं [5]गच्छन्तु स्वाहा ।"**

पुनरनामिकाङ्गुष्ठाभ्यामन्नग्रहणम् । [6]तथैव तदन्नस्य मूलाधारगतविद्युत्प्रभा-सं[7]सृष्टकल्पार्कगलितवर्णमयामृतजलसिक्तसान्नाय्यहविष्ट्वेन [8]ध्यानम् "उत्तरकुण्डेऽस्य होमः । अन्वाहार्य अपाने

**"गगनवर्णाः शुचयः पावका अग्निं**

**विहत्यात्मानमुपचर्याधो गच्छतु स्वाहा ।"**

पुनस्तथैवान्नमादाय मूलाधारगतमिन्दुप्रभासंस्पृष्टकल्पार्कगलितवर्णामृतजल-सिक्तसान्नाय्यहविष्ट्वेन ध्यानम् । वक्ष्यमाणमन्त्रेण पश्चिमकुण्डे होमः ।

आहवनीये व्याने

**"रक्तवर्णाः शुचयः पावकाः अग्निं**

**विहत्यात्मानं मुपचर्यतिर्यक् गच्छतु स्वाहा ।"**

पुनस्तथैवान्नमादाय तथैव ध्यात्वा पूर्वकुण्डे होमः । मन्त्रः ।

उदाने सव्ये

**"कृष्णवर्णाः शुचयः पावकाः अग्निं विहत्यात्मानमुपचर्य**

**ऊर्ध्वाधस्तिर्यक् गच्छतु स्वाहा ।"**

---

**ख पाठः—**

(1) विचिन्तनम् (2) धारोपलिङ्गिते (3) ०रूपाम्भोव० (4) ०रूपो होमो दक्षिणकुण्डे (5) गच्छतु (6) तथैतदन्नस्य (7) ०संस्पृष्ट० (8) चिन्तनम् (9) मुच्चार्य

पुनस्तथैवान्नमादाय तथैव ध्यात्वा [1]मध्यमकुण्डे होमः । मन्त्रः ।

आवसथ्ये समाने

**"शुभ्रवर्णाः शुचयः पावकाः अग्निं विहृत्यात्मानमुपचर्य ऊर्ध्वाधस्तिर्यक् [2]संगच्छतु स्वाहा ।"**

पूर्वावदानेभ्योऽधिकपरिमाणहविर्ग्रहणम् । तथैव चिन्तनम् । पञ्चाग्निहुतपावकसंपर्कदीप्तशिखाभिः कल्पार्कज्योतिःस्पृशः पञ्चाग्नीन् गार्हपत्यान्वाहार्यपचनाहवनीयसभ्यावसथेषु प्राणापानव्यानोदानसमानेषु

**"हिरण्यगगनरक्तकृष्णशुभ्रवर्णाः शुचयः पावकाः**
**अग्निं विहृत्यात्मान[3]मुपचर्य ।**
**अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधम्"**
**"पञ्चाप्येवं विधानेन ऊर्ध्वाधस्तिर्यक्**
**समं [4]गच्छन्तु स्वाहे"ति**

[5]सर्वानेकीकृत्य [6]कुण्डे पुनर्होमः ।

ततः शेषान्नस्य तूष्णीं भोजनम् । अमृतापिधानमसि स्वाहेति जलपानम् । गण्डूषादि कृत्वाऽऽचम्य मूलाधारमारभ्यामस्तकं क्षेत्रज्ञसंज्ञकं ज्योतिःसमस्तजगद्व्यापकं परमात्मानं स्वाभेदेन चिन्तयेत् ।

ततो ब्रह्मध्यानकाले आधारलिङ्गनाभिहृदयकण्ठभ्रूमध्यद्वादशान्ते[7]षु च स्मरणम् । [9]हारीतोक्तविधिसमुच्चयेनानुष्ठानमिति प्रपञ्चसारविवरणकारः । हारीतोक्तविधेस्तु वैश्वानरविद्योपासकपर[10]त्वादिहाप्रसङ्ग इति युक्तम् ।

इत्यागमोक्तप्राणाग्निहोत्रविधिः ।

—×—

---

**ख पाठः—**

(1) मध्यकुण्डे (2) समं गच्छतु (3) ०दीप्त० (4) ०मुपावचर्य (5) गच्छतु (6) सर्वाग्नीनेकीकृत्य (7) कुण्डेषु (8) तु चक्रस्मरणम् (9) "अत्र" इत्यधिकम् (10) ०त्वादतिप्र०

## अथ भोज्याभोज्यानि

नैवेद्यभक्षणविचारः ।

ब्रह्मपुराणे – देवाद्यङ्गधृताधिकारे—

"ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं न प्रदीयते ।
रुद्राङ्गलग्नमग्नौ च दहेत् सर्वं च तत्क्षणात् ॥
शिष्टेभ्यस्त्वथ देवेभ्यो [1]यत्तद्दीनेषु निक्षिपेत् ।

शिष्टेभ्यो ब्रह्मविष्णुशिवव्यतिरिक्तेभ्यो यद्धृतमङ्गलग्नमित्यर्थः ।

[2]तत्रैव नैवेद्याधिकारे—

"विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितम् ।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ॥
सौरं मखेभ्यः शाक्येभ्यस्तापिने यन्निवेदितम् ।
शिष्टेभ्यस्त्वथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत् ॥"

सात्वतो-विष्णुस्तस्येमे सात्वता वैष्णवाः[3]।

यत्तु सात्वतपदेन [4]निरूढ्या—

"वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च ।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥" (१०-२३)

इति मनूक्तउपनयन[5]संस्काररहितवैश्यजन्मनः [6]सात्वतानां च संस्कार-

---

ख पाठः—

(1) यत्तद्दीनेषु (2) तेनैव

(3) भस्माङ्गाः पाशुपताः ।
विप्रस्य तु सदैवाहं शुचेरप्यशुचेरपि ।
गृह्णाम्यहं बलं देवि नात्र कार्या विचारणा ॥ इत्यधिकम् ।

(4) निरूढ भा (5) ०नादिसंस्कार० (6) सात्वतनामकसंकर०

जातिर्गृह्यते तदा च शब्देन वैयधिकरण्येन विप्रेभ्य [1]इत्यनुषङ्गे ब्राह्मण-सात्वतयोर्भक्ष्यत्वम् ।

तथा च ब्रह्मपुराणे कार्त्तिकशुक्लैकादश्यां प्रबोधोत्सवे विष्णुपूजानन्तरं संविभागः श्रूयते—

**"[A]ब्राह्मणाः पूजनीयाश्च विष्णोराद्याश्च मूर्त्तयः ।**
**संविभाज्याश्च दायादा व्रात्याः सात्वतजातयः ॥"**

इति । ब्राह्मणाः विष्णोराद्य[2]मूर्त्तिरूपाः । सात्वता विष्णोर्दायादरूपाः । उभये पूज्या उक्ताः । यद्वा ब्राह्मणसात्वतयोः [3]रीज्यत्वं [4]नान्येषां क्षत्रियादिवैष्णवानामिति पक्षे सकलदेशीयाविगीतशिष्टाचारविरोधः स्यात्।

**तत्त्वसारसंहितायां च—**

**"शेषवस्तुषु यन्मुख्यं विष्वक्सेनाय तद् भवेत् ।**
**शेषो योऽन्यस्तु राजेन्द्र वैष्णवेभ्यो विधीयते ॥"**

इति वैष्णवमात्रे प्रति[5]पत्तिविधानाद् विरोधः स्यात् ।

**यद्यप्यौशनसे—**

**"आचार्यसात्वतयोर्देवपूजनम्"** इति

देवपूजा सात्वतजातेर्वृत्तिरुक्ता, तथापि देवतान्तरपूजाद्वारा तथात्वम् । विष्णुपूजायाम् "विष्णुर्भागवतैः सदा" इति भागवतानां देवीपुराणे नियुक्तत्वात् ।

अतएव यस्य यत्पूजायां विनियोगस्तन्नैवेद्यस्य तत्र प्रतिपत्तिर्दृश्यते । पाशुपतसिद्धान्तकेषु शिवस्य, मखेषु सूर्यस्य, शाक्येषु बुद्धस्येत्यादि । तेन

---

**ख पाठः—**

(1) इत्यनुषङ्गेन (2) "मूर्त्ति" इति नास्ति (3) ०र्जप्यत्वं (4) क्षत्रियादयो भक्ष्यं नान्येषां (5) ०पत्तिविधिविरोधः

**मुद्रित पाठः—**

A- ब्रह्मपु० इति कृत्यकल्प० नियत० ४२८

भागवतानामेव विष्णुपूजायां विनियोगः । भागवता एव सात्वतपदेनाभिधीयन्ते "विषये प्रायदर्शनात्" इति न्यायात् । यथावत् समालभेतेति । संस्कार[1]प्राये दर्शनादन्यत्र [2]पशुमालभेतेत्यादौ यागपरत्वेऽप्यालभतेर्वत्सस्पर्शनमात्रपरत्वमिह । मखाश्चात्र मखशब्देनैव [3]पाश्चात्येषु प्रसिद्धाः सूर्यब्राह्मणाः । तापिने-बुद्धाय ।

अत्र प्रतिपत्तेः संस्कारत्वात्तस्य च भक्ष्यार्थो वा द्रव्ये समत्वादित्यत्राधिकरणे भक्ष्यद्रव्यस्य पुरुषे समर्पणे भक्षणमेव प्रतिपत्तिरिति निर्णीतत्वात् [4]भक्षणपर्यन्तं प्रतिपत्तिविधिः ।

ननु स्मार्त्तपूजासु नैवेद्यस्य [5]दानं देवतायै तत्र दत्तस्य दानासम्भवाद् [6]वस्तूनामभक्षणे न प्रतिपत्तिः । पञ्च[7]रात्रे पूज्यदेवतायै नैवेद्यस्य प्रकल्पनमात्रं न [8]दानमिति प्रतिपत्तिकाले [9]दानस्यापि संभवान्न भक्ष[10]णप्रतिपत्तिः । **मैवम्** । एवमपि विधेरवैरूप्याय पाञ्चरात्रिकपूजानैवेद्येऽपि भक्षणस्यैव प्रतिपत्तिकल्पनात् । स्मार्त्तपूजायामन्नप्र[11]कारासंभवे भक्षणस्य यस्मै प्रतिपत्तिस्तेन भक्षणीयमिति [12]विहितत्वाद् ब्रह्मविष्णुनैवेद्ययोर्ब्राह्मणानां भक्ष्यता । तत्रापि पूजाधिकारिणा यस्मै दत्तं तस्य भक्ष्यम् । अन्येन [13]भक्षणे पूजावैगुण्यं, नाधर्मः । परपूजावैगुण्यकरत्वेनाधर्मस्याल्पत्वेन नैवेद्यभक्षणफलभूमालिप्सया भक्षणे स्यादेव फलम् । यत्त्वभक्ष्यप्रकरणे मनुयमविष्णुस्मृतिषु "देवान्नानि हवींषि च" (मनु ५-७) इति वचनम् । यच्च याज्ञवल्कीयं (१-१७१) "देवतार्थं हवि"रिति वचनम् । आपस्तम्बे (२-९-१९-१५) स्थालीपाकानुद्देश्यानि वर्जयेदिति[14] तत्र देवान्नपदेन

---

**ख पाठः—**

(1) ०प्रायो० (2) पशुवत्समा० (3) पाश्चात्ये प्र० (4) "भक्षणपर्यन्तं प्रतिपत्तिविधिः" इति नास्ति (5) "दानं" इति नास्ति (6) वस्तूनां भक्षणे० (7) ०रात्र पूजा० (8) दानप्रति० (9) दानं तस्यापि (10) भक्षणे प्रति० (11) ०प्रकारसंभवेन भक्ष० (12) विदितत्वाद (13) भक्षणेन वैगुण्यं ।
(14) "पूजा" इत्यधिकम्

देवतार्थपदेन च अनुद्देश्यपदेन च नैवेद्यार्थमुपकल्पितस्य द्रव्यस्य नैवेद्यदानात् प्राक् भक्षणे दोषाभिधानपरमिति सर्वैर्व्याख्यातम् । यथा हविषो होमात् प्राक् ।

अतएव हारीतयमौ—

"बलयश्चोपहाराश्च हवींषि चरवस्तथा ।
निर्विशङ्केन भोक्तव्या व्रतमस्य न लुप्यते ॥"

इति व्रतप्रकरणे भक्षत्वमूचतुः । उपहारशब्दस्य नैवेद्यवचनत्वात् । तथा चरवश्चोपहाराश्चेति जपाङ्गहविष्यप्रकरणे । तेन ब्रह्मविष्णुनैवेद्यस्यान्यदत्तस्य भक्षणे न दोषः । उक्तविशिष्टफलं स्यादेव । स्वपूजादत्तनैवेद्यस्य भक्षणं स्वपूजावैगुण्यापादकत्वादकर्त्तव्यम् । अतएव चालाभे तु विशुद्धान्नमित्यादिना परदत्तनैवेद्यस्यालाभे स्वभोज्ये विष्णूपभोगध्यानं नैवेद्यफलार्थमित्युक्तम् ।

यत्त्वनिवेदितभक्षणमपराधे गणितम्, [2]यच्च—

"न चैतत् स्वयमश्नीयाद् यद् विष्णोर्न निवेदयेत् ।"

इति तदुभयं यज्जातीयं न दत्तं न भोक्तव्यमित्येवं परम् । पूजावैगुण्यदोषस्याल्पत्वेन नैवेद्यभक्षणफलभूयस्त्वात् स्वपूजानैवेद्यभक्षणसमाचारः[3] ॥

केवलं—

"विष्णोर्निवेद्यं संशुद्धं मुनिभिर्भोज्यमुच्यते ।
अन्यदेवनिवेद्यं तु भुक्त्वा चान्द्रायणं चरेत् ॥"

---

ख पाठः—

(1) "च" इति नास्ति (2) परम् (3) "केवलं पाञ्चरात्रिकपूजासु द्रव्यस्य समर्पणं न दानम् । तन्नैवेद्यं स्वयमप्यभक्षणीयं पञ्चरात्रेषु पूजानैवेद्यभक्षणं श्रूयते इति केचित् । वस्तुतः तत्रापि स्वत्वत्यागपर्यन्त एव समर्पणशब्दार्थं इत्युक्तम् । तथात्वाभावेऽपि प्रतिपत्तिस्तत्रापीयमेव युक्तिसाम्यमेव ।" इत्यधिकम् ।

इति ब्रह्मनैवेद्ये ब्राह्मणव्यतिरिक्तैरभक्ष्यत्वम्। एवं सूर्यनैवेद्यस्य मखेषु प्रतिपत्ति-
विधानात्।

"पूजयित्वा ततो देवान् नैवेद्यं प्राश्य वा विभोः।
यान्ति ते परमं स्थानं यत्र देवो दिवाकरः॥"

इति मखाधिकारे भविष्यपुराणवचनाच्च मखानां भक्ष्यत्वम्। मखव्यति-
रिक्तानां ब्राह्मणादीनां सर्वेषामेवाभक्ष्यत्वमिति।

एवम्—

"न भुञ्जीत निवेद्यान्नं गणानां च शिवस्य च।
दुर्गाया वासुदेवस्य [1]नोच्छिष्टस्तु क्वचिद् भवेत्॥"

दुर्गाया इत्यत्रापि न भुञ्जीतेत्यन्वयः। वासुदेवस्य नोच्छिष्टं स्पृशेदि[2]त्यर्थः।
तेनानुच्छिष्टस्य भक्षणम्। [3]उच्छिष्टस्य॰पर्युदासात्तस्य भक्षणे न फलम्। तेन
ब्रह्मविष्णवन्यसर्वदेवानां नैवेद्यमभक्ष्यमिति सिद्धम्।

योगशिवीये—

"शिवार्चाकृतनैवेद्यं भक्षणं लङ्घनं [4]स्रजाम्।
दानं चादीक्षितस्यापि निषिद्धं त्र्यम्बकाज्ञया॥
[5]पत्रं पुष्पं फलं तोय[6]मन्नपानं महौषधम्।
अनिवेद्य न भोक्तव्यं यदा वाऽनुपकल्पितम्॥"

इति। यज्जातीयं न निवेदितं तन्न भोक्तव्यमित्येवं परम्। शिवभक्तस्य
स्वभोज्ये शिवभुक्तत्वचिन्तापरं वा।

अभक्ष्याणि अष्टधाभिन्नानि। जातिदुष्टम्। क्रियादुष्टम्। कालदुष्टम्
आश्रयदुष्टम्। संस्पर्शदुष्टम्। रसदुष्टम्। भावदुष्टम्। स्वभावदुष्टञ्चेति।

---

ख पाठः—

(1) नोच्छिष्टं तु क्वचिल्लभेत् (2) ०त्यन्वयः (3) उच्छिष्टपर्युदासात् (4) तथा
(5) "यत्र शिवविषये" इत्यधिकम् (6) ०मन्नं पानं सहौषधम्।

भविष्यपुराणे-

"जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
[1]सं[A]स्पर्शरसदुष्टं च सहृल्लेखं स्वभावतः ॥"

## जातिदुष्टम्

तत्र प्रथमं जातिदुष्टं निरूप्यते ।

मनुः- (५-५.६)-

"लशुनं गृञ्जनञ्चैव पलाण्डुं [B]कवकं तथा ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥
लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ।
शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत् ॥"

गृञ्जनपलाण्डू लशुन[2]प्रभेदावित्येके ।"गृञ्जने गजरस्तथे"ति निरुक्तपाठात् पश्चिमप्रसिद्धः पलाण्डुविशेषो ग्राह्य इत्येके । न तु शक्राशनं, तत्र पर्याया-भावात् । तत्तु मादकत्वादभक्ष्यम् । कवकं-चैत्यवृक्षस्थितं पिण्डोपमं कुमुद-कलिकाकृति छत्राकसदृशं शुक्लं शिथिलावयवम् । अमेध्यप्रभवाणि-विष्ठाजा-तानि तण्डुलीयकादीनि । भक्षितानि बीजानि गुदमार्गान्निःसृतानि विष्ठामध्यगतानि वा यानि वृक्षं जनयन्ति । ये तु विष्ठा[3]क्रान्तभूमिजाता आम्रवृक्षादयः तेषां फलपुष्पे ग्राह्ये ।

---

ख पाठः—

(1) संसर्गरस० (2) "प्र" इति नास्ति (3) व्याप्तभूमि० ।

मुद्रितपाठः—

A- संसर्गाश्रयदुष्टं- कृत्यकल्प ०नियत० - २७६

B- कवकानि च

"अमेध्येषु च ये [A]जाता वृक्षाः पुष्पफलोपगाः ।
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥"

इति बौधायनस्मृतेः ।

लतावृक्षादीनाम् अमेध्यजातानां फलपुष्पयोरभक्षणम् । पुष्पफलोपगा इति विशेषणाद् बहुपुष्पफला आम्रादयो ग्राह्याः, न तु क्षुद्रवार्त्ताक्यादय इति [B]मेधातिथिः । निर्यासा वृक्षनिर्गतकठिनरसाः । ते चेल्लोहितवर्णास्तदा न भक्ष्याः । यथा नारिकेलवृक्षादिषु ॥ तेन हिङ्गुकर्पूरादिषु न दोषः । व्रश्चन-प्रभवास्तु निर्यासा लोहिता अलोहिताश्चाभक्ष्याः ।

पुन[1]र्निर्देशात् तैत्तिरीयश्रुतेश्च– (२-५-१-४)

"[2]अथो[C] खलु यो लोहितो यश्च

---

ख पाठः–

(1) न निवेशात् (2) अथोशे खलु यों लोहितो क्षेपा व्रश्चनान्निर्यस्यति

मुद्रित पाठः–

A- वृक्षा उप्ताः– कृत्यकल्प० नियत० २७८

B– अमेध्यप्रभवाण्यमेध्यजातानि च संसर्गजातानि । अन्ये त्वाहुर्मूलवास्तु-कवत् केवलामेध्यप्रभवाणां युक्तः प्रतिषेधः । ततश्च यान्यधिकपुष्ट्यर्थं धान्यशाकादीन्यमेध्यक्षेत्रजातानि संसृज्यन्ते तानि न दुष्यन्तीति । तदयुक्तम् । अस्ति हि तत्र पुनः श्रुतेन वृत्तौ सर्वस्याप्यभक्ष्यत्वादिहापि च । यद्यमेध्यसंसर्गमन्तरेण न किञ्चिद् वस्तूत्पद्यते ततः स्यादपि । यतस्तु किञ्चिन्मेध्याज्जायते किञ्चित्संसृष्टात् ततोऽयं प्रतिषेधः । केवलेऽमेध्यप्रभवे न संसृष्टेऽवतिष्ठते । मांसस्य सत्यपि शुक्रशोणितामेध्यप्रभवत्वे नायं प्रतिषेधः । पृथक् प्रकरणारम्भात्तस्य ॥ मेधातिथिः (मनु० ५-५)

C- "अथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्य काममन्यस्य" कृत्यकल्प० नियत० २७८ । तैत्तिरीयपाठश्च (आनन्दाश्रमः, पुने)

नानिर्यसति तस्य नाशं काममन्यस्ये''ति ।

शेलुः- श्लेष्मातकः [1]बहु आलु इति प्रसिद्धः । पेयूषं- नवप्रसूतायाः क्षीरं दशाहादूर्ध्वमपि मासपर्यन्तं ''मासेन पेयूषं भवती''ति हारीतोक्तेः ।

[2]यदि अग्निसंयोगात् कठिनं भवति [3]तच्चेद् गव्यं तदाऽभक्ष्यम् । अत्र [4]प्रायश्चित्तमकामतः सकृद् भक्षणे सान्तपनं मनूक्तम् । अभ्यासे यतिचान्द्रायणम् । सुरापानव्रतमिति योगीन्द्रोक्तम् ।

आपस्तम्बः (स्मृतिः ६-९)

''भक्षयेद् [A]यदि नीलीं तु प्रमादाद् ब्राह्मणः सकृत् ।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ।।''

षट्त्रिंशन्मते–

''षणपुष्पं शाल्मलीं च करनिर्मथितं दधि ।
बहिर्वेदि पुरोडाशं जग्ध्वा नाद्यादहर्निशम् ।।''

[B]यमः–

''भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये ।
ब्रह्मघ्नांस्तान् विजानीयाद् ब्रह्मवादिषु गर्हितान् ।।''

''छत्राकं छत्रसदृशं दैत्यदेहसमुद्भवम् ।''

इति [C]ब्रह्मपुराणे । एतद् भक्षणे लशुनोक्तं प्रायश्चित्तम् ।

---

ख पाठः—

(1) महु आलु (2) यदग्नि० (3) तच्च गव्यं (4) प्रायश्चित्तं कामतः

मुद्रित पाठः—

A- यस्तु - आपस्तम्बस्मृतिः ६-९
B- कृत्यकल्प० नियत० २७९
C- कृत्यकल्प० नियत० २७७

देव[A]लः-

"खुरखुण्डं श्वेतवार्त्ताकं कुम्भाण्डं च न भक्षयेत् ।"

खुरखुण्डं

"मधुकैटभवृत्राणां यन्मेदः पतितं भुवि ।
पिण्डोपमं तु खुरखुण्डम् ... ... ... ॥"

इति [B]ब्रह्मपुराणोक्तं भूगतं छत्राकसमानावयवम् । अत्र श्वेतवार्त्ताकुग्रहणात् ।

भविष्य[C]पुराणे-

"वार्त्ताकुनालिकालाबुमुपेयाज्ञातिदूषितम् ।"

यमस्मृतौ "[1]वार्त्ताकुकुम्भाण्डे"त्यादौ सर्वत्र वार्त्ताकुपदेन श्वेतवार्त्ताकुरेवोच्यते । "पुरोडाशं चतुर्धा करोती"त्यस्य "आग्नेयं चतुर्धा करोति" इत्यनेनोपसंहारवत् । यत्तु "न च पर्वते" (मनुः ४-४६) इति निषिध्य पुनः "न च पर्वतमस्तके" इति (मनुः ४-४७) निषेधो दोषातिशयार्थ इत्युक्तं तदेकस्मृतिगतत्वेन वाक्यानर्थक्यभयात् । इह तु स्मृतिद्वयगतत्वेनानर्थ्याभावाददृष्टकल्पनापेक्षया लघुत्वेन वार्त्ताकिपदेन श्वेतवार्त्ताकुलक्षणा[2] ।

---

ख पाठः—

(1) वार्त्ताकुकुम्भीत्यादि सर्वत्र (2) ०णात्

मुद्रित पाठः—

A- कुचुन्दं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत्" - कृत्यकल्प० नियत० २७९

B- मधुकैटभवृत्राणां त्रिशीर्षस्यासुरस्य च ।
विष्णुना हन्यमानानां यन्मेदः पतितं भुवि ॥
पिण्डोपम तु खुङ्खण्डं कवकं चैत्यसंनिभम् ॥ कृत्यकल्प० नियत० २७७

C- वार्त्ताकुं नालिकालाबू उपेयाज्ञातिदूषितम् कृत्यकल्प० नियत० २७२

यत्तु-

"यत्र वार्त्ताकुशब्दोऽस्ति तत्त्याज्यं हरिमिच्छते"ति ।

[1](तेन हरिप्रीतिकामस्य तद् वर्जनं काम्यम् )। अत्र हि "वार्त्ताकुं न भक्षयेत्" इति नास्ति शब्दः येन पर्युदासे लक्षणाभयेन व्रतरूपता नाश्रयेत् । किन्तु त्यागो विधेयः श्रूयते । तस्य फलापेक्षायां श्रुता हरिप्रीतिः फलं कल्प्यते । अन्यथा फलान्तरकल्पने गौरवं स्यात् । [2]तेन हरिप्रीतिकाम[3]स्य तु वर्जनं काम्यम् । न तु वैष्णवं प्रत्यभक्ष्यत्वं मानाभावात् । कुम्भाण्डो-दाडिमसदृशः फलविशेषः । नालिका=कलम्बिका । एषां भक्षणे यथोक्तमिति कृच्छ्रम् ।

आपस्तम्बः (१-५-१७-२५)

"तथा कीलालोषधीनां च"

कीलालं-सुरा । तदर्थं तापिता भक्ष्या अप्योषधयोऽभक्ष्याः । तत्रापि प्राजापत्यम् ।

गौतमः (१-६-५८)

"उद्धृतस्नेहविल[A]यपिण्याकमथितप्रभृतीनि
चात्तवीर्याणि नाश्नीयात् ॥"

पिण्याकमथितप्रभृतीनि । विलयो-घृतमलम् । अत्र ब्रह्मपुराणोक्तं पक्षव्रतं तत्रैव किसलयस्य नवपल्लवापरनाम्नोऽभक्ष्यत्वमुक्तम् ।

उशनाः—

"कुसुम्भं नालिकाशाकं [B]वार्त्ताकुं पौतिकं तथा ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः ॥"

---

ख पाठः—

(1) (... ...) नास्ति (2) "तेन" इति नास्ति (3) ०स्य तद् वर्जनं

मुद्रित पाठः—

A- विलयन B- वृन्ताकं - कृत्यकल्प० नियत० २८०

पौतिकं - पोई इति प्रसिद्धम्। वार्त्ताकुः - श्वेतवार्त्ताकुरुक्तैव। Aपैठीनसिना अश्मन्तकनाम्नो वृक्षस्याभक्ष्यत्वमुक्तम्। एतेषु प्राजापत्यम्। यमेन भूतृण-वाच्यतृणस्य भक्षणे प्राजापत्यमुक्तम्।

**शङ्खलिखितौ**—

"करञ्जकुम्भीभक्षणे द्वादशरात्रं पयः पिबेत्।"

कुम्भी - बिल्वसदृशफलमरण्यप्रसिद्धम्।

तथा—

"घनछत्राकवृन्ताकभक्षणे पञ्चगव्यम्।"

घनछत्राकं - मेघसमयोत्पन्नकवकः। वृन्ताको - वार्त्ताकुसदृशः फलविशेषः हरितः, पाके रक्त. इति लक्ष्मीधरः।

**ब्रह्मपुराणे**—

"पिप्पलानि करञ्जानि कुम्भीराणि वटानि च।
मातुलङ्गानि प्लक्षाणि पनसोदुम्बराणि च॥
शिग्रुशोभाञ्जनं चैव कोविदाराणि चैव हि।
अथ तिक्तकपित्थानि शेलु श्लेष्मातकानि च॥
विभीतकानि च तथा न भक्ष्याणि फलानि च।
अलक्ष्मीस्तेषु वृक्षेषु बद्धा दुर्गसमा यतः॥
वनवासव्रतं कुर्याद्दिनं तत्प्राशनाद्द्विजः।
लताभिर्वेष्टिता ये च गुल्मरोगहताश्च ये।
भूतप्रेतपिशाचैश्च पक्षिभिर्ये च संश्रिताः॥"

---

मुद्रित पाठः—

A- कृत्यकल्प० नियत० २८०

अत्र पनसस्य भक्षणसमाचाराद्विष्णुदेयत्वाच्च पनसनिषेधो भूप्रोतफलकदाक्षिणात्यप्रसिद्धपनसजातिपर इति प्रतिभाति । मातुलङ्गोदुम्बरप्लक्षफलानां विष्णुदेयत्वाद् भक्षत्वेऽपि अलक्ष्मीकरत्वाच्च वर्जनमुचितम् । यथा दधिसक्तुबिल्वफलादीनां भक्ष्याणामपि चात्रालक्ष्मीकरत्वाद्वर्जनम् ।

यदपि विष्णुस्मृतौ (६६-१२)

"नाभक्ष्यं नैवेद्यार्थमि"ति

निषिद्धद्रव्याणां नैवेद्ये पर्युदासकृतो न तु वराहपुराणोक्तनैवेद्यद्रव्याणां शिष्टभक्ष्यता कथिता । तथा सति वाक्यभेदापत्तेः । तथापि

"श्रुतिस्मृतिसमापन्नं देवद्रव्यगुणान्वितम् ।
[A]देवतायै यथाक्लृप्तं प्रोक्षितं शिष्टभोजनम् ॥"

इति शङ्खलिखितौ ।

देवनैवेद्यद्रव्यसदृशलिङ्गात् सोत्कटे विष्णुनैवेद्ये अभक्ष्यतासम्भावनापि नास्ति । एवं च वराहपुराणोक्तानि नैवेद्यद्रव्याणि भक्ष्याण्येव ।

"इङगुदिफलबिल्वानि बदरामलकानि च ।
खर्जूराः पनसाश्चैव तथा प्लक्षफलानि च ॥
पिण्डारकफलं चैव पुन्नागफलमेव च ।
शमी च करवीरं च बीजपूरफलं तथा ॥
कुमुदस्य फलं चैव उत्पलस्य फलं तथा ।
कर्कारुकफलं चैव तथा निम्बफलानि च ॥
अब्जं कर्कोटकं चैव तथा तालफलानि च ।
कालिङ्गकफलं चैव बृहतीफलमेव च ॥
उभे चैव पटोले द्वे कर्मरङ्गफलं तथा ।
मूलकानां फलं चैव कदम्बफलमेव वा ॥

मुद्रित पाठः—

A- देवतायैर्यथाक्लृप्तं - कृत्यकल्प० नियत० २२८

मूलकस्य तथा शाकं कद्रुशाकं तथैव च ।
आर्द्रकस्य च शाकं च पालाशशाकमेव च ॥
बदरस्य च शाकं च मधुकोदुम्बरं तथा ।
यवान्नं विविधं देयं कर्मण्यं साधु माधवि ॥
कर्मण्याः शुद्धमाषा वै तिलाः कृष्णाः कुलित्थकाः ।"

अत्र तालफलस्य विष्णुनैवेद्ये दानात् भक्षणसमाचारात् तत् प्रतिषेधवाक्यानां कल्पतरुकारेणाप्यनुक्तत्वाद् भक्षणे न दोषः इति केचित् ।

कर्मविपाकसमुच्चये—

"लशुनं गृञ्जनं तालफलं चाश्नाति यो द्विजः ।
स वातरोगी भवति कृच्छ्रं चान्द्रायणं चरेत् ॥

इति वचनाद्वर्जनमुचितम् । मूलकं तु भक्ष्यं निषेधवाक्यानामन्यपरसन्मूलत्वात् मूलकशाकस्य विष्णुनैवेद्यदेयत्वात् श्राद्धे दीर्घमूलकदानात् [A]मनु (८-३४१) वचनात्

"द्वे इक्षू द्वे च मूलके"

इति श्रान्तद्विजस्य स्तेयापवादेन भक्ष्यानुज्ञानात्, सर्वदेशीयाविगीतसमाचारात् कथञ्चिन्निषेधवाक्यानां प्राप्तसन्देहे च वर्षाकालिकपिण्डमूलकरक्तमूलकपरत्वोपपत्तेः तद्वर्जनमनादरणीयम् ।

"यो जपेन् माधवं मूढो भक्षयित्वा तु मूलकम् ।
अपराधशतं तेन कृतं भवति वासवे"ति

वाक्यस्य प्रामाण्यसन्देहेऽपि माघे विष्णोर्माधवनामकत्वादपराधशङ्कया वर्जनसमाचारः विष्णुधर्मोत्तरे विष्णुनैवेद्याधिकारे—

---

मुद्रित पाठः—

A– द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ ८-३४१

"पारुषकं तथा सालं पनसं नारिकेलकम् ।
भव्यं मोचं तथा वोचं खर्जूरमथ दाडिमम् ॥"

भव्यं- कर्मरङ्गफलम् , [1]भषाडफलं च । मोचं- कदलीफलं, वोचं-गुडत्वक्-फलम् । एतान्यपि निषेधादर्शनाद् भक्ष्याणि ।

देवलः–

"न बीजान्युपयुञ्जीत रोगापत्तिमृते [A]द्विजः ।
फलान्येषामनन्तानि बीजानां हि विनाशयेत् ॥"

बीजानि - कुष्माण्ड[B]बीजादीनीति लक्ष्मीधरः । तस्यायमाशय - यद्यपि मुद्गादीनि धान्यादीन्यङ्कुरयोग्यान्येव, तथापि तेषां भक्षणानुज्ञानात् यान्येव कुष्माण्डबीजादीनि विशेषतो ऽभक्ष्यत्वेन नोक्तानि तान्यभक्ष्याणि । [2]तान्यपि यद्यङ्कुरजननयोग्यानि तदा न भक्ष्याणि । कोमलतया यदायोग्यानि तदा भक्ष्याण्येव । मूलधान्यादीन्यपि चाङ्कुरजननयोग्यानि तदर्थं पृथक्कृत्य रक्षितानि तानि न भक्ष्याणीत्येके । अभक्ष्यभक्षणप्रकरणे

"यच्चान्यत् परिचक्षते ।"

इत्यापस्तम्ब ( १-५-१७-२७ ) वचनात् विशेषतोऽनिषिद्धमपि शिष्टानां यद्विगीतं तदपि न भक्षणीयम् । तेन शिष्टविगीतं चल्लाणफलमभक्ष्यम् । स्मृतिरत्नमालायां देवलेन कुम्भाण्डनिषेधेन चल्लाणफलं निषिद्धमिति व्याख्यातम् ।

"कुम्भाककेन्दुवृन्ताककोविदारांश्च वर्जयेत् ।"

इति [C]विज्ञानेश्वरवचनात् केन्दुकं निषिद्धम् ।

---

ख पाठः–

(1) उवाड० (2) एतान्यपि

मुद्रित पाठः–

A- बुधः कृत्यकल्प० नियत० २८२

B- बीजानीति-कृत्यकल्प० नियत० २८३

C- कुम्भीकन्दुकवृन्ताक०–मिता० (याज्ञ० १-१७५)

पुनर्ब्रह्मपुराणे—

"राजमाषाः स्थूलमुद्गास्तथाव[A]त्सकवासकौ ।
मसूराः [1]शत[B]पुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥
सस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित् ।"

राजमाषाः - स्थूलमाषाः । राजमाषपदेन पश्चिमप्रसिद्धाः । शतपुष्पाः सौप इति प्रसिद्धाः ।

अत्र वसिष्ठोक्तत्रिरात्रमक्षारलवणरूपब्रह्मसुवर्चलापानं पयसा सह शङ्खपुष्पीपानं प्रायश्चित्तम् ।

[C]विज्ञानेश्वरे—

"तथाऽकालप्ररूढानि पुष्पाणि च फलानि च ।
विकारवच्च यत् किञ्चित् प्रयत्नेन विवर्जयेत् ॥"

ब्रह्मोक्तं त्रिरात्रं च व्रती भवेत् । क्षारलवणमुषरमृत्तिकाप्रभवं लवणम् ।

भविष्यपुराणे—

"अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षलवणं च यत् ।
मृत्तिकाभक्षणं चैव तुल्यं [D]गोमांसभक्षणम् ॥"

प्रचेताः—

"मृल्लोष्टखादने अहोरात्रमभोजनाच्छुद्धिः ।

---

ख पाठः—

(1) शतपुष्प्याश्च

मुद्रित पाठः—

A- ०वृषक०- कृत्यकल्प० नियत० २८३

B- शतपुष्पाश्च - कृत्यकल्प० नियत० २८३

C- मिता० (याज्ञ० १-१७५)

D- गोमांसभक्षणैः - कृत्यकल्प० नियत० २९४

प्रत्यक्षलवणम्-अन्नव्यञ्जनसंस्कारप्रवेशव्यतिरेकेण साक्षादेव केवलं भक्ष्यमाणं लवणम् ।

## अथ दुग्धानि

**मनुः (५-८.९)—**

"अनिर्दशायाः गोः क्षीरमौष्ट्रमैकशफं तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥
आरण्यानां च सर्वेषां मृगाणां माहिषं विना ।
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥"

एकशफा-अश्वादयः । सन्धिनी-ऋतुमती गौर्या वृषमिच्छति । विवत्सा-वत्सरहिता । आरण्यमृगाश्च[1] - पृषतादयः ।

**गौतमः (२.८.२२-२३.२५)—**

"गोश्च क्षीरमनिर्दशायाः । (२२) सूतके अजामहिष्योश्च । (२३) स्यन्दिनी यमसूसन्धिनीनां च ॥"(२५)

स्यन्दिनी - [2]वत्सं विना प्रस्नुता । यमसूः - यमलापत्या ।

क्षीरमपेयमित्यनुवृत्तौ बौधायनः— (१-५-१२-१०)

"विवत्सान्यवत्सयोश्च"

अन्यवत्सा - या अन्यवत्सेन दुह्यते ।

**हारीतः—**

"न [A]मृतवत्सायाः शोकाभिभूतत्वात् ।
न निर्णिक्तायाः असत्त्वात् ।"

निर्णिक्ता - निःशेषदुग्धा । [3]असत्त्वात् - वत्सं प्रत्यवशेषस्यासत्त्वादित्यर्थः ।

---

**ख पाठः—**

(1) रुरुपृषतादयः (2) वत्ससंसर्गं विना (3) "असत्त्वात्" इति नास्ति

**मुद्रित पाठः—**

A- हतवत्सायाः - कृत्यकल्प० नियत० २९६

आपस्तम्बः (१-५-१७-२२)-

"अपेयं तथैडकं पयः।"

विष्णुः[A] (५१-३८,४१)-

"गोजाविमहिषीवर्जं सर्वपयांसि प्राश्योपवसेत्।
अनिर्दशाहम् [1]अन्यदपि। सन्धिनीस्यन्दिनी-
विवत्साक्षीरं चामेध्य[2]भुजो गोरेव।"

यमः-

"क्षीराणि [3]यान्यभक्ष्याणि तद्विकाराशने बुधः।
[4]अहोरात्रं व्रतं कुर्याद् यदेतत् परिकीर्त्तितम्।"

अत्र सप्तरात्रव्रतं कामतोऽभ्यासे। सकृद् भक्षणे तूपवासः।

शातातपः-

"उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनम्।
[5]तप्तकृच्छ्रश्च।"

सुमन्तुः-

"एकशफौष्ट्रस्यन्दिन्यविक्षीरप्राशने यावकं त्रिषवणं च।"

---

ख पाठः—

(1) तान्यपि (2) "०भुजश्च अमेध्यभुजो विष्ठाभुजो" इत्यधिकम्
(3) यान्यमेध्यानि (4) सप्तरात्रव्रतं (5) चातिकृ०

मुद्रित पाठः—

A- गोजामहिषीवर्जं सर्वपयांसि च ॥ ३८ ॥ अनिर्दशाहानि तान्यपि ॥३९॥
स्यन्दिनीसन्धिनीविवत्साक्षीरं च ॥४०॥ अमेध्यभुजश्च ॥
विष्णुस्मृ० ५१-४१

ब्रह्मपुराणे-

"[A]घृतान्मण्डं घृतात्फेनं पेयूषमथवापि गौः ।
सगुडं [1]मरिचाक्तं [B]च तथा पर्युषितं यदि ॥

सगुडं [2]मरिचाक्तं च पयोऽभक्ष्यमित्यर्थः ।

विज्ञानेश्वरीये (मिता० ३-२८९)-

"क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः ।
यः पिबेत् कपिलाक्षीरं न ततोऽन्य[C]स्त्वपुण्यभाक् ॥"

भविष्यपुराणे-

"कपि[D]लायाः पिबेच्छूद्रो नरके स विपच्यते ।
हुतशेषं [E]पिबन् विप्रो विप्रः स्यादन्यथा पशुः ॥"

अत्र हुतशेषातिरिक्त[4]कपिलादुग्धस्य विष्णवे दानम् । [5]वृथाकृसरपायसादीनामपि सोपाध्यभक्ष्यत्वादित्येके । वस्तुतोऽपूपादीनां विष्णवे दाने वृथा दोषाभावादभक्षणनिवृत्तिवदिहाभक्ष[6]णदोषनिवृत्तेः । अन्यथा सोपाधिनिषिद्धरात्रिप्रेष्याहृतादेर्विष्णुदेयत्वापत्तेः ।

---

ख पाठः—

(1) समरिचाक्तं तथा (2) समरिचाक्तपर्युषितं पयो०
(3) ०न्योऽस्त्यपुण्यकृत्" (4) ०क्तस्य (5) वृथाकृसरसंयावपायसापूपादीनामिसोत्पाध्यभक्ष्यत्वादित्येके (6) भक्षता नि०

मुद्रित पाठः—

A- घृतात्फेनं घृतान्मण्डं - कृत्यकल्प० नियत० २९७
B- तु तथा पर्युषितं दधि - कृत्यकल्प० नियत० २९७
C- न्योऽस्त्यपुण्यकृत् - मिता० (३-२८९)
D- कपिलां यः - कृत्यकल्प० नियत० २९७
E- पिबेद् - कृत्यकल्प० नियत० २९७

## अथ मांसानि

भक्ष्याभक्ष्याणि । [A]हारीतः— "ग्राम्या[1]रण्यकानां पशूनामश्नन्ति । अजमेषमहिषहरिणखड्गरुरुपृषत[2]न्यङ्कुमहारण्यवासिनश्च वराहान् ॥"

[3]तथा—

"शशकशल्यकसेधागोधाकूर्मवर्त्तकतित्तिरिमयूरवार्ध्रीणखलावककुक्कुट-सशल्कान्[4] न्यायोपपन्नान् भक्षयेत् ।

रुरुः-बहुशाखश्रृङ्गो मृगः । पृषतो- बिन्दुचितो[5] मृगः । ऋष्यो-रोधा इति प्रसिद्धः । न्यङ्कुः- शम्बरसदृशः श्रृङ्गरहितः । सेधा[6]-सलि[B]लवती ।

पशुमांसभक्षणप्रसङ्गे वसिष्ठः (१४-४७)—

**"खड्गे तु विवदन्तेऽग्राम्यसूकरे च ।"**

खड्गारण्यवराहयोर्विकल्पः । [7]स श्राद्धनियुक्तानियुक्तविषयः[8] ।

---

**ख पाठः—**

(1) ०रण्यानां (2) "पृषतर्क्ष" इत्यधिकपाठः (3) "तथा" इति नास्ति (4) "मत्स्यांश्च" इत्यधिकम् (5) चित्रो (6) सलालवती (7) स च श्राद्ध० (8) "इति शतपथश्रुति.—यः पुरुषमालभते स किम्पुरुषो भवति । य अश्वं गां चालभते स गौरश्च गवयश्च भवेताम् । यमविमालभते स उष्ट्रोऽभवत् स यमजमालभते स शरभोऽभवत् । तस्मादेव तेषां पशूनामनशितत्वमप-क्रान्तमेधसो ह्येषां किंपुरुषगौरगवयउष्ट्रशरभाणां मांसमभक्ष्यमित्युक्तम्" इत्यधिकपाठः ।

**मुद्रित पाठः—**

A- "ग्राम्यारण्यानां पशूनामश्नन्ति यथाजमेषमहिषहरिणखड्गरुरुपृषतर्श्य-न्यङ्कुमहारण्यवासिनश्च वराहान् ।"
तथा— "शशकशल्यकसेधागोधाकूर्मवर्तकतित्तिरिमयूरवार्ध्राणसलावक-क्रकरकपिञ्जलान् । सशल्कांश्च मत्स्यान् न्यायोपपन्नान् भक्षयेत् । कृत्यकल्प० नियत० ३०७ B- शललवती- कृत्यकल्प नियत ३०८

मनुः (५-१८)—

"अनुष्ट्रांश्चैकतोदतः ।"

वसिष्ठः (२३-३०)—

"श्वकुक्कुटग्राम्यसूकरकङ्कगृध्र[A]भासवायसपारावत-मानुषकाको[B]लूकानां मांसादने सप्तरात्रमुपवासो [1]निष्पु[C]रीषभावो घृतप्राशनं पुनःसंस्कारश्च ।"

अङ्गिराः[D]—

"नरकाकखरोष्ट्राणां जग्ध्वा मांसं शुनस्तथा ।
एषां मूत्रपुरीषं वा द्विजश्चान्द्रायणं चरेत् ॥"

विष्णुः-

"गोमांसभक्षणे चान्द्रायणं कृत्वा पुनः संस्कारः ।"

हारीतः-

"अनुक्तानामारण्यानां भक्षणेऽतिकृच्छ्रो ग्राम्याणां चान्द्रायणम् ।"

अनुक्तानामजमेषादिभक्ष्यमध्येऽगणितानाम् । तानेवाह-

"अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः ।"

---

ख पाठः—

(1) निष्पुरीषीभावो

मुद्रितपाठः—

A- ०भासपारा० B- ०लूकमांसादने C- निष्पुरीषीभावो

D- नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च ।
एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ मिता० (याज्ञ० ३-२८९)

देवलः[A]-

"सिंहव्याघ्रर्क्षशरभाः सर्पाजगरजालकाः ।

आखुमूषिकमार्जारनकुलग्रामसूकराः ।

श्वसृगालमृगद्वीपिगोलाङ्गूलनृमर्कटाः ॥"

ऋक्षो – भल्लूकः । शरभोऽष्टपादः । आखुर्महानुन्दुरः । स्वल्पोमूषिकः ।
द्वीपी-चित्रकः । गोलाङ्गूलः - कृष्णमुखवानरः ।

"कृच्छ्रं सान्तपनं मासं वनव्रत" इत्युपक्रम्य—

ब्रह्मपुराणे-

"कृकलासाश्वनकुलबिडालाश्चाथ जम्बुकाः ॥" ।

न भक्षयेदित्यनुवृत्तौ गौत[B]मः (२-८-३१)—

"[1]अपन्नददवसन्नवृथामांसानि ।"

यावत् स्वभावतो दन्ता न पतन्ति तावद् भक्ष्योऽप्यभक्ष्यः । अवसन्नो- रोगी ।
वृथामांसानि - पित्राद्युद्देशं विना ।

वसिष्ठः[C] (१४-४३,४४)-

"गौरगवयशरभाश्चानुद्दिष्टाः ।"

[2]उक्तं शतपथश्रुतावभक्ष्ये चोक्तेः ।

"[3]न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् ॥"(मनुः५-१७)

---

खपाठः-

(1) अपन्ननमवसन्नवृथामांसानि (2) "उक्तं......चोक्तेः" इति नास्ति
(3) "मनुः" इत्यधिकम्

मुद्रित पाठः-

A- कृत्यकल्प० नियत० ३०३

B- अपन्नदन्नवसन्न - गौत० धर्म०, अपन्नददवसन्न-कृत्यकल्प० नियत० ३०४

C- गौरगवयशरभाश्च ॥ ४३ ॥ अनुद्दिष्टास्तथा ॥ ४४ ॥

एकचराः - सर्पादयः ।

चान्द्रायणानुवृत्तौ मनुः (११-१५५)

"अज्ञातं चैव सूनास्थमेतदेव व्रतं चरेत् ।"

अज्ञातप्रकृतिकं प्राणिवधस्थानस्थितम् ।

शातातपः—

"आममांसपूयवृथामांसे प्राजापत्यम् ।"

[A]ब्राह्मे —

"पशोस्तु मार्य्यमाणस्य न मांसं [1]ग्राहयेद् द्विजः ।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथाऽपि वा ॥
[B]भूमावन्तर्गतं कृत्वा मृत्तिकाच्छादितं च यत् ।
पक्वमांसम् [1]ऋजा[C] सक्तं प्रयत्नात्तन्न भक्षयेत् ॥
प्रमादाद् भक्षितैरेतैर्वनवासं वसेदहः ।"

कामतः [2]सप्तरात्रव्रतम् ।

**अथ पक्षिणः**

"तित्तिरं च मयूरं च लावकं च कपिञ्जलम् ।
वार्ध्रीणसं वर्तकं च भक्ष्यानाह यमः सदा ॥"

वार्ध्रीणसः—

"कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
वार्ध्रीणसः स विज्ञेयो दीर्घतुण्डो जलेचरः ॥"

---

ख पाठः—

(1) प्राशयेद् (2) ऋजीषं यत् (3) सप्तरात्रम्

मुद्रित पाठः—

A- कृत्यकल्प० नियत० ३०५

B- भूमेरन्तर्हितं कृत्वा मृद्भिश्चाच्छादितं च यत् - कृत्यकल्प० नियत० ३०५

C- ऋजीषं च प्रय० - कृत्यकल्प० नियत० ३०५

अभक्ष्यप्रकरणे [A]आपस्तम्बः (१-५-१७-३६)-

"क्रौञ्चवार्ध्रीणसलक्ष्मणवर्जम् ।"

एते तु भक्ष्या इत्यर्थः ।

वराहपुराणे विष्णुनैवेद्ये-

"कर्मण्यं शैरवं मांसं मायूरं कौकुटं तथा ।
लावकं वर्त्तकं चैव प्रशस्तश्च कपिञ्जलः ॥
तथा कुररकश्चैव हारीतश्चैव टिट्टिभः ।"

शङ्खलिखितौ-

"बकबलाकाहंसप्लवखञ्जनकारण्डवचक्रवाक[1]कटभार-
चटकगृहकपोतशुकसारिकासारसटिट्टिभोलूकरक्तपाद-
जालपाद वाग्गुदादीनां भुक्त्वा द्वादशरात्रमनाहारः ।
पिबेद् गोमूत्रयावकम् ।"

[2]कटभारः - पक्षिविशेषः । गृहकपोतः-[3]पक्षिविशेषः । वाग्गुदो-वाजुडा इति प्रसिद्धः ।

ब्रह्मपुराणे त्वाष्ट्रमुखोत्पन्नाधिकारे-

"कलविङ्काः [4]सुरापी च ते न भक्ष्याः कदाचन ।
ग्रामचारी टिट्टिभश्च तथान्यो ग्रामकुक्कुटः ॥"
सारसो लक्ष्मणाख्यश्च रज्जुदाहश्च पाशिकः ।

---

ख पाठः—

(1) ०कटहार० (2) कटहारः (3) पारावतपक्षि० (4) सुरापा

मुद्रित पाठः—

A- क्रुञ्चक्रौञ्चवार्धाणसलक्ष्मणवर्जम् ॥ (आप० धर्म०)

दात्यूहश्चातकश्चाथ विसंज्ञो जलकुक्कुट: ॥
शुकश्च सारिका चैव काकोलूकं सकोकिलम् ।
दार्वाघाटश्च यो वृक्षान् भित्त्वा संभक्षयेत् क्रमात् ॥
वनवासं चरेन्मासमेतैः संभक्षितैर्द्विजः ।
कोयष्टिकावमन्तिका [1]मयूरनखविष्किरा: ॥
जले निमग्ना ये मत्स्यान् जग्ध्वास्यान्निगिरन्ति च ।
बलाबलाकाश्येनाश्च काकोलूकबकास्तथा ॥
कङ्कगृध्रौ तथा भासः क्रव्यादाख्यास्तथा परे ।
हारीतश्चातकाश्चैव [2]भूरुण्डो जीवजीवक: ॥
आपाण्डुककपोतश्च सारङ्गः खञ्जरीटक: ।
सारसः क्रौञ्चसंज्ञश्च तथा वै लावको परः ॥
केशिनी चमराख्यश्च तथान्यो वाग्गुदस्त्विति ।
मण्डूक[3]भ्रमरूपाश्च कृमयः सन्त्यनेकशः ॥
एतैस्तु भक्षितैर्मासं वनवासव्रतं चरेत् ।"

मयूरो-जलचरोऽभक्ष्यः । लक्ष्मणस्य भक्ष्यत्वं वैकल्पिकम् । [4][यत्तु प्रतुद (प्रत्यूह) विष्किरभक्षणे याज्ञवल्क्ये त्रिरात्रव्रतं तदा कामतः । प्रतुदाः-ये चञ्चूकुट्टनेन भक्षयन्ति । विकीर्य भक्षयन्तो विष्किराः ।

निषिद्धपक्षिमांसभक्षणे शङ्खः—

"मासमेकं व्रतं कुर्याद् भूयश्चैव न भक्षयेत् ।"

---

**ख पाठः—**

(1) मयूरानखविष्किना (2) भेरण्डो (3) ०भ्रमराद्याश्च
(4) (......) बन्धनस्थपाठो नास्ति

अत्र यद्यपि भक्ष्याणामपि पक्षिणां मांसं कलौ ब्राह्मणैर्न भक्ष्यते शिष्टगर्हणात्, तथापि प्रमादाद् भक्षणे भक्ष्येषु प्रायश्चित्ताभावोऽभक्ष्येषु प्रायश्चित्तं कर्त्तव्यमित्युभयमुक्तम् ।

अथ] [1]मत्स्याः

[A]शङ्खः (१७-२५)-

"राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः ।
पाठीनरोहितौ चैव भक्ष्या मत्स्या प्रकीर्त्तिताः ॥"

हारीतः-

"सशल्कांश्च मत्स्यान् न्यायोपपन्नान् भक्षयेत् ।"

याज्ञवल्क्यः (१-१७७)

"शशश्च मत्स्येष्वपि हि [2B]सिंहतुण्डश्च रोहिताः ।
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ॥"

मनुः (५-१६)-

"[C]पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः ॥"

---

ख पाठः—

(1) भक्ष्याभक्ष्यमत्स्याः (2) सिंहतुण्डक० (3) अथ भक्ष्यमत्स्याः

मुद्रित पाठः—

A- "राजीवान् सिंहतुण्डांश्च सशल्कांश्च तथैव च ।
पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्त्तितौ ॥" इति शंखः (१७-२५)
"राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च ।
पाठीनरोहितौ वापि भक्ष्या मत्स्येषु कीर्त्तिताः ॥" इति कृत्यकल्प०
नियत० ३१०

B- सिंहतुण्डकरोहिताः

C- राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव

[1]अथाभक्ष्यमत्स्याः—

[A]यमः-

"अभक्ष्या मकरसरीसृप[2]मङ्गुमयूरचक्रकन[3]क्रकीटक-

शिशुमाराः । ये चान्ये विकृतास्याः ।

एषां [4]भक्षणे त्रिकृच्छ्रम् ।"

[5]मयूरो-जलचरमयूरः । चक्रवाकः-चक्राकारः ।

"[6]वेटो मत्स्यानामभक्ष्यः ।

शृङ्गिक्रव्यादा ये तेषां [7]भक्षणेऽव्रतिकृच्छ्रम् ।"

ब्राह्मे-

"गर्दभाकृतयो मत्स्याः [8]घोरा विकृतरूपिणः ।

नक्रश्चाथ [9]कुलीराश्च बहुलोमास्त्वलोमकाः ॥

मत्स्या सर्पमुखाश्चान्ये गजवाजिनरोपमाः ।

प्रमादाद् भक्षणे त्वेषां व्रतं सान्तपनं चरेत् ॥"

अत्र मत्स्याः श्राद्धव्यतिरेकेणाभक्ष्या इति केचिन्मन्यन्ते ।

"मत्स्यानप्यनुपाकृतान् ।"

---

ख पाठः—

(1) अथ भक्ष्यमत्स्याः (2) •मद्गुर० (3) ०नक्रकर्कटकीटक०
(4) भक्षणेऽतिकृच्छ्रः (5) मयूरोऽत्र जलचर० (6) "उशनाः" इत्यधिकः
(7) भक्षणेप्यति० (8) ये चावि० (9) कुम्भीराश्च

मुद्रित पाठः—

A- "अभक्ष्याः मकरसर्पसरीसृपमद्गुमयूरवर्मिकनक्रकर्कटशिशुमाराः । ये चान्ये ह्यकर्णिकाः । ये चान्येऽशल्का मत्स्या उभयकास्याः ।" कृत्यकल्प० नियत० ३०९ । तत्र व्याख्यातमपि - सर्पोऽत्र जलसर्पो डुण्डुभः । सरीसृपोऽत्र जलौकाः इत्यादि ।

इति यमवचनाद् भक्ष्याणामपि मत्स्यानां श्राद्धव्यतिरेकेणोपाकरणे प्रमाणाभावाच्छ्राद्धनियुक्तस्यैव भक्ष्याः।

[1]श्राद्धे हि—

**"यत् किञ्चिन्मधु[2]संयुक्तं तदानन्त्याय कल्प्यते।**
**उपाकृतं [3]तु विधिना मन्त्रेणान्नं तथा कृतम्॥"**

इति यमवचनात् सर्वद्रव्येषूपाकरणं काम्यम्। तथाहि तस्यार्थः। मधुयुक्तमन्नपानादिकमनन्तफलम्। एवं विधिना उपाकृतम।

**"[4A]छागोस्रमेषा आलब्धव्याः।"**

इति गृह्यवचनाच्छागादिद्रव्यं उपाकृतमानन्त्याय। तथा मन्त्रेणान्नं तथाकृतं-मन्त्रेणोपाकृतम्। अन्यदप्यन्नमानन्त्यायेति। तेन छागादावमन्त्रकाः पशुसंस्कारा उपाकरणरहिता उपाकरणशब्देन लिङ्गसमवायेनोच्यन्ते। द्रव्यान्तरे तु "उपावीरसी"ति तृणमादाय[5] पशुमुपस्पृशत्यत्यु[6]पदेवानामिति मन्त्रेण पशुस्पर्शनमुपाकरणशब्दार्थः इति।

तेन मत्स्येष्वप्युपाकरणं श्राद्धे पाक्षिकम्। तेन तत्र नियुक्तस्य मत्स्यभक्षणे न दोषोऽन्यत्र दोष एवेति। मैवम्। एवं सति उपाकरणाभावपक्षे नियुक्तेनाप्यभक्षणप्रसङ्गात्। यदि तु

**"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः।"** (५-१६)

इति मनुवचनादनुपाकृतमत्स्या अपि नियुक्तस्य भक्ष्याः।

---

**ख पाठः—**

(1) श्राद्धेऽपि (2) ०संमिश्रं (3) च (4) पशोस्तु मेषा आलभ्या
(5) ०मादाय तेन पशु० (6) ०पदेवानिति

**मुद्रित पाठः—**

A- छागोस्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयं मृतानाहृत्य पचेत्।
कात्यायनश्राद्धकल्पसूत्र (७-६)

एवं तर्हि—

"देवान् पितॄन् समभ्यर्च्य खादन् मांसं
न दोषभाक्।" (याज्ञ० १-१७६)

इत्यादिवचनानुरोधाद्विध्यनुज्ञानव्यतिरिक्तपरमेवानुपाकृतपदं वृथामांस-भक्षणम्। "अनर्चितं वृथामांसमि"त्यादि स्मृत्यन्तरसमानार्थमेव।

किञ्च—

"अनुपाकृतमांसानि जग्ध्वा त्रिरात्रं तु व्रती भवेत्।"

इति याज्ञवल्क्यवचनात् पशुमांसस्यापि यज्ञश्राद्धद्रव्यव्यतिरेकेण[1] भक्षणं स्यात्। [2]अथ देवतापित्रर्चनपूर्वकभक्षणीयेष्वपि मांसेषु उपाकरणमेव एवं रूपेण विधीयते। तदा "मत्स्यानप्यनुपाकृतान्" इत्यनेनाप्युपाकरणविधि-रिति किं न स्यात्। श्राद्धव्यतिरिक्तनिमित्तभक्ष्यमत्स्येष्वप्युपाकरणं कार्यमिति।

अथ—

"मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्।"

इति याज्ञवल्क्य (१-१७५) वचनात्।

"भक्षणा[A]त् मत्स्यानेव च सर्वशः। (५-१४)
मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्॥"
(५-१५)

---

ख पाठः—

(1) ०भक्ष्यता

(2) अथ देवपित्रर्चनपूर्वकब्राह्मणानुज्ञादिनिमित्तकभक्ष्यतावचनस्य निरव-काशत्वादनुपाकृतमांसपदं विध्यननुज्ञातपरम्। तर्हि तद्वशादेवानुपाकृत-मत्स्यपदमपि विध्यननुज्ञातपरमेव। विनिगमनाविरहेणमांसपदसङ्गेन मत्स्यपदमिति वक्तुमशक्यत्वात्। यदि तु मांसेऽनुपाकृतत्वेन भक्ष्यत्वादेव पित्र्यर्चनपूर्वकं भक्षणविषयेषु मांसेषूपाकरणमेव।

मुद्रित पाठः—

A– "मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः।" (५-१४)

इति मनुवचनाच्च सर्वमत्स्यानां भक्षणे प्रायश्चित्तविधानात् प्रतिषेधाच्च मत्स्यविशेषभक्षणवचनस्य (च) नियुक्तविषयत्वेन [1]मनुनोपसहारात् श्राद्धव्यतिरेकेणाभक्ष्यता ।

तर्हि मानवे (५-४९)—

"समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य भक्षणात् ॥"

यम[A]स्मृतौ—

"यस्तु स्वादति मांसानि प्राणिनां जीवितैषिणाम् ।
हुतानां च मृतानां च यथा हन्ता तथैव सः ॥
न भूमेर्जायते मांसं न च वृक्षात् [2]प्ररोहितम् ।
घोरं प्राणिवधं कृत्वा तस्मान्मांसं विवर्जयेत् ॥
यस्तु खादति मांसानि ब्राह्मणो [B3]वेदवित्तथा ।
स पच्यते निरालम्बे नरके तेन कर्मणा ॥"

इत्यादिवचनब[4]लाद्यज्ञश्राद्धव्यतिरेकेण मांसमात्र[5]मप्यभक्ष्यं स्यात् । अथ देवपितृपूजाशेषब्राह्मणकाम्यादि[6]निमित्तभक्षणवचनस्य निरवकाशत्वेन तेषां वचनानामेतद्व्यतिरिक्तपरत्वम् । तर्हि विनिगमनाविरहात् मत्स्यविषयवचनानामेतद्व्यतिरिक्तपरत्वम् । तर्हि विनिगमनाविरहात् मत्स्यविषय-
सामान्यनिषेधवचनानामपि तद्व्यतिरिक्तविषयत्वं केन वार्यते ।

---

**ख पाठः—**

(1) मनुनोपसंहृतत्वात् (2) प्ररोहति (3) वेदवित्तमः (4) बलाच्च
(5) ०मभक्ष्यं (6) निमित्तकभक्षण०

**मुद्रित पाठः—**

A– कृत्यकल्प० नियत० ३२१–३२२
B– वेदवित्तमः - कृत्यकल्प० ३२२

"स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन् देवान् न ततोऽन्योऽस्त्यपुण्यकृत् ॥"
(मनुः ५-५२) (विष्णुः ५२-७५)

"अर्नाचतं वृथामांसम्" (मनु-४-२१३)(विष्णु-५१-२०)

"वृथामांसमभक्ष्यं स्यात् ।"

इत्यादि मनुविष्णुयमस्मृतिसमानार्थतया मत्स्यविषयसामान्यनिषेधवचनानां परिगणितविध्यनुज्ञातभक्षणातिरिक्तभक्षणपरत्वमेव न्याय्यम् ।

किं च यथा याज्ञवल्क्यशङ्खादिषु सामान्यतो राजीवादयो यद्यपि भक्ष्यत्वेनोक्तास्तथापि मनुवचनेन श्राद्धनियोगविषये [1]विशेष उपसंहारात् श्राद्धादन्यत्र राजीवादयोऽप्यभक्ष्याः । तथा सति अजाविहरिणादिपशुभक्षणपरसामान्यवचनानाम्—

"[A]असंस्कृतान् पशून्मन्त्रैर्नाद्याद् विप्रः [B]कथञ्चन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥
(मनुः ५-३६) (विष्णुः ५१-५९)

यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥"
(मनुः ५-३१)

इत्यादि यज्ञविषयभक्षणपरमनुवचनेन विशेषोपसंहाराद् यज्ञादन्यत्राजादिपशूना[2]मभक्षणं स्यात् । [3]न च वचनान्तरानुरोधेन संकोचकल्पनं मत्स्येष्वपि समानम् ।

---

**ख पाठः—**

(1) विशेषेणोपसंहारात् (2) ०मभक्ष्यता (3) "न च" इति नास्ति ।

**मुद्रित पाठः—**

A- कृत्यकल्प० नियत० ३१६ B- कदाचन-मनुस्मृ०

एवं च—

"मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ।"
(याज्ञ० १-१७५)

इति प्रायश्चित्तविधिः सामान्यं

"[A]पाठीनरोहितसिंहतुण्डसशल्कवर्जं
मत्स्यमांसाशने त्रिरात्रमि"ति

विष्णु[1]स्मृति (५१-२१) विशेषविधिनोपसंह्रियते । न[2]चाकामकृतविषया विष्णुस्मृतिः प्रायश्चित्तभेदाभावात् । किं च पाठीनादीनां श्राद्धव्यतिरेकेणाभक्ष्यत्वे प्रायश्चित्तवाक्ये तदवर्जनं विरुद्धं स्यात् । तेन विष्णुस्मृति[3]समानार्थत्वाय याज्ञवल्कीयमप्येवं व्याख्यातव्यम् । कामतो जग्ध्वा - विध्य[4]नुज्ञामन्तरेण इच्छामात्रेण जग्ध्वा,

एवं—

"न मांसभक्षणे दोष" (मनु-४-५६)

इत्यपि [5]मत्स्यमांसविषयम् । न हि मत्स्यं मांसं (न) भवति मत्स्याशनेऽपि मांसवर्जनसंकल्पसिध्यापत्तेः ः

यत्तु—

"यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।"

इति मांसप्रकरणे मनुना (५-२२) मृगपक्षिणोर्विशेषेणोपादानान्मांसपदं मृगपक्षिमांसपरम् । तन्न । मत्स्यानामपि पूर्वोपक्रान्तत्वेन मृगपक्षिपदस्य भक्ष्यप्राणिमात्रोपलक्षणपरत्वात् ।

---

**ख पाठः—**

(1) ०स्मृतिगतविशेष० (2) चाकामविषया

(3) समानाय याज्ञ० (4) ०नुज्ञानमन्तरेण (5) मत्स्यविषयम्

**मुद्रित पाठः —**

**A**- पाठीनरोहितराजीवसिंहतुण्डशकुलवर्जं सर्वमत्स्यमांसाशने त्रिरात्रमुपवसेत् । विष्णुस्मृ० (५१-२१)

[1][मेधातिथि[A]स्तु (५-१६)

"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः"

इति वचनात् पाठीनरोहितयोः श्राद्धव्यतिरेकेणाभक्षणाद् राजीवसिंहतुण्डसशल्कादीनां "सर्वशः" इति वचनाच्छ्राद्धव्यतिरेकेणापि भक्ष्यत्वमित्याह । ]

[2]ननु च—

"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥(मनु ११-९५)
असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथंचन ।"
इति मनुः (५-३६)

याज्ञवल्क्येऽपि श्राद्धदेयाधिकारे—

"[B]मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधु प्रधानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥'

तेन ब्राह्मणस्य मांसमात्रमभक्ष्यम् । भक्ष्यपरत्ववचनानां क्षत्रियादि[3]विषयमिति उच्यते मनुनैव (५-२२)—

"यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।
भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा ॥"

---

ख पाठः—

(1) बन्धनस्थपाठो नास्ति (2) "अथ" इत्यधिकम् (3) ०विषयत्वमिति

मुद्रितपाठः—

A- पाठीनरोहितौ मत्स्यजातिविशेषौ तयोर्हव्यकव्यनियोगेन श्राद्धादौ भक्ष्यताऽभ्यनुज्ञायते । नान्बाहिके भोजने । राजीवसिंहतुण्डसशल्कानां सर्वशः हव्यकव्याभ्यामन्यत्राप्यनिवृत्तिर्भोजने ।(मेधातिथिः)

B- मिताक्षरोद्धृत (याज्ञ १-२६०) पुलस्त्यवचनम्

इति भृत्यभरणार्थमपि पशुहिंसा ब्राह्मणानामेव विहिता। न हि मांसस्याभक्षत्वे इदं घटते।

याज्ञवल्क्यश्च (१-१०९)-

"महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।"

इति अतिथिब्राह्मणार्थं मांसं दर्शयति। न चैतदुपकल्पनमात्रं क्षत्रियाद्यतिथिविषयं वा।

वसिष्ठेन [1]अपि (४-८)—

"[A]ब्राह्मणाय राजन्याय वाऽभ्यागताय महोक्षं
महाजं वा पचेदेवमस्यातिथ्यं कुर्वन्ति।"

इति ब्राह्मणमतिथिमुद्दिश्याहत्य मांसपाकविधानात्[2]।

पैठीनसिनापि—

"नात्मार्थं पाचयेदन्नं नात्मार्थं [3B]पाचयेत्पशून्।
देवार्थे ब्राह्मणार्थे वा पचमानो न लिप्यते[4]॥"

अतिथिब्राह्मणार्थं पाकं दर्शयता भक्ष्यत्वमनुज्ञातम्।

---

ख पाठः-

(1) "अपि" इति नास्ति

(2) "किं च शतपथश्रुतौ - यथाऽतिथयेऽभ्यागताय वा ब्राह्मणाय वा राज्ञे वा महोक्षं वा महाजं वा पचेन्मांसमि"त्यातिथ्यविषये ब्राह्मणमतिथिमुद्दिश्य सिद्धवन्मांसपाकमनुवदति। इत्यधिकपाठः।

(3) घातयेत् (4) "इति" इत्यधिकम्

मुद्रित पाठः-

A- अथापि ब्राह्मणाय वा राजन्याय वाऽभ्यागताय महोक्षाणं वा महाजं वा पचेदेवमस्मा आतिथ्यं कुर्वन्तीति। (वसिष्ठ ४-८)

B- घातयेत् - कृत्यकल्प० नियत० ३२८

तथा बौधायनः (२-७-१२-१)—

"शालीनयायावरात्मयाजिनां [1]प्राणाहुतीर्व्याख्यास्यामः।"

इति शालीनादिब्राह्मणानां भोजनविधिमुपक्रम्य—

"सर्वं भक्ष्यापूपकन्दमूलफलमांसादीनि दन्तैर्नावद्येद्।"

इति (बौधा० धर्म० २-७-१२-४) शालीनयायावरब्राह्मणानां मांसभक्षणं दर्शयति[2]। यद्यपि एतानि लिङ्गमात्राणि तथापि "न मांसभक्षणे दोष" (मनु ५-५६) इत्यादिद्विजातिपरसामान्यवचनान्येव प्रापकाणि। "यक्षरक्षः पिशाचान्नमि"ति तु [3]विध्यनुज्ञातविषयम्।

"अतोऽन्यथा तु यो भुङ्क्ते विधिं हित्वा पिशाचवत्।"

इति बृहस्पतिवचनतुल्यत्वात्।

"अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते" (५-३१)

इति [4]मनुतुल्यत्वाच्च। विप्रग्रहणं दोषातिशयार्थम्, अभक्ष्यभक्षदोषस्य विप्रे बाहुल्याद्। श्राद्धे [5]च याज्ञवल्क्य[A] वचनं "मुन्यन्नं ब्राह्मणस्य प्रधानं समग्रफलदं न त्वितरत् निषिद्धमि"ति [B]विज्ञानेश्वरेणैव व्याख्यातम्। अन्यथा प्रधानपदवैयर्थ्यापत्तेः।

---

ख पाठः—

(1) प्राणाहुतिं ०व्याख्या०

(2) "तथा च कात्यायनः पञ्चशारदीये यागार्थं नियुक्तस्य पशोर्यागात् पूर्वं मरणे ऋत्विग्व्यतिरिक्तब्राह्मणभक्षणं दर्शयति। मृतं ब्राह्मणान् भोजयेदिति यद्यप्येतानि" इत्यधिकम्।

(3) विध्यननुज्ञात० (4) मनुवचनतुल्य० (5) तु

मुद्रित पाठः—

A- मुन्यन्नमिति न याज्ञवल्क्यवचनं, किन्तु मुन्यन्नपदव्याख्यायां विज्ञानेश्वरेण पुलस्त्यवचनमुदाहृतम्। मिता० (१-२६०)

B- मिता० (१-२६०)

अत्र मांसस्य भक्षणनिमित्तानि याज्ञवल्क्यविश्वामित्रौ (याज्ञ० १ १७९)

"प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।

देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक् ॥"

मानवेऽप्येतान्येव निमित्तानि ।

देव[A]लः—

"भक्षयन् विधिमांसानि शेषभोजी न लिप्यते ।

औषधार्थमशक्तो वा नियोगाद् यज्ञकारणात् ॥"

मांसैकचिकित्स्यव्याधिना प्राणनाशप्रसङ्गे दुर्भिक्षे वा मांसातिरिक्तान्नाभा[1]वेन ।

"[B]सर्वत आत्मानं [2]गोपायीत ।"

इति प्राणरक्षाकरव्यापारस्य सामान्यानुज्ञानेऽपि विशेषानुज्ञात्यन्तनिर्दोषत्वाय । एतच्च न विधानं, किन्तु निषेधस्य विषयसंकोचमात्रम् । तच्च पर्युदासेन परिसंख्यातत्वात् प्राणात्ययातिरिक्तस्थले मांसभक्षणनिषेध इत्यर्थः । एवं ब्राह्मणकाम्यायां देवपित्रर्चनविषययोरपि बोध्यम् । श्राद्धे च मांसभक्षणविधिः [3]श्राद्धाङ्गत्वेन "भुञ्जीरंस्तेपि वाग्यता" इत्यादि विधेः । [4]तत्र भक्षणं प्रोक्षितं - यज्ञे हविःशेषरूपं यजमानस्य ऋत्विजां च । ऋत्विजां विधेयम् । यजमानस्य क्रतुसिद्धिद्वारा क्रतुफललाभार्थम् । क्रतुसादगुण्यार्थमेव दक्षिणाग्रहणात् क्रत्वङ्ग[5]भक्षणानुष्ठानं विना

---

ख पाठः—

(1) ०क्तान्यवस्त्वभावेन (2 गोपायेत (3 श्राद्धाङ्गत्वात् (4) तत्र च भक्षणं

(5) भक्षणानुज्ञानं

मुद्रित पाठः—

A- भक्षयन्नपि मांसानि शेषभोजी न लिप्यते ।
औषधार्थमशक्तो च नियोगाद् यज्ञकारणात् ॥ कृत्यकल्प० नियत० ३१४

B- सर्वत एवाऽऽत्मानं गोपायेत् ॥ गौत० धर्म० (१-९-३४)

प्रत्यवायाच्च विधेयत्वादवश्यं कर्त्तव्यम् । द्विजकाम्यया - अतिथित्वेन प्राप्तस्य गृहस्थब्राह्मणस्य काम्यया । तच्च सकृदेव जन्ममध्ये यमवचनात् । देवान् पितॄन् समभ्यर्च्य - देवपूजनं सूर्यस्य दुर्गाया वा मांसेन पूजनम् । पित्रर्चनम् - नित्यश्राद्धेन । तस्यापि च निषेधसंकोचमात्रत्वादविधेयत्वेनाऽष्टम्यादौ निषेधः सिद्ध्यति । "शेषभौजी न लिप्यते" इत्यत्र यजमानस्य श्राद्धशेषभोजनं विहितं संगृह्यते ।

तत्र हि—

**"[A]सर्वतः समुपादाय [1]ग्रासार्धार्धमश्नीयात् ।"**

इत्यापस्तम्ब (२-७-१७-१६) वचनात् मांसस्यापि भक्ष्यता । [2]तत्र प्रतिपत्तित्वात् श्राद्धाङ्गत्वेन विधेयत्वम् । तत्राभक्षणे श्राद्धवैगुण्यादावाशङ्का [3]तथा चैकादश्यामुक्तम्—

**"[B]उपवासं प्रकुर्वीत आघ्राय पितृसेवितमि"ति ।**

यत्तु श्राद्धशेषविषये विज्ञानेश्वरीये "यज[C]मानस्य मांसे तु यथारुचि" इत्युक्तम् ।

अयं भावः "श्राद्धशेषमांसमश्नीयात्" इत्याहत्य मांसभक्षणविध्यभावात् प्रतिपत्तेश्च "ज्ञातिप्रायं प्रकल्पयेद्" इति मनूक्तदिशा ज्ञात्यादिभोजनेनापि सिद्धेः कृतमांसभोजनवर्जनसंकल्पेन वर्जनीयम् । अन्येन पुनर्भक्षणीयमिति यथारुचिपदेनोक्तम् ।

---

**ख पाठः—**

(1) ग्रासापरार्धमश्नीयात् (2) तस्य

(3) अतएव चैकादश्यामुक्तम्

**मुद्रित पाठः—**

A- सर्वतः समवदाय शेषस्य ग्रासावरार्ध्यं प्राश्नीयाद् यथोक्तम् ।

B- उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति कालदीपः (पृ ७१)

C- "मांसे तु यथारुचि" इति "द्विजकाम्यया" इत्यत्रोक्तम् । यस्मिन्दिने श्राद्धं कृतं तत्सम्बन्धिनीं रात्रिं भोक्तृभिर्ब्राह्मणैः सह कर्ता ब्रह्मचारी भवेत् ॥ मता० (याज्ञ० १-२४९)

ननु चैवं "देवान् पितॄन् समभ्यर्च्य" इत्येतत् पार्वणश्राद्धशेषपरम्। नित्यश्राद्धे च पार्वणधर्मानतिदेशात्तदीयशेषप्रतिपत्तेरिहाप्रसङ्गात्। [1]पार्वणश्राद्धं विना केवलनित्य[2]श्राद्धे शेषमांसभोजनं निषिद्धमेवेति वाच्यम्।

"[A]नात्मार्थं घातयेत् पशून्"

"वृथामांसमभक्ष्यं स्यात्"

"स्वमांसं परमांसेन यो वर्धयितुमिच्छति।

अनभ्यर्च्य पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यकृत्।"

(मनु० ५-५२)

"नाद्यादविधिना मांसम्।" (मनु० ५-३३)

इत्यादिवचनेषु केवलात्मार्थपकमांसस्यैव दोषोक्त्या [3]नित्यश्राद्धसूर्यादि-पूजार्थं पक्वस्य केवलात्मार्थाभावेन तत्र दोषाभावात्। अस्यापि तत्परत्वस्य न्याय्यत्वात्।

अतएव—

"भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा।"

इति [4]मनु (५-२२) वचनाद् भृत्यशेषस्यापि भोजने न दोषः इत्युक्तं विज्ञाने-श्वरेण। तेन सूतकाशौचादौ रात्रौ च भृत्यशेषमांसभोजनमपि निर्दोष-मित्युक्तम्।

---

ख पाठः—

(1) पार्वणादिश्राद्धं (2) श्राद्धशेषं (3) नित्यश्राद्धं विना केवलनित्यश्राद्ध-शेषमांसभोजनं निषिद्धमेवेति (4) मनुना भृत्य०

मुद्रित पाठः—

A– नात्मार्थं पाचयेदन्नं नात्मार्थं घातयेत् पशून्।
देवार्थे ब्राह्मणार्थे वा पचमानो न लिप्यते॥ इति यमपैठीनसीति
कृत्यकल्प० नियत० ३२८

अत्र यमः—

"भक्षयेत् प्रोक्षितं मांसं सकृद् ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे [1]वा[A] विवर्जयेत् ॥"

नियमे- [2]वर्जनसंकल्पे कृते विवर्जयेत् । ब्राह्मणकाम्यया [3]भक्षणं विवर्जयेत् । दैवे वैश्वदेव[4]सम्बन्धिश्राद्धे च पितृसम्बन्धिनि नियुक्तः- दैवकृत्ये पितृकृत्ये वा भुङ्क्ष्वेति प्रेरितः अनियोगपदवाच्यां प्रेरणां वर्जयेत् - न स्वीकुर्यात् । यद्वा नियोगमस्वीकृत्य मांसं वर्जयेदिति सम्बन्धः । निमन्त्रणस्वीकारेऽभक्षणे संकल्पभङ्गा[5]दित्याशयः । सर्वत्र विध्यन्तराविरोधेन शास्त्रार्थवर्णनमुत्सर्गः ।

यदुक्तं दक्षिणाधिकरणे (पूर्वमी० सू० १-३-११) - तस्य [6]द्वादशशतमिति संख्यासम्बन्धः पूर्वनिर्दिष्टगोश्वाश्वतराजाविषु [7]कुत्रेति सन्देहे उपकारक्षमत्वात् गवामेव [8]संख्येत्युक्ता । अश्वाश्चोपकारकतरा भवेयुर्यद्येषां दानप्रतिग्रहौ न प्रतिषिद्धौ स्याताभिति । तेनेह यत्तावन्नन्दीपुराणीयं सर्वदा मांसवर्जनं तद यज्ञाधिकारिश्राद्धनिमन्त्रण निषिद्धार्थं पश्वादिविषये सावकाशत्वान्न यज्ञश्राद्धनियुक्तमांसभक्षणविधिबाधकम् ।

"[B9]ये[10] वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा ।"
(अनु० ११५-५७)

इत्यादि भारतीय सावधिमांसवर्जनं तत् पशुया[12]गान्तरादेर्निवहत्येव । न चान्यपश्वादेरपि श्राद्धाधिकाराद् यजमानस्य शेषमांसाशने वैधेय यावज्जीव-

---

ख पाठः—

(1) तु (2) विवर्जन० (3) भक्षणं तु वर्जयेत् (4) ०सम्बन्धिनि श्राद्धे पितृ० (5) दित्यर्थः (6) द्वादशशतभूमिति (7) कुतेति (8) संख्येत्युक्त्या (9) "यच्च" इत्यधिकम् (10) यो वर्जयति मांसानि (11) ०यागान्तरार्थे

मुद्रित पाठः—

A- नियमे तु - कृत्यकल्प० नियत० ३१५

B- वर्जयन्ति हि मांसानि = मासशः पक्षशोऽपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥ महाभा० अनु०

संकल्पो निरवकाश एवेति वाच्यम्। श्राद्धे मांसदानस्य काम्यत्वेन कृतमांस वर्जनसंकल्पेन श्राद्धे मांसस्यादानेऽपि संकल्पनिर्वाहात्।

यदा तु तेन भ्रान्त्या श्राद्धे मांसं दत्तं तदा

"पुरुषार्थसमासक्तेः काम्यं नित्यस्य बाधक"

मिति न्यायेन क्रत्वर्थचमसबाधेन [1]गोदोहनप्रवेशवत् वर्जनसंकल्पस्य बलवत्त्वाच्च वर्जयेत्। किं च श्राद्धशेषमांसं भक्षयेदित्याहत्य मांसे विध्यभावात्, "सर्वतः समुपादये"ति सर्वपदस्य सर्वनामत्वेन विशेषरूपेणोपस्थापकत्वेऽपि मांसस्य [2]काम्यत्वे नियतबुद्ध्यारूढत्वाभावात्, मांसातिरिक्तहविःप्राशने प्रतिपत्तिसिद्धेः मांसस्य ज्ञातिभोजनादौ प्रतिपत्तिसंभवात् कृतमांसवर्जनसंकल्पः श्राद्धकर्त्ता वर्जयेदेव मांसम्।

यदा तु [3]प्रथमं पशुयागानधिकारं निश्चित्य यावज्जीववर्जनसंकल्पः कृतः पश्चात् दोषापगमे पशुयागाधिकारः

तदा—

"प्रधानं वैदिकं कर्म गुणभूतमथेतरत्।
गुणनिष्ठेऽतिप्रमाणं बाधयन् प्रैत्यधोगतिम्॥"

इति [4]पशूनिष्ठा भक्षयेदेव मांसम्। व्रतलोपस्योपपातकप्रायश्चित्तं कार्यम्। एतदेवाभिप्रेत्याह [A]लक्ष्मीधरः "[5]नियमे तु विवर्जयेद्" इति प्रोक्षितातिरिक्तैः सम्बध्यत इति। एवमन्यत्रापि बलवत् प्रमाणविरोधविषयं परिहृत्य "[6]नियमेन विवर्जयेत्" इति। सम्बध्यत इति। बलवत्प्रमाणविरोधश्च श्राद्धे निमन्त्रितस्य। ननु 'अनिन्द्येनामन्त्रितो नापक्रमेत्" इति (कात्या. श्राद्ध)

---

**ख पाठः—**

(1) गोदोहप्रवेश० (2) काम्यत्वेऽपि (3) पूर्वं (4) पशुमांसवर्जननिष्ठोऽपि भक्षयेदेव मांसम्। (5) नियमेन (6) नियमे तु

**मुद्रित पाठः—**

A- "नियमे - मांसवर्जनव्रते कृते सति। एतच्च प्रोक्षितातिरिक्तैः सर्वैरेव सम्बध्यते, प्रत्यक्षश्रुतिविरोधात्" ॥ कृत्यकल्प० नियत० ३१५

इति वचनान्निमन्त्रणस्वीकारस्यावश्यकत्वात् "नियमे तु विवर्जयेत्" इत्यस्य [1]निरवकाशत्वेन बाधकत्वाद् बर्जनमिति वाच्यम् ।

"केतनं कारयित्वा तु योऽतिपातयते नरः[A] ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥"

इति यमस्मृतौ केतनं कारयित्वा - निमन्त्रणं स्वीकृत्य । योऽतिपातयते-न भुङ्क्ते, इति लक्ष्मीधरव्याख्यानात् । इहापि

"अनिन्द्येनामन्त्रितो नापक्रमेत् ।" (कात्यायनश्राद्धकल्प १-१२)

इति प्राप्यकर्मणि निष्ठाप्रत्ययादामन्त्रितः-आमन्त्रणेन प्राप्तः स्वीकृतामन्त्रण इति यावत् । तेन कृतामन्त्रणस्वीकारस्य तदतिक्रमे दोषो, न तु प्रथमतो निमन्त्रणास्वीकारे कश्चिद्दोषः । तेन कृच्छ्रचान्द्रायणादिकर्तुरिव कृतमांस-वर्जनसंकल्पस्य निमन्त्रणास्वीकारे दोषाभावात् । सफ्गुभागार्त्विज्येऽपि निमन्त्रणास्वीकारे दोषाभावेन "नियमे तु विवर्जयेदि"त्यस्यायमर्थः । श्राद्धयज्ञयोर्निमन्त्रणास्वीकारेण मांसभक्षणं वर्जयेदिति न्यायमूलमेव ।

यदा तु भ्रान्त्या निमन्त्रणं स्वीकृतवान् तदा भक्षयेदेव मांसम् । आर्त्विज्ये तावत् स्वस्य [2]फललाभेनाङ्गवैगुण्यं कृत्वा परधर्मनाशकत्वं महानर्थकरम् । किं च "[B]अनिन्द्येन वृतो नापक्रमेत्" ( ३-५-१-१७ ) इति शतपथश्रुतिः प्रत्यक्षा । तस्याश्चायमर्थः-वृतः- कृतवरणस्वीकारः, नापक्रमेत्-आर्त्विज्यं न त्यजेदिति । [3]तद्विरुद्धं स्मार्त[4]वर्जनं हेयमेव ।
श्राद्धे च—

"यथाविधि नियुक्तस्तु यो मांसं [5]नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् ॥" (मनु ५-२७)

---

ख पाठः—

(1) निरवकाशत्वे बाध० (2) फललोभेन (3) तत्राविरुद्धं (4) ०वर्जं (5) वात्ति

मुद्रित पाठः—

A- "द्विजः" कल्पतरौ श्राद्ध १०७ B- अनिन्द्यस्य० माध्य० शत

इति मनुना—

**"नियुक्तस्तु यदा श्राद्धे यस्तु मांसं न खादति ।**
**यावन्ति पशुरोमाणि तावन्नरकमश्नुते ॥"**

इति हारीतयमाभ्यां च श्राद्धाङ्गत्वेन विहितस्य मांसभक्षणस्यातिक्रमे कर्मवैगुण्यद्वारा परधर्मनाशने दोषभूयस्त्व[1]कथनात् "नियमे तु विवर्जये[2]दि"त्येतस्य न्यायमूलत्वात् प्राप्तविधित्वेऽपि निमन्त्रणास्वीकार-द्वारकमांसवर्जने सावकाशत्वेनेह बाधकत्वासम्भवात् चारुच्यादिप्राप्तमांस-वर्जननिषेधोप[3]पत्तौ न वैधमांसवर्जनप्रतिषेधविधिः विहितप्रतिषेधे विकल्पापत्तेरिति वाच्यम् । यथा हि दीक्षितस्य दानहोमपाकप्रतिषेधः लौकिकवैदिकसर्वदानहोमपाकप्रतिषेधकः सोमाङ्गत्वेन विधीयते । यद् वा वर्जने दोषश्रवणात् वर्जनं निषेध एव प्रकरणाभावेऽपि[4] वाक्येन विधीयते, क्रत्वर्थत्वाच्च पुरुषार्थस्य बाधक, एवमिह किं न स्यात् । यथा वा वैधमवैधं च मांसंमैथुनं दर्शाङ्गत्वेन निषिध्यते । एतदेवाभिप्रेत्य [A]लक्ष्मीधरेणोक्तम् - यत्तु मांसवर्जनात् फलं तद्देवपित्रर्चनशेषमांसस्य । न तु नियुक्तश्राद्धीय मांसविषयम् । तत्राऽभक्षणे दोषश्रवणादिति । [5]तदुक्तं तस्यैव युक्त्या तन्न स्मरणं मया [6]कृतं न स्वेच्छया किञ्चिदुक्तम् । अष्टम्यादौ दैवाग्निमन्त्रण-स्वीकारे पर्वसु मांसभक्षणे दोष[7]स्याल्पीयस्त्वात् । श्राद्धीयमांसवर्जनदोषस्य

---

**ख पाठः—**

(1) कथनाच्च (2) येदित्यस्य (3) ०पत्तेः (4) "श्राद्धपदो यस्मात् श्राद्धाङ्ग-त्वेन" इत्यधिकम् (5) भुक्तस्यैवानियुञ्जानस्य मांस (6) भुक्तं

(7) ०स्याबलीयस्त्वात्

**मुद्रित पाठः—**

A- "क्रीत्वा स्वयं वा' इत्यनेन च देवपित्रर्चनपूर्वके मांसभक्षणे दोषाभावः प्रदर्शितः । यत्तु मांसवर्जनात् फलश्रवणं तदप्येतत्प्रकारप्राप्तमांसवर्जन-विषयं, न नियुक्तादिविषयम् । कृत्यकल्प० नियत० ३१४

[1]च गुरुत्वाद् भक्षयेदेव मांसम्। [2]वणिग्वधसाक्ष्येऽनृतमुक्त्वा प्रायश्चित्तवत्। ब्रह्मौदनभोजने दोषमज्ञात्वाऽऽधाने वृतो ब्रह्मौदनं भक्षयेदेव।

अथ मांसवर्जनफलम्

"वर्षे वर्षेऽश्वमेधेन यो यजेच्च शतं समाः।
मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्॥"

(मनुः ५-५३)

एकवर्षपर्यन्तं मांसवर्जनस्य एकाश्वमेधफलम्।

याज्ञवल्क्यः (१-१८१)–

"सर्वान् कामानवाप्नोति हयमेधफलं तथा।
गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात्॥"

सर्वकामावाप्तिः पर्यायेण कालतारतम्यात् फलतारतम्यम्। हयमेधफलं वर्षवर्जनात्। मुनिर्यतिलोकार्हः।

नन्दिपुराणे—

"भक्ष्याण्यपि [3]च मांसानि यस्तु तानि न भक्षयेत्।
गच्छेल्लोकं शुभं मर्त्यो दिव्यं देवनिषेवितम्॥
[4]य[5]स्तप्तो घोरसंकल्पः [6]पुष्करेण समाः शतम्।
कृत्वा फलमवाप्नोति तन्मांसपरिवर्जनात्॥"

[A]तथा—

"चन्द्रसूर्यग्रहे पृथ्वीं यो दद्यात्सचराचरम्।

---

ख पाठः—

(1) "च" नास्ति (2) "वणिग्वधान्मूलसाक्षिसत्यवदनदोषभूयस्त्वात् साक्षादनृतमुक्त्वा" इत्यधिकम् (3) हि (4) "तथा" इत्यधिकम् (5) ०स्तपो (6) पुष्करेषु

मुद्रित पाठः–

A० कृत्यकल्प० नियत० ३२३-३२४

गयायां च तपो घोरं यश्चाब्दशतमाचरेत् ॥"
लोकानिमानवाप्नोति सर्वदा मांसवर्जनात् ॥"

अत्र निरुपाधिसर्वशब्दस्य व्यवहारायोग्यत्वेन परिच्छेदकापेक्षायां समावर्त्तनावधि यावज्जीवकालो गृह्यते । तेन समावर्त्तनानन्तरमेव पुष्कराधि[1]-करणाब्दशतघोरतपःफलसमानफलकामः उपरागकालीनसचराचरपृथ्वीदान-फलसमफलकामो वा[2] । यावज्जीवं मांसं न भक्षयिष्ये इति संकल्पः कार्यः । न भक्षणप्रसङ्गे यावज्जीवं तन्निवृत्तिव्यापारः कार्यः ।

महाभारते (अनु० ११५-१४)-

"मासि मास्यश्वमेधेन यो [3]यजेच्च शतं समाः ।
न खादति च यो मांसं सममेतए [A]युधिष्ठिर ॥"

अत्र मासप्रमितमांसवर्जनस्या[4]श्वमेधफलम् । तच्च त्यागे बहुक्लेशवतो बोध्यम् ।

यथा—

"रो[B]गार्तोऽभ्यर्थितो वाऽपि यो मांसं नात्त्यलोलुपः ।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतेन तु ॥"

तथा—

"[C]ये वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥"
(महाभा० अनु० ११५-५७)

---

**ख पाठः—**

(1) ०रणाकाब्द० (2) "गयाधिकरणकाब्दशतमितघोरतपःफलसमानकत्व-कामो वा" इत्यधिकपाठः (3) यजेत (4) ०श्वमेधः फलम्

**मुद्रित पाठः—**

A- मतं मम B- कृत्यकल्प० नियत० ३२६
C- कल्पतरौ "वर्जयन्ति हि मांसानि" महाभा० "मांसपक्षमथापि वा" इति पाठः । नियत ३२४

कार्त्तिकशुक्ले विशेषः (अनुशा० ११५-५८)—

"[A]मांसं तु कौमुदं पक्षं वर्जितं सर्वराजभिः।
नाभागेनाम्बरीषेण ... ..."

इत्यभिधाय—

"शारदं कौमुदं मांसं ततस्ते स्वर्गमाप्नुवन्।
[1]स्वर्गलोके च तिष्ठन्ति [2]ज्वलनाभाः [3]श्रियान्विताः॥"

---

**ख पाठः**—

(1) ब्रह्मलोके च (2) ज्वलमानाः (3) श्रियावृताः

**मुद्रित पाठः**—

A- मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः। सर्वभूतात्मभूतस्थैर्विदितार्थपरावरैः॥ ५८॥ नाभागेनाम्बरीषेण गयेन च महात्मना। आयुनाथानरण्येन दिलीपरघुपूरुभिः॥ ५९॥ कार्त्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना। नृगेण विष्वगश्वेन तथैव शशबिन्दुना॥ ६०॥ युवनाश्वेन च तथा शिबिनौशीनरेण च। मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो॥ ६१॥ सत्यं वदत माऽसत्यं सत्यं धर्मः सनातनः। हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत्॥ ६२॥ श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च। रैवते रन्तिदेवेन वसुना सृञ्जयेन तु॥ ६३॥ एतैश्चान्यैश्च राजेन्द्र कृपेण भरतेन च। दुष्यन्तेन करूषेण रामालर्कनरैस्तथा॥ ६४॥ विरूपाश्वेन निमिना जनकेन च धीमता। ऐलेन पृथुना चैव वीरसेनेन चैव ह॥ ६५॥ इक्ष्वाकुणा शम्भुना च श्वेतेन सगरेण च। अजेन धुन्दुना चैव तथैव च सुबाहुना॥ ६६॥ हर्यश्वेन च राजेन्द्र क्षुपेण भरतेन च। एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम्॥ ६७॥ ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः। उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः॥ महाभा–अनुशा० ११५–६८।

नन्दिपुराणे—

"[1]यदा वा न समर्थः स्यात् सर्वदा मांसवर्जने ।
वर्जयेदयनं मुख्यं कृतस्वर्गमतिर्नरः ॥
[A]चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
तथा पञ्चदशी वर्ज्या षडशीतिमुखानि च ॥"

अत्र मांसप्रतिषेधे स्थितेऽपि संकल्पपूर्वं वर्जनात् फलम् ।

तथा—

"[B]यो नरः कार्त्तिकं मासं [2]मांसं तु परिवर्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ॥"

तथा—

"मासषट्ककृतं पुण्यं लभेताश्वयुजे नरः ॥"

## अथ सुरामद्यानि

**मनुः (११-९४)–**

"गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
[C]यथैवैका [3]तथैवान्या न पेया ब्रह्मवादिभिः ॥"

ब्रह्मवादिशब्दो ब्राह्मणपरः । यथा एका ब्रह्म वदितुं शीलमेषामिति ब्रह्मवादिशब्दो ब्राह्मणपरः । यथा एका सुरा सर्वैर्न पेया तथा त्रिविधा ब्राह्मणैर्न पेया । अत्र पैष्टी, मुख्यसुरा । तत्पाने महापातकत्वादकामतो द्वादशवार्षिकं, कामतो मरणान्तकम् । गौडीमाध्व्योः पाने तु कृच्छ्रातिकृच्छ्रे घृतप्राशनं पुनः संस्कारश्च मद्यत्वेनैव निषेधात् ।

---

**ख पाठः—**

(1) यदि (2) मांसानि परि० (3) सथा सर्वाः

**मुद्रित पाठः—**

A- कृत्यकल्प० नियत० ३५९ B– कृत्यकल्प० नियत० ३६०

C= यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः

'त्रिविधा सुरे'ति तयोरपि ब्राह्मणं प्रति सुरापानसमानदोषत्वेन सुराशब्दस्य गौणत्वात् । गौणत्वं च गौडीमाध्वीप्रभृत्येकादशमद्यगणनोत्तरं तु—

"द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम् ।"

इति पुलस्त्येन पैष्ट्यामेव सुराशब्दप्रयोगात् ।

गौतमः (१-२-२५)-

"मद्यं नित्यं [1]ब्राह्मणः ।"

तेनानुपनीतस्यापि मद्यमात्रनिषेधः, जातिपुरस्कारेण निषेधात् ।

मनुः (११-९६.९७)-

"अमेध्ये वा [2]पतेन्मत्तो वैदिकं वाप्युदाहरेत् ।
अकार्यमन्यत्कुर्या[A]च्च ब्राह्मणो मदमोहितः ॥
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ।
तस्य व्यपैति ब्राह्मण्यं [B]स शूद्रत्वं नियच्छति ॥"

एतेन जातिफलादेर[3]प्यधिकभक्षणे मादकत्वान्मद्यप्रायश्चित्तम् । शक्राशनमफेनं च मादकत्वादस्मद्देशशिष्टविगीतम् ।

मद्यभेदानाह वसिष्ठः[C]—

"माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसम् ।
मृद्वीकारसमाध्वीके मैरेयं नारिकेलकम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वा त्वेतानि दुष्यतः ॥"

---

ख पाठः—

(1) ब्राह्मणस्य (2) पतेन्मन्त्रो (3) ०रधिकभक्षणे

मुद्रित पाठः—

A- कुर्याद्वा B शूद्रत्वं च स गच्छति

C- वासिष्ठे नास्ति । कल्पतरावेतत् विष्णुनाम्ना पठितम् - नियत० ३२२ (विष्णुस्मृ० २२/८३.८४) तत्र स्पृष्ट्वैतानि न दुष्यत इति ।

[1]पौलस्त्येनाधिकं तालवृक्षोत्थमेकं प्रदर्श्यैकादशेत्युक्तम्। मधूकम् – मधूक-पुष्पोद्भवम्। इक्षुरसभवमैक्षवम्। [A]टङ्कः - कपित्थसदृशः काश्मीरे प्रसिद्धः। तद्भवं टाङ्कम्। कौलम् – कोलिफलजम्। खार्जूरम् - खर्जूरवृक्षजं तत्फलजं च। एवं पानसम्। मृद्वीका - द्राक्षा, तद्भवन्। माध्वीकं - मधुसंधानजम्। [B]मैरेयम् - धातुकीपुष्पधान्यसहितमिति शब्दार्णवे वाचस्पतिः। एतेषां जात्यैव मद्यत्वादल्पमप्यभक्ष्यम्। एवं "न मांसभक्षणे दोषो न मद्ये" इति क्षत्रियवैश्यविषयं मद्यस्य निर्दोषत्वम्।

एवं—

"मैत्रायण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम्"

इति बृहस्पतिवचनमपि क्षत्रियवैश्यविषयम्। एतेषामबुद्धिपूर्वकपाने गौतमो-क्तस्तप्तकृच्छ्रपूर्वकः पुनः संस्कारः। कामतो द्वैगुण्यमिति।

इति जातिदुष्टान्यभक्ष्याणि

—*—

## अथ क्रियादुष्टानि

[C]भविष्यपुराणे—

"न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक्।"

**वसिष्ठः (१४-२०,२२)–**

"उच्छिष्टमगुरोरभोज्यम्।

---

**ख पाठः—**

(1) पौलस्त्येनापि तालवृक्षोद्भवं

**मुद्रित पाठः—**

A- टङ्कः – कपित्थविशेष इति कल्पतरौ नियत० ३३२

B- मैरेयं धातुपुष्पं गुडधान्याम्बुसहितमिति शब्दार्णवे वाचस्पतिरिति कल्पतरौ नियत० ३३३

C- कृत्यकल्प० नियत० २७६

[A]उच्छिष्टमुच्छिष्टोपहतं वसनकीटोपहतं च ।"

अगुरोः उच्छिष्टमित्यत्र गुरुपदं

"[B]पितुर्ज्येष्ठस्य भ्रातुरुच्छिष्टं भोज्यम् ।
[1]धर्मविप्रतिपत्तावभोज्य ॥"

मित्यापस्तम्ब(१-१-४-११.१२)वचनात् पितृज्येष्ठभ्रातृपरम्। तद्भिन्नगुरोरभ्युच्छिष्टमभोज्यमेव । तयोरपि धर्मविप्रतिपत्त्या धार्मिकत्वेन भोज्यम् ।

यत्तु ब्रह्मपुराणे—

"मातापित्रोरथोच्छिष्टं बालो भुञ्जन् भवेत् सुखी ।"

अनुपनीतस्यान्योच्छिष्टभक्षणेऽपि दोषाभावात् । अत्र बालपदं पुत्रमात्रोपलक्षणम्। अर्वाक् षोडशवर्षाद् बाल इति परं वा । पादो बालेषु दातव्यमिति प्रायश्चित्तह्रासात् । स्वमुच्छिष्टं भुक्त्वा त्यक्तमन्नं त्यक्तपात्रस्थम्। उच्छिष्टोपहतम् – [2]स्वोच्छिष्टेन कालान्तरीयेण मिश्रितम् । एवं वसनोपहतम् – परिहितवस्त्र प्रान्तस्पृष्टम् ।

शङ्खः—

"शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः ।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथा द्विकम् ॥"

श्वोच्छिष्टाशने चान्द्रायणम् ।

---

ख पाठः—

(1) धर्मविप्रतिपत्तावधार्मिकत्वे (2) कालान्तरीयेण स्वोच्छिष्टेन

मुद्रित पाठः—

A- स्वमुच्छिष्टमुच्छिष्टोपहतं । यदशनं केशकीटोपहतं च ॥ वसिष्ठः

B- "पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ।" धर्मविप्रतिपत्तावभोज्यम् ।
आप० धर्म० १-१-४-११·१२
"पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यम्" मिताक्षरा पाठः ३–२८९

मनुः (११-१५९)–

"बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद् [A]ब्राह्मीं सुवर्चलाम् ।।"

कश्यपः–

"गर्द्भोष्ट्राश्वोच्छिष्टभोजने त्रिरात्रम् ।"

[B]विष्णुः (५१-४७)–

"गोरुच्छिष्टप्राशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत् ।"

शङ्खः (१७-४६)–

"काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत् ।"

उशनाः–

"विड्वराहगृध्रश्येनकुक्कुटरासभकङ्कबकमृगाणा-
मुच्छिष्टप्राशने तप्तकृच्छ्रम् ।"

आपस्तम्बः–

"अन्त्यानां भुक्तशेषान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धं च ब्रह्मक्षत्रविशां विधिः ।।"

अङ्गिराः–

"चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ।।
षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः ।।"

षट्त्रिंशन्मते–

"दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहतं च यत् ।
[C]अभ्यङ्गस्य तथोच्छिष्टं भुक्त्वा नक्तेन शुध्यति ।।"

---

मुद्रित पाठः–

A- ब्रह्म सुव० B- "श्वोच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत्"
C- अभ्यङ्गाच्चैव यच्छिष्टं- धर्मशास्त्रशब्दकोष (पृ-३५४), मिता० (३-२८९)

वृद्धशातातपः—

"पीतशेषं तु यत्तोयं भोजने मुखनिःसृतम् ।
अभोज्यं तद् द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥"

सुमन्तुः—

"क्षुद्वचोऽभिहतं श्वभिराघ्रातं प्रेक्षितं चान्नमभोज्यमन्यत्र हिरण्योदकैः [1]स्पृष्ट्वा ।"

यस्यान्नस्य निकटे क्षुतं कृतं यस्य वा निकटे वचनमुच्चरितं तत् क्षुद्वचोऽभिहतम् । प्रेक्षितं श्वभिरेव । एतेषूपघातेषु हिरण्यमिश्रजलसेकः शोधकः । तदकृत्वा भोजने गायत्र्यष्टसहस्रजपः ।

मनुः (४-२०७, २०८)—

"मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।
केशकीटावपन्नञ्च पदा स्पृष्टं च कामतः ॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥"

याज्ञवल्क्यः (१-१६८)—

"उदक्या स्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।"

संघुष्टम्— "क्षुधार्थिनः के सन्ति मद्गृहे भुञ्जताम्"

इति [2]घोषणेन दत्तम्—

पर्यायान्नम्—

"[A]ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्"

इत्यादिरूपम् ।

---

**ख पाठः**—

(1) स्पर्शात् (2) घोषेण

**मुद्रित पाठः**—

A-"द्वयमेतदभोज्यं स्याद् भुक्त्वाचोपवसेदहः" मिताक्षरायाम् इत्युत्तरार्द्धम् ३-२८९

[A]तथा—

"अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥"

यमः—

"[B]काककुक्कुटसंसृष्टमभोज्यम् ।"

आपस्तम्बः[C] (१-५-१६-२१)—

"अप्रयतोपहतमन्नमप्रयतं नत्वभोज्यम् ।"

अग्न्यावधिश्रयणादिना शुद्धं कृत्वा भोज्यं भवति । एतच्चाप्रयतब्राह्मणादि-स्पृष्टविषयम् । तथा प्रयतेन शूद्रेण स्पृष्टमभोज्यम् । सर्वथाऽभोज्यमित्यर्थः । तथा नद्यो भिः समानपङ्क्त्या अभोज्यमित्यर्थः ।

भुञ्जानेषु अपि [1]कश्चिदनुत्थायान्नं प्रयच्छेत् । एकपङ्क्तौ कश्चित् स्वान्नं यदि भृत्यादिभ्यो दद्यादितरेषामन्नमभोज्यम् । तथा भुञ्जानेषु अर्धभुक्तेषु कश्चिदाचामेत्तदन्येषामन्नमभोज्यम् । तथा कुत्सयित्वा यदन्नं दत्तम् - विषं भुङ्क्ष्वेत्यादिना । तथा मनुष्यैरवघ्रातं प्रयत्नादित्यर्थः । तथाऽमेध्यैरवघ्रातम् - गर्दभादिभिरित्यर्थः ।

"न[D] रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया ।

---

ख पाठः—

(1) कश्चिदुत्थायान्न

मुद्रित पाठः—

A- कृत्यकल्प० नियत० २५५, तत्र भविष्यवचनम् ।

B- "काककुक्कुटसंस्पृष्टं शुक्तं वा कृमिसंयुतम् ।
अभोज्यं तद् विजानीयाद् धर्मराजवचो यथा ॥" इति कल्पतरौ पूर्णपाठः नियत० २८६

C- "अप्रयतेन तु शूद्रेणोपहतमभोज्यम्" आप० धर्म० १ ५-१६ २२

D- इदं हारीतनाम्ना पठितं – कृत्यकल्प० नियत० २८९
तत्र नापरया द्वारा दापितम् ।

**न मलवद्वा[1]ससा न[2] परया द्वारा यद्दत्तम् ।**

**न द्विः पक्वम् ।"**

मलवद्[3]वासाः - अमेध्यवस्त्रा । परस्वामिकमप्यन्नं ताभिर्दत्तमभोज्यम् । अपरद्वारं च अतिथि[4]भोजनप्रधानद्वारं विना द्वारान्तरम् । द्विःपक्वम् - सिद्धमेवान्नं यदि पुनः पच्यते दोषत्यागाय । यत्तु धान्यं स्विन्नं तत् शोषणेन धान्यमेव जातम् । [5]तस्य स्विन्नता धान्यगुणसंपादनार्था न त्वोदनार्था । तेन तण्डुलदशायामेवान्नार्थपाक इति न द्विःपक्वता । एव मरीचहरिद्रादावपि । अतएवावर्त्तितदुग्धस्य पुनः कालान्तरेण श्रपणे द्विःपक्वता । पूर्वपाकेन दुग्धस्य सिद्धता (त्वात्) । आमिक्षादशायां तु तस्य पुनः पाकेऽपि पूर्वपाकस्यामिक्षासाधकस्य तद्विकारलड्डुकादिसाधकत्वा-भावात् न लड्डुकादेः द्विपक्वता ।

**गौतमः (२-८-१६)—**

**"वृथान्नाचमनोत्थानव्यपेतानि[6] ।"**

वृथान्नम् - स्वार्थमात्रपक्वम् । उत्थानव्यपेतम् - यत्रार्धभुक्ते उत्थानम् । एवमर्धभुक्ते यत्राचमनम् । तदूर्ध्वमन्नमभोज्यम् ।

**आपस्तम्बः (१-५-१७-१४.१५)—**

**"नापणीयमन्नमश्नीयात्तथा रसानाममांस-**

**मधुलवणानि [A]परिहाय ।"**

---

**ख पाठः-—**

(1) वाससा (2) नापरद्वारेण दत्तम् (3) वाससा - अमेध्यादिलिप्तवस्त्रया (4) भोजनादि प्रधान० (5) तस्मात् (6) "उत्सृष्टमन्यस्वामिकम्" इत्यधिकम् ।

**मुद्रित पाठः—**

A- परिहाप्य - आप० धर्म०

**शङ्खलिखितौ—**

"[A]भीतरुदितक्रन्दित क्षुदवधूतान्नानि वर्जयेत् ।"

रुदितः - साश्रुः । क्रन्दितः - उच्चैः क्रन्दनवान् । क्षुत् · छिक्कावान् ।
अवधूतः - साधुत्यक्तः ।

**पराशरः[B] (११-८)—**

"एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने ।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत् ॥"

**क्रतुः—**

"यस्तु भुङ्क्ते द्विजः पङ्क्त्यामुच्छिष्टान्नं कदाचन ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥"

ब्रह्म[C]पुराणे—

"शूद्रभुक्तावशिष्टं तु नाद्याद् भाण्डस्थितं त्वपि ।"

मार्कण्डेयपुराणे—

"भिन्नभाण्डगतं तद्वन्मुखवातो[D]पशामितम् ।
[1]उच्छिष्टपक्वमस्विन्नमवलीढमसंस्कृतम् ।"

---

**ख पाठः—**

(1) उच्छूष्म। पक्व०

**मुद्रित पाठः—**

A- "भीतरुदिताक्रन्दितावक्रुष्टक्षुतपरिभुक्तविस्मितोन्दन्तावधूतराजपुरोहितान्नानि वर्जयेत्" कृत्यकल्प० नियत० २६६

B- शङ्खवचनमिति प्रायश्चित्तविवेके पृ - ३७६

C- कृत्यकल्प० नियत० २९४

D- ०पमार्जितम् । तदुष्मपक्वमस्विन्न - कृत्यकल्प० नियत० २९४

आपस्तम्बः[A] (१-६-१६-१)—

"ऋणिकः प्रत्युपविष्टो यश्चानशनन् प्रतिवेशयते
तावन्तं कालम् ।"

उत्तमर्णो यदि धनग्रहणार्थमनश्नन्नुपविशति तावत् कालं द्वयोरन्नमभोज्यम् ।

भविष्यपुराणे—

"आयसेन तु पात्रेण यदन्न[B]मुपदीयते ।
भोक्ता विष्टासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥"

पुनर्ब्राह्मे[C]—

"उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः ।
द्रव्यहस्तस्तु यत् किञ्चित् [1]दद्याच्चैतन्न भक्षयेत् ॥
एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ।
घृतं तैलं च लवणं पानीयं पायसं तथा ॥
भिक्षा च हस्तदत्ता [2]या न ग्राह्या कुत्रचित् क्वचित् ।

पराशरः[D]—

"माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् ।

---

ख पाठः—

(1) दद्यात्तच्च न भक्षयेत् (2) च

मुद्रित पाठः—

A- "मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥" आप० धर्म० १-६-१९-१

B- ०मुपनीयते - कृत्यकल्प० नियत० २९४, यदन्नं तु प्रदीयते इति प्रायश्चित्तविवेक पृ - ३५१

C- कृत्यकल्प० नियत० २९३–२९४

D- "माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् ।
हस्तदत्तानि भुक्त्वा च दत्त्वा सान्तपनं चरेत् ॥" यमवचनमिति कृत्यकल्प० नियत० १७९ प्रायश्चित्तविवेके - ३५१
पराशरवचनमिति मिताक्षरायाम् ३-२८९ – पाराशरे तु नास्ति

[1]हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम् ॥"

क्रतुः—

"शूद्रहस्ते तु यो भुङ्क्ते पानीयं [2]वापि चेद् द्विजः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥"

भविष्ये—

"[A]उपक्षेपणधर्मेण शूद्रान्नं यः पचेन्नरः ।
अभोज्यं तद् भवेदन्नं स च शूद्रपुरोहितः ॥

उपक्षेपणधर्मः - शूद्रसम्बन्धे सत्येव ब्राह्मणगृहे पाकः शूद्रस्य कार्यार्थम् ।

ब्राह्मे—

"का क्रियास्मिन्निदं कस्य दीयते किमनेन वा ।
इत्युक्त्वा दीयते यच्च तन्नाद्यं विस्मयान्वितम् ।
भक्ष्यं त्वभक्ष्यवाक्येन दत्तं नाद्यं कथञ्चन ।"

[B]मानवे (४-२१२)- "पर्याचान्त"

मन्नमभोज्यम् । पर्याचान्तम् - यस्यान्नस्य सन्निधावाचमनं कृतम् ।

अत्रानुक्तप्रायश्चित्तेषु क्रियादुष्टेषु गायत्र्यष्टसहस्रजपः ।

गुरुदोषे तु व्यासः[C]—

"संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः ।

---

ख पाठः— (1) हस्तदत्तं हि भुक्त्वा तु दिनमेकं व्रती भवेत् (2) वा पिबेद् द्विजः

मुद्रित पाठः—

A- उपक्षेपणधर्मेण शूद्रान्नं यः पचेद् द्विजः ।
अभोज्यं तद् भवेदन्नं स च विप्रः पुरोहितः ॥ कृत्यकल्प० नियत० २५५

B- 'उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ।"

C- मिताक्षरा ३-२८९, प्रायश्चित्तविवेके पृ - ३५६

भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् ॥"

शङ्खः[A]—

"ऋजीषपक्वं भुक्त्वा तु त्रिरात्रं तु व्रती भवेत् ।"

ऋजीषपक्वं च—

"[B]भूमावन्तर्गतं कृत्वा [1]मृत्तिकासहितं च यत् ।
पक्वमांसमृजीषं च प्रयत्नात्तन्न भक्षयेत् ॥"

इति ब्रह्मपुराणात् [2]भौमोष्मपक्वमात्रमभक्ष्यम् । मांसं तु विशेषेण । कर्काचार्यैस्तु भूमौ गर्ते पक्वमिति व्याख्यानात् गर्ते धूमपक्वमपि ऋजीष[3]पक्वमुक्तम् । आहिताग्नेरस्य पृथक् निषेधः प्रायश्चित्तविशेषार्थः ।

यमः— "प्रेतान्नं सूतिकान्नं च द्वादशाहं यवान् पिबेत् ।"

प्रेतान्नम् - प्रेतमुद्दिश्य शुचिनापि दत्तम् । सूतिकामुद्दिश्यपक्वं सूतिकान्नम् ।

धौम्यः[C]— "ब्रह्मोदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥"

ब्रह्मोदनम् - आधानाङ्गभूतं चतुष्प्राश्यम् । [4]अत्र चत्वार ऋत्विजः प्राश्नन्तीति विधिः । सोमे - अग्नीषोमीयपर्यन्तम् । अग्नीषोमीय[5]संस्थायां

---

ख पाठः—

(1) मृत्तिकाच्छादितं च यत् (2) भौमेषु पक्वं द्रव्यमात्रमशुद्धम्
(3) ०पक्वमित्युक्तम् (4) तत्र (5) ०संस्थिते

मुद्रित पाठः—

A- प्रायश्चित्तविवेक • पृ - ३३७

B- भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितं च यत्- कृत्यकल्प० नियत० ३०५
"भूमेरन्तर्गतं कृत्वामृद्भिश्चाच्छादित च यत् ‥ … न तु भक्षयेत्"
केशववैजयन्ती ५१-२७

C- मिताक्षरायां "द्विजश्चान्द्रायणं चरेत्" ३-२८९
आपस्तम्ववचनमिति प्रायश्चित्तविवेके पृ - ३६२

यजमानस्य गृहे [1]भोक्तव्यमिति श्रुतेः ।

"क्रीतराजको भोज्यान्न"

इत्याथर्वणश्रुतिरापद्विषया ।

"यज्ञार्थे वा निर्दिष्टे (शेषाद्) भोक्तव्यमि"

त्यापस्तम्बः[A] । (१-६-१८-२६)

यज्ञार्थं यावद्द्रव्यमपेक्षितं तावद्द्रव्ये पृथक्कृते[2]ऽवशिष्टाद् दीक्षितान्नं भोक्तव्यमित्यर्थः । एतदप्यापद्विषयमेव ।

[3]भरद्वाजः—

"अतिथौ तिष्ठति द्वारि ह्यपः प्राश्नन्ति ये द्विजाः ।
रुधिरं तद् भवेद् वारि पीत्वा चान्द्रायणं चरेत् ।"

एवं श्राद्धद्रव्यमपि क्रियादुष्टम् ।

विष्णुः[B]—

"प्राजापत्यं नवश्राद्धे पादोनं चार्धमासिके ।
त्रैपक्षिके तदर्धं तु पादोनं चार्धमासिके ॥

षट्त्रिंशन्मते—

"पादोनं कृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके ।

---

ख पाठः—

(1) अशितव्यमिति (2) ०वशिष्टान्नं दीक्षितान्नं तन्न भोक्त०
(3) भारद्वाजः

मुद्रित पाठः—

A-दीक्षितोऽक्रीतराजकः ॥ २३ ॥ अग्नीषोमीयसंस्थायामेव ॥ २४ ॥ हुतायां वपायां दीक्षितस्य भोक्तव्यम्, ॥ २५ ॥ यज्ञार्थे वा निर्दिष्टे शेषाद् भुञ्जीरन्निति हि ब्राह्मणम् ॥ आप० धर्म० १-६-१८-२६

B विष्णुस्मृतौ नास्ति । मिताक्षरायां तु "पादोनं चार्धमासिके त्रैपक्षिके तदर्द्धं स्यात् पादो द्वैमासिके तथा ३-२८९

त्रिरात्रं चान्यमासे तु प्रत्यब्दे चेदहः स्मृतम् ॥"

भरद्वाजः—

"भुक्त्वा तु पार्वणे श्राद्धे प्राणायामान् षडाचरेत् ।
उपवासस्त्रिमासादिवत्सरान्ते प्रकीर्त्तितः ॥
प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने ।
द्विगुणं क्षत्रियश्राद्धे त्रिगुणं वैश्यभोजने ॥
साक्षाच्चतुर्गुणं ह्येतत् स्मृतं शूद्रस्य भोजने ॥"

उशनाः[A]–

"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः ।
ततः सन्ध्यामुपासीत शुध्यति तदनन्तरम् ॥"

इत्यनुक्तप्रायश्चित्तश्राद्धविषयम् ।

षट्त्रिंशन्मते—

"आमश्राद्धे भवेदर्धं प्राजापत्यं च सर्वदा ।"

प्राजापत्यपदमुपलक्षणम् । पक्वश्राद्धे यत् प्रायश्चित्तं तत्स्थानापन्नामश्राद्धे तस्यार्धं स्यादित्यर्थः ।

ब्राह्मे—

"योगो मघात्रयोदश्योः कुञ्जरछाय[1]संज्ञकः ।
भवेन्मघासंस्थिते च शशिन्यर्के करे स्थिते ॥
सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा चान्द्रायणं चरेत् ॥"

---

ख पाठः—

(1) ०संज्ञितः

मुद्रितपाठः—

A- "पिबेच्चापो" "शुद्ध्येत्तु" इति मिताक्षरा पाठः ३-२८९

अत्र पूर्वनिर्दिष्टगजच्छायायोगे चन्द्रसूर्योपरागे च [1]यच्छ्राद्धं तत्राभोजनमित्यर्थः । [2]पूर्वनिर्देशभोजनस्यानन्यार्थत्वात् । कुञ्जरस्य च्छायेत्यपि पदद्वयं योगवाचकमेव । गवामयनादि[3]पदसमस्तस्यापि नामत्वात् । व्यत्ययनिर्देशस्तु च्छान्दसः ।

अङ्गिराः[A]–

"जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः ॥"

अन्नस्य भोजने - कर्माङ्गब्राह्मणभोजने । सपिण्डानां भोजने न दोषः । श्मशानान्ते–पितृमेधकर्मणि ।

तथा[B] –

"निवृत्ते चूडहोमे तु प्राङ्नामकरणात्तथा ।
चरेत् सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥
ततोऽन्यत्र तु संस्कारे उपवासः प्रकीर्त्तितः ॥"

मनुः (४-२०५)–

"नाश्रोत्रियतते यज्ञे ग्रामयाजितते तथा ।
स्त्रिया क्लीबेन च [4]हुते भुञ्जीत ब्राह्मणः क्वचित् ।।"

अश्रोत्रियतते - अश्रोत्रियार्त्त्विज्ये । एवं [5]ग्रामार्त्त्विज्ये । स्त्रिया क्लीबेन वैश्वदेवे कृते तद्गृहे न भोक्तव्यम् ।

---

ख पाठः–

(1) च श्राद्धं, तत्र न भोक्तृत्वमित्यर्थः (2) पूर्वयोगनिर्देशस्यानन्यार्थत्वात्
(3) पदवदसमस्त (4) कृते (5) ग्रामर्त्त्विजि

मुद्रित पाठः–

A- कृत्यकल्प-नियत- २६९
B- "अतोन्येषु तु भुक्त्वान्नं संस्कारेषु द्विजोत्तमः ।
नियोगादुपवासेन शुद्ध्यते निन्द्यभोजने" इति द्वितीयश्लोके विशेषः
मिताक्षरायाम् ३-२८९ प्रायश्चित्तविवेके पृ - ३६३

तथा—

"[A]समासमाभ्यां विषमं समं च दीयमानमभोज्यम्।
(गौत० ध० २-८-२०)

हारीतः—

"परमान्नकृसरशष्कुलीमांसयावका-
पूपान्नं (न) पाचये[B]दात्मार्थे।"

शष्कुली = मुद्गादिचूर्णसिद्धा सतिला स्नेहपक्वा। परमान्नं – पायसम्। याज्ञवल्कीये संयावोऽपि वृथापक्वो निषिद्धः। संयावो घृतक्षीरचूर्णसिद्ध [1]उत्करिकेति प्रसिद्धः। आत्मार्थपा[2]कमात्रनिषेधेऽप्येषां पृथङ्निषेधो दोषातिशयार्थः। अत्र याज्ञवल्क्योक्तमुपवासत्रयम्।

स्मृतिः— "[C]पीतशेषं तु पानीयं पीत्वा तु ब्राह्मणः क्वचित्।
त्रिरात्रं तु व्रतं कुर्याद् वामहस्तेन वा पुनः॥"

शूद्रपीतशेषे तु—

"शूद्रोच्छिष्टस्थिताश्चापो यदि कश्चित् पिबेद् द्विजः।
दशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥"

अतः किञ्चिदवस्राव्य पीतशेषपानेऽदोषः। तदुक्तं भट्टैः—

"द्रवद्रव्याणां पानादावुपभोक्ष्यमाणानां क्षारणं संस्कारं [3]करोति।

---

ख पाठः—

(1) उत्कलिके प्रसिद्धः (2) ०पाकसिद्धमात्रनिषेधेऽप्येतेषां पृथङ्निषेधात् दोषा० (3) कुर्यादिति

मुद्रित पाठः—

A- समासमाभ्यां विषमसमे पूजातः। गोतम० ध० २-८-२०

B- दात्मार्थस् - कृत्यकल्प० नियत० २८१

C- मिताक्षरा ३-२८९

पीतशेषं तु यत्तोयं स्वल्पं तोयं क्षितौ क्षिपेत् ।
पीतशेषं न दुष्येत्तु ब्राह्मणः पिबते पुनः ॥"

इति वाक्यं पठन्ति ।

तथा—

"चाण्डालपतितोदक्या वाक्यं श्रुत्वा द्विजोत्तमः ।
भुङ्क्ते चेद् ग्रासमात्रं तु दिनमेकमभोजनम्
पङ्क्त्यां च विषमं दद्यान्नयाचेन्न च दापयेत् ।
कृच्छ्रद्वादशरात्रेण मुच्यते कर्मणस्ततः ॥"

श्रुतिः[A]—"न हि वै स्नात्वा भिक्षेत ।"

एतदनापदि ।

"अनापदि चरेद्यस्तु सिद्धां भिक्षां गृहे वसन् ।"

इति वचनात् ।

यमः— "[B]एकाकी मिष्टमश्नाति वञ्चयित्वा सुहृत्सुतान् ।
रौरवे नरके घोरे त्ववशः पच्यते नरः ॥"

अत्र विष्णूक्तकृच्छ्रपादः ।

संवर्त्तः— "समुत्पन्ने द्विजः स्नाने भुञ्जीताथ[C] पिबेत्तथा ।
गायत्र्यष्टसहस्रं च जपेत् स्नात्वा समाहितः ॥"

स्नाने- स्नाननिमित्तेऽभ्यङ्गादावित्यभियुक्ताः ।

---

मुद्रित पाठः—

A- "न हवै पारस्करगृ० २-७-८

B- प्रायश्चित्तविवेके मनुः...
एकाकी मिष्टमश्नाति वञ्चयित्वा सुहृत्सुतान् ।
दारान् भृत्यातिथींश्चैव तथा सम्बन्धिबान्धवान् ॥
उत्सन्नपितृदेवेभ्यो पशुघाती च यो वृथा ।
लालापनरके घोरे दुर्गन्धे पात्यते नरः ॥ पृ- ३३६

C- "भुञ्जीतान्नं" प्रायश्चित्तविवेकः ३६५

शङ्खः-

"[1]नीली[A]रक्तं परिधाय भुक्त्वा स्नानार्हकस्तथा ।
त्रिरात्रं तु व्रतं कुर्याच्छित्त्वा गुल्मलतास्तथा ॥"

इति क्रियादुष्टान्यभक्ष्याणि

—०—

## अथ कालदुष्टानि

भविष्यपुराणे-

"कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसञ्चि[B]तम् ।
दधिभक्ष्यविकाराश्च मधुवर्जं तदिष्यते ॥"

ह्यस्तनम्- एकरात्र्यन्तरितमन्नादिकं पर्युषितपदाभिधेयं कालदुष्टमुच्यते । तथा [2]चिरसंस्थितम्- अनेक[3]दिनान्तरितं विकृतरसगन्धम् । तदपि कालदुष्टम् । पर्युषितदोषरहितशुक्तदोषरहितमपि दधि तादृशं चेत्तदा वर्ज्यम् । एवमन्येऽपूपादयो भक्ष्यविकाराः कालभूयस्त्वेन विकृतरसगन्धा वर्जनीयाः । मधु पुनर्न वर्जनीयमित्यर्थः ।

शङ्खः-

"[4]पर्युषितं भुक्त्वा त्रिरात्रं तु व्रती भवेत् ।"

---

खपाठः—

1- नीलं रक्तं, 2- चिरसञ्चितम्, 3- दिवसान्त०

4- पर्युषितं भोज्यं शुक्तं च परिवर्जयेत् । अपूपान् गोधूमपिष्टकान् भुक्त्वा त्रिरात्र व्रती भवेत् ।

मुद्रित पाठः-

A- नीलीवस्त्रं, प्रायश्चित्तविवेकः-३६६

B- चिरसंस्थितम्, कृत्यकल्प० नियत० २७६

याज्ञवल्क्यः- (१-१६९)

"अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

[A]यमः-

"अपूपाश्च करम्भाश्च धानावटकसक्तवः ।
शाकं मांसं च पूपश्च सूपं कृसरमेव च ।
यवागूः पायसं चैव यच्चान्यत् स्नेहसंयुतम् ॥
सर्वं पर्युषितं भोज्यं शुक्तं च परिवर्जयेत् ॥"

अपूपाः- गोधूमपिष्टकविशेषाः ॥ करम्भः- दधिमिश्राः सक्तवः ॥ धानाः- भृष्टयवाः ॥ वटकं-स्वनाम्ना प्रसिद्धम् ॥ सक्तवः- भृष्टयवचूर्णानि भृष्टधान्यचूर्णानि च, उभयत्र प्रसिद्धेः ॥ पूपाः- पूलिका इति प्रसिद्धाः ॥ कृसरः- तिलमुद्गाभ्यां सह सिद्ध ओदनः ॥ पायसम्- परमान्नम् ॥ [1]मन्थस्य सक्तुविकारत्वात् सक्तुग्रहणेन ग्रहणम् ।

[B]चरके-

"[2]सक्तवो घृतसंमिश्राः ।"

एतान्येव पर्युषितत्वेन रसान्तरमापद्यन्ते यदि तदा न [3]भक्ष्याणीत्युक्तं "शुक्तं च परिवर्जयेदि"ति । दिनान्तरे प्रायेणाम्लरसापत्ते शुक्तग्रहणम् । रसान्तरमात्रत्वेऽभक्ष्यत्वात् ।

---

ख पाठः-

1- शुक्तस्य

2- सक्तवो घृतसंमिश्राः शीतवारिपरिप्लुताः ।
नातिसान्द्रा न चात्यच्छा मन्थ इत्यभिधीयते ॥

3- भक्षणीयेति उक्तम्

मुद्रितपाठः-

A- कृत्यकल्प० नियत० २९२

B- "सक्तवो वातला रूक्षा इत्यादि पाठः चरक सूत्र २७-२६३
सुश्रुते तु "सक्तवः सर्पिषाभ्यक्ताःशीतवारिपरिप्लुता" इत्यस्ति सू-७४६-३८५

[A]शङ्खलिखितौ–

"न पर्युषितमन्यत्र [1]रागांशुककषाद्रवदधिगुडगोधूम-
यवपिष्टकविकारेभ्यः ।"

रागांशुकाः– मुद्गदाडिममांसाढ्याः [2]आशुपाचिताः (अंशुपालिताः) प्रलेहाः । [3]कषाद्रवाः स्वाद्वम्ल[4]कटुकषायकाढ्याः प्रलेहा एव ।

आपस्तम्बः[B] (१-५-१७-१९)

पर्युषित[5]वर्जमुक्त्वाह–

"फाणित[6]पृथक्तण्डुलशाकौषधिवनस्पतिफलमूलवर्जम् ।"

फाणितम्— इक्षुरसविकारः पाकजन्यः । पृथक्तण्डुलाः– भृष्टधान्य-कुट्टनिष्पादिताः चिपिटा इति प्रसिद्धाः [7]चूडा इति लोके ।

पर्युषितापवादे–

मनुः– (५-२४)

[C]"हविःशेषं च सर्वतः"

एवञ्च रात्र्यन्तरितवाजपेयहविःशेषादि ।

---

स्वपाठः–

1- रागांशुकाद्र्व 2- अंशुकपालिताः

3- आद्र्व 4- कटुप्रायवस्त्वाढ्याः लेहा 5- ०वर्ज्य० 6- ०पृथुक०

7- "चूडा इति लोके" इति नास्ति

मुद्रितपाठः—

A- न पर्युषितम् । अन्यत्र रागचुक्रूषाडवदधिगुडगोधूमयवपिष्टविकारेभ्यः ॥ कृत्यकल्प०नियत० २८९

B- फाणितपृथुकतण्डुलकरम्भभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ आप० धर्म० १-५-१७-१९

C- यद्भवेत् ।

[A]गौतम[1]:- ( २-८-१६ )

"पर्युषितमशाक[2]भक्ष्यं मांसमधु ॥"

शाकादिवर्जं पर्युषितमभक्ष्यमित्यर्थः । भक्षयेदित्यनुवृत्तौ[3]

सुमन्तुः-

"पर्युषितं पुनः सिद्धं भुक्त्वा तु त्र्यहमाचरेत्[4]

यत् पक्वं पुनः पच्यते । यत् पुनः कदलीफलादि दिनान्तरेऽर्धपक्वं दिनान्तरे पुनः पच्यते तस्य द्वितीये एव दिने पाकनिर्वाहात् न द्विःपक्वता । एवं पदामिक्षापिष्टकादिकं दिनान्तरे गुडादिना संस्क्रियते मांसादि वा प्रथमदिने ऽसिद्धावर्धपाकं दिनान्तरे पच्यते, तस्य द्वितीय एव दिने पाकस्य सम्पूर्णत्वात् न द्विःपक्वता । एतच्च यद भक्ष्यत्वेनाप्यनुज्ञातं पर्युषितं तदपि द्विःपक्वमभक्ष्यमित्युक्तम् ।

## चातुर्मास्ये निषिद्धानि

शिष्टाः पठन्ति-

"कलिङ्गानि पटोलानि बृन्ताकं सन्धितानि च ।
निष्पावान् राजमाषांश्च सुप्ते देवे तु भक्षयन् ॥
सप्तजन्मार्जितं पुण्यं दहते नात्र संशयः ॥"

कलिङ्गानि-चल्लणाफलानि, पश्चिमे कलिङ्ग[5]पदेन प्रसिद्धेः । तस्य अभक्ष्यत्वेऽपि चातुर्मास्ये दोषभूयस्त्वम् ।

---

ख पाठः-

1- गौतमः 2- ०भक्ष्यमांस 3- हारीतः

4- "पर्युषितमन्यत्रगुडपिष्टकगौरसर्षपतैलादि पक्वात् । तैलादिशब्देन सर्षपनारिकेलस्नेहादिग्रहणम् ॥ न भक्षयेदित्यनुवृत्तौ सुमन्तुः" इत्यधिकम् ।

5- पदेनैव प्रसिद्धानि

मुद्रितपाठ :-

A- 'पर्युषितमशाकभक्षस्नेहमांसमधूनि ।"

स्कन्दपुराणे—

A"यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
B नभःकृष्णाष्टमीप्राप्तौ भुञ्जते ये द्विजोत्तमाः ।
त्रैलोक्यसम्भवं पापं भजन्त्येव न संशयः ॥

तथा—

अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् ।
एकादश्यां दिवा रात्रौ नक्तं चैवान्यपर्वसु ।"

अन्यपर्वाणि- संक्रान्तिपौर्णमास्यमावास्याः । तत्र संक्रमे संक्रमोपलक्षिताहोरात्रे रात्रिभोजननिषेधः इति सम्प्रदायः । एवं तैलाभ्यङ्गमांसवर्जनकाम्योपवासादेरपि संक्रान्त्युपलक्षिताहोरात्रं कालः । अन्यत्र[1] तिथ्यवच्छिन्नरात्रिदिवसग्रहणम् । एवं पर्वसु मांसमपि कालदुष्टमेव ।

वामनपुराणे—

"जयासु मांसम् ।"

तृतीयाष्टमीत्रयोदश्यो जयाः ।

तथा—

"कुजे मांसम् ।"

कुजे- भौमवासरे ।

तथा—

"मूले मृगे भाद्रपदे च मांसम् ।"

एवमादिषु मांसभोजने स्नातकव्रतलोपादुपवासः । तथा "ग्रहणकालेऽशृतमन्नं विवर्जयेदि'ति वचनात् अन्नमात्रं कालदुष्टम् । तद्भोजने चान्द्रायणम् ।

C स्मृतिः-

"सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥"

---

ख पाठः 1- अन्यव्रते

मुद्रितपाठ -

A- बृहन्नारदीयपु २१-८ "कालदीप-६४, B- कालसारे-71
C- कालदीपः-147 । केशववैजयन्ती 68/1

[A]ब्रह्मपुराणे-

"नाश्नीयाद्थ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः ।

मुक्तयोश्च कृतस्नानः पश्चात् कुर्यात् स्ववेश्मनि ॥

विष्णुः- (६८-३)

अमु[B]क्तयोरस्तगयोर्द्दृ[C]ष्ट्वा स्नात्वा परेऽहनि ।"

ग्रस्तास्ते[2] पुनरुदयपर्यन्तमभोजनमित्यर्थः ।

शातातपः-

वनस्पतिगते सोमे परान्नं ये तु भुञ्जते ।

तेषां मासकृतो होमो दातारम[C]नुगच्छति ॥"८

वनस्पतिगते सोमे- अमावास्या[2]मध्यमभागे ।

[D]अप्सु तस्मिन्नहोरात्रे पूर्वं विशति चन्द्रमाः ।

ततो वीरुत्सु संक्रम्य प्रयात्यर्कं ततः क्रमात् ॥"

इति विष्णुवचनात् । वस्तुतः

[E]"स एताꣳ रात्रिमेतया[3] षोडश्या कलया

सर्वमिदं [4]प्राणभृदनुप्रविश्य ततः पुनर्जायते ।

तस्मादेताꣳ रात्रिं[5] प्राणभृत्प्राणान्न

विच्छिन्द्यादपि कृकलासस्य ॥

---

खपाठः-

1. 'तु' इत्यधिकम् 2. अमावास्यार्द्धभागे 3- षोडशकलया

4. प्राणभृत्सु प्रविश्य 5- प्राणभृतः

मुद्रितपाठः-

A- कृत्यकल्प-नियत-३७०

B- "अमुक्तयोरस्तंगतयोः स्नात्वा दृष्ट्वा चापरेऽह्नि ।"

C- "मधिगच्छति" कृत्यकल्प-नियत-२७४

D- ततो वीरुत्सुवसति. विष्णु पु. २-१२-९

E- सोमावास्याꣳरात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य

इति श्रुतेः रात्रिशब्दोक्तामावास्यातिथौ प्राणिषु चन्द्रप्रवेशश्रवणादमावास्यातिथिमात्रे परान्ननिषेधः[1]वृक्षच्छेदननिषेधश्च प्रतीयते । अतएव अमावास्यायामित्येव लक्ष्मीध[A]रव्याख्यापि । अत्र मासकृत[2]होमवैश्वदेवमपीति निरग्नेरपि निषेधः ।

विष्णुः– (६८-२८-३१)

"न दिवा धानाः ॥ न रात्रौ तिलसम्बन्धम् ।

न दधिसक्तु[B]कोविदारवटपिप्पलशाकम् ।"

देवलः-[C]

"दिवा दधित्थधानासु रात्रौ च दधिसक्तुषु ।

श्लेष्मातके तथा लक्ष्मीर्नित्यमेव कृतालया ॥"

ब्राह्मे –

"अपि प्रयाणसमये रात्रौ न प्राशयेद्दधि ।

मधुपर्क[3]विधानं[D] तु वर्जयित्वा तु कामतः ॥

---

ख पाठः-

1- वृक्षच्छेदादि   2- होमो वैश्वदेवहोमोऽपीति

3- प्रधानं तु

मुद्रितपाठः-

ततः प्रातर्जायते । तस्मादेताᳫं रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य,एतस्या एव देवताया अपचित्यै ।

माध्य . शत. १४।४।३।२२

A- वनस्पतिगते सोमे—अमावास्यायामित्यर्थः । कृत्यकल्प-नियत२७४

B- सक्तून् ॥३० न कोविदारवटपिप्पलशाणशाकम् ॥ ३१

C- कृत्यकल्प० नियत० २८३ । तत्र अनयोः श्लोकार्धयोर्मध्ये—

"कोविदारे च रजके तस्करे सूतके तथा"

D- "प्रदानं च० कृत्यकल्प० नियत० २९७

आपस्तम्ब :- (१-५-१६-३२)

"दास्या वा नक्तमाहृतम् ।"

अभोज्यमित्यर्थः। अत्र स्मृत्यन्तरे प्रेष्याहृतमित्यपि दासीपरम् । [1]न च उद्देश्य विशेषणत्वादविवक्षितं रात्र्याहृतमात्रं निषिद्धमिति वाच्यम् । रात्रौ रथ्याहृतस्य पृथङ्निषेधात् ॥ गृहमध्येऽपि दास्याहृतस्य निषेधपरत्वेन विनिगमनाविरहेण लिङ्गस्यापि विवक्षितत्वात् । अनुक्तप्रायश्चित्तेषु प्राणायामशतं गायत्र्यष्टसहस्रं वा ।

इति कालदुष्टान्यभक्ष्याणि

# अथाश्रयदुष्टानि

तानि भविष्यपुराणे विशिष्य नोक्तानि । जातिक्रियारसामेध्यसंसर्गभावस्वभावदोषरहितानि[2]द्रव्याणि स्वामिदोषेण दुष्टानि तानि गृह्यन्ते ।

आपस्तम्बः- (१ ६-१८-६.११)

"त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यम्[1] (६)
प्रकृत्या ब्राह्मणस्य[A]भोक्तव्यम् । कारणादभोज्यम् । (१०)
यत्राऽप्रायश्चित्तं [B]कर्म सेवते"। (११)

---

ख पाठ :-

1- न रात्रौ देशविशेषणत्वात् 2- द्रव्यस्वामि०

मुद्रित पाठ :-

A- भोक्तव्यमकारणादभोज्यम् ॥ आप० धर्म० १-६-१८-१०
कारणादभोज्यमिति कल्पतरुपाठ :। नियत-२५३

B कर्मासेवते -कृत्यकल्प-नियत-२५३

प्रकृत्या भोज्यमित्यस्य व्याख्या - यत्प्रायश्चित्तं कर्म प्रायश्चित्तव्यतिरिक्तं नित्यंनैमित्तिकं कर्म सेवते ।

"[A]राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम्,'

इति ब्रह्मपुराणात् राजान्नभोजनानुज्ञा पर्वविषया । वैश्वस्य गोमङ्गलविषया ।

ब्रह्मपुराणे "गोभूमिरत्नलाभार्थं सच्छूद्रस्य गृहे सदा ।"

इति प्रीतिदायेन गवादिलाभकाम्यया शूद्रस्यामान्नं ग्राह्यम् ।

मनुः- (४-२२३)

"नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्माद्वृत्तावेकरात्रिकम् ।।"

अश्राद्धिनः- नित्यश्राद्धमकुर्वतः, अश्राद्धिन इति उद्देश्यविशेषणत्वादविवक्षितम् । श्राद्धिनोऽपि पक्वान्नमनापद्यग्राह्यमेव । अवृतौ-आपदि ।

यमहारीतजमदग्निपैठीनसयः-

"[B]ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च ।
तां तां योनिं व्रजेद्विप्रो भुक्त्वान्नं यस्य वै मृतः ।।"

शूद्रान्नं भुक्त्वा मरणे हारी[C]तः-

"स वै खरत्वमुष्ट्रत्वमश्वत्वं चाधिगच्छति ।"

वसिष्ठः- (६-२९.३०)

"शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ।
जुह्वद्वापि जपन् वापि [D]गतिं पूर्वां न गच्छति ।। (२९)
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत् ।।(३०)

---

मुद्रितपाठः-

A- कल्पतरौ "तथा" इति पाठः । नियत-२५३

B- कृत्यकल्प० नियत० २५२

C- शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वं चोपगच्छति ।। कृत्यकल्प० नियत० २५४

D- गतिमूर्ध्वां- वासिष्ठधर्मशास्त्रे । कृत्यकल्प० नियत०२५४

वक्ष्यमाणदासगोपालादिप्रशस्तशूद्राणा[1]मप्यन्नभोजने मरणे, [2]शूद्रत्वादि-कमिति मरणसन्निधाने [3]तदपि वर्जनीयम्।

[A]अङ्गिराः–

"षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाऽभिजायते॥"

प्रशस्तशूद्रस्यापि[5]षण्मासंसेवने शूद्रसाम्येन ब्राह्मणाधिकारिककाम्यकर्माधि-कारा भावः।

[B]हारीत:–

"कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्तवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्।"

कन्दुपक्वेन अग्निस्थानवाचिनाग्निर्लक्ष्यते। तेन बाह्यजलनिरपेक्षाग्नि-मात्रेण पक्वं लाजादि कदल्यादि च कन्दुपक्वमुच्यते। एवं बाह्यजलनैरपेक्षेण केवलघृतादिस्नेहपक्वं स्नेहपक्वमुच्यते। निरपेक्षे समासोत्पत्तेः (?)

[C]अङ्गिराः-

"गोरसं चैव सक्तुं च तैलं पिण्याकमेव च।
अपूपान् भक्षयेच्छूद्राद् यच्चान्यत् पयसा कृतम्॥"

अपूपः—गोधूमविकारः। एवं च गोधूमविकारपक्वस्य शूद्रगृहाद् ग्राह्य-त्वोक्तावपि समाचारविरोधात् वर्जनीयम्। शूद्रगृहादपक्वद्रव्यपरिग्रहस्य समाचारैकप्रमाणत्वात् उक्त[6]वाक्योपात्तेष्वपि विगानदर्शनात्।

खपाठः-

1- मप्यामान्न 2-शूद्रत्वस्यावश्यंभावित्वात् मरण० 3 तद वर्जं
4- तु 5- षण्मासान्नसेवने 6. वाक्योपपत्तावपि

मुद्रितपाठः-

A. कृत्यकल्प० नियत० २५५
B- कृत्यकल्प० नियत० २५८
C- कृत्यकल्प० नियत० २५८

एवं-

A"गोरसे कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालतरेषु च ॥

इत्यशौचाप[1]वादेऽपि यथाचारं गृह्यते । अतएव हरिद्रागोरसधान्यानां स्विन्नानामपि शूद्रस्पर्शे परिग्रहः समाचारमूल एव । एतेषु[2] पाकदोषरहितत्वेप्य न्नत्वाविशेषात् शूद्रसम्बन्धित्वान्मरणकाले वर्जनम् ।

यत्तु[B]

"यथा यतस्ततोऽप्यापः शुद्धिं यान्ति नदीं गताः ।
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तत्तथा शुचि ।"

इत्यङ्गिरोवचनं शूद्रात्[3] प्रतिग्रहलब्धविषयम् ।

तथा च [C]पराशरः -

"तावद् भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजातिकरसंलग्नं सर्वं तन्न विरुध्यते ।"

यमः -

"यथा जलं निर्गमनेष्वपेयं
नदीगतं तत् पुनरेव पेयम् ।
तथान्नपानं विधिपूर्वमागतं
द्विजातिहस्ता[D]न्तरितं विशुद्धम् ।"

---

खपाठः

1- ० वादोऽपि  2- एतेषां  3- शूद्रप्रतिग्रह

मुद्रितपाठः

A- गोकुले कन्दु, धर्मशास्त्रशब्दकोषः १६५
B-कृत्यकल्प नियत० २५६, अत्र "प्रविष्टं च सदा शुचि" इति चतुर्थपादपाठः ।
C-पात्रान्तरितं न दुष्यति । कृत्यकल्प-नियत-२५८
D.तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजाग्रकरसंस्पृष्टं सर्वं तद्धविरुच्यते ॥ कृत्यकल्प० नियत० २५८
पराशरस्मृतौ तु नास्ति ।

एतेन "ब्राह्मणं भोजयामी"ति बुध्या यदि शूद्र आमान्नं ददाति तद यदि पक्त्वा ब्राह्मणो भुङ्क्ते तदा शूद्रान्नभोजनम्। तदेव मरणकाले गर्हितम्। आमद्रव्यं दानविधिना चेद्ददाति तद यदि[1]पक्त्वा भुङ्क्ते तदा प्रतिग्रहदोष एव, न तु शूद्रान्नभोजित्वदोषः। प्रतिग्रहलब्धं भुक्त्वा मरणेऽपि न शूद्रजन्मलाभ इति [A]लक्ष्मीधरस्वरसः।

**याज्ञवल्क्य :- (१-१६६)**

**"शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः।**
**भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्॥"[2]**

कुलमित्रं-पितृपितामहक्रमेण यस्य गृहे मैत्री। अर्धसीरी-मिलित्वा कर्षकः। आत्मनिवेदनं-स्वगुणदोषकथनपूर्वकं धनादानादिनात्मसमर्पणम्। देवलेन कुम्भकारोऽप्युक्तः सोऽपि स्वकीयः। वक्ष्यमाणनिषेधः परकीयस्य। गौतमेन[B] शूद्रो वणिग् भोज्यान्न उक्तः।

शूद्रान्नाधिकारे आपस्तम्बः १-६-१८-७.८

**"नात्य[C]न्त[3]मवस्येत्। (७) वृत्तिं प्राप्योपरमेत्॥"(८)**

---

**खपाठः-**

1- पक्त्वा अन्नं भुङ्क्ते

2- 'दासः स्वकीयः, गोपालः स्वस्य गां पालयति'' इत्यधिकम्

3- ०मन्ववस्येत्

**मुद्रितपाठः-**

A- "यत्तु - यथा यतस्ततोप्यापः शुद्धिं यान्ति नदीं गताः। शूद्राद् विप्रगृहेऽन्नं प्रविष्टं च सदा शुचि॥ इत्यङ्गिरोवचनं तत् शूद्राद् ब्राह्मणेन प्रतिग्रहादिना यल्लब्धमन्नं तद्विषयम्।" अस्मादेव लक्ष्मीधरस्य स्वरसो लभ्यते।

B- पशुपालक्षेत्रकर्षककुलसंगतकारयितृपरिचारका भोज्यान्नाः। ६। वणिक्चाशिल्पी॥ गौतम-ध २।८।७

C- ० न्तमन्ववस्येत्

आसक्तो न स्यादित्यर्थः ।

"आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्त्तते ।
पञ्च तस्य[1] प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥

पराशरः- (११।१६)

"आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
[A]तत्पापस्य विशुद्ध्यर्थं द्रुपदायाः शतं जपेत् ॥"

अनापदि सहस्रम् । आहिताग्नेः-वैश्वानरी ।

शङ्खः-

"[B]यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥"

तदन्नभोजने स एवाह –

"प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यति ।"

अङ्गिराः-

"शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत्
क्षत्रियस्य च द्वौ मासौ त्रीन् मासांश्च तथा विशः ॥
ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत् ।

[C]तथा-

ब्रह्मक्षत्रविशां भुक्त्वा न दोषश्चाग्निहोत्रिणाम् ।
सूतके शाव आशौचे त्वस्थिसञ्चयनात् परम् ॥

---

खपाठ :-

1- विनश्यन्ति

मुद्रितपाठ :-

A- "मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्
B- योऽगृहीत्वा - कृत्यकल्प० नियत० २६९
C- केशववैजयन्ती- (२२-७)

[A]अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।

भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ॥

अन्नसत्रम्- अन्नदानम् । अग्निहोत्रिणामन्नदानशीलानां पञ्चमदिनप्रभृति आमान्नग्रहणे न दोषः । पक्वान्नभोजने त्रिरात्रमित्यर्थः ।

अज्ञात्वा भोजने पराशरः- (११-१६-१७)

"गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके ।

[B]विशः पञ्चशतेनैव क्षत्रियस्य शतेन च ॥

ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुद्ध्यति ॥"

अत्र दातुरज्ञाने भोक्तुर्ज्ञाने भोक्तुरज्ञाने वा दातुर्ज्ञाने । द्वयोरज्ञाने दोषाभावात् ।

विष्णुः- (२२-८-९)

"ब्राह्मणादीनामशौचे यः [1C]सकृदेवान्नमश्नाति तावदशौचम्

[2]अशौचोपरमे प्रायश्चित्तम् ।"

अङ्गिराः- [D]"अन्त्यावसायिनामन्नमश्नीयाद् यदि मानवः ।

यतिचान्द्रायणं कुर्याच्चान्द्रायणमथापि वा ॥

चाण्डालः [3]श्वक्षदः क्षत्ता सूतवैदेहकौ तथा ।

मागधायोगवौ चैव [4]सर्वे तेऽन्त्यावसायिनः ॥'

---

ख पाठः-

1- सकृदेवाश्नाति 2- अशौचापगमे ३- यैबसः 4- सर्वे अन्त्यावसायिनः

मुद्रितपाठः-

A- केशववैजयन्ती-(२२/५०), कालसार (पृ-२२१)

B- वैश्यः पञ्चसहस्रेण त्रिसहस्रेण क्षत्रियः ।

C- सकृदेवान्नमत्ति तस्य तावदशौचं यावत्तेषाम् ॥8॥ अशौचापगमे प्रायश्चित्तं कुर्यात् ॥9॥

D- अन्त्यावसायिनामन्नमश्नीयादयस्तु कामतः । सतु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा ॥ चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्त तेऽन्त्यावसायिनः ॥ केशववैजयन्ती (५१-५७-५८)

विष्णुः- (५१-५७-५८)

"चाण्डालान्नं भुक्त्वा [A] त्रिरात्रम् । सिद्धं भुक्त्वा पराकः ।

[B] वासिष्ठे पुनरुपनयनमधिकम् ।

[C] पैठीनसि :- "परिवित्तिपरिविदानविद्धप्रजननानां रुधिरमन्नम् ।"

अभोज्यमित्यर्थः ।

[D] यमः- "नटनर्त्तकतक्षाणश्चर्मकारः सुवर्णकृत ।

स्थाणुकाषण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः ॥

गान्धर्वो लोहकारश्च [1] सूचिकस्तन्तुवायकः ।

चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥

[2] [E] ध्वजमीनोपजीवी च शूद्राध्यापकयाजकौ ॥

कुलालश्चित्रकर्त्ता च वाधु [F] षिश्चर्मविक्रयी ॥"

"[3] समर्घ्यं पण्यमादाय महार्घ्यं यः प्रयच्छति ।

वृथाश्रमी वृथा दाता आश्रमाणां च भेदकः ॥

---

ख पाठ :-

1- सौचिकः 2- ध्वजमालोपजीवी च 3- समर्घपण्यमादाय महार्घं

मुद्रितपाठ :-

A- त्रिरात्रमुपवसेत् ॥ ५८ ॥

B- "योनिषु गुर्वीं सखीं गुरुसखीमपपात्रां पतितां च गत्वा कृच्छ्राब्दपादं चरेत । १६ । एतदेव चाण्डालपतितान्नभोजनेषु, ततः पुनरुपनयनं (वसिष्ठ २०-१७)

C- परिवित्तिपरिवेविदानविद्धप्रजननवृषलीपतिदिधिषूपतिपुनर्भूपुत्राणां रुधिरम् । पतितान्नं च । कृत्यकल्प० नियत० २७१

D- कृत्यकल्पनियत २६२ । नित्याचार प्रदीप-२ २९६

E- ध्वजमानोप-कृत्यकल्प०नियत० १६३

F षी च कृत्यकल्प०नियत० २६३

पुण्यस्य विक्रयी यश्च योनिसंकरजश्च यः ।
रङ्गोपजीवी कुण्डशी वीरहा गुरुगुप्तिकः ॥
[1]विष (मिश्र)कृद् गरदश्चैव निषादेन समाःस्मृताः ।"

एते[2] संकरजाताः ब्राह्मणा अप्येवं वृत्तयोऽभोज्यान्नाः ।

ब्राह्मणा अप्येवं वृत्तयोऽभोज्यान्नाः ।
"एते ब्राह्मणचाण्डाला सर्वे ब्रह्मणः किल ।"

इत्यन्तेऽभिधानात् ।

"एतेषां ब्राह्मणो भुक्त्वा प्राजापत्येन शुध्यति ।"

स्थाणुका-अभ्रातृमती स्त्री । गान्धर्वः-गायनवृत्तिः । कुलालः-परकीय । सूचिकः – सूचिकर्मोपजीवी । चक्रोपजीवी-तैलकारः । गुरुगुप्तिकः-अहङ्कारेण गुरुं यो न प्रकाशयति ।

शङ्खलिखितौ-

"अभिशस्तपतितग्रामयाजकसांवत्सरिक- कुलिक[3]पोषक-वध बन्धजीवितारकात्मभगवृत्तिगणान्नभोजनेष्वातिकृच्छ्रम् ।"

कुलिकः- [4]देवलः । [5]पोषकः-मूल्येन पाठकः । वध[6]बन्धजीवी-पश्वादिमारणं यस्य जीविका । तारकः-नद्यादितारणोपजीवी ।

---

खपाठः-

(1) भिषकुशारदश्चैव (2) संकरा जाताः (3) घोषक (4) देवलकः
(5) घोषकः (6) ० बन्धोजीवी

यमः-

"अजाविके माहिषिके [A]कूटकृद्वृषलीपतौ ।
एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेत् ।।"

अजाविकः—अजाविरक्षणोपजीवी । माहिषिकः-महिषरक्षणोपजीवी ।

"[1]ताम्रसीसककांस्यकारान्नभोजने तप्तकृच्छ्रम् । ब्राह्मण-
वृत्तिघ्नान्नभोजने च ।"

यम :-

"प्रेतान्नं शौण्डिकान्नं च क्लीबदाम्भिकयोरपि ।
दुष्टान्नमवघुष्टान्नं सोमविक्रयिणस्तथा ।
मृतान्नं सूतिकान्नं च द्वादशाहं यवान् पिबेत् ।।

प्रेतान्नम्- प्रेतमुद्दिश्य पुत्रादिदत्तम् ।

शङ्खः-

ग्राममृगाजीविकुलटा[2]वन्दिरक्षकाचोरास्त्रीवेनकदर्यनृशंस-
कितवभूमिपालसेवकधनजीविनामन्नभोजने मासव्रतम् ।।

वेनः-वंशकर्त्तनादिजीवी ।

[B]विष्णुः- (५१-६-१४)

बद्धनिगडोच्छिष्टभोजिसपत्नानृतवादिक्रतुविक्रयिकृतघ्ननिषा-
दश्वजीविशस्त्रविषविक्रयिणामन्नभोजने सप्तरात्रं पयोव्रतम् ।।

श्वजीवी रक्षणेन ।

---

ख पाठः-

1- ताम्रकाँस्य 2- बलिरक्षका

मुद्रित पाठः-

A- कूटे च वृषली - धर्मशास्त्र शब्दकोषः-९
वृद्धयमस्मृतौ तु "अजाविको माहिषश्च तथा च वृषलीपतिः ।
तृणाग्रेणापि संस्पृष्टा सवासा जलमाविशेत् ।। ३-२६

-B वार्धुषिककदर्यदीक्षितबद्धनिगडाभिशस्तषण्ढानां च ।9। पुंश्चलोदाम्भ-

सुमन्तुः-

पौनर्भवभ्रूणहन्तृक्रीतान्नभोजने चान्द्रायण'माह ॥

ब्राह्मे-

"यश्चोपनयनं चक्रे बहूनां बहुयाजकः ।

पुरः पुरोहितः कार्यमुद्दिश्य नृपतेर्भृतिम ॥"

करोति यः स कथि[1]तस्त्वभोज्यान्नः पुरोहितः ।

मृगव्याधो व्यालजीवी मद्यपो वस्त्रशौचकृत् ॥

निग्रहाधिकृतो वन्दिरक्षकश्च स्त्रीकर्मकृत् ।

तथा वागुरिकश्चैव दुर्लोमा च मुखे भगः ॥

धनुष्कर्त्ता शरकर्त्ता कैवर्त्तः कुण्डगोलकौ ॥

आबाल्याद्[2]यस्त्वदर्शनो व्याधिना क्षयितस्तथा ।

स्वधर्मविच्युतः काले[3]नोपनीतस्त्रिदण्डकृत् ॥

यश्चाधर्मेण धर्मेप्सुरभोज्यान्नाः प्रकीर्त्तिताः

यतीनां लिङ्गिनां चैव स्त्रीजितस्य तथैव च ॥

---

ख पाठः-

(1) कथितो ह्यभो (2) यस्त्वदशनः (3) नोपनीतोऽतिदण्डकृत्

मुद्रित पाठः-

कचिकित्सकलुब्धकक्रूरोग्रोच्छिष्टभोजिनां च ।10। अवीरस्त्रीसुवर्णकार-सपत्नपतितानां च ।11। पिशुनानृतवादिक्षतधर्मातमरसविक्रयिणां च ।12। शैलूषतन्तुवायकृतघ्नरजकानां च । 13। कर्मकारनिषाद-रङ्गावतारिवेणशस्त्रविक्रयिणां च ।५१-१४

दीनस्य रुदितस्यान्नमन्नम [1]स्वादिकं तथा ।
असम्मानं च गुणिनां सम्मानं पापकर्मणाम् ॥
सामान्यं कुरुते यश्च तदन्नं नैव भक्षयेत् ।
मुमूर्षोर्निर्गतैर्वापि बद्धस्य [2]जालिपनस्तथा ॥
यस्याग्निकार्यं न गृहे नाग्रभुग् ब्राह्मणस्तथा ।
तद् [3]गृहे नान्नमश्नीयात् प्रवासिन्यग्निहोत्रिणि ॥
एतेषां तु गृहे भुक्त्वा वने चान्द्रायणं चरेत् ॥

[A]आपस्तम्बः- (१-५-१६-१६.२०)

"अनुत्थितायां सूतिकायामन्तःशवेन च ।

अशौचानधिकारिणः यस्य गृहे सूतिका तदुत्थानपर्यन्तं तद्गृहे न भोज्यम् । एवं परगोत्रशवे गृहस्थिते [4]तत्कालम् ।

[B]बौधायनः-

"अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुङ्क्ते [5]ब्रह्महा तु सः ॥"

---

ख पाठः-

(1) मस्वामिकं तथा (2) शिल्पिन० (3) ०गृहेऽन्नानि नाश्नीयात् (4) तावत्कालम् (5) पापमत्ति सः

मुद्रित पाठ :-

A- तथानुत्थितायां सूतिकायाम् ॥१॥ अन्तःशवे च ॥ १-५-१६-२०

B- श्लोकोऽयं कल्पतरौ यमनाम्ना पठितः । तत्र "यो भुङ्क्ते भ्रूणहा तथा" इति पाठः । नियत-२७२

"स तु भ्रूणहा" हेमाद्रि-परिशेष ७६६ तत्रापि यमः ।

[A]पैठीनसि–

"कुनखी श्यावदन्तः पित्रा विवदमानः स्त्रीजितः कुष्ठी पिशुनः सोमविक्रयी ग्रामयाजकः अभिशस्तो वृषलयाम–[1]भिजातः परिवित्तिः परिवित्रिदानो दीधिषूपति शौण्डिककाण्डपृष्ठसेवकाः अभोज्यान्नाः अपाङ्क्तेयाः अश्राद्धार्हाः । एषां दत्त्वा भुक्त्वा चाज्ञानात् त्रिरात्रम्[2] । कामतस्तु पूर्वोक्तानि व्रतानि ।"

मनुः- (४-२२२)

"भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥"

[B]शङ्खलिखितौ–(श्लो० १४)

"परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् ॥"

पराशरः- (११-४६.४८)

"गृहीताग्निं समारोप्य पञ्च यज्ञान् न कारयेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ।

---

खपाठ :-

(1) भिसञ्जातः

(2) एवं पूर्वोक्तानामन्नभोजनेऽज्ञानात् त्रिरात्रम्" इत्यधिकम् ।

मुद्रित पाठ :-

A-मिता० (3-289) B- पराशर-11-44

पञ्च यज्ञान् स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाक[A]रतस्तु[1] सः ॥
[B]गृहस्थधर्मवृत्तोऽसौ ददातिपरिवर्जितः ।
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्त्तितः ॥"

याज्ञवल्क्यः- (१-११२)

"परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।"

अत्रापवादः-

"गुर्वन्नं मातुलान्नं च श्वशुरान्नं तथैव च ।
पितुः पुत्रस्य चैवान्नं न परान्नमिति स्मृतम् ॥"

यत्तु बौधायनः-

"श्वशुरान्नं तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।"

इति तद् गर्हितश्वशुरधनोप[2]जीवनपरम् ।

"[C]श्वशुरात्तस्य वृत्तिः स्याद्विशस्तैन्यं करोति यः ।"

इति (अनुशा- ९६।२२) महाभारतवाक्यात् । एतेन आसक्तिर्न कार्या ।

---

ख पाठः—

(1) रतश्च सः (2) ०जीविपरम्

मुद्रित पाठः-

A- तरो हि B- गृहस्थधर्मैर्यो विप्रो ।

C- चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु ।
श्वशुरात्तस्य वृत्तिः स्याद यस्ते हरति पुष्करम् ॥" (पूरुवाक्यम्)

[A]याज्ञवल्क्यः-

"यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥"

[B]भरद्वाजः[1]-

"पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः ।
भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् ॥"

आदित्यपुराणे-

"विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत् ।
अप्रजायां [C]दुहितरि नाश्नीयात्तस्य वै गृहे ॥"
[D] ब्रह्मदेये विशेषेण दैवते च सदैव हि ।
गान्धर्वे राक्षसे चैव कुर्याच्चैव गमागमम् ॥"

अत्र [2]ब्रह्मदैवतविधिना दत्तायाः सुतायाः श्वशुरसम्बन्धेन भर्तृसम्बन्धेन वा यद्गृहं, [3]तत्र तत्स्वामिकस्यान्नस्य भोजने महान् दोषः । आर्षादिविवाहे

---

ख पाठः-

(1) भारद्वाजः (2) दैवविधिना (3) "तत्र" इति नास्ति

मुद्रित पाठः-

A- याज्ञवल्क्ये नास्ति । वृद्धयाज्ञवल्क्यवचनमिति मिताक्षरायां ३-२८ पराशरे "तयोरन्नमदत्त्वा च भुक्त्वा" इति विशेषः । परा० स्मृ १-४७

B- मिताक्षरा ३-२८९ C- "तु कन्यायां-" कृत्यकल्प० नियत० २७३

D- "ब्रह्मदेयेविशेषेण दैवे भोज्यं सदैव हि । गान्धर्वे चैव राजन्ये कुर्याद् वै गमनागमम् ॥ ब्रह्मदेयां न वै कन्यां दत्त्वा भुङ्क्ते कदाचन । अथ भुञ्जीत मोहात्मा स पूयनरकं व्रजेत् ॥" कृत्यकल्प० नियत० २७३ ।

अल्पीयान् दोषः। गान्धर्वराक्षसयोर्न दोषः। दुहितरि मृतायां तद्गृहे भोजने न दोषः। प्रजापदस्यापत्यमात्रवाचकत्वेऽपि यजमानप्रजासख्यत्र्यम्बकहविःकरम्भपात्रादौ पुत्रापत्य[1]ग्रहणादत्र तद्ग्रहणम्। दुहितरि सत्यां जामातृनाशेऽपि तद्गृहे न [2]भोक्तव्यम्। तद्गृहे परकीयान्नभोजने न दोषः।

[A]आपस्तम्बः-

"बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः।
अशुभं कारिताः कर्म गवादिप्राणिहिंसनम्॥
उच्छिष्टमार्जनं चैव तथोच्छिष्टस्य भोजनम्।
खरोष्ट्रविड्वराहाणामामिषस्य च भोजनम्॥
तत्स्त्रीणां च तथा सङ्गं ताभिश्च सह [B]भोजनम्।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम्॥
चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत्।
चान्द्रायणं पराकं च चरेत् संवत्सरोषितः॥
[C]संवत्सरोषिते [D]शूद्रे मासार्धं यावकं पिबेत्।
मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति॥

ख पाठः-

(1) ०दिहापि तद् (2) भोजनम्

मुद्रित पाठः-

A- देवलस्मृ० (श्लो० १७-२२) आपस्तम्बस्मृतौ नास्ति। मिताक्षरायामापस्तम्बवचनमित्यस्ति।

B- भक्षणम् C- संवत्सरोषितः शूद्रो

D- षितः शूद्रो॥ षितः शूद्रः मिताक्षरा ३-२८९

ऊर्ध्वं संवत्सरात् कल्प्यं प्रायश्चितं द्विजोत्तमैः ।
संवत्सरै[A] स्त्रिभिश्चैव तद्भावं सो[B]ऽधिगच्छति ॥"

अनुक्तप्रायश्चित्तनिराचारनिषिद्धचरितृगृहान्नभोजने षट्त्रिंशन्मते—

[C]"निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥"

इत्याश्रयदुष्टाख्यप्रतिग्रहीतृदोषदुष्टानि ।

## अथ संसर्गदुष्टानि

[D]भविष्यपुराणे—

"सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितम् ।
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ॥"

याज्ञवल्क्यः— (१-१८९)

"गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥"

केशादिस्पृष्टमन्नमेकदेशं निरस्य[2] तैर्व्यस्तैः समस्तैर्वा शुद्धिः । एतच्च भोजनकालसंसर्गे ।

---

ख पाठः-

(1) ०कं न भोजनम् (2) एतैर्व्यस्तैः

मुद्रित पाठः-

A- चतुर्भिश्च B- स निगच्छति C- मिताक्षरा ३-२८९

D- कृत्यकल्प० नियत० २७६

"अन्ने भोजनकाले तु मक्षिकाकेशदूषिते ।
अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत् ॥"

इति स्मृतेः ।

[A]देवलः—

"केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत् ।"

संवर्तः—

"केशकीटावपन्नं च नीलीलाक्षोपघातितम् ।
[B]सास्थि[1]चर्मावसंसृष्टं भुक्त्वा तूपवसेदहः ॥

एतत् पाककालीनकेशादिसंसृष्टान्नभोजने अन्यत्र च ।

"केशकीटनखं [2]प्राश्य शङ्खशुक्तिकपर्दिकान् ।
पीत्वा नवाम्बु चोपोष्य पञ्चगव्येन शुध्यति ॥"

हारीतः—

"भक्ष्याणामप्यामसांसरुधिरप्राशने पञ्चगव्यम् । कृमिकीटपतङ्गपिपीलिकाजलौकः पतङ्गास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण पूतो भवति ।"

पञ्चगव्यं-पञ्चगव्यमात्रम् । साक्षात् कीटादिभक्षणे त्रिरात्रमित्यर्थः ।

---

ख पाठः-

(1) चर्मसुसंस्पृष्टं (2) प्राप्य

मुद्रित पाठः-

A- "विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः ।
केशलोमनखैर्वापि दूषितं परिवर्जयेत् ॥ कृत्यकल्प० नियत-२८८

B- स्नाय्वस्थिचर्मसंस्पृष्टं, मिताक्षरा3 २८९

मनुः- (११-१४७)

"अपः सुरा भाजनस्था मद्यभाण्डस्थितास्तथा ।

पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीश्रुतं पयः ।"

पर्युषिते हारीतः-

'सुराधाने तु यो भाण्डे अपः पर्युषिताः पिबेत् ।

शङ्ख[1]पुष्पादिपक्वेन षडहं क्षीरेण वर्त्तयेत् ॥"

स्मृत्यन्तरे-

"नारिकेलोदकं कांस्ये मधु ताम्रेण संयुतम् ।

गोरसं ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥"

शातातपः-

"मद्यभाण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रं च ।"

मद्यं सुराभिन्नम् ।

"शुनोच्छिष्टस्थिता आपो यदि कश्चिद् द्विजः पिबेत् ।

शङ्ख[2]पुष्पादिपक्वेन त्र्यहं क्षीरेण वर्त्तयेत् ॥"

स्त्र्युच्छिष्टजलपानेऽप्येवम् ।

---

ख पाठः-

(1) ०पुष्प्यादि (2) पुष्पीविपक्वेन

[1]हारीतः [A]पाराशरः- (६-२८-२९)

"भाण्डस्थितमभोज्यानामपः पीत्वा पयो दधि ।
ब्रह्म[2]कूर्चोपवासश्च योग्यं (ज्यं) कर्मास्य निष्कृतिः ।
शूद्रस्य नोपवासस्तु दानेनैकेन शुध्यति ॥

विष्णुः- (५४-२.४)

"मृतपञ्चनखात् कूपादत्यन्तोपहताच्चोदकं [B]पीत्वा
[3]त्र्यहमुपवसेत् , द्व्यहं राजन्यः, एकाहं वैश्यः ।"

पराशरः- (११-३९.४२)

"कूपे च पतितं दृष्ट्वा [C]श्वश्रृगालं च मर्कटम् ।
अस्थिचर्मादि[D]पतनात् पीत्वाऽमेध्यादपो द्विजः ॥ (३९)
नारं तु [E]कुणपं कालं विड्वराहखरो[F]ष्ट्रयोः ।
गवयं सौप्रतीकं च [G]वाग्गुदं त्वाखुजं तथा ॥ (४०)

---

ख पाठ :-

(1) हारीतपराशरौ (2) ०कूर्च्चेन वासश्च (3) त्रिरात्रमुप०

मुद्रितपाठ :-

A- भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्यैव प्रमादतः ॥ २८
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ।। ६-२९

B- पीत्वा ब्राह्मणस्त्रिरात्रमुप० C- श्वश्रृगालौ च D- पतितं पीत्वाऽमेध्या अपो द्विजः E- कूपे काङ्क्षं च F- ०ष्ट्रकम् G- मायूरं खाङ्गकं तथा

वैयाघ्रमांसं[A] सैंहं वा [B]कूपे यदि निमज्जति ।

तडागस्यैव दुष्टस्य पीतं स्यादुदकं यदि ॥ ४१)

विप्रः शुध्येत् त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् । (४२)

[C]एकाहेनापि वैश्यस्तु शूद्रो नक्तेन शुध्यति ॥ (४३)

अङ्गिराः-

"चाण्डालपरिगृहीतं योऽज्ञानादुदकं पिबेत् ।

तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः ॥"

एतदन्त्यजस्वामिकतदुपभोगसंसृष्टजलविषयम् ।

आपस्तम्बः-

"अन्त्यजैः खानिताः कूपास्तडागा वाप्य एव च ।

एषु स्नात्वा च पीत्वा च प्राजापत्यं[D] समाचरेत् ।"

एतज्जलान्तरसम्भवेऽत्यन्ताभ्यासे ।

अत्र विष्णुः- (२३-४६)

[E]"महत्सु न दूषणम् ।"

महाजलाशयेषु न दोषः ।

[F]आपस्तम्बः-

[1]"म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।

जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥"

---

ख पाठः-

(1) अन्त्यजानां

मुद्रित पाठः-

A- मांसं B- कुणप यदि मज्जति C- एकाहेन तु D- प्राजापत्येन शुद्ध्यति

E- महत्सु च न दूषणम् F- केशववैजयन्ती (८४-३)

जानुदघ्नादधस्नात् म्लेच्छजला[1]शयेऽशुद्धिः। तदूर्ध्वं शुद्धम्। एतदापदि। अन्त्यजकृतेऽपि तडागादौ तत्संपर्काभावे [2]तदुत्सृष्टे वाऽऽपदि न दोषः।

शातातपः-

"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा।
तत्र स्नात्वा च पीत्वा च [A]प्रायश्चित्तं न विद्यते॥"

[B]संवर्तः-

"शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥"

[C]विष्णुः-

मृद्वारिकुसुमादींश्च फलकन्देष्टु[D]मूलकान्।
विण्मूत्रदूषितान् [E]भुक्त्वा कृच्छ्रपादं समाचरेत्॥
सन्निकृष्टेऽर्धमेव स्यात् [3]कृच्छ्रस्या[F]शुद्धिशोधनम्॥

अत्र सर्वत्र अमेध्यावयवस्य साक्षात् प्रत्यभिज्ञाने तदमेध्यभक्षणप्रायश्चित्तम्। [4]अवयवप्रवेशशङ्कायामुक्तानि प्रायश्चित्तानि।

इति संसर्गदुष्टान्यभक्ष्याणि।

---

खपाठः-

(1) शयोऽशुद्धः। तदूर्ध्वं शुद्धः। (2) तदस्पृष्टेऽनापदि। (3) कृच्छ्रस्यार्द्धं विशोधनम्। (4) अवयवेनेति अर्धप्रवेश०

मुद्रित पाठः-

A- प्रायश्चित्तं समाचरेत् = केशववैजयन्ती (६४-१)

B- मिताक्षरा ३-२८९। C- विष्णुस्मृतौ विष्णुपुराणे च नास्ति। मिताक्षरायामस्ति। D- क्षुमूल। E- प्राश्य। F- शुचि।

## अथ रसदुष्टानि,

भविष्यपुराणे -

"रसदुष्टं विकाराद्धि रसस्यैतत् प्रकीर्त्तितम् ।

पायसं चीरपूपादि तस्मिन्नेव दिने [1]यथा ॥"

दिवान्तरितस्य कालदुष्टत्वात् तस्मिन्नेव दिने यदि द्रव्या[2]न्तरायोगादम्लं भवति तदा रसदुष्टमुच्यते । इदमुदाहरणमात्रम् । दिवान्तरितमपि गुडयुक्तदधि-दुग्धादिकं पर्युषितप्रपानकादिकं च यदि विकृतरसं भवति तदा रसदुष्टत्वादभक्ष्यम् । न च तस्य शुक्तत्वादभक्ष्यत्वम् । अम्लरसविकारे[3] हि शुक्तत्वं तद्भिन्नरसान्तरत्वे शुक्तत्वाभावात् ।

[A]गौतमः- (२-८-१४)

"शुक्तं तु केवलम् ।"

आपस्तम्बः- (१-५-१७-२०)

शुक्तं [4]चाऽपरयोगम् ॥"

नास्ति परेण द्रव्यान्तरेण योगो यस्य । एवं सति शुक्तमभक्ष्यम् । द्रव्यान्तर-योगे भक्ष्यमित्यर्थः ।

---

ख पाठः-

(1) तथा (2) ० न्तरयोगेन अम्लं (3) ० कारेऽपि (4) चापरं योगम्

मुद्रित पाठः-

A- "शुक्तं केवलमदधि"

वैद्यशास्त्रे-

"कन्दमूलफलादीनि सस्नेहलवणानि च।
यत्र द्रव्येऽभिषूयन्ते तच्छुक्तमभिधीयते ॥"

तस्य चाम्लत्वमर्थसिद्धत्वान्नोक्तम्। तेन "अडङ्गा" इति प्रसिद्धं द्रव्यं शुक्तमिति प्रतिभाति।

तथा [A]विज्ञानेश्वरः-

"यदन्यरसद्रव्यं द्रव्यान्तरसंयोगकालपरिवासाभ्यामम्लं भवति तत् शुक्तम्"

[B]लक्ष्मीधरोऽपि-

"यदन्यरसद्रव्यं द्रव्यान्तरसंयोगेनाम्लं भवति तत् शुक्तमिति।

[1]इदं च शुक्तं भोज्यमपि द्रव्यसंयोगं विना केवलमभक्ष्यम्।

एवं च-

"अत्यम्लं शुक्तमाख्यातं [C]गर्हितं ब्रह्मवादिभिः"

---

ख पाठः-

(1) तत् शुक्तं

मुद्रित पाठः-

A- यत् स्वयमनम्लं केवलं कालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वाम्लीभवति तत् शुक्तं दध्यादि व्यतिरेकेण। मिताक्षरा १।१६७

B- "शुक्तं चापरयोगम्" इति परेणान्येन योगो यस्येति गमकत्वाद वैयधिकरण्ये बहुव्रीहिः। यच्च शुक्तमपेयमखाद्यभुक्तं तद् द्रव्यान्तरासंयुक्तम्। "शुक्तं तु केवलमिति" गौतमवचनात् ॥ कृत्यकल्प० नियत० २९१। C- निन्दितं - कृत्यकल्प० नियत० २८८।

इति बृहस्पतिवचनस्यायमर्थः यच्छुक्तमत्यम्लं तद् ब्रह्मवादिभिर्गर्हितमाख्यातम् । कथं चात्यम्लं द्रव्यान्तरसंयोगं विना "तेन शुक्तं तु केवलम्" इत्यस्यैव [1]समानार्थमिदम् ॥ न तु अत्यम्लमात्रं शुक्तम् ॥ अत्यम्लं चूततिन्तिडीफलादौ केवलभक्षणे विगानाभावात् । शुक्तपदस्य नानार्थत्वापाताच्च । दधिनि कञ्जिकायां च स्मृतिषु शुक्तप्रयोगोक्त[2]लक्षणप्रयोग सत्त्वादेव ।

[A]बृहस्पतिः-

"दधि भक्ष्यं शुक्तमपि सर्वं च दधिसम्भवम् ।
कन्दमूलफलैः पुष्पैः शस्तैः शुक्तासवं च यत् ।
अविकारि भवेन्मेध्यममेध्यं तु विकारकृत् ॥"

शुक्तं चासवं च शुक्तासवमिति द्वन्द्वः । शुक्तं [3]कन्दादिकृतसन्धानकृता[4]म्लमेवमविकारि अमादकं चेत्तदा शुक्तम् । तच्च द्रव्यान्तरयोगं विनापि भक्ष्यम् । मूलादिसन्धानकृताम्लमेव विकारकृन्मादकं चेत् तदा आसवशब्दवाच्यम् । तदपि चाभक्ष्यमित्यर्थः ।

वसिष्ठः- (१४-३७)

"अपूपधानाकरम्भ[B]सक्तुयावकतैलपायसशाकानि शुक्तानि वर्जयेत् ।"

---

ख पाठः-

(1) समानार्थम् न तु (2) लक्षणसत्त्वादेव (3) वंशकन्दादि (4) ०म्लमेव द्रव्यमविकारि

मुद्रित पाठः-

A- कृत्यकल्प० नियत० २९१ B- ०सक्तु वटकतैल०

एषां पर्युषितदोषाभावेऽपि कालान्तरद्रव्यान्तरवासयोगाभ्यामम्लत्वे शुक्तत्वादभक्ष्यता। पुनर्वचनाच्च द्रव्यान्तरयोगेऽप्यभक्ष्यता।

यमः-

"शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन।
प्रक्षालितानि निर्दोषाण्यापद्धर्मो यदा भवेत्॥
मसूरं [A]मांससंयुक्तं तथा पर्युषितं च यत्।
तत्तु प्रक्षालितं कृत्वा [1]भुञ्जीत ह्यभिघारितम्॥"

आपदि शुक्तं द्रव्यान्तरयोगं विनापि प्रक्षालितं भुञ्जीत। एवं मसूरमांसयुक्तमपि संसर्गदुष्टमापदि प्रक्षालितं भुञ्जीत। पर्युषितमभिघारितं भुञ्जीतेति प्रसङ्गादुक्तम्।

मनुः- (११-१५३)

"शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः।
तावद् भवत्यप्रयतो यावत्तन्न व्रजत्यधः॥"

शुक्तानि मेध्यानि दध्यादीनि तथा कषायांश्च दशमूलक्वाथप्रभृतीन् मेध्यान् पीत्वा [2]पक्वाशयस्थानगमनपर्यन्तं कर्मानधिकृतः।

---

ख पाठः-

(1) भुञ्जीयादभिघारितम् (2) क्वाथसन्धानं च तस्याधोगमनपर्यन्तम् अधिकृतो (न) भवति।

मुद्रित पाठः-

A- "माषसयुक्त - कृत्यकल्प० नियत० २९२

ननु-

"पीत्वा शुक्तकषायाणि भुक्त्वा चान्नं विगर्हितम् ।

तावद् भवत्यप्रयतः कर्मण्यः स्यादधोगतौ ॥

इति बृहस्पतिना कषायमात्रममेध्यमुक्तं, तत् कथं मेध्यानीति व्याधितं प्रति मेध्यत्वाददोषः । कर्मानधिकारस्तु वचनात् ।

देवलः-

"सुरामरिष्टं मैरेयं मधुमाध्वीकमासवम् ।

[A]धान्याम्लशुक्तवर्जं च न पेयं ब्राह्मणैर्विदुः ॥"

वैद्यशास्त्रे-

"परिपक्वान्नसन्धान[1]समुत्पन्नां सुरां विदुः ।

[2]द्रवेषु चिरकालस्थं द्रव्यं यत् साधितं भवेत् ।

आसवारिष्ट[3]भेदैस्तत् प्रोच्यते भेषजोचितम् ॥"

तत्र-

"[4]यवपक्वौषधिद्रव्यसिद्धं मद्यं स चासवः ।

"अरिष्टं [5]क्वाथसिद्धः स्यात्तयोर्मानं फलोन्मितम् ।"

आसवो[6]-मद्यानि । मैरेयं-गौडीसुराभेदः । माध्वीकं[7]-माध्वी सुरा । धान्याम्लं-काञ्जिकम् ।

---

ख पाठः-

(1) समुद्भूतां (2) द्रवेषु च त्रिकालस्थं (3) भेदैस्तु उच्यते भेषजीकृतम्
(4) यदपक्वौषधि (5) पक्वसिद्धः (6) मद्यादि (7) मधूकसुरा

मुद्रित पाठः-

A- धान्याम्बु - कृत्यकल्प० नियत० ३३३

"यवै[1]र्विनिष्कुतैः पक्वैः [2]सौवीरं सन्धितं भवेत् ।
[3]कुल्माषधान्यकुण्डादि साधितं काञ्जिकं विदुः ॥"

इति वैद्यशास्त्रे धान्याम्लं [4]काञ्जिकमुक्तम् । तस्य मादकत्वाभावेनासवत्वाभावेऽपि पक्वौषधिसिद्धत्वेनारिष्टत्वादभक्ष्यत्वं प्राप्तं वार्यते । [5]शुक्तशब्दाच्च द्रव्यान्तरयोगं विनापि भक्ष्यता ।

तत्रापि विशेषः-

"[A]काञ्जिका सफला या तु[6] गृहेषु स्थापिता भवेत् ।
तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कथञ्चन ॥"

इति विज्ञाने[B]श्वरलिखितवाक्यात् आमलकादियुक्तस्थापित [7]काञ्जिकात उद्धृत्य भक्षणम् । एतच्च वचनं पर्युषितदोषस्यापवादः । न ह्यपर्युषिता काञ्जिकास्ति । पर्युषितस्य पुन पाके दोषः स्यादेव । एतेन यवान्नसाध्यं सौवीरं पर्युषितप्रपानकं गुडमिश्रदुग्धादिकं च रसदुष्टत्वादभक्ष्यं तत्रापवादाभावात् । आसवातिरिक्त रसदुष्टभक्षणे त्रिरात्र व्रतम् । आसवे प्राजापत्यम् । मधुनि च[8]- शेषेषूपवसेदहरि"ति (५।२०)

मनूक्तम् । [9]मधु चात्र माक्षिकम् । तस्य भक्षत्वं क्षत्रियादिविषयम् । श्राद्धमधुपर्कयोर्विप्रविषयम् ।

इति रसदुष्टान्यभक्ष्याणि ।

---

**ख पाठः—**

(1) विनिष्कृतैः (2) संवीरं (3) सुपक्वोल्वणधान्य 4- काञ्जिकेत्युक्तम् (5) शुक्ताङ्गत्वाच्च (6) च (7) काञ्जिका तत उद्धृत्य (8) तु (9) "मधु चात्र माक्षिकम्" इति नास्ति ।

**मुद्रित पाठः-**

A- "कुण्डिका सफला येषु" मिताक्षरा ३-२८९
B- एतच्चामलकादिफलयुक्तव्यतिरेकेण द्रष्टव्यम् ।

### अथ भावदुष्टशब्दवाच्यानि सहृल्लेख्यान्यभक्ष्याणि

**भविष्यपुराणे :—**

**" विचिकित्सा तु हृदये [A]यस्मिन्नन्ने [1]विजायते ।**
**सहृल्लेख्यं [2]तु विज्ञेयम् ॥"**

इति विचिकित्सा—संशयः। स च त्रिधा। अभक्ष्यद्रव्यसादृश्येन यत्राभक्ष्यत्व-भ्रान्तिर्भवति, आहार्यारोपे वा तत्र संशयहेतुसादृश्यसत्त्वात् संशयो भवतीति अनाश्यसम्मितं गृह्यते, यथा भेकादिसदृशं फलमूलादि। यथा वा पुरीषादि-सदृशम् । द्वितीयस्तु—अभक्ष्यसंसर्गसंशयः काकाद्युपघातसंशयो वा अन्नस्वामि-दोषसंशयो वा । तृतीयस्तु—भक्षितेऽपि द्रव्ये भक्ष्यं वा भुक्तम् अभक्ष्यं वा भुक्तमिति संशयः ।

**पराशर :—**

**" वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते ।**
**भुक्त्वा[B] तु ब्राह्मणः पश्चात् त्रिरात्रेणैव शुध्यति ॥"**

वाग्दुष्टमपि वचसोऽपि संशयजनकत्वात् सहृल्लेख्यत्वेन संगृहीतम् । शुद्धमपि द्रव्यं यदि कश्चिद् वदतीदमभक्ष्यमिति तदा वाग्दुष्टमुच्यते । वाग्दुष्टपदेन सादृश्यातिरिक्ताभक्ष्यसंशयहेतुमात्रं संगृह्यते ।

---

**ख पाठः—**

1- तु    2- तु तज्ज्ञेयं

**मुद्रित पाठः—**

A- अन्ने यस्मिन् प्रजायते—कृत्यकल्प० नियत० २७७

B- भुक्त्वा तु "मिताक्षरा ३-२८९ पाराशरे तु भावदुष्टंनभुञ्जीयान्नोच्छिष्टं कृमिदूषित" मित्यादि पृथक्पाठः ६-३६

वसिष्ठ :— ( २७—१०-१२ )

" शङ्कास्थाने समुत्पन्ने अभीज्याभक्ष्यसंज्ञिते ।
आहारशुद्धिं वक्ष्यामि तां[A] मे निगदतः शृणु ॥ (१०)
अक्षार[1]लवणामक्षां पिबेद् ब्राह्मीं सुवर्चलाम् ।
त्रिरात्रं शङ्खपुष्पीं वा[B] ब्राह्मणः पयसा सह ॥ (११)
पलाशबिल्वपत्राणि कुशान् पद्ममुदुम्बरम् ।
क्वाथयित्वा पिबेद्[C]म्भस्त्रिरात्रेणैव शुध्यति ॥ (१२)
[D]सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वा जपेन्नित्यं महापातकनाशिनीम् ॥"

मनुः— (५-२१)

"संवत्सरस्यैकमपि चरेत् कृच्छ्रं समाहितः[E] ।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥"

इति भावदुष्टान्यभक्ष्याणि

———

ख पाठः—

1- लवणोपेतां

मुद्रित पाठः—

A- तन्मे B- च C- दाप

D- यमवचनत्वेन पठितम् । तत्र "सर्वपापप्रणाशिनीम्" इति कृत्यकल्प० नियत० १००

E- द्विजोत्तमः

## अथ स्वभावदुष्टानि

भविष्यपुराणे[A] :—

"पुरीषं तु स्वभावतः ॥"

पुरीषपदं शारीरमलोपलक्षणम् ।

मनुः—(११–१५०)

"अज्ञानात् प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥"

विष्णुः—(५१-२)

"[1B]मलानां मद्यानां प्राशने चान्द्रायणम् ।"

"वसाशुक्रमसृङ्मज्जा मूत्रं विट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥"

(विष्णुः २२-८१)

---

ख पाठः—

1- मलाख्यानां

मुद्रित पाठः—

A- कृत्यकल्प० नियत० २७७
सम्पूर्णश्लोकः — "विचिकित्सा तु हृदये यस्मिन्नन्नं विजायते ।
सहृल्लेख्यं तु विज्ञेयं पुरीषं तु स्वभावतः ॥"

B- "मलाना मद्यानां चान्यतमस्य प्राशने चान्द्रायणं कुर्यात् ।"

"मानुषास्थि शवं विष्ठा रेतो मूत्रासवं[A] वसा ॥

स्वेदाश्रुदूषिकाश्लेष्म मद्यं चामेध्यमुच्यते ॥"

इत्यादि ॥ चान्द्रायणं पुनः संस्कारश्च ।

उशनाः—

"श्वविड्वराहश्येनकुक्कुटगृध्रभासबककाककङ्कमृगाणां मूत्रपुरीषप्राशने तप्तकृच्छ्रम् । स्वभावदुष्टेषु छर्दनम् । छर्दनासम्भवे त्रिरात्रं सप्तरात्रं चोपोष्य निष्पुरीषीभावः कार्यः ।

इति स्वभावदुष्टान्यभक्ष्याणि

———

(व्याधितस्य अभक्ष्यभक्षणे निर्णयः)

[B]सुमन्तुः—

"लशुनपलाण्डुकुम्भीनवश्राद्धसूतिकामधुमांसमूत्ररेतोऽमेध्यभक्षणे मूर्ध्नि संपातानवनयेदुपवासश्च । एतान्येव व्याधितस्य भिषक्क्रियायामनिषिद्धानि भवन्ति यानि तान्येवं प्रकाराणि ।"

मुद्रित पाठः—

A- मिताक्षरायां(१-१९१) देवलनाम्ना पठितम् । तत्र "मूत्रार्त्तवं" इति पाठः ।

B- लशुनपला०ण्डुगृञ्जनकवकभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संपातान्नयेत् । एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति । यानि चैवं प्रकाराणि तेष्वपि न दोषः ॥ मिता० (३-२८९)

अत्र यद्यपि

A"सर्वत आत्मानं गोपायेत्"

इति विधिनाऽन्यौषधव्याधिनिवृत्त्यर्थं विहितस्याभक्ष्यस्याप्यौषधस्याग्नीषोमीयहिंसावन्निषेधविषयत्वायोगात् पृथग् वचनमनर्थकम् ।

तथापि–

"कर्मणा येन केनापि मृदुना दारुणेन वा
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥
धर्मश्च प्रथमं तावत् प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥"

इति न्यायेन "सर्वत आत्मानं गोपायेत्" [1]इति न्यायस्य न्यायप्राप्तानुवादात् येषां व्यधिनाशप्राणात्ययादौ विशेषानुज्ञा नास्ति तेषामल्पदोषत्वम् । यत्र तु विशेषानुज्ञा [2]तल्लेखस्याभावान्न प्रायश्चित्तम् । तत्रापि महापातकहेतुसुरापानादेः प्राणात्ययादावपि [3]दोषाल्पत्वमित्येवं परम् ।

एवं च–

"नाततायिवधे दोषोऽन्यत्र [B]गोब्राह्मणात् ।"

इति स्वरक्षाहेतुभूतेऽपि ब्रह्मवधस्य वचनादेव बहुदोषत्वम् । "सर्वत आत्मानं गोपायेत्" इत्यस्य विधिपक्षे[4]च सुरापानस्यापि प्राणात्ययादौ निर्दोषता स्यात् ।

---

ख पाठः–

(1) इत्यस्य न्याय (2) तद्दोषलेशस्याभावात् (3) दोषाल्पत्वमित्युक्तम्
(4) न सुराया अपि

मुद्रित पाठः-

A- सर्वतएवात्मानं गोपायेत् ॥ गौ.ध. सू. १९।३४
B- गोब्राह्मणवधात् - मिताक्षरा २-२१
-गोब्राह्मणेभ्यः" केशववैजयन्ती ३५-१

ननु–

"यानि तान्येवं प्रकाराणि"

इति सुमन्तुवचनात् सुरापानस्यापि व्याधितस्य भिषक्क्रियायां निर्दोषता– किं न स्यात् । एवं प्रकारशब्देन महापातकहेतुव्यतिरिक्ताभक्ष्याणा- मुक्तत्वात् । अन्यथा तद्वैयर्थ्यापत्तेः ।

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे भोजनप्रकरणम् ।

---

## अथ ताम्बूलादिभक्षणम्

शिष्टाः पठन्ति–

"भोजनानन्तरं विष्णोरर्पितं तुलसीदलम् ।
भक्षितं पापराशिघ्नं महापातकनाशनम् ॥
[A]भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्
भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम् ॥इति॥

अस्य [1]प्रामाण्यसन्देहेऽपि भोजनोत्तर[2] द्विराचमनानुवादसम्भवात् पृथगाचमनाभावः ।

"[B]भो[3]क्ष्यमाणो द्विराचमेत्" (आपध-१-५-१६-६)

इत्यस्य ताम्बूलादिभक्षणस्य भोजन[4]त्वाभावेनाप्रसङ्गः ।

---

ख पाठः-

(1) प्रामाण्येऽपि (2) द्विराचमनसम्भवात् (3) भोज्यमानो (4) ०वेनप्रसङ्गः

मुद्रित पाठः-

A- कृत्यकल्प० नियत० ३३३ भुक्त्वेतिश्लोकार्द्धं दक्षस्मृतौ २-६८
B- भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् ।

अतएव

A प्राङ्मुखोऽन्नानि भुञ्जीत ।" (वसिष्ठः १२-१५)

[1]इत्यलान्नग्रहणात् ताम्बूलभक्षणादौ दिङ्नियम[2]स्याभाव इति [B]कल्पतरुकारः अतएव तदवसाना(ना)चमनमेव दुराचारमध्ये भट्टाचार्य्यैर्लिखितम् । [3]न पूर्वानाचमनम् । [4]अत्र वैद्यशास्त्रे ताम्बूलखदिरजातीफलक्रमुक-नारिकेलखर्ज्जूरफलादीनां भक्षणे अन्नपरिणामादिगुणश्रवणात्

"तदन्नं परिणामयेत्" (२-६८) इति

दक्षेणान्नपरिणामहेतुव्यापारस्य [5]विधानादेतेषां कथञ्चिद् भक्षणं मुखशुद्ध्य-र्थं च। अत्र खदिरस्य शूद्रादिगृहपक्वस्य समाचाराद् भक्ष्यता । एवं स्विन्नपुन्नागफल[6]धान्यहरिद्रामरीचादेरपि समाचारादेव ।

[7]मरीचधान्ययोश्चैव हरिद्राणां तथैव च ।
तथैव पुन्नागफले स्विन्नदोषो न विद्यते ॥"

इत्यपि पठन्ति । [8]पक्वस्पर्शे दोष-तदभावयोः समाचारैकप्रमाणत्वात् ।

[C]विष्णुः-

"चर्वणे नित्यमाचामे[9]न्मुक्त्वा ताम्बूलचर्वणम ।"

एवं च ताम्बूलातिरिक्तस्यापि निगिरणे नाचमनम् ।

---

ख पाठः-

(1) तलाप्यग्रहणात् (2) स्यान्तर्भाव (3) न पूर्वाचमनम् (4) तथा (5) विधानादेव तेषां (6) "धान्य इति नास्ति (7) श्लोकोऽयं नास्ति (8) पक्वस्यस्पर्शमात्रदोष (9) त्यक्त्वा

मुद्रित पाठः-

A- देवलयमौ इति कृत्यकल्प० नियत २१९, २२३

B- अन्नग्रहणात् ताम्बूलादौ प्राङ्मुखत्वादिनियमो नास्तीति सूचितम् ॥
कृत्यकल्प० नियत २३९

C- विष्णुस्मृतिविष्णुपुराणयोर्नास्ति । किन्तु "चर्वणे त्वाचमेन्नित्यं मुक्त्वा-ताम्बूलचर्वणम्" इति केशववैजयन्ती २३।५३

शातातपः

"ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः ॥"

[1]भुक्तस्नेहो-मुखादिषु । दन्तलग्नस्य संस्पर्शो जिह्वया ।

विद्याकरपद्धतौ-

"दन्तलग्ने फले मूले भक्ष्यस्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

त्वग्भिः पुष्पैः फलैर्मूलैस्तृणकाष्ठमयैस्तथा ।
[2]सुगन्धिभिस्तथान्यैश्च नोच्छिष्टो भवति द्विजः ॥
खर्जूरं तालकन्दं च मृणालं पद्मकेसरम् ।
नारिकेलं कसेरुं च नोच्छिष्टो मनुरब्रवीत् ॥
ताम्बूलं च कषायं च सर्वं च जलसम्भवम् ।
मधुपर्कं च सोमं च लवङ्गाख्यं तथा क्वचित् ॥'

कषायं – खदिरहरीतक्यादि । जलसम्भवम् - शृङ्गाटकादि । अत्रोच्छिष्टत्वाभावेऽपि भक्षणनिमित्तं द्विराचमनं भवत्येव ।

"सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।
पीत्वापोऽध्येष्यमाणश्च आचमेत् प्रयतोऽपि सन् ॥"
(५-१४५)

इति मनुवचनात् । न चैवमनुच्छिष्टवचनं व्यर्थम् । उच्छिष्टस्पर्शादिप्रतिप्रसवार्थत्वात् ।

---

ख पाठः-

(1) बन्धन [ ] स्थपाठो नास्ति (2) दन्तलग्नस्य संस्पर्शे

[A]तथा च बृहस्पतिः-

उच्छिष्टे[1]नाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ ।
उच्छिष्टेनाथ शूद्रेण विप्रः स्पृष्टस्तु तादृशः ।
उपवासेन शुद्धः स्याच्छुना संस्पृष्ट एव च ॥
अनुच्छिष्टेन चोच्छिष्ट एकरात्रं पयः पिबेत् ॥

तथा-

"कुर्यान्नक्तमुपवासं क्षत्रविट्स्पर्शने क्रमात् ।"

स्मृतिः-

श्वविष्ठां काकविष्ठां च गृध्रकङ्कनरस्य च ।
अथोच्छिष्टस्तु संस्पृश्य प्रायश्चित्तं समाचरेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

---

ख पाठः-

(1) न तु विप्रेण (2) तन्नोच्छिष्टस्य स्पर्शने दोषमभिप्रेत्य

मुद्रित पाठः-

A- ब्रह्मपुराणवचनमिति (अमुद्रित) कृत्यकौमुद्याम् ॥
बृहस्पतिवचनमिति प्रायश्चित्तविवेके ४७७

B- श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च ।
अधोच्छिष्टं तु संस्पृष्टः सचेलो जलमाविशेत् ॥
ऊर्ध्वोच्छिष्टस्तु संस्पृशेत् प्रायश्चित्तं विनिर्दिशेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

इति कृत्यकौमुदीपाठः । (अमुद्रितः)

तथा-

नोच्छिष्टस्तु क्वचिद्व्रजेत् । (विष्णुः ६८-४०)

नोच्छिष्टो घृतमादद्यात् ।'' (विष्णुः ६८-३६)

इत्यादिकमेव ताम्बूलभक्षणादौ नास्ति । यत्तु भट्टाचार्यैः परस्परस्पृष्ट-ताम्बूलभक्षणं दुराचारत्वेन उक्तं [1]तन्नोच्छिष्टस्पर्शनस्य दोषमभिप्रेत्य,

किन्तु-

''भुञ्जानस्य तु विप्रस्य सवर्णस्पर्शनं यदि ।

[2]त्यक्त्वान्नं स शुचिर्भूत्वा प्राणायामेन शुध्यति ।।

इति भक्षणकालेऽन्नस्पर्शनमात्रस्याशुद्धिकरत्वमभिप्रेत्य दुराचारत्वेनोक्तम् । न ह्येयतद्भोजनधर्मः, किन्तु भोजने निमित्तम् । तेन ताम्बूलभक्षणेऽपि स्यादेव ।

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे पञ्चमभागकृत्यं समाप्तम् ।

— —

---

ख पाठः-

(1) तन्नोच्छिष्टस्य स्पर्शने दोषमभिप्रेत्य (2) भुक्त्वान्नमशुचि

# अथ षष्ठसप्तमभागकृत्यम्

**दक्षः—(२-६६)**

"इतिहासपुराणाभ्यां[A] षष्ठसप्तमकौ नयेत् ।"

इतिहासः— महाभारतम् । पुराणानि अष्टादश । तथोपपुराणान्यष्टादश । तन्निर्गतं नन्दिपुराणनरसिंहपुराणादि, विष्णुधर्म-शिवधर्म-सौरधर्माः विष्णु-शिवसूर्यरहस्यानि, रामायणम् विष्णुधर्मोत्तरादीनि च । एतच्च नित्यवद्विधाना-द्वेदार्थज्ञानोपायत्वेन नित्यमेव कर्तव्यम् ।

**तदुक्तम् — (ब्रह्माण्डपु० १-१-१-१७१)**

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥"

अतएवात्र [1]इतिहासपुराणपदं वेदार्थज्ञानोपयोगिशास्त्रोपलक्षणमिति ।

**मनुः—(४-१६)**

"बुद्धिवृद्धिकरा[B]ण्याहुर्धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥"

बुद्धिवृद्धिकराणि-न्यायवैशेषिकसांख्यशास्त्राणि, धन्यानि-नीतिशास्त्राणि, हितानि-वैद्यशास्त्राणि, निगमान् वैदिकान्-निघण्टु[2]निरुक्तप्रभृतीन् ।

**याज्ञवल्क्यः—(१-९९)**

"वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ।"

विविधानि-पातञ्जलपाञ्चरात्रपाशुपतादीनि ।

---

ख पाठः—

1- "इतिहास" इति नास्ति　　2- "निरुक्त" इति नास्ति

मुद्रित पाठः—

A- ०णाद्यैः　　B- ०ण्याशु धन्यानि

"सांख्ययोगौ पञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न[1] विचालयेत् ॥"

इति तेनैव अन्यत्रोक्तेः । एवं [2]मन्वादिशास्त्रावेक्षणस्याप्ययमेव कालः । यतु तत्तत्फलार्थं तत्तत्पुराणश्रवणं, तस्य—

"सायं प्रातस्तथा रात्रौ [A]शुचिर्भूत्वा शृणोति यः ।"

इति भविष्यपुराणात् प्रातःकालादिः कालः । तत्रैव भविष्यपुराणाद्यु-क्तेतिकर्त्तव्यता [3][वेदार्थज्ञानोपयोगिषु पुराणाद्यवेक्षणे नेयमितिकर्त्तव्यता ।]

[B]भविष्यपुराणे—शतानीक उवाच—

"भगवन् केन विधिना श्रोतव्यं भारतं नरैः ।
चरितं रामचन्द्रस्य पुराणानि विशेषतः ॥
कथं वैष्णवधर्माणि [4]शिवधर्मानशेषतः ।
सौराणां चैव विप्रेन्द्र कथ्यतां श्रवणे विधिः ॥"

सुमन्तुरुवाच—

"[C]इतिहासपुराणानि श्रुत्वा भक्त्या विशांपते ।
मुच्यते सर्वपापैश्च ब्रह्महत्यादिभि[5]र्विभो ॥
सायं प्रातस्तथा रात्रौ शुचिर्भूत्वा शृणोति यः ।
तस्य विष्णुस्तथा ब्रह्मा तुष्यते शंकरस्तथा ॥"

---

ख पाठः-

(1) विरोधयेत्    (2) मन्वादिधर्मशास्त्रा०

(3) बन्धन [........] स्थपाठो नास्ति    (4) धर्माण्यशेषतः (5) प्रभो

मुद्रित पाठः-

A- शुद्धो भूत्वा-कृत्यकल्प० नियत० ४७३

B- कृत्यकल्प० नियत० ४७३    C- कृत्यकल्प० नियत० ४७३

पापक्षयार्थमेव विहितस्य श्रवणस्य सायंप्रातरित्यादिना कालविधिः । विष्ण्वादितुष्टिकीर्त्तनं प्रशंसार्थम् । ननु [1]कालयोरधिकरणवाक्यं श्रवणान्तर-भिन्नफलार्थम् । पूर्वश्रवणस्य [2]कालाकाङ्क्षत्वेन तेनैकवाक्यत्वे वाक्यभेदा-कल्पनात् । कालत्रयं च विकल्पेन श्रवणाङ्गसमुच्चये प्रमाणाभावात् । एकस्मिन् दिने प्रातः श्रुत्वा सायं [3]श्रवणेऽपि न दोषः । श्रवणक्रियायाः कालद्वये पृथग् व्यक्तित्वेन एकस्यां कालद्वयायोगेन समुच्चयाभावात् । [4]तद्यथा-प्रदोषपश्चिमयामदिवसद्वितीयभागानां वेदाभ्यासकालत्वात् कदाचिद् द्वितीयभागे कदाचित् प्रदोषे, कदाचित् पश्चिमयामे, कदाचित् समस्तेऽपि, कदाचित् कालद्वये वेदाभ्यास एवमिह द्रष्टव्यः ।

[5]तथा-

"ब्राह्मणं वाचकं [A]विद्यान्नान्यवर्णं कदाचन ।"

वाचकस्त्रिविधस्तत्र वोक्तः सात्त्विकराजसतामसभेदेन ।"

ग्रन्थार्थं बुद्ध्वा [6]कृत्स्नशः कलस्वररसमायुक्तं विस्पष्टमद्रुतं यः श्रावयति स सात्त्विकः । कलस्वररसभावसमन्वित [7]विस्पष्टमद्रुतं ग्रन्थार्थं कृत्स्नशोऽबुध्यमानो यः श्रावयति स राजसः । ग्रन्थार्थं बुध्यमानः शीघ्रमस्पष्टं रसभाववर्जितं यः श्रावयति स तामसोऽधमः ।

श्रोतापि त्रिविधः-

सर्वकर्मत्यागेन भक्तिश्रद्धायोगेन [8]सततं वाचकपूजकः नित्यनैमित्तिक-काम्यदक्षिणा[9]दाने रतः सात्त्विकः । प्रसङ्गात् कौतुकेन वा यः शृणोति

---

**ख पाठः-**

(1) कालत्रयविधिकरण० (2) कामाकाङ्क्षत्वेन (3) श्रवणेऽप्यदोषः (4) यथा (5) तद्यथा (6) क्रमशः (7) संस्पृष्टमक्रमं (8) वाक्ये भक्तिकरो (9) दानरतः

**मुद्रित पाठः-**

A- नान्यवर्णजमादरात्-कृत्यकल्प० नियत० ४७४

किञ्चिद्दक्षिणां दत्वा स राजसः। यस्तु भक्तिश्रद्धाहीनः हेतुवादेन पुराणार्थदूषकः लोभेन दक्षिणां न ददाति, क्रोधासूयान्वितः शृणोति स तामसः।

अत्र [1]त्रिधा गणनया यथाकथञ्चित् श्रवणेऽपि किञ्चित् फलं दर्शितम्। सात्त्विकस्य श्रोतुः सात्त्विकवाचकात् श्रवणे यथोक्तं फलम्।

[2]तथा वाचककर्माह—

"[A]शुद्धवासा गृहादेत्य स्नात्वा सत्यदयान्वितः।
प्रदक्षिणं ततः कृत्वा गच्छेद्देवालयादिकम्॥
नात्युच्चं नातिनीचं स्यादासनं गुरवे नृप।
नमस्काराद्यथ श्राव्यं शिवमस्त्विति चान्ततः॥"

श्रावकधर्मानाह—

"शूद्राणां पुरतो वैश्या वैश्यानां क्षत्रिया[B]स्तथा।
क्षत्रियाणां तथा विप्राः शृण्वन्त्वेतेऽग्रतः [C]स्थिताः।
[D]ये तु संकरजा [3]राजन् ते शूद्राणां तु पृष्ठतः।
मध्ये स्थितोऽथ सर्वेषां वाचको वाचयेन्नृप॥"

---

ख पाठः-

(1) त्रिविध (2) धर्मानाह (3) मर्त्या शूद्राणां पृष्ठतस्तु ते

मुद्रित पाठः—

A- शुद्धवासा गृहादेत्य स्थानं यत् समयान्वितम्।
प्रदक्षिणं ततः कृत्वा या तस्मिन् देवतैव हि॥
नात्युच्चमाह सर्वेषामशेषं गुरुवन्नृप।
नमस्कारादथ श्राव्यं शिवमस्त्विति चान्ततः॥

इति कृत्यकल्प० नियत० ४७४

B- स्ततः- कृत्यकल्प० नियत० ४७४  C- सदा - कृत्यकल्प० नियत० ४७४

D- ये वापि संकरा राजन्नरास्ते शूद्रपृष्ठतः॥ कृत्यकल्प० नियत० ४७४

अत्र वर्णानां स्थानविशेषनिर्देशः स्वस्वफलार्थमेव शृण्वतां स्वस्वश्रवणार्थः, न तु सत्रवन्मिलितानां श्रवणेऽधिकारः। उत्पत्तिवाक्ये प्रयोगवाक्ये च बहुवचनाश्रवणात्। तेनैकैकशः [1]श्रवणेऽपि फलं स्यादेव! स्थाननिर्देशे च ब्राह्मणस्य स्थाने क्षत्रिय उपलक्षणम्। यथार्थमन्तर्वेदि मिनोतीति यूपस्थानस्य वेदिरुपलक्षणं न तु यूपस्य [2]वेदिः शेषः। एवं ब्राह्मणदेशस्य क्षत्रियः। एवमन्येऽपि॥

[A]तथा–

इत्थं हि शृण्वतां तेषां वर्णानामनुपूर्वशः।
मासि पूर्णे नृपश्रेष्ठ दातव्यः स्वर्णमाषकः॥
ब्राह्मणेन महाबाहो द्वौ देयौ क्षत्रियेण तु।
वाचकस्य नृपश्रेष्ठ वैश्येनापि त्रयस्तथा॥
शूद्रेणाप्यथ चत्वारो दातव्याः स्वर्णमाषकाः॥

स्वर्णमाषकः– पञ्चगुञ्जामितं सुवर्णम्। "पञ्चगुञ्जात्मको माषः" इति श्रुतेः। प्रतिदिनश्रवणे माससमाप्तौ स्वर्णमाषकं वाचकाय देयम्।

[3]अतः

"[B]कार्त्तिकादि महाबाहो कार्त्तिकं यावदेव तु" इत्युक्त्वा
"अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथा नृप।
सौत्रामणिर्वाजपेयं वैष्णवं च तथा विभो॥
माहेश्वरं तथा ब्राह्मं पुण्डरीकं च भूपते।
आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः॥

---

**ख पाठः-**

(1) श्रवणे फलं (2) वेदिविशेषः (3) अत्र च

**मुद्रित पाठः-**

A- कृत्यकल्प० नियत० ४७४

B- कृत्यकल्प० नियत० ४७५

फलं प्राप्नोति राजेन्द्र मासैर्द्वादशभिः क्रमात् ।
इत्थं यज्ञफलं प्राप्य याति लोकांस्तथोत्तमान् ॥
प्रथमे पारणे राजन् वाचकं पूज्य शक्तितः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥

इत्युपक्रमेऽभिधानात्[1] । इदं चोपलक्षणं कार्त्तिकोपक्रमस्य[2] विध्यभावात् । प्रथमपदस्य निर्देशापेक्षत्वात् तेनान्यमासोपक्रमेऽपि यस्य यस्य मासस्य यज्ञफल तत्स्थाने भवति यथा प्रतिमासि यज्ञविशेषफलप्राप्तिकामः कार्त्तिककृष्णप्रतिपदि समारभेत । इतरस्तु यस्यां कस्याश्चित्तिथावारभ्य सावनमाससमाप्तौ वाचकदक्षिणा यद्वा चान्द्रमासस्य ॥ स्मार्त्तकर्मसु प्राधान्यात् कृष्णादिचान्द्रमाससमाप्तौ दक्षिणा । मध्यतिथ्यारम्भेऽपि[3] तन्मासीयपौर्णमास्यां दक्षिणा ।

"[A]इत्येषा कथिता नित्या मासि मासि भवेत्तदा ।
नैमित्तिकी भवेद्राजन् ग्रहणादिषु पर्वसु ॥"

आदिशब्दात् संक्रान्त्यलभ्ययोगा गृह्यन्ते । तत्रापि स्वर्णमाषकदानम् ।

तथा–"यदा दातुं न शक्नोति माषकं काञ्चनस्य तु ।
[B]राजतं माषकं दद्याद्धिरण्यं तदसम्भवे ॥

राजतमाषकः—कृष्णलद्वयमितं रजतम् । हिरण्यं ताम्रादिधात्वन्तरम् ।

---

**खपाठः—**

(1) विधानात् (2) कार्त्तिकपदस्य विधिभावात् (3) मध्यतिथावारम्भे

**मुद्रितपाठः—**

A- कृत्यकल्प॰ नियत॰ 479

B- ततस्तस्य तदा दद्याद्राजतं श्रेयसेऽनघ-कृत्यकल्प॰ नियत॰ 479

मध्ये च पर्वसमाप्तौ—

"[A]गन्धमाल्यानि दिव्यानि[1] वस्त्राण्याभरणानि च ।
वाचकाय प्रदद्यात्तु ततो विप्रान् प्रपूजयेत् ॥
हिरण्यं रजतं वस्त्रं गावः कांस्योपदोहनाः ।
दत्त्वा तु वाचकायेह श्रुतस्य प्राप्नुयात फलम् ॥

इयमपि नैमित्तिकी दक्षिणा "समाप्ते पर्वणीति" निमित्तश्रवणात् संहिता-समाप्तौ पर्वसमाप्तिदक्षिणां[1] दत्त्वा अधिकम्

"[B2]अमले वाससी राजन् गन्धमाल्यविभूषणम् ।"

इत्युक्तम् । विशिष्टं भोजनम् । इतरेभ्योऽपि भोजनादि ।

अतः-

"हेमन्ते [C3]लोमशा देयाश्छत्रं प्रावृषि सत्तम ।
उपानहौ कालयोगे [D]काले तु कुण्डलौ मतौ ॥
सारभूतं च यच्चान्यत् तस्मै[4] देयं समन्ततः ॥

इत्यादि काम्यदक्षिणा । श्राद्धदिनेऽक्षयतृतीयायां वृद्धिसमये हानिसमये च वाचकपूजनं काम्यम् ।

इति सर्वसाधारणपुराणश्रवणविधिः

---

ख पाठः-

(1) द्रव्याणि (2) पर्वमात्रदक्षिणाधिका (3) ताम्बूलं (4) कम्बलाः
( ) तस्मिन् ।

मुद्रित पाठः-

A- कृत्यकल्प० नियत० ४७५ B- कृत्यकल्प० नियत० ४७९
C- लोमशं देयं—कृत्यकल्प० नियत० ४७९
D- काले वै कुशलोमशौ—कृत्यकल्प० नियत० ४७९

भारतश्रवणे तु विशेष —

[A]महाभारते —

"स्वस्ति वाच्य [B]द्विजान् पूर्वं ततः कार्यं प्रवर्त्तते ।

समाप्ते पर्वणि ततः स्वशक्त्या [C]तर्पयेद् द्विजान् ॥" (५५)

इति प्रतिपर्वं दानविशेषमुक्त्वाह —

"[D1]समाप्य पश्चात् प्रयतः संहितां शास्त्रतो द्विजः ।

शुभे देशे निवेश्याथ क्षौमवस्त्रादिसंवृताम् ॥(७५)

शुक्लाम्बरधरस्तत्र शुचिर्भूत्वा समाहितः ।

अर्चयेच्च यथान्यायं गन्धमाल्यैः पृथक् पृथक् ॥(७६)

संहितापुस्तकं तत्र प्रयतः सुसमाहितः ।

भक्ष्यैर्भोज्यैश्च पुष्पैश्च कौतुकैर्विविधैश्शुभैः ॥" (७७)

कौतुकैः —नृत्यादिभिः

"[E]सुवर्णं च हिरण्यं च दक्षिणां तत्र दापयेत । (७८)

सुवर्णं —षोडशमाषमितम् । एतदाचार्याय । इतरेभ्यो यथाशक्ति हिरण्यम् ।

"[F]देवांश्च कीर्तयेत् सर्वान् नरनारायणौ तथा । (८०)

ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान् ॥

तर्पयेद् विविधैः कामैः धान्यै रत्नादिभिस्तथा । (८१)

भुक्तवत्सु च विप्रेषु यथावत् संप्र[G]वाचयेत् ॥

---

ख पाठः-

(1) समाप्तकृत्यः प्रयतः शास्त्रोक्ते दिवसे द्विजः

मुद्रित पाठः-

A- महाभारते परिशिष्टरूपे पुराणश्रवण विधि श्लो-५५

B- दिजानादौ ततः कार्यं प्रवर्त्तिते । C- पूजयेद्

D-E-F- पुराणश्रवणविधि-श्लो-७५ ८४ श्लोकपर्यन्तम् । G- संप्रदापयेत्

वाचकं भारतश्रेष्ठ[1] भोजयित्वा स्वलंकृतम् । (८४)
[A][2]ततो विवरणं कार्यं संहितां भरतर्षभ ॥
तत्तद्देयं द्विजातिभ्य आत्मीयं शोभनं धनम् ।
एवं कृत्वा ततो विद्वान् दानं श्रद्धासमन्वितः ॥"

अत्र महाभारतश्रवणसमाप्तौ संहितापुस्तकपूजां कृत्वा वाचकाय ब्राह्मणेभ्यश्च दक्षिणां दत्त्वा ब्रह्मविष्णुशिवसरस्वतीनरनारायणादिकीर्त्तनं कृत्वा ब्राह्मणान् वाचकं च भोजयित्वा भोजनोत्तरं श्रुतस्य भारतस्य व्याख्यानं शृणुयात्। भोजनोत्तरं प्रतिदिनं श्रवणे यावद्भिर्दिनैः समाप्नोति तावद्भिः समाप्य व्याख्यानदक्षिणां दद्यात्।

"[B]इतिहासमिमं श्रुत्वा पारं गत्वा च भारत ।
ब्राह्मणेभ्यो यथाशक्ति भक्त्या च भरतर्षभ ॥ (१२)
महादानानि देयानि रत्नानि विविधानि च ।
गावः कांस्योपदोहाश्च सुशीलाः सुमनोहराः ॥ (१३)
सर्वकामगुणोपेतान्यन्नानि विविधानि च ।
वाहनानि विचित्राणि भूमिं वासांसि काञ्चनम् ॥ (१४)
भूषणानि विचित्राणि दद्याद् व्याख्यानकारिणे ।
शयनं शिबिकाश्चैव स्यन्दनांश्च स्वलंकृतान् ॥ (१५)
यद् यद् गृहवरे किञ्चित् किञ्चिदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दासाश्च सूनवः ॥ (१६)

---

ख पाठः-
(1) भारतश्रेष्ठ (2) पंक्तिरियं नास्ति

मुद्रित पाठः-
A- महाभारतान्ते फलश्रवणविधौ (श्लो० ११-१६) अंशतः पाठभेदयुक्ताः।
B- ततोहि वरणं कार्यं द्विजानां भरतर्षभ। भारतश्रवण—८५

एवं कृत्वा तु यो विद्वान् दानं श्रुत्वा[1] समन्वितम् ।
सर्वयज्ञफलं प्राप्य स देवैः सह मोदते ॥"

इदं च श्रवणसमाप्तौ पुस्तकपूजापूर्वकभोजनोत्तरकालीन व्याख्यानश्रवणम् । तत्समाप्तौ विस्तरदक्षिणादानं सर्वयज्ञफलप्राप्तिकामस्य गुणफलार्थं[2] काम्यम् ।

तेनैवंप्रकाराभावेऽपि भविष्यपुराणनीत्या सहैव व्याख्यानेन[3] श्रवणेऽपि स्यादेव फलम् । भविष्यपुराणेऽप्या[4]हत्य भारत[5]श्रवणेऽपीति-कर्त्तव्यताकथनेन तद् विधेरपि विशेषनिष्ठनिरवकाशत्वादिति ।

### भारतश्रवणविधिः

शुद्धदिने काम्यत्वात् कालाशुद्ध्यादिदोषरहिते कार्त्तिककृष्णप्रतिपदि[6] वा दिनान्तरे यजमानतारचन्द्रानुकूले त्रिमुहूर्त्तात्मक-प्रातःकाले समारम्भः । प्रथमं गणपत्यादिपूजा । स्वस्तिवाचनम् । संकल्पः, भविष्यपुराणोक्तसर्वपापक्षयकामस्तत्पुराणोक्त तत्त[7]त्फलकामो वाऽद्यादि-यथासम्भव[8]दिनैर्भारतश्रवणमहं करिष्ये इति । वाचकवरणम्, वस्त्रालंकार-गन्धपुष्प[9]फलैर्भारतश्रवणकर्मणि वाचको भवेति । बहवश्चेत् श्रोतारः प्रत्येकं स्वस्तिवाचनादि कृत्वा स्वस्य कार्यार्थं[10] तमेव वाचकं वृणीरन् ।

वाचकः शुद्धवासाः स्नातः संहितापुस्तकमादाय पुराणवाचकस्थानं प्रदक्षिणीकृत्य विशेत् । नात्युच्चं नातिनीचं चासनं वाचकस्थानं मध्ये । तत्र वाचकस्योपवेशनम् । प्राङ्मुखस्य उदङ्मुखस्य वा । श्रोता च नातिदूरे उपविशेत् । प्रत्यङ्मुख उदङ्मुखो वा । बहवश्चेद् यथामान्यम् । वर्णान्तर-श्रवणे च ब्राह्मणा वाचकसन्निधौ । ततः पश्चात् क्षत्रियाः । तत्पश्चाद्वैश्याः । [11]तत्पश्चात् शूद्राः । [12]तत्पश्चात् संकरजाः ।

वाचकः प्रणम्य नरनारायणब्रह्मविष्णुशिवसरस्वतीगणेशकीर्त्तनं कृत्वा श्रावयेत् । रसभावसमन्वितं सव्याख्यानं श्रावयेत् । शिवमस्तु गोब्राह्मण इत्यन्ते

---

ख पाठः-

(1) श्रद्धासमन्वितः (2) सगुणफलार्थं (3) न च श्रवणेऽपि (4) "आहत्य" इति नास्ति (5) श्रवणेतिकर्त्तव्यता (6) ॰पदि दिनान्तरे (7) फलप्राप्तकामो (8) दिने भारत (9) फलैर्महाभारत (10) फलार्थं (11) ततः शूद्राः (12) ततः संकरजाः

एवं प्रातर्मुहूर्त्तत्रयपर्य्यन्तं श्रुत्वा इच्छायाम् अस्तमनसन्निधिमुहूर्त्तत्रयात्मकसायंकालेऽपि श्रवणं केवलमारब्ध[1]कामस्यावश्यकत्वात्। सर्वावश्यका[2]वसानेषु भोजनाबधे[3]र्भोजनोत्तरदिने न श्रोतव्यम्। दिवा भुक्तेऽपि रात्रिप्रथमप्रहरे[4] श्रवणमविरुद्धम्। एवं प्रतिदिनं[5] द्विकालमेककालं वा श्रवणम्।

यन्मासि प्रारब्धं तस्य मासस्य पौर्णमास्यां वाचकाय स्वर्णमाषकदानम्। [6]एकं विप्रेण, द्वे क्षत्रेण, वैश्येन त्रितयम्, शूद्रेण चतुष्टयम्। संकरजैरपि शूद्रसमं देयम्। संक्रान्तौ ग्रहणे अलभ्ययोगे च स्वर्णमाषकदानं वाचकाय। पर्वसमाप्तौ सुवर्णरजतकांस्योपदोहगोत्रयगन्धमाल्यादि[7]दिव्यवस्तुदानम्। अन्तिमपर्वसमाप्तौ पूर्ववद् दक्षिणां दत्वा निर्मलवस्त्रद्वय गन्धमाल्यभूषणमधिकम्। ब्राह्मणेभ्यश्च भोजनादि।

### अथवा प्रकारान्तरेण पर्वदक्षिणा[A]

आदिपर्वणि मधुपायसप्रधानभोजनदानम्। आस्तिकपर्वणि मूलफलपायसमधुसर्पिःप्रधानभोजनम्। मोदकपिष्टकयुक्तहविष्यभक्ष्यं वाचकाय देयम्। ब्राह्मणेभ्यश्च। सभापर्वणि आरण्यकपर्वणि जलकुम्भत्रय चन्दनानि पुष्पाणि धान्यमूलफलानि च वाचकाय देयानि। ब्राह्मणेभ्यश्च मूलफलानि। विराटपर्वणि वाचकाय विविधवस्त्रदानम्। ब्राह्मणेभ्यः सर्वगुणोपेतान्नदानम्। उद्योगपर्वणि वाचकं ब्राह्मणांश्च गन्धमाल्यैरलंकृत्य

---

ख पाठः—

(1) ०काम्य० (2) ०वसाने भोजन० (3) भोजनोत्तरं दिवा न श्रोतव्यम्

(4) प्रहरश्रवणमाविरुद्धम् (5) दिनं त्रिकालं द्विका०

(6) एवं क्षत्रियेण द्वय (7) दिव्यवस्त्राभरणदानं

मुद्रित पाठः—

A—महाभारतश्रवणविधिः—

आदौ तु वाचकं चैव वस्त्रगन्धसमन्वितम्। विधिवद्भोजयेद्राजन् मधुपायसमुत्तमम्। ५६। ततो मूलफलप्रायं पायसं मधुसर्पिषा। आस्तीके

[1]सर्वकामयुक्तभोजनदानम् । भीष्मपर्वणि गोभूहिरण्यान्यतमं दत्त्वा वाचकाय ब्राह्मणेभ्यश्च सुसंस्कृतसर्वगुणोपेतान्नदानम् । द्रोणपर्वणि भोजनगता-शरांसि ? दानं वाचकाय विप्रेभ्यश्च । कर्णपर्वणि वाचकविप्रेभ्यः [2]सुसंस्कृतसर्वगुणान्नदानम् । शल्यपर्वणि [3]मोदकपूपसगुडोदनपायसदानम् । गदापर्वणि मुद्गमिश्रमन्नम् । स्त्रीपर्वणि रत्नदानं द्विजेभ्यः, सुसंस्कृतान्न-दानं वाचकाय । शान्तिपर्वणि सार्वकामिकभोजनदानं वाचकविप्रेभ्यः । तदुत्तरपर्वणि घृतप्रधानभोजनदानं वाचकविप्रेभ्यः । मौसले पर्वणि सर्वगुणोपेतमन्नगन्धमाल्यानुलेपनम् । हरिवंशे पायस[4]चरुभोजनदानं वाचकविप्रेभ्यः । अनुक्तपर्वसमाप्तौ सर्वसमाप्तौ च भविष्यपुराणीय दक्षिणादानम् ।

---

ख पाठः—

(1) गन्धमाल्ययुक्तं (2) संस्कृत० (3) मोदकापूप० (4) ०भूरिक० ।

मुद्रित पाठः—

भोजयेद्राजन् दद्याच्चैव गुडौदनम् ।५७। अपूपैश्चैव पूपैश्चमोदकैश्च समन्वितम् । सभापर्वणि राजेन्द्र हविष्यं भोजयेद् द्विजान् ।५८। आरण्यके मूलफलैः स्तर्पयेत्तु द्विजोत्तमान् । आरण्यपर्व चासाद्यजलकुम्भान् प्रदापयेत् ।५९। तर्पणानिच मुख्यानि वन्यमूलफलानि च । सर्वकामगुणोपेतं विप्रेभ्योन्नं प्रदापयेत् ।६०। विराट-पर्वणि तथा, वासांसि विविधानि च । उद्योगे भरतश्रेष्ठ सर्वकामगुणा-न्वितम् ।६१। भोजनं भोजयेद् विप्रान् गन्धमाल्यैरलंकृतान् । भीष्मपर्वणि राजेन्द्र दत्त्वा यानमनुत्तमम् ।६२। ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् । द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्च्चितम् ।६३। शराश्चदेया राजेन्द्र चापा-न्यसिवरांस्तथा । कर्णपर्वण्यपि तथा भोजनं सार्वकामिकम् ।६४। विप्रेभ्यः संस्कृतंसम्यग्दद्यात्संयतमानसः ।।शल्यपर्वणि राजेन्द्र मोदकैः सगुडोदनैः ।६५। अपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् । गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥६६॥ स्त्रीपर्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् । घृतौदनं पुरस्ताच्च ऐषिकं दापयेत् पुनः ॥६७॥ ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् । शान्तिपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ॥६८।

सर्वयज्ञफलप्राप्तिकामस्य भारतं [1]यथोक्तक्रममर्थव्याख्यानमन्तरेण श्रुत्वा संहितासमाप्तौ संहितां पूजयित्वा वाचकाय ब्राह्मणेभ्यश्च यथाविधि दक्षिणां दत्त्वा तान् भोजयित्वा स्वयं भुक्त्वा यथाविधि व्याख्यानं शृणुयात्। वाचकः स्वलंकृतः नरनारायणादिकीर्त्तनं कृत्वा नमस्कृत्य व्याख्यानं श्रावयेत्। समाप्तौ गोब्राह्मणेभ्यः [2]शिवमस्त्विति विरमेत।

एवं प्रतिदिनं भोजनोत्तरं व्याख्यानश्रवणम्। सर्वसमाप्तौ यथोक्त-दानमिति विशेषः। पुराणान्तरश्रवणे तु सर्वसमाप्तौ भविष्यपुराणीयदक्षिणा दानम्। [3]प्रतिमासं सुवर्णमाषकादि समानम्। रामायणे काण्डसमाप्तौ, विष्णुपुराणेऽंशसमाप्तौ, पुराणान्तरे प्रसिद्धतत्तद्भागसमाप्तौ, यथा स्कन्दपुराणे रेवाखण्डादि[4]।

इति पुराणश्रवणविधिः

इति श्रीमन्महामहोपाध्यायाग्निचिद्वाजपेयिनरसिंह-विरचिते नित्याचारप्रदीपे षष्ठसप्तमभागकृत्यं समाप्तम्।

———

ख पाठः—

(1) यथोक्तमर्थान्वाख्यानमन्तरेण (2) शुभमस्त्विति विरामयेत्

(3) प्रतिमासि (4) खण्डादि भेदाः

मुद्रित पाठः—

आश्वमेधिकमासाद्य भोजनं सर्वकामिकम्। तथाश्रमनिवासेतु हविष्यं भोजयेद् द्विजान् ॥६९॥ मौसले सार्वगुणिकं गन्धमाल्यानुलेपनम्। महाप्रस्थानिके तद्वत् सर्वकामगुणान्वितम् ॥७०॥ स्वर्गपर्वण्यपि तथा हविष्यं भोजयेद् द्विजान्। हरिवंशसमाप्तौ तु सहस्रं भोजयेद् द्विजान् ॥७१॥ गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत्। तदर्द्धनापि दातव्या दरिद्रेणापि पार्थिव ॥७२॥ प्रतिपर्वसमाप्तौ तु पुस्तकं वै विचक्षणः। सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ॥७३॥ हरिवंशे पर्वणि च पायसं तत्र भोजयेत्। पारणे पारणे राजन् यथावद् भरतर्षभ ॥७४॥ इत्यादि।

# अथाष्टमभागकृत्यम्

दक्षः—(२-६६)

"अष्टमे लोकयात्रा तु बहिःसन्ध्या ततः परम् ।"

लोकयात्रा—गृहायव्ययचिन्ता । धनार्जनप्रकारान्वेषणं च । सुहृन्मित्रादि गृहगमनम् । वैद्य[1]शास्त्राद्यवेक्षणमपीहैव लोकयात्रामध्यगता ।

"उदयास्तमयं यावन्न विप्रः क्षणिको भवेत् ।" (दक्षः २-२)

इति वचनाल्लोकयात्राभावे पुराणश्रवणशास्त्राध्यापनविष्णुनामकीर्त्तनादि-कमिहापि कर्त्तव्यम् ।

इति नित्याचारप्रदीपेऽष्टमभागकृत्यम् ।

---

ख पाठः-

(1) शास्त्रावेक्षण

# अथ नवमभागकृत्यम्

यद्यपि "बहिःसन्ध्या ततः परम्" इत्युक्तं तेनास्तमयपर्यन्तस्याष्टम-भागत्वेन पूर्वमेवोक्तत्वादस्तमनानन्तरं सन्ध्येति प्रतिभाति। तथाप्या-A"तारकोदयात्" "सायमर्धास्तमितभास्कर"मिति व्यासवचनादर्धास्तमिते सन्ध्यारम्भः।

**याज्ञवल्क्यः- (१-११४)**

**"उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च।**

**भृत्यैः परिवृतो Bभूत्वा नातितृप्याथ संविशेत्॥"**

**श्रौताग्निमांस्तु-**

**"सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिरथाङ्गुलैः॥"**

इत्युक्तकाले।

**उद्धरेति यजमानो ब्रूयात्।**

**"सायं प्रातरग्निहोत्रम्" (४-१३-१)**

इति कात्यायनवचनात्। अध्वर्युं प्रति उद्धरेति प्रैषः। स्वयं होम-पक्षे प्रैषाभावः। उद्धरणम्-उपासनस्यापि प्रादुष्करणम्। ततोऽर्धास्तमिते सूर्ये सन्ध्यारम्भः।

**याज्ञवल्क्यः—(१-२४)**

**"प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु।**

**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥"**

प्रत्यक् - पश्चिमाभिमुखः। तत्रा[1]ञ्जलिदानकाले पश्चिमा सन्ध्या [2]सरस्वती कृष्णेति ध्यानम्।

---

**ख पाठः-**

(1) ०ञ्जलिकाले (2) कृष्णवर्णासरस्वतीति

**मुद्रित पाठः—**

A- याज्ञवल्क्य १-२४ B- भुक्त्वा

ब्रह्मप्रोक्ते—

"तथा पश्चिमसन्ध्यायां वृद्धावस्थां सरस्वताम् ।
कृष्णाङ्गीं कृष्णवसनां वृषारूढां त्रिलोचनाम् ।।
डमरुशूलहस्तां च रुद्राणीं रुद्रदैवताम ।
कैलासनिलयां देवीमायान्तीं सूर्यमण्डलात् ।।"

तत्र बौधायनः (२-४-७-१)

"अथातः सन्ध्योपासनविधिं व्याख्यास्यामः"

इत्युपक्रम्य मन्त्रस्नानविधानात् । सायंसन्ध्यायामपि मन्त्रस्नान-मदृष्टार्थमङ्गम । तेन स्नाननिमित्ताभावेऽपि मन्त्रस्नानं कर्त्तव्यम् ।

तद्विधिश्च यथाविध्याचमनम् । त्रिमात्रप्रणवोच्चारणम् ।

"आग्निश्च मा मनुश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो [A]मुच्यन्तां-यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तद-वलुम्पतु यत् किंच दुरितं मयि । [B]इदमहममृतयोनौ सत्ये ज्योतिषि [C]परमा-त्मनि जुहोमि स्वाहा ।" (तै-आ-१०।२४।१)

इत्यपः पीत्वा द्विराचमनम् । "शन्न आप" इत्यादिभिर्मार्जनचतुष्टयम् । पूर्ववत् सन्ध्योपासनम् । [1]त्रिकेणाञ्जलित्रयप्रक्षेपः । यथारूपगायत्रीध्यानम् । सूर्यमण्डलसन्ध्यात्वध्यानम् । "असावादित्य" इति प्रदक्षिणमावृत्य "उदुत्यं, चित्रं, तच्चक्षु" रिति त्रिभिरुपस्थायोपवेशनम् । प्रत्यङ्मुखत्वेन यथारूपां सरस्वतीं ध्यात्वा बाह्यनक्षत्रदर्शनपर्यन्तं शतं सहस्रं दश वा जपः । दीर्घायुष्ट्कामस्य [2]तदूर्ध्वमपि । आयुष्कामस्य दशकृत्वो [3]मन्त्रजपः । उत्थाय

---

ख पाठः—

(1) त्रिकेणाञ्जलिप्रक्षेपः (2) तदूर्ध्वमिति (3) मन्त्रराजजपः

मुद्रित पाठः—

A- रक्षन्तां । B- इदमहंमाममृ० । C- ज्योतिषि जुहोमि ।

प्रत्यङ्मुखस्य "इमं मे वरुणः, तत्त्वायामी"ति द्वाभ्यां रात्रेरुपस्थानम् । उपविश्य "अग्नये स्वाहा, प्रजापतये स्वाहा ।" इति जलाञ्जलिद्वयदानमाचारात् । दैवात् यथोक्तकाले सन्ध्याया असम्भवे—

"प्रातस्तनात् प्रदोषाद्वा सन्ध्याकालो न भिद्यते ।"

इति वृद्धमनुवचनात् प्रथमप्रहरमध्ये करणम् ।

**साग्निकस्य विशेषः—**

"यावत् सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।

Aन च लौहित्यमत्येति तावत् सायं च हूयते ॥"

इति होमकालात् प्राक्[1] [जपत्यागेन होमारम्भः इति विशेषः । गार्हपत्यं प्रदक्षिणीकृत्य यजमानस्योपवेशनम् ।

"अग्निज्योतिषं वा वायुमतीं स्वर्ग्यां च स्वर्गायोपदधामि भास्वती ।"

मित्याहवनीये समिदाधानम् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति प्रथमाहुतिहोमः] प्राक्संस्थ समिदाधानं धरापर्युक्षणं च ॥ शेषं प्रातर्वत् । स्मार्त्तहोमे अग्नये स्वाहेति ॥ शेष प्रातर्होमवत् ।

"सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।"

इति वचनात् पक्वान्नेन तण्डुलादिद्रव्यान्तरेण वा वैश्वदेवोक्तहोमो बलिहरणं च यथोक्तम् ।

---

**ख पाठः—**

(1) बन्धन [...] स्थ पाठो नास्ति

**मुद्रित पाठः—**

A- नचलौहितिमापैति तावत् सायंतु हूयते, इति हरिहरभाष्ये । पारगृ १।९।२

यत्तु—

"सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्।"

(मनु-३-१२१) इति

तत् यजमानस्य ऋत्विजां चासन्निधाने बोध्यम्।

"अप्रोणोद्योऽतिथिः सायं सूर्योढे [A]गृहमागते।"

(मनु ३-१०५)

इत्यतिथि पूजा कार्या[1] गोपालपूजायां ध्याने विशेषः—

"विक्रान्त्याध्वस्तवैरिव्रजमजिनमपास्तावनी भार[2]माद्यैः,

सङ्कीर्तं नारदाद्यैर्मुनिभिरनुदिनं तत्त्वनिर्वृत्तिहेतोः।

सायाह्ने निर्मलं तं निरुपममजरं पूजयेन्नीलभासं,

मन्त्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं वासुदेवम्॥

हारीतः—

"त्रिसन्ध्यमस्कन्नदेवार्चनजपहोमध्याननियमानुष्ठानं [3]दृढव्रतत्वम्। त्रिसन्ध्यनियमिनां पाप्मा शीर्यते। तपो भूयस्त्वमुपैति। ब्रह्म प्रकाशतां [4]गच्छति।"

अस्कन्नं सर्वाङ्गोपेतम्। देवार्चनजपहोमध्यानान्येव नियमाः। तेन ब्रह्म प्रकाशतां [5]गच्छतीति बचनान्मन्त्रराजजप. प्रणवजपो वा। ध्या निनराकारं साकारं च।

---

**ख पाठः-**

(1) हुताग्नीन् त्रीनुपस्थाप्य चेति वचनात् अग्नीनामुपस्थानम्, प्रदक्षिणावर्त्तनं प्रणामः। तस्यास्त्रिकालमर्चनमिति तत्त्वसारसंहितावचनात् प्रतिष्ठितमूर्त्यन्तरपूजा च कार्या।" इत्यधिकम्।

(2) ०मादौ (3) दृढत्वम् (4) याति (5) यातीति नियमात्

**मुद्रित पाठः-**

A- गृहमेधिना

होमस्तु नित्य एव। अत्र प्रदोषपदस्य प्रथमप्रहरमात्रवाचकत्वेऽपि चतुर्थीसप्तमीत्रयोदशीरात्रिषु प्रदोषपदं परिभाषानध्यायः स्मर्यते।

**वृद्धगार्ग्यः—**

"रात्रौ यामद्वयादर्वाक् सप्तमी च त्रयोदशी।
प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः॥
रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते।
प्रदोषः स तु विज्ञेयो वेदाध्ययनवर्जितः॥"

तत्र च—

"यामत्रयं त्रयोदश्यां यामयामार्धसप्तमी।
याममेकं चतुर्थ्यां तु[1] प्रदोषो रजनीमुखम्॥

इति कालपरिमाणं पठन्ति।

"रात्रौ यामत्रयादर्वाग् यदि पश्येत् त्रयोदशीम्।
प्रदोषः स तु विज्ञेयो विद्यामात्रविगर्हितः॥"

इत्यपि क्वचित् पठ्यते।

तस्याः प्रामाण्यसन्देहेऽपि दोषशङ्कया वर्जनसमाचारः।

यत्र—

"सा रात्रिः सर्वकर्मघ्नी महेशाराधनं विना।

इति पठन्ति। अस्य प्रामाण्येऽपि तत्रान्यतिथिविशेषे रात्रिविशेषविहित-कर्मसु बाधकत्वम्। नापि—

"दिवोदितं च यत्कर्म कदाचिदतिवर्त्तते।
रात्रौ प्रथमयामे तु तत्कार्यमविशङ्कितैः॥"

---

ख पाठः

(1) च

इत्यत्र बाधकत्वम् । [1]नापि त्रिकालविहितजपहोम दौ, विहितप्रतिषेधे विकल्पापत्तेः । न वा कर्मप्रकरणे इदं वाक्यम् । "ये वै तादृशरालि-र्व्यतिरिक्ते पूजादिकं कार्य" मिति पर्युदासः स्यात् ।

नापि—

"सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुर[2]भीतितः"

इतिवत् [3][ वाक्येन पर्युदासः ईदृशवाक्याभावात । तेनाध्ययननिषेधस्यै-वायमनुवादः । सर्वकर्मघ्नी सर्वविद्याध्ययनकर्मघ्नी इत्यर्थः । एतेन "प्रदोषे न हरिं पश्येदि"ति व्याख्यातम् ।

विद्याकरपद्धतौ–

"त्रयोदश्यां प्रदोषे तु सोपहारस्त्रिलोचनम् ।]
दृष्ट्वासौ मुच्यते पापै र्ब्रह्महत्यादि भिनरः ॥

प्रदोषे मन्दवारे तु यदा भवति सत्तमाः ।
तदा महत् फलं पुण्यं लभते नात्र संशयः ॥

शनिप्रदोषे संप्राप्ते शुक्लपक्षे विशेषतः ।
शुचिर्भूत्वा धौतवस्त्रो लिङ्गपार्श्वं व्रजेत्ततः ।
त्र्यम्बकेन च मन्त्रेण यजेन्मृत्युञ्जयेन वा ।
गन्धपुष्पं च धूपं च दीपं नैवेद्यमेव च ॥

---

ख पाठः-

(1) निशि (2) ०न्तरपातितः (3) बन्धन [···] स्थ पाठोनास्ति ।

क्षमस्वेति ततो ब्रूयादिमं मन्त्रमुदीरयेत् ।
भवाय भवनाशाय महादेवाय धीमते ॥
रुद्राय नीलकण्ठाय शिवाय शशिमौलिने ।
उमाधवाय उग्राय [1]भीमाय भवहारिणे ॥
ईशानाय नमस्तुभ्यं पशूनां पतये नमः ।
यथा चैव समस्तानां पशूनां पापनाशनः ॥
तथा च तेन मे त्वं च संसारच्छेदको भव ।
प्रदक्षिणं ततः कुर्यात् सव्यासव्यविधानतः ॥
शतमष्टोत्तरं कुर्यात् प्रणामं च ततः पुनः ।
ततो भुञ्जीत [2]चाक्षारलवणाम्भोविवर्जितः ॥
एवं कृत्वा व्रतं सम्यक् सर्वयज्ञफलं लभेत् ।
ज्ञानं तु मुक्तिदं प्राप्य शिवलोके महीयते ॥"

ततो वृषभप्रर्थना—

"धर्मस्त्वं वृषरूपेण जगदानन्दकारक ।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥
पृथिव्यां यानि तीर्थानि सागराणि च सर्वशः ।
अण्डमाश्रित्य तिष्ठन्ति प्रदोषे वृषभस्य तु ॥"
"प्रदोषे वृषभं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
स्पृष्ट्वा तु वृषभस्याण्डं ब्रह्महत्यां व्यपोहति ॥

---

ख पाठः—
(1) भासाय भयहारिणे (2) सक्षारलवणाम्लविव०

## अथ ध्रुवचक्रोपासना

तैत्तिरीयश्रुतौ—(तै-आ -२।१९।१)

"भूः प्रपद्ये, भुवः प्रपद्ये, [A]स्वः प्रपद्ये, ब्रह्मप्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये देवान् प्रपद्ये देवपुरं प्रपद्ये परीवृतो वरीवृतो ब्रह्मणा वर्मणाऽहं तेजसा कश्यपस्य यस्मै नमः"

[1]तच्छिरोधर्मो मूर्द्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरा विष्णुर्हृदयꣳ संवत्सरः [B]प्रजनमश्विनौ पूर्वपादावत्रिर्मध्यम् । मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डम् । [C]तत्र इन्द्रस्ततः प्रजापतिरभयं चतुर्थम् । स वा एष दिव्यः शाक्वरः शिशुमारस्तꣳ ह य एवं [D]वेदापमृत्यु [E]जयति स्वर्गलोकम ॥ नाध्वनि प्रमीयते। नाप्सु प्रमीयते । नानपत्यः प्रमीयतेऽलु[F]प्यन्तो भवति । ध्रुवस्त्वमसि [G]ध्रुवस्य क्षितिमयित्वं भूतानामधिपतिरसि, त्वं भूतानां श्रेष्ठोऽसि त्वा भूतान्युपर्यावर्त्तन्ते । नमस्ते नमः सर्वं ते नमो नमः [H]शिशुमाराय नमः ।

### अत्राद्यमुपासनाक्रमः

ध्रुवचक्रमभिमुखस्य उपवेशनम् । चित्त समाधाय ध्रुवचक्रं दृष्ट्वा जपः । "भूः प्रपद्ये" इत्यादि "यस्मै नमः" इत्यन्तम् । "तत् शिरं

---

ख पाठः—

(1) धर्मर्मूद्धानं

मुद्रित पाठः-

A- भूर्भुवः स्वः प्रपद्ये ब्रह्म B- प्रजनन C- तत्र D- वेदापपुनर्मृत्युं
E- जयति जयति स्वर्गंलोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु०
F- लुप्धान्नोभवति G- ध्रुवस्यक्षितमसित्वं
H- शिशुकुमाराय ( वा ) शिशुमारकुमाराय

इत्यादि ध्यानम् । "शिशुमारस्य शिरः कथ्यते" इति प्रतिज्ञा । तत्र मूर्धानं धर्म आश्रितः । उत्तरा हनुर्ब्रह्मा । ब्रह्मप्रसूतत्वादुत्तानपाद एव ब्रह्मशब्देनोपास्यते । अधरा हनुर्यज्ञः । विष्णुर्हृदयम् । [1]अतिक्षुद्रा ब्रह्मतारकेति लोकप्रसिद्धः । श्रुतिसन्निवेशात्तु तदूर्ध्वतारकेति प्रतिभाति । संवत्सराभिमानिनी देवता । प्रजननमिन्द्रियम् । पूर्वपादावश्विनौ प्रसिद्धौ । अत्रि[2]र्मध्यम् । मध्यपदमपानपरम् । ब्रह्मपुराणात् मित्रोऽपान इति यद्यपि [3]तत्र तथापि अत्रिरेव मित्रत्वेन व्याख्यातः । मित्रावरुणौ पश्चिमपादाविति स्पष्टम् ।

पुच्छस्य तारका[4]चतुष्टये प्रथमोऽग्निः । तत इन्द्रः ॥ ततः प्रजापतिः । अभयं चतुर्थमिति । नास्ति भयं—पतनभयं यस्य ध्रुवस्य । तत्तेजश्चतुर्थं तारकाचतुष्टयस्य । स एष दिव्यः दिवि भवः । [5]शाक्वरः शाक्वरिच्छन्दस्थः । शिशुमार इति ध्यानम् । पुनश्च ध्रुवस्त्वमसीत्यादि "नमस्ते शिशुमाराय" इत्यन्तो जपमन्त्रः । शिशुमार इति छान्दसः मारागमः । तं ह य एवं वेदेत्याद्यर्थवादः । तदुक्तं [6]गावःफलम् । केचित्तु वदन्ति । विद्यायाः प्रशंसापदान्यपि विद्याविशेषः[7]त्वाविद्यान्तर्गतामिति ।

[A]ब्रह्मपुराणे—

"शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ।
सन्निवेशं च तस्यापि शृणुष्व मुनिसत्तम ॥

---

ख पाठः-

(1) अतिक्षुद्रापि मध्यतारकेति (2) मध्यः (3) "तत्र" इति नास्ति
(4) चतुष्टयं (5) शाकरः शक्यराच्छन्दसः (6) गावफलम्
(7) ०षकाविद्यान्तर्गतानीति

मुद्रित पाठः-

A- ब्रह्मपुराणे २४ अध्याये अयं विषयः अस्ति, किन्तु आनुपूर्विकः पाठः न लभ्यते विष्णुपुराणे तु लभ्यते २।१२।२९, ३४

ब्रह्मपुराणे इति—कृत्यकल्प० नियत० ३३४-३३५

यदह्ना कुरुते पापं दृष्ट्वा तं निशि मुच्यते ।
यावत्य इह [A]ताराश्च शिशुमाराश्रिता दिवि ॥
तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि तु ।
उत्तानपादस्तस्यापि विज्ञेयो ह्युत्तरो हनुः ॥
[1]यज्ञोऽ[B]धरश्च विज्ञेयो धर्मो मूर्धानमाश्रितः ।
हृदि नारायणश्चास्ते अश्विनौ पूर्वपादयोः ॥
वरुणश्चार्यमा चैव पश्चिमे तस्य सक्थिनि ।
शिश्नः संवत्सरस्तस्य मित्रो[C]ऽपाने समाश्रितः ।
[2]पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः ।
तारकाः शिशुमारस्य नास्तमेति चतुष्टयम् ॥"

दक्षः—(२-७१.७२)

"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥
[D]तस्मिन्नेव प्रयुञ्जानस्तस्मिन्नेव प्रलीयते ॥"

तस्मिन्—प्रदोषे पश्चिमयामे ॥ प्रयुञ्जानो—वेदं पठन् ॥ तस्मिन्नैव-परंब्रह्मणि लीयते इति वचनात् वेदाभ्यासः कार्यः । अत्र प्रदोषपश्चिम-यामयोः कर्मान्तरविधानादावश्यककर्मान्तरव्यतिरिक्तकाले वेदाभ्यास इति भोजनमपि प्रदोषे । सार्धप्रहरयामत्रय इति तु "यामद्वयं शयान" इत्यस्य

---

ख पाठः-

(1) यज्ञोऽपरस्य  (2) पुच्छे चाग्निर्म०

मुद्रित पाठः—

A- स्ताः  B- धरश्च  C- मित्रोपानं—विष्णुपुराण

D- अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नैव

[1]संकोचकत्वेन प्रदोषासम्भवे बोध्यम् । तेन पूजाद्यनन्तरं कियत्कालं वेदाभ्यासः । तत्र प्रहरमध्ये भोजनम् । तत्रासम्भवे तु तदूर्ध्वघटिकाद्वयं यावत् "न सायं प्रातरश्नीयात्" इति वचनात् । दिवापूर्णोदरस्य न रात्रौ भोजनम् । तत्रापि जलेन प्राणाहुतिः । तन्मन्त्रजपो वा । भोजनधर्माः पूर्वमुक्ताः ।

दधिसक्तुधानातिलसम्बन्धि दास्याहृतानि वर्जनीयानि । बिल्व-फलमपि श्रीकामेन नाद्यम् । न रात्रौ दीपं विना । तेन चन्द्रालोकादि-सत्त्वेऽपि दीप आवश्यकः ।

**शिष्टाः—**

> **"रात्रौ भोजनकाले तु यदि दीपो विनश्यति ।**
> **पाणिभ्यां पात्रमादाय मनसा भास्करं स्मरेत् ॥**
> **ततो दीपं पुनर्दृष्ट्वा तच्छेषं भोजयेन्नरः ॥"**

अर्धरात्रे भोजननिषेधात् ।

> **"महानिशा तु विज्ञेया मध्यमं घटिकात्रयम् ।"**

इति वाक्यस्यासन्मूलत्वेऽपि सूक्ष्मार्धरात्रस्य निषेधायोग्यत्वेन यदुभय-पार्श्वकालग्रहणेन महानिशायां भोजन[2]व्याख्यानम् ।

अतएव—

> **"भुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।"**

इति लिङ्गं दृश्यते । अत्र " नक्तं चैवान्यपर्वसु " इति अमावास्यासंक्रान्ति-पौर्णमासीषु नक्तभोजनं निषिद्धम् ।

> **"चतुर्दश्यामथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।**
> **योऽह्नि नित्यं न भुञ्जीत शिवार्चनरतो नरः ॥**
> **स पुण्यमक्षयं लब्ध्वा शिवलोकं च गच्छति ।"**

---

**ख पाठः-**

(1) संकतत्वेन (2) विधानम्

अत्राह्नि न भुञ्जीतेत्यस्य नक्तं भुञ्जीतेत्यर्थः ।

तथा–

"नक्तं कृष्णचतुर्दश्यां तथा कृष्णाष्टमीषु च ।"

भविष्यपुराणे–

"चतुर्दश्यामथाष्टम्यां तथा कृष्णाष्टमीषु च ।
कृत्वा भोगानिहाप्नोति परत्र च शिवे [1]रतिः ॥
यस्तु सुप्ते हृषीकेशे नक्तमाचरते व्रती ।
वस्त्रयुग्मं [2]नरो दत्त्वा विष्णुलोकं च गच्छति ॥"

इत्यादिषु नक्तव्रते क्रियमाणे–

प्रदोष[A]व्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ।
त्रिमुहूर्त्तः प्रदोषः स्या[B]द्रवावस्तं गते सति ॥" इति

तत्र त्रिमुहूर्त्तात्मकः प्रदोषकालः ।

यच्च–

[C]"नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ।"

इति तदपि एतत् परमेव ।

यत्तु–

"मुहूर्त्तोनं दिनं केचिन्नक्तमिच्छन्ति सूरयः ।"

इति तद्दिनद्वये प्रदोषव्याप्त्यभावे ग्राह्यतिथेर्बोध्यम् ।

---

ख पाठः-

(1) रतिम् (2) प्रदायान्ते विष्णुलोकं स

मुद्रित पाठः-

A- कालदीपः (पृ-१४) B- ०द्भानाव-कालदीपः (पृ-१४)
C- कालदीपः (पृ-१३)

"यस्तु संवत्सरं पूर्णं [A]चतुर्थं कालमश्नुते ।

(महाभा. अनु १०६।४०)

वाजपेयस्य यज्ञस्य स॰फलं प्राप्नुयान्नरः ॥ (४१)

षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षिपन्[B] ।

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥"

(महाभा. अनु १०६।४०-४२)

[1]आहारकालत्रयलङ्घनोत्तरं चतुर्थाहारकालभोजनं संवत्सरावच्छिन्नं फलार्थं विधीयते [2]इति न तत्र मुहूर्त्तत्रयात्मकप्रदोषकालनियमः । किन्तु गृहस्थस्य यो रात्रिभोजनकालः स एव गृह्यते । कालपदस्य गृहस्थ-[3]भोजनकालपरत्वात् । एवं चात्र श्रुतस्य सन्निहितस्य भोजनस्य [4]रागप्राप्तस्यापि फलं सम्बन्धित्वेना प्राप्तस्य [5]पादश्रुत्यैव करणत्वेनान्वय [6][सम्भवे विप्रकृष्टक्लिष्टलाक्षणिककालत्रयभोजनाभावस्य न फलभावनायां करणत्वेनान्वय] इति भोजनमेव '[7]सर्वविशेषणविशिष्ट' विधेयम् । एवं चाजीर्णादावप्यभोजने व्रतभङ्गापत्तेः किं भोक्तव्यम् । यत्तु दध्नेन्द्रियकामस्य जुहुयादि" त्यादौ होमस्य प्राप्तत्वेन गुणस्य फलसम्बन्धस्तत्र [8]सगुणश्रुतत्वं

---

ख पाठः-

(1) आहारस्य का॰ (2) "इति" नास्ति (3) भोजनपरत्वात् (4) समाप्तस्यापि (5) पदश्रुत्यैव (6) बन्धनस्थ [...] पाठो नास्ति (7) सविशेषण॰ (8) सगुणस्य श्रुतत्वं

मुद्रित पाठः—

A- चतुर्थं भक्तमश्नुते । अहिंसानिरतो नित्यं सत्यवाङ्नियतेन्द्रियः ।४० वाजपेयस्य यज्ञस्य फलं वै समुपाश्नुते ॥ त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ।।४१ B- क्षपेत्

बीजम् । किञ्च भोजनाश्रितकालत्रयानशनस्य वा फलसम्बन्धः[1] । रेवती वारवन्तीयं [2]च वाक्यभेदभयेन धात्वर्थानुवादबुद्धिसत्त्वेऽपि कर्मण एव फलसम्बन्धः ।

**तदुक्तम्–"समेषु कर्मयुक्तं स्यात् ।" इति ।**

अतएव विज्ञानेश्वरः [A]"कृच्छ्रादिषु पुरुषार्थभोजनपर्युदासेन कृच्छ्राङ्गभूतं भोजनं विधीयते" इत्याह ।।

यत्तु "द्रव्याणां तु क्रियार्थानां संस्कारः [3]क्रतुधर्मं स्यात्" इत्यत्राधिकरणे "पयोव्रतं ब्राह्मणस्ये" त्यादौ पुरुषार्थ एव भोजने [4]द्रव्यदेशकालनियमः कर्माङ्गमित्युक्तम् । एव"मपराह्णे व्रतोपायनीमश्नीत" इत्यादौ पुरुषार्थभोजने [5]द्रव्यकालनियमः क्रत्वङ्गमित्युक्तं कर्केण ।

तदुभयत्र नानावाक्यैः प्रकरणेन च "भोजनाश्रितद्रव्यादीनां [6] क्रत्वर्थत्वावगम" इति वाक्यभेदशङ्काविरहाच्च न भोजनविधिरिति वैषम्यम् । एवं तु प्रारब्धचतुर्थ[7]कालादिव्रतस्यैकादश्यादौ च व्रतत्वाद् [8]व्रतान्तरं नास्त्येवेति स्यादेव रात्रौ भोजनम् ।

---

ख पाठः—

(1) "संवत्सरस्य विनिगमनाभावादपि भोजनस्येव फलसम्बन्धः" इत्यधिकम्

(2) यवत् (3) क्रतुधर्मः (4) द्रव्यविशेष० (5) द्रव्यं कालश्च क्रत्वङ्ग

(6) क्रत्वर्थतां (13) विरहान्न (7) कालव्रतस्यै (8) "व्रते" इत्यधिकम्

**मुद्रित पाठः—**

A- कृच्छ्रादीनां व्रतरूपत्वात् पुरुषार्थभोजनपर्युदासेन कृच्छ्राङ्गभूतं भोजनं विधीयते ।। मिता-३-३१८

यदि तु [1]व्रतस्थोऽपि "एकादश्यां न भुञ्जीते" त्याहत्य वचनम् तदपि कालत्रयाशनाभावमात्रं न भोजनविशेषणं किन्तु चतुर्थकालावच्छिन्न-पूर्वभोजनकालावधि कालत्रयानशनमेव तत्रेति द्वादश्यामभुक्त्वा त्रयोदश्यां रात्रौ भोजनम्। यस्यापि कालत्रयानशनमेव फलसाधनं तन्मतेऽपि [2]पूर्वभोजनकाल एव तत् परिच्छेदको न तु भोजनम्।

व्रतारम्भपूर्वदिने एकभक्तत्वेन रात्रिभोजनाभावेन भोजनकालस्यैवाव-च्छेदकत्वात्। द्वादश्यां तु भोजने षष्ठकालभोजनं स्पष्टं न तु चतुर्थकाल भोजनम्।

इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे
सायंकालकर्म

— —

---

ख पाठ-

(1) व्रतेष्वेकाल० (2) "पूर्व" इति नास्ति।

# अथ शयनम्

दक्षः- (२-७१, ७४)

"यामद्वयं [A]शया[1]नस्य ब्रह्मभूयाय कल्पते ।
[B]शर्वर्या मध्यमौ यामौ हुतशेषं हविश्च यत् ।।
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ।'

अत्र त्रयाणां वर्णानां पूर्वरात्रे प्रजागरणमिति [2]शङ्खलिखितौ । तद्वचनं प्रथमप्रहरपरम् ।

[C]शङ्खः

"नोर्द्ध्वपादः सुप्यान्नोत्तरापरशिराः । न नग्नो । नानुवंशम् । नाकाशे । न पालाशे शयने । न पञ्चदारुकृते । न गजभग्नकृते । न विद्युद्दग्धकृते । न भिन्ने । नाग्निप्लुष्टे । न घटसिक्तद्रुमजे । न श्मशानशून्यालयदेवतायतनेषु । न चपलमध्ये । न धान्यगोगुरुहुताशसुराणामुपरि । नोच्छिष्टो ।। न दिवा स्वपेत् । न सन्ध्यायाम् । न भस्मनि । नाशुचौ देशे । नार्द्रे । न पर्वतमस्तके ।"

अनुवंशम् - गृहोपरिदत्तश्रेणीसंज्ञकदीर्घकाष्ठस्याधस्तात् तद्दीर्घानुकारेण । आकाशे - अनावृतदेशे । पञ्चदारुकृते - पञ्चजातीय[3]दारुकृते । चपलोऽत्र व्यसनी ।

---

ख पाठः-

(1) ० नस्तु ( ) शङ्खलिखितवचनं (3) काष्ठनिर्मिते

मुद्रित पाठः-

A- शयानो हि B- कृत्यकल्प० नियत० ३३४, दक्षस्मृतौ शर्वर्या स्थाने सर्वत्र इति पाठः । C- विष्णुस्मृतेः ७० अध्यायपाठ इत्थमेव

[2]क्वचित्तु–[1]

"एकद्रुमे यशो, वृक्षद्वयनिर्मितश्च धन्यतरः
त्रिभिरात्मजवृद्धिकरश्चतुर्भिरपि यशश्चाग्र्यम् ।
पञ्चवनस्पतिरचिते पञ्चत्वं याति यः शेते,
षट्सप्ताष्टतरूणां काष्ठैर्घटिते च [2]कुलक्षयः ॥
[A]अन्येन च संयुक्ता तिन्दुकी शिंशपा [3]च न शुभफलदा ।
न श्रीपर्णीतरुघटिता न देवदारुवृक्षघटिता च ॥"

"नान्यपूर्वे । नाश्मपीठोपधाने । [4]न तिर्यगुदक्शिराः । न नग्नो नाशुचिर्नोच्छिष्टो । नोच्चैर्निशायां भाषेत ।"

नान्यपूर्वः–[5]पूर्वमन्येनानुपभुङ्क्ते । तिर्यक्शिराः- विदिक्शिराः ।

शङ्खलिखितौ–

"[6]न[B]शीर्णखट्वायां नान्यवर्णोपसेवितायामनभ्युक्ष्य ।"

अनभ्युक्ष्य - अप्रक्षाल्य । इदमापदि । "[C]निर्णिज्याशक्ता"विति गौतम (१-९-७) स्मरणात् ।

---

ख पाठः—

(1) क्वचिच्च (2) कुलनाशः (3) शुभ० (4) न तिर्यक् न प्रत्यक्शिराः (5) पूर्वं नान्योपभुङ्क्ते (6) न निशीर्ण०

मुद्रित पाठः—

A- अन्येन समायुक्ता न तिन्दुकी शिंशपा च शुभफलदा ।
न श्रीपर्णन च देवदारुवृक्षो न चाप्यसनः ॥ बृहत्संहिता-७९-१५

B- न निशीर्ण० - कृत्यकल्प० नियत० ३३७ C- निर्णिक्तमशक्ता

तथा—

"आसनं शयनं यानमन्तर्धाय समाचरेदि"ति ।

अन्तर्धानं - वस्त्राद्यास्तरणम् । इदं च [1]क्षालनोत्तरम् । इदमप्यापदि । शय्यादौ तु न क्षालनम् । किन्तु-

"[A]तूलिकामुपधानानि पुष्परक्ताम्बराणि च ।

शोषयित्वाऽतपे किञ्चित् करैरुन्मार्जयेन्मुहुः ॥" इति

सलेपे तु क्षालनमेव ।

[B]शंखलिखितौ—

"न पर्वणि रभसोत्सवे ।"

पर्वणि - पर्वप्रतिपत्सन्धौ । रभसोत्सवे - पुत्रजन्माद्युत्सवे ।

[C]उशनाः-

"न तैलेनाभ्यक्तशिराः स्वपेत् ।"

पैठीनसिः-

"नाद्वारेण [D]प्रविशेत् । नादीक्षितः कृष्णचर्मणि शयीत ।"

कृष्णचर्म - कृष्णमृगचर्म । शयनं निषिद्धं न तूपवेशनम् ।

---

ख पाठः—

( ) प्रक्षालनो०

मुद्रित पाठः—

A- अङ्गिरः स्मृतिः (पूर्वाङ्ग-११४) ।

पराशरस्मृतौ (७-३१) यथा-

तूलिकाद्युपधानानि पीतरक्ताम्बराणि च ।

शोषयित्वार्कतापेन प्रोक्षयित्वा शुचिर्भवेत् ॥

B- कृत्यकल्प० नियत० ३३७ C- कृत्यकल्प० नियत० ३३८

D- प्रविशेत् तथा नादी० - कृत्यकल्प० नियत० ३३८

शिष्टाः पठन्ति-

"स्वगृहे प्राक्शिराः शेते स्वगृहे दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः ॥
सुधौतशुष्कपादस्तु स्वाचान्तः शयने शुचौ ।
नरसिंहं पद्मनाभं शयने संस्मरेत् सदा ॥
सर्पाणां [1]वारणार्थं च इमं मन्त्रमुदीरयेत् ।
नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ॥
नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥"

कात्यायनः-

"आहवनीयगृहशाय्यधः गार्हपत्यस्य वा ।"

अत्र दर्शपौर्णमासाङ्गाधः शयने खट्वानिषेधो न वस्त्राद्यास्तरणनिषेधः । एवमनाहिताग्नेरप्येवं पश्चादग्नेरिति ।

आपस्तम्बः-(१-११-३२-६)

"सदा निशायां दारान् [A]प्रत्यलंकुर्यात् ॥"

सदेति वचनादुपभोगाभावेऽपि ।

तथा—

"स्त्रीणां क्रीडार्थसंभोगे नीलीवस्त्रं न दुष्यति ।"

वराह[B]पुराणे-

"द्विभार्यः पुरुषो यस्तु स्नेहेनैकां तु पश्यति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥"

---

ख पाठः-

(1) वारणार्थाय इमं मन्त्रमुदाहरेत्

मुद्रित पाठः-

A- प्रत्यलंकुर्वीत B- मुद्रितपुराणे नास्ति

इतिवचनात् समदृष्टित्वम् । इदं च समानगुणत्वे । गुणोत्कर्षे तु स्नेहः स्वभावसिद्धः । अतएव-

"स्त्रीणां सौभाग्यतो ज्यैष्ठ्य" मिति कात्यायनः ।

सत्कारविषयं वा । स्नेहवशेन सत्कारतारतम्यं न कुर्यादित्यर्थः ।

मनुः- (३-४५.५०)

"ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥ (४५)

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
तासामाद्याश्चतस्रस्तु निन्दितैका[1]दशी तथा ॥ ४६

त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ॥ (४७)
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।' (४८)

समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ।
निन्धास्वष्टासु चान्यासु स्त्रियो रात्रिषु [2]वर्जयेत् ।। (४९)
ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन् ॥ (५०)

ऋतुः- स्त्रीणां गर्भधारणयोग्यावस्था तदुपलक्षितः कालः ऋतुकालः । तत्रा'भिगमनमेव व्रतं यस्य स ऋतुकालाभिगामी । भार्याया रतिकाम्यया निमित्तेन पर्ववर्जमेनां व्रजेत् । एवं तद्व्रतः स्यात् । भार्यासकामत्वे गमनमेव व्रतं यस्य । एवं च भार्यारतिकामनायां पर्ववर्जम् ऋतावनृतौ च गमने न दोषो वक्ष्यमाणवचनादित्यवगन्तव्यम् ।

"यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।" (२-८१)

इति याज्ञवल्क्यवचनात् ।

---

ख पाठः—

(1) ० दशी च या (2) वर्जयन्

स्त्रीवरश्च—

"विज्ञायते हीन्द्रस्त्वाष्ट्रं त्रिशीर्षं हत्वा पापगृहीतममन्यत। तं सर्वाणि भूतान्यभ्याक्रोशन् भ्रूणहन्निति। स स्त्रियमुपधावदस्यै मे भ्रूणहत्यायै तृतीयं प्रतिगृह्णीतेति, ता अब्रुवन् किं च नो भूदिति। सोऽब्रवीद् वरं वृणीध्वमिति। ता अब्रुवन् ऋतौ [1]प्रजां विन्दामह इति"

कामर्मावजनितोः संभवाम इति "तथेति ताः प्रतिजगृहुः"

आविजनितोरिति तामुन्। पुत्रजन्मपर्यन्तं कामं सम्भवामः। अस्मदिच्छया पुरुषसम्भोग लभेमहीति यावत्। पुत्रजन्मानन्तरं च पुत्रान्तरजन्मापेक्षया यथाकामित्वमित्यत्रगन्तव्यम्। एवं स्त्रीकामनायां व्यभिचारशङ्कानिवृत्तयेऽ यथाकामित्वमित्यत्रगन्तव्यम्। "युग्मासु पुत्रा" इति स्त्रीणा-नृतावपि गमनमावश्यकमित्युक्तं भवति। "युग्मासु पुत्रा" इति स्त्रीणा-मार्तव तारतम्यात्।

"युग्मास्वल्पीभवत्यार्तवमयुग्मास्वाप्यायते तस्मादासु क्रमात् पुत्राश्च दुहितरश्च जायन्त इति श्रुतेः।"

समे—स्त्री पुंसयोः शुक्रशोणितसाम्ये॥ अपुमान्—नपुंसकः। यौगपद्ये तु नपुंसक मिति Aयमस्मृतेः॥ [2]समे शुक्रशोणिते अर्थात् शुक्राधिके द्विधोत्सर्गे [3]पुंयुग्मम्। क्षीणे—निःसारे, अल्पे परिमाणतः विपर्ययः—गर्भानुवृत्तिः। अनिन्दितास्वन्यास्वष्टासु निन्द्यासु षट्सु—आद्यचतुष्टयैकादशीत्रयोदशीषु। अनिन्दितास्वन्यास्वष्टासु वर्जयन्, अर्थात् रात्रिद्वयमेव गच्छन्, ब्रह्मचार्येव भवति—ब्रह्मचर्यफल प्राप्नोतीत्यर्थः॥

---

खपाठः—

(1) प्रजामिति नास्ति (2) समे शुक्रशोणिते द्विधा शुक्रोत्सर्गे यमलं जायते द्विधोत्सर्गे यमलमिति यमस्मृतेः (3) पुंयुगलम्

मुद्रितपाठः—

A- युगपद् यत्र वर्त्तते विद्यात्तत्र नपुंसकम्—कृत्यकल्प० नियत० ३४०

याज्ञवल्क्यः—(१-८०)

"एवं गच्छन् स्त्रियं क्षामां मघां [A]मूलां च वर्जयेत् ।
[B]स्वस्थ इन्द्रौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् ॥"

क्षामा—अल्पबला, क्षामता च रजस्वलाव्रतैः अवृष्यलघ्वाहारादिभिश्च । स्वस्थ इन्द्रौ-बलवति चन्द्रे । चन्द्रग्रहणं शुभग्रहाणामन्तरयोगोपलक्षणार्थम् । तथा चोक्तम्—

पीडा राशौ भौमदृष्टे शशाङ्के
मासं मासं योषितामार्तवं यत् ।
त्र्यंशो [1]शान्तं यच्च रक्तं [2]यवाभं
तद्गर्भार्थं वेदनागन्धहीनम् ॥

(सारावल्याम्)

उपचयगौ रविशुक्रौ बलिनौ पुंसः [3]स्वांशकं प्राप्तौ ।
युवतेर्वा [4]कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति ॥(८।११)
शुक्रार्कभौमशशिभिः स्वांशोपचयस्थितैः [C]शुभर्क्षे वा ।
धर्मोदयात्मजस्थे बलवति गर्भस्य सम्भवो भवति ॥(८।१२)
विषमे विषमांशगता होराशशिजीवभास्करा बलिनः ।
कुर्वन्ति जन्म पुंसां समे समांशे तु युवतीनाम् ॥ (१।१४)
ओजर्क्षे गुरुसूर्यौ बलिनौ पुंसः समे सितेन्दुकुजाः ।
कन्यानां जन्मकरा गर्भाधाने स्थिता बलिनः ॥ (१।१५)

---

ख पाठः—

(1) शीतं (2) यदा नु (3) स्वसंगमप्राप्तौ (4) कुजशुक्रौ

मुद्रित पाठः-

A- मूलं B- सुस्थ C- सुरेज्ये वा

लग्नं मुक्त्वा विषमे शनैश्चरः [A]पुत्रजन्मदो भवति ।

योगे [B]विहङ्गमानां वलं वीक्ष्य विदेन्नरं स्त्रियं वापि॥(८।१७)

[C]क्रूरान्तस्ते चन्द्रे लग्नं वा युगपन्मरणाय ।

सौम्यैरदृष्टमूर्त्तियुवतीनां [1]गर्भसहितानाम ॥ (८।३५)

[D]उदयंयातैः पापैः सौम्यैरनवेक्षिते [E]मरणमस्याः ।

[2](उदयस्थे वले वा क्षीणे शशिनि भौमसंदृष्टे ॥ (८।३६)

[F]उदयगेर्के शशिनि कृशे लोहितः पाताले ।)

सगर्भा स्त्री म्रियतेऽस्मिन्नथवा शुक्रे पापद्वयान्तरस्थे[G] ।
(८।३७)

चन्द्रचतुर्थैः क्रूरैविल[3]ग्नतो वा विपद्यते गर्भः ॥

[H]लग्नहोराष्ट[4]मे क्षितिसुते सह जनन्या । (८-३८)

हिबुकगते धरणीसुते [I]चा[5]ष्टगते पापगते क्षीणे ।

गर्भेण सह म्रियते पापग्रहदपुर्नि प्राप्ते ॥ (८-३९)

---

**ख पाठः-**

(1) गर्भमसहन्तीनाम् (2) बन्धनस्थ पाठो नास्ति (3) विलग्नगो
(4) ष्टमगते (5) रिपुगते

**मुद्रित पाठः—**

A- पुत्र B-विहगस्य बलं संवीक्ष्य C-क्रूरान्तस्थ सूर्यश्चन्द्रो वा युगपदेव मरणाय D- उदयास्तगतैः E- श्च मरणं स्यात् ॥ उदयस्थिते कुजे वा क्षीणेन्दौ भौमसंदृष्टे ॥ ८-३६

(F) व्ययगेऽर्के शशिनि कृशे पाताले लोहिते सगर्भा स्त्री ।
म्रियते तस्मिन्नथवा तस्मिन् शुक्रे पापद्वयान्तरस्थे । ८।३७

G- न्तस्थे H-होराद्यूने क्षितिजे म्रियते गर्भः-सह जनन्या ॥ ३८

I- रिफ्फगतेऽर्के क्षपाकरे क्षीणे ।

लग्ने रविसंयुक्ते क्षीणेन्दौ [1]वा [A]म्रियते ।
व्ययधनसंस्थैः पापैस्तथैव सौम्यग्रहादृष्टैः ॥ (८-४०)

[B]जामित्रगेऽर्कदृष्टे लग्नगते वा कुजे निषिक्तस्य ।
गर्भस्य भवति मरणं शस्त्रच्छेदैः सह जनन्या ॥ (८-४१)

अथवा निषेककाले विलग्नसंस्थौ यदा रुधिरमन्दौ ।
[C]तनयगतेऽथवैतौ तद्वीक्षिते च पतति गर्भः ॥ (८-३३)

व्ययभवन[D]स्थश्चन्द्रो वामं चक्षुर्विनाशयति हीनः[2] ।
[E]सूर्यस्तथेतराभ्यां शुभदृष्टे दासतां नयति । (८-५५)

सौम्ये त्रिकोणसंस्थे [F]लग्ने मन्दग्रहै र्बलहीनैः ।
[G]त्रिगुणास्यपादहस्तै योगेऽस्मिन्ना[H]हितो गर्भः । (८-५८)

"वामनको मकरान्त्ये लग्ने रविचन्द्रसौरिभिर्दृष्टे ।
शशिनि विलग्ने कर्किणि [I]कुजार्किदृष्टेऽथवा कुब्जः ॥
(८-५६)

अन्योऽन्यं रविचन्द्रौ [J]विषमर्क्षसमर्क्षगौ [K]निरीक्षेताम् ।
इन्दुजरविपुत्रौ वा दृष्टौ बलिनौ नपुंसकं कुरुतः ॥ (८-१८)

---

ख पाठः—

(1) म्रियते तथा जननी (2) हीन इति नास्ति

मुद्रित पाठः-

A-कुजेऽथवा म्रियते B- जामित्रे रवियुक्ते C- तद्गृहगतेथवेन्दौ तदीक्षिते वा
D- भवनगत E- सूर्यस्तथैव चान्यच्छुभदृष्टौ याप्यतां नयत: ।
F- लग्नाच्छेषग्रहैर्बलविहीनैः G- द्विगुणा H- भाहितो भवति गर्भः ।
I- कुजार्कदृष्टे J- विषमर्क्षगतौ K- निरीक्षेते

[A]सूर्यसमराशिगतं वक्रो विषमर्क्षगोऽवलोकयति ।
विषमर्क्षे लग्नेन्दुकुजेक्षितौ षण्डसम्भवं कुरुतः ॥
बुधचन्द्रौ कुजदृष्टौ विषमर्क्षसमर्क्षगौ तथैवोक्तौ ।
ओजनवांशकस्था लग्नेन्दुसितास्तथैवोक्ताः ॥
[B]पश्यति वक्रः समर्क्षे सूर्यचन्द्रोदयाद् विषमर्क्षे ।
[1]यद्येवं गर्भस्थः क्लीबो मुनिभिः सदा दृष्टः ॥ (८-१६)

प्रजामुत्पादयेदौषधमन्त्रसंयोगेनेति (२।९।१६।१२) बौधायनवचनादौषधप्रयोगोऽपि विधेयत्वाल्लिख्यते—

"तस्मात शुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत्"

"इति बृहस्पतिवचनात् पुंसो वृष्य-भक्षणम् ।

वृष्याणि [2]वैद्यशास्त्रे—

"भूमिकूष्माण्डमूलचूर्णपलचतुष्टयं तस्यैव स्वरसेनाप्लाव्य भावयि[3]त्वातपे कृत्वा शोषयेत् । एवं सप्तधा कृत्वा तच्चूर्णं माषद्वयं घृतषाणं मधुषाणं च दत्त्वा[4]लेभ्य रात्रौ प्रातर्वा पेयम् । दुग्धमनुपेयम् ।" तथा—"सुपक्वामलकचूर्णपलचतुष्टयं स्वरसेन सप्तधा भावितमातपशुष्कं तच्चूर्णमात्रं[5] शर्करामधुघृतैर्मिलित्वा माषद्वयं सर्वमेकीकृत्य लेह्यम् । दुग्धमनुपेयम् ।

---

ख पाठः-

(1) सदैवं (2) वृष्याणि च (3) शोधयेत् (आतपे कृत्वा नास्ति 'ख' पुस्तके)
(4) दत्त्वाऽऽलोड्य रात्रौ (5) माषमात्रं

मुद्रित पाठः-

A- ओजसमराशिसंस्थौ ज्ञेन्दू षण्डं कुजेक्षितौ कुरुतः ।
नरभे विषमनवांशे होरेन्दुबुधाः सितार्किदृष्टा वा (८-२०)
B- पश्यति वक्रः समभे सूर्यं चन्द्रोदयौ च विषमर्क्षे ।
यद्येवं गर्भस्थः क्लीबो मुनिभिः समादिष्टः ॥

[1]अथवा

पिष्टभूमिकूष्माण्डमूलकर्षं घृतषाण[2]मात्रं दत्त्वा खाद्यम्। गव्यदुग्धमनुपेयम्।

यद्वा—

गव्यदुग्धपलद्वयम् जलपलाष्टके शतावरी चूर्णकर्षं दत्त्वा श्रपणीयम्। दुग्धावशेषे जाते शर्करापलार्धं दत्त्वा रात्रौ भक्षणीयम्। [तथा दुग्धपलाष्टके निस्तुषीकृतमाषविदलित चूर्णपलं प्रक्षिप्य श्रपणीयम्। सिद्धे घृतकर्षद्वयं दत्त्वा भर्जनीयम्। यथाग्नि खाद्यम्। अथवा-घृतलिप्तानां माषदलानामातपे शोषणम। तच्चूर्णं गव्यदुग्धपलाष्टके दत्त्वा श्रपणीयम्। सिद्धे घृतकर्षद्वयं दत्त्वा सन्तोलनं कृत्वा शर्कराकर्षं दत्त्वा खाद्यम्]

अथवा—

त्रिफलाचूर्णपलं गव्यघृतपल भल्लातकचूर्णपलं शर्करापलं मधुपलं सर्वमेकीकृत्य ततः [3]षाणद्वयं प्रातः खाद्यम्। गव्यदुग्धपलमनुपानम्।

यद्वा—

छागाण्डद्वयं गृहीत्वा क्षीरे कियत्कालं पक्त्वा पश्चात् घृतेन भर्जनम्। तयोर्धन्याक जीरककर्षजलेन पाकः। सैन्धवं दत्त्वावतार्य पिप्पलीचूर्णं दत्त्वा भोजनादौ भक्षणीयम्।

**"लक्ष्मणाहस्तिकर्णाभ्यां त्रिकत्रयसमन्वयात्।**
**अश्वगन्धासमायोगाल्लोहं पुंसवनं [4]मतम्॥**
**पुत्रोद्पादकरं वृष्यं कन्यासूतिनिवर्त्तकम्॥**

लोहचूर्णपलत्रयं ग्राह्यम्। लक्ष्मणा[5]मूलचूर्णकर्षं हस्तिकर्णपलाशमूलचूर्णकर्षं त्रिकटुत्रिफलाप्रत्येकचूर्णं कर्षं, रक्तचित्रकमूल-

---

**ख पाठः—**

(1) अथवा भूमिकूष्माण्डकं मूलकम्
(2) घृतमाढमात्र खाद्यम्। (3) माढद्वयम् (4) स्मृतम्
(5) लक्ष्मणामूलचूर्ण-हस्तिकर्णपलाशमूलचूर्णकर्षं त्रिकटु-त्रिफला-गुडत्वक्-चूर्णं कर्ष कर्षं रक्तचित्रकमूल-विड़ङ्गमूलमुस्तकादीनां कर्षं कर्षम्

विडङ्गबीजमुस्तकानां[1] कर्षं कर्षम् अश्वगन्धामूलचूर्णकर्षं च लौहचूर्णेन मिश्रित्य सर्वमेकत्र सम्मर्द्य तस्माद् गुञ्जाष्टकं मधुघृताभ्यां लोहभाण्डे समर्द्य लेह्यम्। सशर्करक्षीरमधु पेयम्। दिनद्वयान्तरे रक्तिकाद्वय क्रमेण वृद्धिः। विंशतिरक्तिकोर्ध्वं न वर्धनीयम्। एवं सुवर्णभस्मपूर्णचन्द्ररसो वृष्यः। रससिन्दूररसोऽपि।

**"शालितण्डुलगोधूमयवमाषकणोद्भवाम्।**

**पूलिकां सर्पिषा पक्त्वा भुक्त्वा दुग्धं सशर्करम्।**

**यः पिबेत् सोऽपि कन्दर्पः कामिनीदर्पनाशनः॥"**

इति पुंसो भक्ष्याणि वृष्याणि॥

पुत्रोत्पादनार्थं स्त्रिया सेव्यान्यौषधानि उच्यन्ते—

नागकेसरचूर्णमाषद्वयं गव्यघृतस्योपरिभागरूपमण्डकर्षद्वये दत्वा आर्तवानन्तरं शुभक्षणे पेयम्।

**"[2]क्वाथेन हयगन्धायाः साधितं सघृतं पयः।**

**ऋतुस्नाताबला पीत्वा गर्भं धत्ते न संशयः॥"**

अथवा

अश्वगन्धा[3]मूलचूर्णकर्षद्वयं जलपलाष्टकेन निःक्षिप्य क्वाथः कार्यः। पलद्वयावशिष्टे तत्क्वाथे दुग्धपलद्वयपाकः। दुग्धावशेषे घृतार्धकर्षं दत्वा ऋतुस्नानानन्तरं पेयम्।

अथवा

जलषोडशपलेऽश्वगन्धामूलस्यार्धकर्षं दत्वा क्वाथः। अर्धावशेषे क्वाथे दुग्धपलद्वय दत्वा पाकः। दुग्धावशेषे जाते घृतार्धकर्षं दत्वा तद्दुग्धं पेयम्। एवं दिनत्रयम्।

**"[4]पिपल्यः शृङ्गवेरं च मरीचं केसरं तथा।**

**समं घृतेन पातव्यं बन्ध्या तु लभते सुतम्॥"**

---

**ख पाठः—**

(1) मुस्तकादीनाम् (2) अयं श्लोको नास्ति (3) मूलकर्षद्वयम्

(4) एषः श्लोकः नास्ति

[1]पिप्पलीमाषकं शुण्ठीमाषकं मरीचमाषकं नागकेसरचूर्णमाषकपञ्चकं (?) घृते कर्षद्वये समालोड्य पेयम् ।

यद्वा—

गोघृतकर्षद्वये नागकेसरचूर्णमाष[2]द्वयं दत्त्वा पेयम् । गव्यदुग्धमनुपेयम् ।

"[3]वटवृक्षोद्भवान् शृङ्गान् गोघृतेन समांशकान् ।
ऋतुकाले पिबेद् या तु नियतं पुत्रिणी भवेत् ॥"

वटवृक्षोद्भवान् शृङ्गान् चूर्णयित्वा तच्चूर्णान् [4]माषचतुष्टयं गोघृत[5]माषचतुष्टये कृत्वा पेयम् ऋतुकाले । श्वेतपुष्प[6]वाट्यालाख्यस्य मूलकर्षं यष्टिमधुकर्षं च शर्करापले मिश्रयित्वा एकवर्णाया जीववत्सायाः धेनोः क्षीरेण पिष्ट्वा घृतकर्षेण समालोड्य ऋतुस्नानानन्तरदिवसे उपोष्यापरेऽहनि स्नात्वा ब्राह्मणाय किञ्चिद् दत्त्वा महेश्वरं सम्पूज्य नारी पिबेत् । [7]अत्र दिने न किञ्चिद् भक्षयेत् । दिनान्तरे दुग्धान्नं भुञ्जीत । सुवर्णचूर्णमाषद्वयं घृतकर्षद्वये समालोड्य पेयम् । तथा रजतचूर्णमाषद्वयं घृतकर्षे समालोड्य पेयम् । एवं ताम्रचूर्णकर्षद्वयम् । सुवर्णरजतताम्रैः समैरेकीकृत्यावर्तितैर्गव्यघृतं दत्त्वा चन्दन[8]वत् पिष्ट्वा योनिमध्ये लेपः ।

अथवा—

अरण्यजातवटवृक्षस्य पूर्वोत्तरशाखास्थितपत्रमुकुलमाषद्वयं श्वेतसर्षपमाषद्वयञ्च मिलितं दध्ना पिष्ट्वा तेनैवालोड्य पुष्यानक्षत्रे तृतीयमासे पुंसवनार्थं गर्भिणी पिबेत् ।

---

**ख पाठः—**

(1) पिप्पलीमाढ़कं शुण्ठीमाढ़कं मरीचमाढ़कं नागकेसरचूर्णमाढ़कं ।
(2) माढ़द्वयं (3) अयं श्लोको नास्ति (4) माढचतु (5) माढचतु
(6) ? पुष्पस्य वाडी एलाख्यस्य (7) तस्मिन्
(8) "चन्दनवत्" इत्यादि 'ख' पुस्तके नास्ति ।

सुवर्णस्य, रौप्यस्य, लोहस्य वाणुपरिमाणान् पुरुषाकृतीनग्नौ प्रक्षिप्याग्निवर्णान् कृत्वा दुग्धे दधिनि जले वा निर्वाप्य तद्दुग्धादिकं पुरुषाकृतिसमेतं केवलं वाञ्जलौ कृत्वा पुष्यानक्षत्रे तृतीयमासे पुंसवनार्थं गर्भिण्या पेयम् ।

पीतप्रसवदासीकरण्टा (क) मूलं कर्षार्धं चूर्णयित्वा दुग्धपलद्वये समालोड्य पेयम् ।

एवमश्वगन्धामूलचूर्णकर्षार्धं दुग्धपलद्वये समालोड्य पेयम् । मातुलङ्गबीजानि स्विन्नानि कृत्वा [1]पिष्ट्वा कर्षार्धं घृतकर्षार्धेन पेयम् । पूर्वदिने उपोष्य पुष्यानक्षत्रे कूटजमूलमुत्पाट्य चूर्णयित्वा तच्चूर्णकर्षार्धं एकवर्णगोक्षीरपलद्वये समालोड्य पेयम् । कसेरुकं शुण्ठिघृतं च षाणद्वयं क्षीरपलकद्वये समालोड्य पेयम् ।

एवं लक्ष्मणामूलकर्षार्धं दुग्धपलद्वये पीतं दिनत्रये पुत्रदम् । एवं शिखिचूडामूलकर्षार्धं दुग्धपलद्वये पीतम् दिनत्रये पुत्रदम् । अत्र फलघृतम् अश्वगन्धाघृतञ्च पुंसवनं वैद्यशास्त्रादवगन्तव्यम् ।

"दशकुड्मलको माषः षाणः [2]स्यात् स चतुर्गुणः ।
षाणचतुर्गुणः कर्षः पलं कर्षचतुष्टयम् ॥

इति वैद्यशास्त्रे मानम् ।

अत्र विशेषः—

"रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायु[A]र्गुण वर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः ।
नवम्यां सुभगा नारी दशम्यां प्रवरः पुमान् ॥

---

ख पाठः—

(1) "पिष्ट्वा" इति नास्ति (2) स्यात्तच्चतुर्गुणः

मुद्रित पाठः-

A- धनवर्जितः—पारस्करसूत्रगदाधरभाष्ये-१।१३।७

एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
[A]त्रयोदश्यां [1]सपापा स्त्री धर्मसंकरकारिणी ॥
धर्मध्वजी कृतघ्नश्च आत्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां [2]गुणौघैरन्वितः सुतः ॥
जायते पञ्चदश्यां तु बहुपुत्री पतिव्रता ।
विद्यालक्षणसम्पूर्णः सत्यवादी जितेन्द्रियः ॥
आश्रयः सर्वभूतानां षोडश्यां जायते सुतः ॥"

पैठीनसिः—

"[3]न चतुर्थमाह्वयेत्"

[B]भारते(अनु–१०७-१४२)

"स्नातां चतुर्थदिवसे रात्रौ गच्छेद्विचक्षणः ।"

[C]हारीतः—

चतुर्थेऽह्नि स्नातायां युग्मासु वा गर्भाधानवदुपेतो ब्राह्मणो गर्भं [4]सन्दधाति ।

---

ख पाठः-

(1) समांसा स्त्री (2) गुणौघैर्नियतः सुतः (3) 'न' इति नास्ति
(4) सम्पादयेत् ।

मुद्रितपाठः—

A- त्रयोदश्यांसुतापापा वर्णसङ्करकारिणी ।
धर्मशश्च कृतज्ञश्च अत्मवेदी दृढव्रतः ॥
प्रजायते चतुर्दश्यां पञ्चदश्यां पतिव्रता ।

B- कृत्यकल्प० /नियत० - ३४२
पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत्
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः। (B. O. R. I.)

C- चतुर्थेऽहनि स्नातायां युग्मासु गर्भाधानाद्युपेतो ब्रह्मगर्भं सन्दधाति ।
कृत्यकल्प० नियत० - ३४२

एवं चतुर्थेऽहनि विकल्पः। अपत्यगतदोषसहिष्णोः प्रवृत्तिः।

देवलः—

"अतीर्थगमनात् पुंसस्तीर्थसंगूहनात् स्त्रियाः।
उभयोर्धर्मलोपः स्याद् द्वेषेण [A]च विशेषतः॥
यौगपद्ये च[1] तीर्थानां विवाहक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा।"

तीर्थम् ऋतुः। द्वेषेण पुंसोऽगमने महान् दोषः। एवं स्त्रिया द्वेषेण ऋतुगोपने महान् दोषः। बह्वीषु ऋतुमतीषु अपुत्रा प्रथमं गन्तव्या। सर्वासु पुत्रिणीषु [3]अपुत्रिणीषु वा ऋतुप्राथम्येन। ऋतुसमानकालत्वे विवाहक्रमेण गमनमित्यर्थः। अयं च ऋतुकालगमनविधिः अप्राप्तविधिरेव, न नियमो न वा परिसंख्या। पुत्रोत्पादनफलं प्रत्यप्राप्तस्य[4] ऋतुगमनस्य शास्त्रेण विधानात्। न हि पुत्रोत्पादने ऋतुगमनस्य पाक्षिकी प्राप्तिः। न वा [5]ऋतुगमनस्य पुत्रोत्पादनं प्रति प्राप्तिरस्ति येन परिसंख्या स्यात्। पुत्रोत्पादनस्य नित्यत्वात् ऋतुगमनमपि [6]नित्यमभिप्रेत्य विज्ञानेश्वरेण नियम [B]इत्युक्तम्। सन्ध्यावन्दनादिवत् नित्यमिति यावत्। द्विरात्रमात्रगमनं च पुरुषार्थो ब्रह्मचर्यफलार्थत्वात्। तेन तत्फलकामनाभावे निषिद्धवर्जं युग्मसर्वरात्रिगमनं पुत्रार्थिना कर्तव्यम्। एकस्यां रात्रौ एकवारमिति च पुत्रोत्पादनविधिशेषत्वान्न पृथक् पुरुषार्थः। एतेन बह्वीषु ऋतुमतीषु सकृत् सहैकस्यामेकस्यां गमनम् एकरात्रावप्यविरुद्धम्। अनृतुगमननिषेधश्च स्त्रीकामनाविरहे। स्त्रीकामनायां तत्राप्यभिगमनं नित्यम्।

---

ख पाठः—
(1) तु (2) विवाहक्रमतो व्रजेत् (3) 'अपुत्रिणीषु' इति 'ख' पुस्तके नास्ति (4) विधिरेवास्य ऋतुकालगमनस्य (5) नानृतुगमनस्य (6) नित्यमित्यभिप्रेत्य

मुद्रित पाठः—
A- 'तु' कृत्यकल्प,नियत-३४३ B- याज्ञ-१।८१

एवं च-

A"ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति ॥"

इति देवलवचनं स्त्रीकामनाभावविषयम् ।

B यमः-

"भार्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥"

देवलः-

"यः स्वदारान् ऋतुस्नातान् C स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाश्य सः ॥"

एवं चास्य दोषातिशयाच्चान्द्रायणादिगुरुप्रायश्चित्तार्हत्वेन

D ऋतौ न गच्छेद्भार्यां यः सोऽपि कृच्छ्रार्धमाचरेत् ॥"

इति बृहस्पतिवचनं देशान्तरस्थविषयम् । [1]अयं ऋतुकाले[2] गमननियमो नोत्पन्नपुत्रस्य ॥

"ऋतुकालाभिगामी स्याद् यदि पुत्रो न जायते ।"

इति चिन्तामणिलिखित कूर्मपुराणवाक्यात् उत्पन्नैकपुत्रस्य तु[3] स्त्रीकामनाविरहे ऋतावगमनेऽप्यदोषः । स्त्रीकामनायामृतावनृतावपि गमनं नित्यमेव । अतएव बहुपत्नीकस्यैकस्यां पुत्रोत्पादेऽन्यस्याः सकाम[4]त्वनियमाद् ऋतावगमने दोषः ।

---

ख पाठः-

(1)- विधिरेवास्य ऋतुकालगमनस्य (2) नानृतृगमनस्य
(3)- नित्यमित्यभिप्रेत्य (4) सकामनियमाद्

मुद्रित पाठः-

A- कल्प, नियत० ३४६ (बौधाः ४-१-२१)

B- कल्प नियत० ३४५ C- सुस्थश्च ० कृत्यकल्प नियत० ३४५

D- "ऋतौ न गच्छेद् यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्"-केशववैजयन्ती ५४-८

वायुपुराणे—

"[A]एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ।

[B]यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥"

तेनैकपुत्रवतः पुत्रान्तरोत्पादनं [1]काम्यम् । तस्य ऋतौ गमनं काम्यमेव ।

"न मांसभक्षणे दोषो न मद्ये न च मैथुने ॥" (५।५६)

इति मनुवचनाच्च कर्त्तव्यम् । एवं दुहितृजननार्थमयुग्मरात्रिगमनमपि काम्यमेव ।

यदा तु जातकादिवशेन पुत्रोत्पत्त्यभावनिश्चये—

"दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसीति"

उक्तदिशा दौहित्रद्वारानृण्यमिच्छेत्तदा दुहितृजननार्थमयुग्मरात्रिगमनमपि नित्यमेव । पुत्रोत्पादनविधौ संस्कारविधौ वा पुंस्त्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात् । अतएव पुराणेषु दत्तकृत्रिमादिदुहित्र[2]नुकल्पः स्मर्यते । कुन्तिभोजसुता कुन्ती [3]कुन्तिभोजेन शूराय दत्ता[C] । शूरस्य कुन्ती दत्तसुता वसुदेवस्तत्पुत्रः ॥ तेनार्जुनस्य वसुदेवो मातुलः । सुभद्रा च मातुलसुता कथमर्जुनेन परिणीतेत्याशङ्क्य भट्टैः समाहितम् ।

"वसुदेवाङ्गजाताहि कौन्तेयस्य विरुध्यत ॥" इति

---

ख पाठः-

(1) काम्यमेव (2) 'दौहित्रमुख दृष्ट्वा' अनुकल्पः स्मर्यते । (3) तेन

मुद्रित पाठः-

A- कल्पतरौ वचनमिदम् आदित्यपुराणवचनत्वेन पठितम् । नियत-४७२ बृहस्पति स्मृतौ चास्ति । बृह-२१

B- गौरीं वाप्युद्वहेत् कन्यां नीलं वा वृषमुत्सृजेत् । ब्रह्मपु २२०-३३

C- महाभारते एतद्वैपरीत्येन पठ्यते— आदि अ.-११०

"शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् ।

तस्य कन्या पृथानामरूपेणाप्रतिमा भुवि ॥ १

[[1]परिणयनानुज्ञानात् सुभद्रा न सुदेवस्यौरसपुत्री A। उत्पतिकथने सुभद्राया वसुदेवसुतात्वेनाकीर्तितत्वात्। किन्तु भगिनी बलदेवस्येतावन्मात्र कीर्तनाद् विवाहाविरोधसम्बन्धेन भगिनीव्यपदेशोपपत्तिरित्युक्तम्। न तु दत्तसुता सतैव नेति ? समाहितम्।]

अत्र वदन्ति - पञ्चाशद्वर्षपर्यन्तमेव ऋतुगम[2]ननियमो न तु तदूर्ध्वमपि। "द्वितीयमायुषो भाग"मिति (मनुः ५-१६९) गृहस्थधर्मकालस्य पञ्चाशद्वर्षपर्यन्तत्वात्। तन्न। तर्हि पञ्चाशद् वर्षपर्यन्तमेव गार्हस्थ्यमित्यत्र प्रमाणं न पश्यामः॥

[3]पुंसामनियतायुष्ट्वेन कस्यचिद्विंशति वर्षे द्वितीयभागसमाप्तेः कस्यचिच्च षोडशाधिकवर्षशतकालस्यापि श्रुतत्वेन अष्टपञ्चाशद्वर्षपर्यन्तम् अप्यायुर्द्वितीयभागोपपत्तेः।

---

ख पाठः-

( ) बंधनस्थ पाठो नास्ति।

(2) ऋतुकालगमने। (3) 'पुंसामनियतायुष्ट्वेन' इत्यादितः 'वनवासादयो धर्मा एव न तदतिरिक्तं किञ्चिद्वस्त्वस्तीति' (पृ-२७३।१५) इत्यन्तं यावत् ख पुस्तके नास्ति।

मुद्रित पाठः—

पितृष्वस्त्रीयाय स तामनपत्याय भारत।
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक्॥
अग्रजामय तां कन्यां शूरोनुग्रहकाङ्क्षिणे।
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने॥
विष्णुपुराणेऽपि—शूरस्य कुन्तिर्नाम सखाभवत्॥ ३२ तस्मै चापुत्राय पृथामात्मजां विधिना शूरो दत्तवान्॥ ४-१४-३३

A- महाभारते तु— आदि- अ २१
"ममैषा भगिनी पार्थ सारणस्य सहोदरा।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता॥
यदि ते वर्त्तते बुद्धिर्वक्ष्यामि पितरं स्वयम्॥"
सारणश्च रोहिणीतनय इति विष्णुपुराणे-"बलभद्रशठसारणदुर्मदादीन् पुत्रान् रोहिण्यामानकदुन्दुभि-रुत्पादयामास॥ ४-१५-१९
एतेन वसुदेवस्य सुभद्रा रोहिणीगर्भजा औरसी कन्या॥

**"गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः ।**
**अपत्यस्यैव चापत्यं तदारण्यं [A]समाविशेत् ॥ इति ॥**
**(मनुः ६–२)**

अव्यस्तकालवलीपलितपौत्रोत्पत्त्यबधित्वेन गार्हस्थस्मरणविरोधात् । किञ्च प्रथमायुर्भागस्य ब्रह्मचर्यकालत्वेन चतुर्दशपञ्चदशवर्षे सम्पूर्णैकशाखस्य विद्यास्नातकत्वेन विवाहे पञ्चविंशतिवर्षात् पूर्वमृतौ अवश्यम् अभिगमनं न स्यात् ।

**"महर्षिपितृदेवानां गत्वानृण्यं यथाविधि ।**
**पुत्रे सर्वं समासज्य वसेन् माध्यस्थमाश्रितः ॥" इति**
**(मनुः ४–२५७)**

गृहस्थेन सता ब्रह्मभावनया कालो नेय इति मनुवचने [B]मेधातिथि-व्याख्यानात् ।

"एषोदिता गृहस्थस्य वृत्ति" (मनुः ४–२५९) रित्युपसहाराच्च ऋतु-गमनगृहस्थधर्मत्यागो निष्प्रमाणकः । न च वानप्रस्थधर्माचरणं तदर्थः ।

**"एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ॥"**
**(मनुः ४-२५८)**

इति ब्रह्माभ्यासोपदेशात् ।

---

**मुद्रित पाठः-**

A- समाश्रयेत्

B- "गृहस्थस्यैवेदं प्रकारान्तरमुच्यते । × × गृहे एव माध्यस्थ्यमास्थितस्त्यक्ताहंकार इदं मे धनमिदं मे पुत्रदारमिदं मे दासीदासमिति स्वबुद्धिं सन्त्यज्यासीत । नाहं कस्यचित् न कश्चिन्ममेति त्यक्तस्वतृष्णता वा माध्यस्थ्यम् । अयं च संन्यासः कामानां च दृष्टानां च कर्मणां सर्वेषामुत्तरत्र दर्शयिष्यामः ॥" मेधातिथिः

ब्रह्मपुराणे-

"उदासीनः साधकश्च गृहस्थो द्विविधो मतः ।
कुटुम्बभरणे शक्तः साधकोऽसौ गृही भवेत् ॥
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्यागृहादिकम् ।
एकाकी यस्तु विचरेदुदासीनः स मोक्षकः ।"

इति गृहस्थस्यैव द्विविधोक्ते ब्रह्मज्ञानं च गृहस्थस्यापि कर्त्तव्यमेव ।

तथा च मनुः (१२-९२)

"यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
[A]आत्मज्ञाने च शक्तः स्याद् वेदाभ्यासेन यत्नतः ॥"

याज्ञवल्क्यः- (१-८)

"इज्याचारदमाहिंसा दानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥"

तथा (३-२०५)-

"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽ[B]पीह मुच्यते ॥"

गृहस्थत्वापरित्यागेन मुक्त्यधिकारित्वोक्तेः ।

तत्रैव (३-१९१)-

"स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
[C]श्रोतव्यस्त्वथ मन्तव्यो द्रष्टव्यश्चोपपत्तिभिः ॥"

---

मुद्रित पाठः-

A- आत्मज्ञाने शमे च स्याद् वेदाभ्यासे च यत्नवान् ।

B- पि हि ।

C- द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥

किंच—

"विरक्तः प्रव्रजेद् विद्वान् सरक्तस्तु गृहे वसेत् ।
सरक्तः प्रव्रजन्नित्यं नरकं प्रतिपद्यते ॥"

तथा— (मनुः ६-३७)

"अनधीत्य द्विजो[A] वेदमनुत्पाद्य तथाऽऽत्मजान् ।
अनिष्ट्वा विधिवद् यज्ञैर्मोक्षमिच्छन व्रजत्यधः ॥"

इति सरक्तस्य पुत्रोत्पादनं विना सन्यासेऽप्यनधिकारित्वात् ।

"यावज्जीवमग्निहोत्रं जुहुयादि"ति श्रुतिविरोधाच्च पाक्षिकाग्नि-समारोपवत् वानप्रस्थस्य सरक्तं प्रत्यनवकाशः । पुरुषमेधं विना श्रुतावग्नि-त्यागाश्रवणेन स्मार्तैर्यावज्जीव श्रुतिबाधस्याशक्यत्वात् ।

पुरुषमेधे हि—

त्रैधातवीयान्ते समारोप्यात्मन्यग्नीन् सूर्यमुपस्थाया"दृभ्यः सम्भृत' इत्यनुवाकेनारण्यं गत्वा न प्रत्येयात् ग्रामे वावसन्नरण्यादिति"

कातीय-सूत्रे [B]कर्काचार्यैरुक्तम् ।

अनया श्रुत्या यावज्जीवश्रुतिर्विकल्प्यते । न तु—

"प्रजापत्यां निरूप्येष्टिं सर्ववेदस-दक्षिणाम् ।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥
(मनुः ६-३८)

---

मुद्रित पाठः—

A- वेदाननुत्पाद्य तथा सुतान् ।
अनिष्ट्वा चैव यज्ञैश्च ॥

B- त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थाय"दृभ्यः सम्भृतः" इत्यनुवाकेनानपेक्षमाणो (३१-१७-२२)ऽरण्यं गत्वा न प्रत्येयात् ॥
कात्यायनश्रौत-२९-१-१७

इति श्रु (स्मृ)त्युक्तविधानाग्नित्यागो युक्तः, स्मृत्या श्रुतिबाधप्रसङ्गात्। तेन सरक्तस्य ऋणापाकरणमन्तरेण पुरुषमेधं विना न वनवासः परिव्राज्यं वा।

विरक्तस्य तु "वनीभूत्वा प्रव्रजेत्"। 'यदहरेव विरज्येत्तदहरेव प्रव्रजे"दित्यादि श्रुत्या यावज्जीवश्रुतिसंकोचेन संन्यास इति।

"तदूर्ध्वं ब्रह्म सम्पद्यते" इत्यपि विरक्तविषयम्। पञ्चाशद्वर्षादूर्ध्वं वैराग्यस्य प्रायिकत्वात्। तेन पञ्चाशद् वर्षादूर्ध्वं सरक्तस्य वानप्रस्थधर्मत्वेनोद्धरेत् सर्वमिति न वक्तुं शक्यम्।

**गौतमेन तु (१-३-३५)—**

**"ऐकाश्रम्यं तु प्रत्यक्षविधानाद् गार्हस्थ्यस्ये"ति।**

सर्वत्र वेदे क्रतुविधिभिर्दम्पतीसाध्याग्निमन्त्राधानैगार्हस्थ्यमेव प्रत्यक्षतो विहितं प्रतीयते। आश्रमान्तरं तु न तथेति गार्हस्थ्यस्य प्रत्यक्षश्रुतिसिद्धत्वेन बलवत्त्वमुक्तम्। आश्रमान्तराणां स्मार्तत्वेन दुर्बलत्वमुक्तम्।

यच्च वानप्रस्थाश्रमो नाम वनवासादयो धर्मा एव न तदतिरिक्तं किञ्चिद्वस्त्वस्तीति, तन्न[1], अस्ति हि धर्मविध्यतिरिक्तं विधिचतुष्टयम्।

**A"गुरौ वसेत्।"**

**"द्वितीयमायुषो भागं कृतदारो गृहे वसेत्॥"**

**(मनुः ५-१६९)**

वने वसेत् (मनुः ६-१) प्रव्रजे (मनुः ६-३८) दिति तद् यथाग्नीनादधीतेतिविधिविहिताधानजन्य आत्मनिष्ठः संस्कारः आहिताग्नित्वं स च प्रशान्ता[2]ग्नेरपि तिष्ठति। [3]तत्संस्कारवत्तज्जन्यमेवाधिकृत्याहिताग्निर्नानृतं

---

**ख पाठः-**

(1) एतद्वाक्यं नास्ति। (2) प्रणष्टाग्नेः (3) तत्संस्कार वत्तमेवाधिकृत्याहिताग्निर्नाऽनृतं वदेत्।

**मुद्रित पाठः-**

A- गुरौ वसन् संचिनुयाद्ब्रह्माधिगमिकं तपः॥ मनुः २-१६४

"ना ब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्" मनुः २-२४२

वदेदित्यादयो धर्माः। एवं "गुरौ वसे" दिति विधिवशाद् गुरौ वत्स्यामीति संकल्पः। तज्जन्यः सस्कार एव ब्रह्मचारित्वम्॥ तमधिकृत्यावकीर्णास्वादयो धर्मा विधीयन्ते। [तस्य[1]चावधिः समावर्तनम्।]

एवं दारकरणोत्तरं गृहे वत्स्यामीति यः सङ्कल्पस्तज्जन्यः संस्कारविशेष एव गार्हस्थ्यम्। [2]अतएव पत्नीमरणेऽपि संस्कारसत्त्वाद् गृहस्थ इति गृहस्थधर्माधिकारस्तस्य। पत्नीसहायसाध्यकर्मसु एव केवलमनधिकारः। तस्य चावधिः वानप्रस्थाश्रमपरिग्रहः।

एवं 'वने वसे' दिति विधिविहितवनवास संकल्पजन्यसंस्कारविशेष एव वनस्थत्वमिति। तद्वृत्तमेवाधिकृत्याफाल[3]कृष्टाशनो[4]ध्वर्रेतस्का(स्कत्वा)दयो धर्मा विधीयन्ते इति। गृहस्थस्य तत्रानधिकार एव।

एवं प्रव्रजेदिति विधिर्विहित संकल्पजन्यसंस्कारविशेष एव पारिव्राज्यम्। तद्वृत्तमेवाधिकृत्य यतिधर्माः। अन्यथा—

**"सिद्धमन्नं गृहस्थाय वानप्रस्थाय गोरसम्।**

**यतये काञ्चनं दत्त्वा नरकं प्रतिपद्यते॥"**

इत्यादीनामव्यवस्था स्यात्। स्नातकस्यापि गुरुगृहे वसतोऽवकीर्णप्रायश्चित्तापत्तेः। समावर्तनानन्तरं तु दारकरणपर्यन्तमनाश्रमित्वम्। तमधिकृत्य दक्षवचनम्—(१-१०)

**[A]अनाश्रमी न [5]तिष्ठेत दिनमेकमपि द्विजः। इति**

"तथैवानाश्रमे वास" (याज्ञ ३-२४१) इति चोपपातकित्वम्। तस्य तु स्नातकधर्मेषु अधिकारः। उपनयात् पूर्वमेव केषुचित् कर्मस्विति सर्वमनवद्यम्।

---

**ख पाठः-**

(1) बन्धनस्थपाठो नास्ति (2) तद्वृत एव (3) कृष्टफलमूलाशनो

(4) भवेदित्यादयो धर्मा (ऊर्ध्वरेतस्कादयो धर्माः' नास्ति 'ख' पुस्तके)

(5) तिष्ठेत्तु

**मुद्रित पाठः—**

A- मिता (१-२९) अनाश्रमी न तिष्ठेच्च क्षणमेकमपि द्विजः" दक्ष-१-१०

प्रकृतमनुसरामः । आपस्तम्बः (२-१-१ २०-२२)

"स्त्रीवाससैव सन्निपातः स्यात् । यावत् सन्निपातं सह-शय्या ततो नाना ।

स्त्रीवासः-सम्भोगार्थं पृथग्वासः । नाना-पृथग् भूतौ स्याताम् ।

वृद्धशातातपः (श्लोकः ३३)-

"ऋतौ तु गर्भं [A]शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु सदा कार्यं शौचं मूत्रपुरीषवत् ॥"

तथा-

[B]द्वावेतावशुची स्याताम् दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

शुचित्वं स्नानक्षालनमन्तरेणापि ।

मनुः (४-४१)-

रजसाभिप्लुतां नारीं [नरस्य ह्युपगच्छतः ।
[C]श्रद्धा तेजो बलं चक्षुरायुश्चैव प्रहीयते ।

---

ख पाठः—

(1) नाना पृथग्वासौ स्याताम् (2) प्रक्षालनम् (3) बन्धनस्थ पाठो नास्ति

मुद्रित पाठः—

A- ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम् ।
ऋतुं विना यदा गच्छे च्छौचं मूत्रपुरीषवत् ॥ वृ. शाता. ३३
"शङ्कित्वात् स्नानमेव विधीयते" इति विशेषः । कृत्य नियत-३४५
गर्भशङ्कायाम्, वृ शाता.

B- कृत्यकल्प० नियत० ३४५ ॥ तावदेवाशुची - वृ शाता ३४ ।

C- प्रज्ञा

"अशुद्धदिवसेष्विति देवलवचनात् [A]त्रिरात्रविषयमेतत् ॥

**शङ्खलिखितौ नोपेयादित्यधिकृत्य-**

**"न मलिनाम् । नाशक्ताम् । नाभ्यक्तः । न रोगार्ताम् ।**

**न रोगार्तः । न हीनाङ्गीम् । नाधिकाङ्गीम् ।**

**तथैव न वयोधि[B]काम् ।**

**नोपेयाद् गर्भिणीं नारीं] दीर्घमायुर्जिजीविषुः ॥"**

[1]रोगोऽत्र सम्भोगवर्धनीयः । वयोधिका उपरतरजस्का ।

**वसिष्ठः** (१२-५.७)

**"नमलवद्वाससा सह संविशेत ।**

**न रजस्वलया नायोग्यया ।"**

मलवद्वाससा - अमेध्यलिप्तवस्त्रया । अयोग्या – अप्राप्तयौवना ।

[C]**गौतमः** (१-६-३१)–

**न कन्यां श्लिष्येत् ।**

न रमयेदित्यर्थः इति [D]कल्पतरुः ।[2]

---

**ख पाठः-**

(1) संभोगवर्धिष्णुरोगयुक्तो रोगार्तः ॥ (2) कल्पतरुकारः

**मुद्रित पाठः—**

A- अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत् । आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते । तस्मात् त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत् । अवेक्षेत च तां नित्यं रथ्याभस्मनिषेवणैः ॥ कृत्यकल्प० नियत० ३४७

B- तथैव च । कृत्यकल्प० नियत० ३४८ ।

C- न चैनां श्लिष्येन्न कन्याम् ।

D- कृत्यकल्प-नियत० ३४७ ।

पुनः [A]शंखलिखितौ—

"ऋतुस्नातां तदहोरात्रं परिहरेत्। नार्तवे। न दिवा-मैथुनं व्रजेत्। क्लीवा अल्पवीर्याश्च दिवा प्रसूयन्तेऽ-ल्पायुषश्च। तस्मादेतद्वर्जयेत् प्रजाकामः। पितृणां नेह वै तन्तुं विच्छिन्द्यात्॥"

तन्तुं—सन्तानम्। प्रतिषिद्धमैथुनेनेत्यर्थः।

[B]तथा—

"नाष्टमीचतुर्दशीषु स्त्रियमुपेयात्। न श्राद्धं भुक्त्वा न दत्त्वा। [1]नामन्त्रितः श्राद्धे॥ न व्रती। न दीक्षितश्च।"

दीक्षितश्चावभृथेष्टिपर्यन्तम्।

तथाच—

"देवायतनश्मशानशून्यालयेषु। न वृक्षमूले, न दिवा-सन्ध्ययोः॥"

---

ख पाठः-

(1) न निमन्त्रितः।

मुद्रितपाठः—

A- कृत्यकल्प० नियत०—पृ-३४८

B- विष्णुः—(६९-१-१०)

नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात्। १) न श्राद्धं भुक्त्वा २) न दत्त्वा ३) नोपनिमन्त्रितः श्राद्धे ४) न व्रती ५) न दीक्षितः ६) न देवायतनश्मशानशून्यालयेषु ७) न वृक्षमूलेषु ८) न दिवा ९) न सन्ध्ययोः॥ (६९-१०)

वसिष्ठः—(१२-२१।२२)

"ऋतुकालाभिगामी स्यात् पर्ववर्जं स्वदारेषु । (२१)

नातीर्थमुपेयात् ।" (२२)

अतीर्थम्—योनिभिन्नम् ।

अथाप्युदाहरन्ति(वसिष्ठः-१२।२३)—

"यस्तु पाणिगृहीताया आस्ये [1]कुर्वीत मैथुनम् ।

भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥

[A]बौधायनः—

"यस्तु पाणिगृहीतायाः मुखे [2]कुर्वीत मैथुनम् ।

तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः"

निष्कृत्यभावोक्त्या महापातकसाम्यमुक्तं तेन महापातकप्रायश्चित्तेन शुद्धिः । एतच्च रेतःसेकपर्यन्ते ।

स्त्रियाश्च—

"व्यवाये तीर्थगमने धर्मेभ्यश्च निवर्तत" .

इति धर्मानधिकारः । तत्र तस्या रेतोमूत्रप्राशने चान्द्रायणम् । पुनः संस्कारश्च प्रायश्चितम् । रेतःसेकात् पूर्वन्तु यः पुनः ब्राह्मणधर्मपत्नीमुखे मैथुनं सेवते स प्रजापत्येन शुध्यति एवमपि निषिद्ध देशकालावस्था मैथुनेऽव-पत्यगतदोषश्रवणादपत्योत्पादनाङ्गत्वम् । केषाञ्चित् संयोगपृथक्त्वेन पुरुषार्थत्वं च ।

---

ख पाठः-

(1) गच्छति (2) गच्छति

मुद्रित पाठः-

A- कृत्यकल्प० नियत०—पृ-३५०

वृद्धाः पठन्ति—

"नार्वाग् वै षोडशाद्वर्षादशीत्याः परतोऽपि वा ।
आयुष्कामो न च स्त्रीभिः संयोगं गन्तुमर्हति ॥
दिवा वा यदि वा रात्रौ यत्काले मैथुनं व्रजेत् ।
अनन्तरं प्रस्वपतो बलवर्णौ प्रसीदतः ॥"

विष्णुपुराणे—[३-११-११६।११८]

"चतुर्दश्यष्टमी चैव [A]अमावास्या च पौर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांस[B]भोगी च पर्वस्वेतेषु पञ्चसु ।
विड्मूत्रभोजनं नाम [C]नरकं प्रतिपद्यते ॥
[1]अशेषं पर्वस्वेतेषु तस्मात् संयमिभि[D]र्नरैः ।
[2]भाव्यं सच्छास्त्रदेवेज्याध्यानजप्य[E]परैः सदा ॥"

[F]वामनपुराणे—

"पूर्णासु योषित् परिवर्जनीया ।"

---

ख पाठः—

(1) वस्तव्यम् (2) भाव्यं स्वाध्यायदेवेज्या ध्यानजप्यपरैः सदा ।

मुद्रित पाठः-

A- तथामा चाथ B- संभोगी सर्वेष्वेतेषु वै पुमान् C- प्रयाति नरकं मृतः D- बुधैः E- परैर्नरैः ।

F- नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित् परिवर्जनीया भद्रासु सर्वाणि समाचरेत ॥
नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरं च शुक्रेऽथ कुजे च मांसम् ।
बुधे तु योषां न समाचरेत शेषेषु सर्वाणि सदैव कुर्यात् ॥
चित्रासु हस्ते श्रवणे च तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं योषिन्मघा कृत्तिकसोत्तरासु—कृ नि-पृ ३२८

तथा—

"बुधेन येषाम् ।"

तथा—

"योषिन्मघाकृत्तिकसोत्तरासु ॥"

वराहपुराणे—

"षष्ठ्यष्टमी [A]अमावास्या उभे पक्षे चतुर्दशी ।
मैथुनं न च सेवेत द्वादशीं च मम प्रियाम् ॥

[B]चतुर्थ्यां तु मैथुनवर्जनम् विष्णुलोकप्राप्तिफलत्वात् काम्यम् ।

[C]यमः—

"आसप्तमं कुलं हन्ति शिरोभ्यङ्गे चतुर्दशी ।
मांसाशने पञ्चदशी कामं धर्मे तथाष्टमी ॥"

[D]वृद्धशातातपः—

"दन्तकाष्ठममावास्या मैथुनं च चतुर्दशी ।
हन्ति सप्तकुलं तस्य तैलग्रहणमष्टमी ॥"

अत्र पर्वसु षष्ठ्यां च सामान्ये न तैलादिनिषेधप्राप्तौ विशेषनिषेधो दोषातिशयार्थः । अत्र तिथिनक्षत्रयोर्मैथुनादिनिषेधस्तत्तत्काले ॥ संक्रान्तौ तु तदवच्छिन्नाहोरात्रे । न च तत्र पुण्यकालपरिभाषणान्न निषेधः ।

---

मुद्रित पाठः—

A- चामवास्या (कृत्यकल्प० नियत०—पृ ३५९)

B- ( चतुर्थ्यामित्यतः पूर्वम् )—

अष्टम्यां च चतुर्दश्यां षष्ठ्यां च द्वादशी तथा ।
अमावास्यां चतुर्थ्यां च मैथुनं योऽधिगच्छति ।
तिर्यग्योनिं स गच्छेच्च मम लोकं न गच्छति ॥

कृत्यकल्प० नियत०—पृ-३९५

C- कृत्यकल्प० नियत०—पृ-३५६ D- कृत्यकल्प० नियत०—पृ-३५६

पुण्यपदस्य विहितविधिरूपधर्मपरत्वान्निषेधस्य [1]पुण्यत्वाभावात् ।

बृहदारण्यके(६-४-५]

"सुप्तस्य वा जाग्रतो वा रेतःस्कन्देत्तदभिमृशेदनु वा मन्त्रयेत यन्मेद्यरेतः पृथिवीमस्कान्त्सीद् यदोषधीरप्यसरद् यदपः । इदमहं तद्रेत आददे, "पुनर्मा मैत्विन्द्रियं पुनस्तेजः पुनर्भगः । [2]पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात ॥"

रेतस्कन्दने शौचाचमने कृत्वा पतितरेतसोऽभिमर्शनम् । अदर्शने मनसा मन्त्रं पठन् रूपमनुमन्त्रणम् । अत्र [A]भाष्ये आददे इत्यन्तोऽभिमर्शनमन्त्रः । पुनर्मामित्यादिमार्जनमन्त्रः ।

[3]नाभिकेतु—

अनामिकाङ्गुष्ठाभ्याम् [4]आदायेत्यसंभिन्नवाक्यत्वमाश्रित्य निर्मार्जनं तूष्णीमेव [5]सर्वसुमन्त्रोऽभिमन्त्रणमित्युक्तम् । निर्मार्जनानन्तरं मृद्भिः क्षालनमाचमनं च । [B]विज्ञानेश्वरे तु निर्मार्जनमङ्गुष्ठमात्रेण न तु रेतसेति ।

---

ख पाठः—

(1) पृथग्वर्ज्याभावात् (2) पुनरग्निदीप्त्या (3) नाभिकेतु इति नास्ति । (4) आदायेत्यस्य भिन्नं (5) सर्वतस्तन्मन्त्रोऽभिमर्शनमित्युक्तम् ।

मुद्रित पाठः—

A- "यदाभिमृशति तदानामिकाङ्गुष्ठाभ्यां तद्रेतआदत्त आदद इत्येवमन्तेन मन्त्रेण । पुनर्मामित्येतेन निमृज्यात् ॥" —शाङ्करभाष्यम् ।

B- विज्ञानेश्वरेण मिताक्षरायां अनामिकासहितेनाङ्गुष्ठेन स्पृशेत् नतु रेतसेति परमतमुपन्यस्तम् । तद्यथा "अन्ये तु स्कन्नस्य रेतसोऽशुचित्वेन स्पर्शकर्मण्ययोग्यत्वात् तेनेत्यनामिकासाहचर्यात् स्वबुद्धिस्थांगुष्ठपरत्वेन व्याचक्षते । तेनाङ्गुष्ठेनानामिकयाचेति अंगुष्ठपदग्रहणे वृत्तभङ्गप्रसङ्गात् तेनेतिनिर्दिष्टमिति, तदसत् अङ्गुष्ठस्याबुद्धिस्थत्व त् इत्यादिना ।

## [1]रजस्वलाधर्माः

[A]हारीतः—

"रजः प्राप्तं चेदधः शयीत ॥ न च देवकार्यं कुर्यात् भूमौ कार्ष्णायसे मृत्पात्रे पाणौ [2]चाश्नीयात् ॥"

देवकार्यनिषेधः [3]पूजोपकरणेऽपि, प्रत्यक्षेण न कार्यमित्येवार्थः ।

कार्ष्णायसम्—अयःपात्रम् ।

[B]तैत्तिरीयश्रुतिः—

यां मलमद्वाससं संभवति यस्ततो जायते [4]तस्याभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुखो प्रगल्भो या स्नाति तस्यै अप्सुमारको, याभ्यङ्क्ते तस्यै दुश्चर्मा, 'यां

---

ख पाठः—

(1) 'अथ' इत्यधिकम् (2) वाश्नीयात्

(3) प्रयुक्तोपकरणेऽपि प्रत्यवेक्षणम् (4) सोभिशप्तो ।

मुद्रित पाठः-

A- रजः प्राप्ता चेदधः शयीत । न देवकार्यं कुर्वतिभूमौ कार्यायसे पाण्यां मृण्मये वाश्नीयात् । —कृत्यकल्प० नियत०—पृ-३५०

B- यां मलवद्वाससं सम्भवन्ति यस्ततो जायते सोभिशस्तो, यामरण्ये तस्यै स्तेनो, यां पराचीं तस्यै ह्रीतमुखप्रगल्भो, या स्नाति तस्या अप्सु मारुको याभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय ॥ इति। कल्पतरु० नियत०—पृ-३१३

प्रलिख्यते तस्यै खलति रपमारि याङ्क्ते तस्यै काणो, या दन्तो धावति तस्यै श्यावदन्तः या नखानि निकृन्तति तस्यै कुनखी, या कृणन्ति तस्यै क्लीबः, या रज्जुं सृजति तस्यै उद्बन्धुकः, या पर्णेन पिबति तस्या उन्मादुकः, या खर्वेण पिबति तस्यै खर्वः, तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वापिवेद्खर्वेण वा पात्रेण प्रजायै गोपीथायेति ।

सम्भवन्ति—मैथुनं कुर्वन्ति । अस्यै यां संभवन्तीत्यन्वयः । तस्यै इति षष्ठ्यर्थे चतुर्थी । तस्यास्तेन: पुत्र इत्यर्थः । पराची गृहाद्बहिर्गताम् । संभवन्तीत्यन्वयः । ह्रीतमुखो—लज्जाकुलमुखः । [1]अप्रगल्भोऽप्रगल्भः ॥ या स्नाति तस्पुलो जलचरमत्स्यादिमारकः । प्रलिखितं भूमेः । खर्वो—[2]वामनहस्तः । एवं व्रताचरणाभावे प्रजावैगुण्याद व्रत प्रजारक्षकमित्यर्थः ।

रजस्वलाधिकारे वसिष्ठः (५-७)–

"न दिवा [A]सुप्यात् , नाग्नि स्पृशेत् , नमांसमश्नीयात् , न ग्रहान् निरोक्षेत, न हसेत् , न [B]किञ्चिदाचरेत् , नाञ्जलिना पिबेत् , न लोहितायसेन वा कुर्यात् ।"

न किंचित् कुर्यात् गृहलेपनाद्यपि । लोहितायसेन—ताम्रेण ।

[C]पैठीनसिः- "मलवद्वासोधारयमाणा नोपमार्जयेत् । न स्रजं धारयेत् । न गंधान् सेवेत, न विभूषयति ।।"

---

ख पाठः–

(1) आमगर्भोऽप्र (2) वामहस्तः

मुद्रित पाठः–

A- स्वप्यात्, नाग्निस्पृशेत्, नरज्जुं सृजेत् , न दन्तान् धावयेत् , न मांस ।

B- न धावेत् , अखर्वेणपात्रेण पिबेदञ्जलिना वा पिबेल्लोहितायसेन वा ।

C- त्रिरात्रं मलवद्वासो धारयमाणा न स्नायात् । नाभ्यञ्ज्यात् । न नखान्निकृन्तेत् । नापमार्जयेत् । न रज्जुं स्पृशेद् । न दन्तान् धावयेत् न स्रजं

बृहदारण्यके (६-४-१३)

"न कंसे न पिबेदहतवासा ऽयहं नैनां वृषलो, न वृषल्युप-

हन्यात्रिरात्रान्ते [A]आप्लुयुः ॥"

वृषलो वृषलीपतिः—

शूद्र शूद्रापतिः ॥ वृषलीपति शूद्रींस्पर्शनं निषिद्धम् ।

तत्रैव-

"मलवद्वास[B]सं यशस्विनीमभिक्रम्योपाभिमन्त्रयेत,

इन्द्रियेण ते यशसा यश आदधामीति ।

सा चेदभिमन्त्रणं नांगीकरोति स्थानत्यागादिना । एव दण्डेनानम्या-

मन्त्रयते ।

"इन्द्रियेण ते रेतसा रेत आदद इत्यभिचारः ।"

अत्र यद्यपि त्रिरात्रमेव शौचं शतपथश्रुते वंसिष्ठस्मृतेश्च तथापि

[C]"दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति (३१-१४०)

इति स्मार्तकर्मसु पञ्चमदिन एवाधिकारः । "[D]शुद्धाभर्तुश्चतुर्थेऽह्नी"ति

भर्तृस्पर्शादावेव चतुर्थेह्नि शुद्धिः । श्रौते "यान्युदक्यादीत्तारूपाणि विहायेत्यु

पक्रम्य—

मुद्रित पाठः-

धारयेत् । न गन्धान् सेवेत । न कुर्णीयात् न खर्वंग पिबेत् । न पर्णैः ।

न गोपीथे । कृत्यकल्प नियत० ३५.३

A- आप्लुत्य व्रीहीनवघातयेत् ॥ बृहदार—उप ६.४-१३

B- मलोद्वाससं. यश - बृहदार-उप, ६४-६-८

C- केशव वैजयन्ती (२२-७२), आपस्तम्बस्मृतिः ३१-१४०

D- "शुद्धाभर्त्तुश्चतुर्थेह्नि स्नानेन स्त्री रजस्वला ।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥" मित॰—३-२०

१) सूतिकां पुत्रवतीं विंशतिरात्रेण कर्म कारयेत् मासेन स्त्रीजननीम् ।

श्राद्धदीपः—२०

"त्रिरात्रान्ते गोमूत्र मिश्रेणोदकेन स्नापयित्वा परिधानादि करोतीति कात्यायनवचनाश्चतुर्थे दिनेऽधिकारः। एवं 'प्रजातायाश्च दशरात्रादूर्ध्वं"-मिति कात्यायनवचनात् सूतिकाया दशरात्रादूर्ध्वं श्रुतोऽधिकारोऽ तच्च

A"पुत्रवतीं विंशतिरात्रेण सर्वकर्माणि कारयेत् मासेन

स्त्रीजननीम्

इत्यपिस्मार्तपरमिति[1] ।

कश्यप :-

B"रात्रावेव समुत्पन्ने मृते रजसि सूतके ।

पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥"

एकाकिन्यो विवाहादौ देशभंगोऽथवा यदि ।

उपोषणेन शुध्यन्ति सद्यो नार्यो रजस्वलाः ॥

अत्रि :-

रजस्वला यदा[C] जाता पुनरेव रजस्वला

अष्टादशदिनादर्वागशुचित्वं न विद्यते ।

एकोनविंशतेरर्वागेकाहं [D]विंशतेर्द्व्यहम् ।

यस्यास्तु नियमेनाष्टादशदिनमध्ये पुना रजोदर्शनं तस्याः स्यादेव त्रिरात्राशौचमिति [D]विज्ञानेश्वरः

---

ख पाठः-

(1) 'विद्याकरपद्धतौ' इत्यधिकम्

मुद्रित पाठः-

A- स्यात्ततो द्व्यहम् मिता—३-२०

B- रात्रावेवेति श्लोकः मिता—३-२०

C- यदि स्मृता...... मिता—३-२०

D- यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात् प्रायुर्येण रजोनिर्गम-स्तस्यास्त्रिरात्रमेवाऽशौचम् । मिता—३-२०

वृद्धशातातप :-

उदक्या सूतिका [A]वापि अन्त्यजं संस्पृशेद्यदि ।
त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत् ॥
रजस्वला यदा स्पृष्टा चाण्डालान्त्य[B]श्ववायसैः ।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥
रजस्वले [C]तु द्वे नार्यावन्योऽन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यं तु ब्रह्मकूर्चमतः परम् ॥

बृहस्पति :-

पतितान्त्यश्वपाकेन संस्पृष्टा स्त्री रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रं तु द्वितीयेऽह्न्यहमेव च ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥
शुना चोच्छिष्टया शूद्रा संस्पृष्टा त्र्यहमाचरेत्
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥

[D]वसिष्ठः--

स्पृष्टे रजस्वलेऽन्योन्यं स्वगोत्रे त्वेकभर्तृके ।
कामादकामतो वापि सद्यः स्नानेन शुध्यतः ॥

तथा सवर्णस्पर्शे मार्कण्डेयपुराणोक्त स्नानमालम् ।

---

मुद्रित पाठः-

A- चैवह्यन्त्यजा स्पृशति द्विजम्

B- जवायसैः

C- च

D- वसिष्ठस्मृतौ नास्ति ।

बृहद्वसिष्ठः—

स्पृष्टे रजस्वलेऽन्योन्यं ब्राह्मणी शूद्रजापि च ।
कृच्छ्रेण शुच्यते पूर्वा शूद्रा दानेन शुध्यति ।।

बृहद्विष्णुः—(२२-७३।७४)

रजस्वला हीनवर्णा स्पृष्ठा तावन्नाश्नीयाद् यावन्न शुद्धा स्यात् । सवर्णामधिकां स्पृष्ट्वा स्नात्वा शुद्धयति ।

स्मृत्यन्तरे—

रजस्वला तु भुञ्जाना श्वान्त्यजादीन् स्पृहोद्यदि ।
गोमूत्रमावकाहारा षड्रात्रेण विशुध्यति ॥
[1]अशक्त्या काञ्चनं दद्याद् विप्रेभ्यो वापि भोजनम् ।

मार्कण्डेयः—

द्विजान् कथञ्चिदुच्छिष्टान रजस्वला स्पृशेद्यति ।
अधोच्छिष्टे त्वहोरात्रं ऊर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् ॥

प्रथमरजोदर्शने रव्यादिवारेषु—

"व्याध्यन्विता पतिहिता मरणं सुखाढ्या
पत्यर्थभाग् बहुसुता रहिता च भाग्यैः ।
"कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टासु लिखेद्बुधः ।
चत्वारि दिक्षु ऋक्षाणि कोणेषु त्रितयं लिखेत् ।।
श्रीर्वन्ध्या सुभगाचैव विपुत्रा पुत्रिणी तथा ।
विधवा सर्वसम्पन्ना वेश्या चेति क्रमात् फलम् ॥"

---

ख पाठः-

(1) अथवा काञ्चनम् ।

"प्रतिपदि दरिद्रा, षष्ठ्यां मृत्युः, अष्टम्यां रोगः, नवम्यां वैधव्यम् , एकादश्यां सुतमरणम् , द्वादश्यां पररता, चतुर्दश्यां चापल्यम् , अमावास्यायां मृत्युः । अन्यत् शुभम् ।

मेषे दरिद्रा, वृश्चिके न धर्म्या, मीने व्यभिचारिणी, सिंहे सकृत्प्रसूतिः । शुभमन्यत्र ॥

"द्विजायां दुर्भगा, कृत्तिकायां दुर्वृत्ता, आर्द्रायां पतिविप्रयुक्ता, पुनर्वसौ बन्धकी, अश्लेषायां वैधव्यम्, मघायां रोगयुक्ता, पूर्वाफाल्गुन्यां गुप्तपापा, पूर्वाषाढायां विधवा, पूर्वभाद्रपदे पतिविप्रयुक्ता । अन्यनक्षत्रे शुभम् ।"

फलिनी फलकनका[1]म्बुचन्दन लामज्जनकजलोपेतैः ।
स्नाप्यादभिनवपुष्पा पुष्पैर्नाना विधैर्बहुभिः ॥

अत्र शान्तिः—

'[A]दूर्वातिलाज्यैर्जुहुयात्सहस्रं [2]गायत्रीमन्त्रेण तदुक्तदोषे ।'

यद्यप्यत्र द्रव्यत्रयसहस्रसंख्याविशिष्टहोमो विहितः प्रत्याहुति द्रव्यत्रय-युक्तः प्राप्नोति तथापि सहस्रसंख्याया व्यासज्यवृत्तित्वेन भेदकत्वाद् भिन्नावस्थेषु द्रव्यत्रय[3]मुन्नीयमानं प्रत्येकं वा [4]समुच्चयेन इति सन्देहे स्रुव-हस्तादिरूपहोमसाधनसम्बन्धस्य समुच्चये विरोधात् प्रत्येकमेवेति निर्णयः । यथा "सप्तदशप्राजापत्यान् पशूनि" त्यत्र सप्तदशावदानगणप्राप्त्या सप्तदशयागा इति निर्णयः ॥

---

ख पाठः—

(1) कनकाम्बुजचन्दन (2) सावित्रीमन्त्रेण
(3) मन्वीयमानं (4) द्रव्यसन्देहे

मुद्रित पाठः—

A- कालसारः — पृ-१६९ ।

न चात्र द्रव्य निर्देशे [1]समुच्चये निश्चयात्सन्देहाभावः भिन्नावस्थं प्रति साहित्योपपत्तेः । तेनार्थाद् वार्थकल्पनैकदेशत्वादिति षट्त्रिंशधिकशतत्रय-होमे प्रत्येक द्रव्यसम्बन्धेन होम इति ।

अत्र ब्रह्माण्ड[A]पुराणे–

अथातः सम्प्रवक्ष्यामि नारीणां प्रथमार्त्तवे ।
चतुर्थेऽहनि संप्राप्ते अथवापि शुभे दिने ।।
गोमयेनोपसंलिप्य चतुरस्रं तु मण्डलम् ।
तन्मध्ये प्रोक्षणं कृत्वा कुर्यात् पुण्याहवाचनम् ।।
अग्नेस्तु स्थापनं कृत्वा स्वगृह्योक्तविधानतः ।
कृत्वा चाग्निमुखं कर्म आज्येन जुहुयादथ ।।
अग्नये [2]प्रजापतये इन्द्राय ब्रह्मणे तथा ।
कुबेराय निऋं[3]तये यमराजाय चैव हि ।।
ईशानाय च दुर्गायै वायवे वरुणाय च ।
गणेशाय वसुभ्यश्च रुद्रेभ्यश्चाथ विष्णवे ।।
ब्रह्मणे प्रजापतये राकायै तदनन्तरम् ।
कुह्वै ततः सिनीवाल्यै नक्तंचारिभ्य एव च ।।
कपालहस्ताय तथा शूलहस्तेभ्य एव च ।
ततः स्विष्टकृतं हुत्वा [4]कृत्वा चाक्षयतान्त्रिकैः ।।

---

ख पाठः—

(1) संशये । (2) अग्नये चैव सोमाय । (3) निऋर्तये (4) हुत्वा

मुद्रित पाठः-

A- मुद्रितब्रह्माण्डपुराणे नास्ति ।

आदित्यै देवपत्नीभ्यो देवमातृभ्य एव च ॥

तथैव दिनचारिभ्यो नक्तं चारिभ्य एव च ॥

[1]हुत्वा हुत्वाथ या नारी रजः प्राप्ता घृतं तु तम्

होमान्ते भक्षणार्थं चरूं तस्यै दद्य दुदङ्मुखः ॥

गर्भं धेहि सिनीवालि गर्भं धेहि पृथु[2]ष्टुके।

गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥

अन्नेन भोजयेद्विद्वान् पायसं चापि भोजनम् ।

[3]अन्नं पानं जलं मूलं गन्धपुष्पाणि चैव हि ॥

दद्याद् ब्राह्मणपत्नीभ्यो धेनुं दद्याच्च दक्षिणाम् ।

एवं होमे कृते विप्र नारीणामार्तवे पुनः ॥

जीवत्पुत्रा पतियुक्ता भवेत्सा शीघ्रमेव च

गर्भपातो भवेन्नैव सुभगा च विशेषतः ॥

पुत्रपौत्रपरिवृता उमावन्मोदते दिवि ।

गर्भो न चास्ति यस्या हि तस्या गर्भो भवेद्ध्रुवम् ॥

यदा कदाचिन्नारीणामेवं कुर्याच्छुभे दिने ।

करोति यस्ततस्तस्याः पुत्रपौत्रादिसम्पदः ॥

## निषेककर्म

छन्दोगपरिशिष्टे—

"विवाहादि कर्मगणो य उक्तो गर्भाधानं सुश्रुतो यस्य चान्ते

विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः कर्मणः स्यात्

---

ख पाठः-

(1) हुत्वा हुत्वा च या नारी (2) पृथुष्टुके (3) अन्नपान फलं मूलं नल- पुष्याणि चैव हि। (4) सम्पदः

तेन वृद्धिश्राद्धाभावः-

¹ तन्नित्यकर्मनिन्तरं गणपत्यादिपूजा, स्वस्तिवाचनम्

¹अद्य गर्भाधानकर्मणि स्वस्ति भवन्तो ब्रुवन्त्विति ।।"

"ᴬगर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ।। इति यज्ञपार्श्ववचनात् कर्माङ्गदशब्राह्मणभोजनमावश्यकम् । संभवे अधिकभोजनमपि । गायत्र्या दूर्वादिभिर्वारादिदोषशान्त्यर्थे होमः । काम्यो ²ब्राह्मणोक्तहोमश्च । रात्रौ प्रथमप्रहरानन्तरं यथोक्तशयने यथोक्तशयने शयानस्य दक्षिणहस्तं जायाया दक्षिणांसेन हृदयदेशं नीत्वा हृदयालम्भः ॥

तत्र मन्त्रः-

"यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् ।
वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतम् ।
जीवेम शरदः शतम, शृणुयाम शरदः शतम्
(पार-गृ-१-११-९) ।"

एवं सर्वदाभिगमनेषु ।।

"एवमत ऊर्ध्वमिति पारस्कर (१-११-१०) वचनात् । अभिगमनात् पूर्वं दक्षिणहस्तेन योन्याᴮलंभो गोभिलोक्तः—

'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।।

---

ख पाठः—

(1) 'सकल्पः' इत्यधिकः पाठः । (2) ब्रह्माण्डपुराणोक्तहोमश्च ।

मुद्रित पाठः-

A- पारस्करगृह्य, गदाधरभाष्यम्, १-२-१३

B- दक्षिणेन पाणिनोपस्थमभिमृशेद्विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च ।। गोभिलगृ. २-५-९

**गर्भं धेहि सिनीवाली गर्भं धेहि [A]पृथुष्टके ।**

**गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥"**

ततः संभोगः-

**पारस्करः**-(१-१३-१)

"सा यदि गर्भं न दधीत सिंह्या श्वेतपुष्पाया उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थ्यां[B] स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्रायमाणेत्यादिना

सिंही-कण्टकारिका । उपवासमूलोत्खननयोः पत्युः कर्त्तृत्वम् ।

**बैजवापः**-

**"सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्पाया उपोष्य पुष्येण मूलमुत्पाट्य चतुर्थ्यां स्नातायां निशि प्राजापत्यं स्थालीपाकं श्रपयित्वा प्रजापतये हुत्वा पश्चादग्नेर्दृषदशयने प्राचीमुत्तानां संवेश्य च द्वाभ्यामोषधीमुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायां नस्तः कुर्यादियमोषधी त्रायमाणेति ॥"**

संवेश्य शाययित्वा । द्वाभ्यां दृषदुपलाभ्यां नस्तःनासिकारन्ध्रे ।

अत्र क्रमः—

पूर्वदिने कृतोपवासः पुष्यानक्षत्रे श्वेतपुष्पकण्टकारिकामूलमुत्पाट्य [1]रक्षयेत् । रजोदर्शनाच्चतुर्थेऽहनि स्नातायां भार्यायां रात्रौ तन्मूलं शिलायां

---

**ख पाठः—**

(1) स्थापयेत ।

**मुद्रित पाठः—**

A- गर्भं धेहि सरस्वति । इति सामवेदपाठः म. ब्रा. १-४७

B- चतुर्थेऽहनि स्नातायाम् ।

पिष्ट्वा द्रवीकृत्य भार्यां पश्चादग्नेर्भूमावुत्तानां शाययित्वा दक्षिणनासारन्ध्रे सिञ्चति ।

**तत्र मंत्रः–(पार-गृ-१।१३।१)**

**"इयमोषधी त्रायमाणा सहमाना सरस्वती ।**

**अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभम् ।।"**

बैजवापमते विशेषः—

रात्रावेव स्थालीपाकं श्रपयित्वा आज्यभागान्तं कृत्वा "प्रजापतये स्वाहे"ति स्थालीपाकात् हुत्वा स्विष्टकृदादिमार्जनान्ते सिद्ध्वा मूलसेको यथोक्तरूपेण । ततः पवित्रप्रतिपत्त्यादिकर्मसमाप्तिरिति ।

**आश्वलायनगृह्यम्–(१।१३।१)**

**"उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ।"**

अनवलोभनं—रक्षणम् । सर्वमुपनिषदि बृहदारण्यकादावाम्नातमित्यर्थः । तथा च तदुक्तप्रकारेण पुत्रोत्पादनाय यत्नः कार्य इत्यर्थः ।

तत्र बृहदारण्यके-(६-३-१) "स यः कामयेत महत् प्राप्नुयामि"ति श्रीमन्थोपक्रमेऽभिधानात् यच्छब्दस्य पूर्वनिर्दिष्ट प्राणोपासकपरत्वात् । "ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहे" (बृहदारण्य-६-३-२) त्यादिलिङ्गाच्च श्रीमन्थे स्त्रीमन्थे प्राणोपासकस्यैवाधिकारः । तथा श्रीमन्थं कृत्वा पत्नीऋतुकालं यावद् ब्रह्मचर्येण स्थितस्य स्त्रीमन्थेऽधिकारः । श्रीमन्थानन्तरं स्त्रीमन्थाभिधानस्यानन्यप्रयोजनत्वाद् ब्रह्मचर्यस्खलने प्रायश्चित्ताभिधानाच्चेति [A]श्रीशङ्कराचार्याः ।

**तथा सुरेश्वराचार्या अप्याहुः—**

**"कर्मणश्चास्य निष्पत्तौ [1]विद्वत्ता हि समाश्रिता ।**

**[2]यतेत स्मृति तन्त्रे दं [3]सूतकृद्भिर्यथोदितम् ।।"**

---

**ख पाठः-**

(1) विवर्त्तित्वं (2) यतोत (3) सूतिकाभिर्यथोदितम् ।

**मुद्रित पाठः-**

A- प्राण दर्शिनः श्रीमन्थं कर्म कृतवतः पुत्रमन्थेऽधिकारः । श० भा०-६-४-१

[1]विद्वत्ता च प्राणोपासना।

**भास्कराचार्यास्तु—**

"यः कामयेत स एवं कुर्यादिति।"

व्यस्तसम्बन्धाश्रयाद् यच्छब्दस्य प्राणोपासकपरत्वे मानाभावात्। ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यादि देवताया उपादीयमानत्वेन प्रकृतग्राहित्वे मानाभावात्। प्राणोपासनाविरहितानामप्यधिकारः इत्याहुः।

युक्तं चैतत्—यदि हि यत् पशुपुरोडाशयागवत् देवतासंस्कारार्थोऽयं होमः स्यात्तदा प्रकृतगामित्वं स्यात्। होमस्य मन्थाङ्गत्वप्रतीत्या प्रयोजननिराकाङ्क्षत्वेन देवतासंस्कार[2]त्वाकल्पनात्।

न च तत्र पशुदेवताया[3]गाङ्गत्ववज्ज्येष्ठादिदेवतायाः स्वरूपेण मन्थाङ्गत्वमस्ति। तेन "त्वाष्ट्रं पात्नीवतमालभेत" इति यागं विधाय "पर्यग्निकृतं पात्नीवतमुत्सृजन्ती"ति उत्सर्गे विहिते आज्येन संस्थापयतीत्यत्र पात्नीवतदेवतासम्बन्धेऽपि [4](कर्मान्तरत्ववदिहापि) कर्मान्तरत्वमेवेति सर्वेषामधिकारः। श्रीमन्थं कृत्वा स्त्रीमन्थेऽधिकार इत्यपि नास्ति। [5]अङ्गेन क्रतूनामानुपूर्वमित्यत्राधिकरणे पृथक्फलवत्तामानन्तर्यं पाठस्य नान्तरीयकत्वेन क्रमानुष्ठानपरत्वाभावादित्युक्तत्वात्।

न च धनसाध्यस्त्रीमन्थं प्रति धनसम्पादकत्वेन श्रीमन्थस्याहवनीयसम्पादकाधानस्य क्रतुपूर्वत्ववत् पूर्वत्वम्, तेन विनापि धनसंभवेन तदेकोपायकत्वाभावात्। न च प्रतिग्रहादिवन्मन्थकर्म, साक्षाद्धनोत्पादकमदृष्टद्वारा कालान्तरेऽपि तदुत्पादनसम्भवे स्त्रीमन्थपूर्वं तदुत्पन्नधनावश्यकत्वे मानाभावात्।

---

**ख पाठः—**

(1) विवक्ति (2) संस्कारत्वं (3) देवताया यागा
(4) बन्धनस्थपाठो नास्ति (5) तावत्क्रतूनामानुपूर्वः

अतएव वार्तिककारेण तन्नोपनिबद्धम् ।

"तत्र च तं वा एतमाहुरिति पितावताभूरति पितामहोवताभूः परमां बत काष्ठां प्राप श्रिया यशसा ब्रह्मवर्चसेद्धे"ति[1] ।

निगमनात् पितृपितामहाधिकश्रीयशोब्रह्मवर्चसपरमकाष्ठाप्राप्तिपुत्रकामस्य स्त्रीमन्थाधिकारः । [2]शुक्लादिविशेषक्षीरादिगुणफलम् , तथा अथाभिप्रातरेवेत्यादिना स्थालीपाकसंस्कारकथनात् , तत्र यजमानस्यैव कर्तृत्वात् क्षीरोदनादिपाकेऽवघात शीकरिकत्वावगमात् , क्षीरोदनादिकं पृथगेव स्थालीपाकादिति भाष्यकारस्वरसः, वार्तिककारेण क्षीरोदनादिकमेव स्थालीपाकावृता[3] संस्कृत्य हुत्वा तच्छेषो भोज्य इत्युक्तम्—

प्रधानाहुतयस्तिस्रो याः स्युरग्न्यादिपूर्विकाः ।
हुत्वा स्विष्टकृतं तन्त्रं समाप्य च यथोदितम् ॥
[4]कर्मेदं तत्र उद्धृत्य चरुस्थाल्याः समाहितः ।
सर्पिष्मन्तं तमश्नीया[5]त्कामितार्थानुरोधतः ॥
चरुं प्राश्य स्वयं शेषं भार्यायै संप्रयच्छति ।

युक्तं चैतत् । क्षीरोदनभक्षणस्य चरुभक्षणभिन्नत्वेऽदृष्टान्तरकल्पनाप्रसंगात् । क्षीरोदनादेरेव स्थालीपाकरूपेण होमेन संस्कारविधौ विधिलाघवमिति ।

---

**ख पाठः-**

(1) तत्र चैवं एतमाहुरति पिता वति भूरिति पितामहो वता भू परमावता ताकृताः प्राप श्रिया यशसा ब्रह्मवर्चसेनेति ।

(2) शुक्लादिइत्यारभ्य भाष्यकारस्वरस इत्यन्तं नास्ति ।

(3) स्थालीपाकवत्

(4) कर्मशेषं तदुद्धृत्य

(5) कामनार्थानुरोधकः ।

A"अथ यस्य जायामार्तवं विन्देत् त्र्यहं कंसे न पिबेत् ॥"

(बृहदार. ६. ४.१३)

कांस्यपात्रेण पानं भोजनं वर्ज्यम्। कंसपदं पात्रविशेषाकारपरं वा।

[1]त्रिरात्रमध्ये अनुषङ्गात् त्रिरात्रान्ते

"अहतवासा नैनां वृषलो वृषल्युपहन्यात्"

(बृहदार. ६.४.१३)

वृषलवृषलीपदं पापि[2]मात्रोपलक्षणपरम्
व्रीह्यवघातो दृष्टार्थत्वात् चरुपाकार्थः ॥

B"श्रीर्हवा एषा स्त्रीणां यन्मलवद्वासास्तस्मान्-

मलवद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयते।

(बृहदार. ६-४-६)

मलवद्वाससा सह संवादः स्मृतिनिषिद्ध इति चतुर्थदिने स्नानोत्तरं बोध्यः। संवादश्च मन्थ[3]पूर्वकमैथुनस्वीकाराय दृष्टार्थत्वानुरोधात्। रेतस्खलने प्रायश्चित्ताम्नानाच्च पत्न्युदक्याप्रभृति ब्रह्मचर्यम्, रेतसो योनिरूपे जले देहप्रतिबिम्बदर्शनेऽनुमंत्रणमपि कारणसंस्कार द्वारा रेतस एव संस्कार इति मन्थाङ्गमेव।

C"स यामिच्छेत् कामयेतमेति" ॥

---

ख पाठः-

(1) 'अहतवासात्रिरा' (2) पापिमात्रोपलक्षणम् (3) मन्थनपूर्वकं

मुद्रित पाठः-

A- अथ यस्य जायामार्तव विन्देत् त्र्यहं कंसे न पिबेदहतवासा, नैनां वृषलो न वृषल्युपहन्यात्। त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत्। बृहदारण्यकोप० ६-४-१३

B- श्रीर्हवा एषा स्त्रीणां यन्मलोद्वासास्तस्मान् मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत्। बृः दारः

C- स यामिच्छेत् कामयेतमेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। सत्वमङ्गकषायोसि दिग्धविद्धामिव मादयेमाममूं मयीति बृ.दार. ६-४-९

स्त्रीवशत्वमपि तदवशत्वे निमित्ते पुत्रोत्पादनाङ्गम् ।

"A अथ यामिच्छेन्न गर्भं दधीतेति', B यस्य जायायै जारः स्या"दि-त्येतद्द्वयं प्रासङ्गिकम् । नापत्योत्पादनाङ्गम् ।

'त्रिरात्रान्त' [1]इत्यस्य प्रधानसम्बन्धात् चतुर्थदिवसे मन्थकर्म पर्वादि-वर्जम् । [2]पर्वादिष्वत्र ऋत्वन्तरापेक्ष्य वाजपेयाभिषवसम्पत्त्या मैथुनं पश्यतः कर्मेदम् । तेन पूर्वं संवत्सरपर्यन्तमुपासनम् । तच्चैवम्—

**C एषां वै भूतानां चराचरात्मनां पृथिवी रसः सारभूता । पृथिव्या आपः । अपामोषधयः । ओषधीनां पुष्पाणि सारभूतानि । पुष्पाणां फलानि धान्यानि । फलानां पुरुषः सारः । पुरुषस्य रेतः सारम् ।**

**स ह प्रजापतिरीक्षां चक्रे हन्तास्मै रेतसे प्रतिष्ठा D कल्पयानीति ।**

---

**ख पाठः-**

(1) इत्येतस्य (2) पर्वादिमात्रे

**मुद्रित पठः:-**

A- अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धा-याभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥

बृ. दार. ६-४-१०

B- अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयात्" इत्यादि बृहदार० ६-४-१२

C- एषां वै भूतानां ब्राह्मणं यथा—
एषां वै भूतानां पृथिवीरसः पृथिव्या आपोऽपामोषय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ बृ. दार. ६ ४-१

D- कल्पयानीति स स्त्रियꣳ ससृजे ताꣳसृष्ट्वाध उपास्त तस्मात् स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत ।

बृ. दार· ६-४-२

[1]रेतः पुरुषेण प्रतिष्ठितं भवतीति विचारितवानिति ध्यानम्। एवं विचार्य स स्त्रियं ससृजे। तां च सृष्ट्वा अध उपास्त योनिप्रदेशे मैथुनं कृतवानिति ॥ स्त्रियमध उपासीत। स्त्रियां मैथुनं कार्यमिति ध्यानम्। ततो मैथुनकर्मणि सोमाभिषवरूपत्वचिन्ता।

**एतं प्राञ्चं ग्रावाणमात्मन एव [2]समुदपारयत्। (६-४-२)**

ग्रावसदृशं लिङ्गमात्मनो बहिष्कृत्य योन्यां प्रवेशितवान्।

तत्रैवं सामान्यचिन्ता।

Aयोन्युपरिदेशो वेदिरिव वेदिः। तद्गतलोमानि शाकटबर्हिः। चर्माधिषवणफलके च समिद्धो मध्यतः तौ मुष्कौ यथासंख्यं. योनिमध्य-तश्चर्म, आनडुहं चर्म मुष्कावधिषवणफलके। वाजपेये- वाजप्रसवीय होमे सप्तदशधान्यानां होमसम्बन्धः। इहापि योनिमध्ये समिद्धेऽग्नौ रेतसोऽन्नविकारस्य होम इत्यनेन वाजपेयसाम्यम्। तत्रैवमुपासनावतो मैथुनकरणे वाजपेयफलप्राप्तिः। य एव विद्वानधोपहासं-मैथुनं चरति स्त्रीणां सुकृतं वृङ्क्ते गृह्णाति। स्त्रियः सुकृतं वृंजते, य इदमविद्वांसो मैथुनं कुर्वन्ति। एवं ज्ञात्वा मैथुने वाजपेयफलं [3]स्त्रीपुत्रलाभोऽनेवं(ज्ञा)ने सुकृतहानिरिति विद्वान्॥

---

ख पाठः-

(1) रेतः पुरुषरूपेण कथं प्रतिष्ठितं भवति (2) समुपाददत्

(3) स्त्रीपुण्यलाभो नेदं काले सुकृत

**मुद्रित पाठः-**

A- अत्र मूलभूतं ब्राह्मणं यथा - तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाᳩ स्त्रीणाᳩ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते। बृ. दार. ६-४-३

A उद्दालक हारुणिः, कुमार हारितः नाको मौद्गल्यश्च बहवो मर्त्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयान्ति । य इदमविद्वांसोऽधोपहासं चरन्ति । बहवो ब्राह्मणायना ब्रह्मबन्धवोऽभिषवसाम्यं[1] वाजपेयसाम्यम् अजानन्तो रागमात्रेण मैथुनं सेवन्ते ते मर्त्या मरणधर्माणो निरिन्द्रिया विसुकृता भूत्वा स्वर्गादपि भ्रष्टा भवन्ति इति । एवमुपासनावतः संवत्सरेऽतीते स्त्रीमन्थारम्भः ।

उदगयनशुक्लपक्षे यजमानचन्द्रतारानुकूले मल[2]मासगुरुशुक्रमौढ्यादिरहिते काले कर्मारम्भः । [3]रजसश्चतुर्थदिवसे गर्भाधानयोग्यतिथिनक्षत्रादिसद्भावः पर्वसूतकादिविरहश्च ग्राह्यः । यस्मिन्नहनि तरुणीभार्या रजः पश्यति ततः प्रभृति द्वयोर्ब्रह्मचर्यम् । प्रमादाद्रात्रौ दिवा वा रेतस्खलने शौचाचमने कृत्वा दर्शने तस्य रेतसोऽभि[4]मर्शनम् । अदर्शने त्वनुमन्त्रणम् ।

**"यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्य दोषधीरप्यसरद्यदपः ।**

**इदमहं तद्रेत आददे ॥**

**पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ताम्" (बृह. दार ६-४-५)**

मिति मन्त्राभ्यां । पुनस्तद्रेतोऽनामिकाङ्गुष्ठाभ्यामादाय पूर्वमन्त्राभ्यामेव स्तनान्तरे भ्रुवोरन्तरे स्पर्शनम् । [B]शाङ्कराचार्यमते आदद इत्यन्तोऽ-

---

**ख पाठः—**

(1) साम्यं यत् तावत् विद्यया प्रजानन्तो रागमात्रेण मैथुनं

(2) 'मलमास' इति नास्ति । (3) रजश्चतुर्थे (4) अभिमन्त्रणम्

**मुद्रित पाठः-**

A- एतद्ध स्म वै तद् विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद विद्वान् कुमार हारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वांसोऽधोपहासं चरन्तीति बहु वा इदंसुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ बृ दार ६ ४-४

B- तदभिमृशेदनुमन्त्रयेत वानुजपेदित्यर्थः । यदाभिमृशति तदानामिकाङ्गुष्ठाभ्यां तद्रेत आदत्त आदद इत्येवमन्तेन मन्त्रेण ॥ शाङ्करभाष्य ।

भिमर्शनमन्त्रः। [1]पुनस्तत प्रक्षाल्याचमनम्। इदं च मन्थ कर्माङ्गम्।

प्रायश्चित्तप्रकरणे तु याज्ञवल्क्योक्तं पुरुषार्थरूपमेव। अतएव तत्राभिमर्शनपक्षो नास्ति। अनामिकामात्रेण च स्पर्शनम्, इहानामिकाङ्गुष्ठाभ्याम्। तेन [2]स्मृत्यन्तरमूलं तत्। एवमारभ्य प्राक् मन्थनकर्मण उदके देहप्रतिबिम्बदर्शने तदुदकस्य रेतःकारणत्वात्तदभिमन्त्रणं

रेतः संस्कारः—

"मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति।

स्मार्तं पुरुषार्थरूपमेव प्रायश्चितप्रकरणपाठात्॥" (बृह. दार—६।४।६)

मन्थाङ्गत्वेन रजस्वलाधर्माः—

त्र्यहं कांस्यपात्रेण पानभोजन [3]प्रतिषेधः। अहतवस्त्रपरिधानम्। वृषलवृषलाचाण्डालान्त्यजातिपातकिस्पर्शनभाषणवर्जनम्। पूर्वोक्तरजःस्वलाधर्माणामप्यपत्यार्थत्वात्तत्परिपालनम्। तृतीयदिने यजमानस्य हविष्याशनम्। चतुर्थदिवसे स्नानम्। नित्यकर्मसमाप्तौ द्वयोरहतवस्त्रपरिधानम्। स्नातां तामभिगम्याभिमन्त्रणम्। इदमावाभ्यां विशिष्टपुत्रोत्पादनाय मन्थकर्मपूर्वकमभिगमनं कर्तव्यमिति। सा चेन्न स्वीकुरुते वस्त्राभरणादिभिः सन्तोष्य स्वीकार्यम्। तदाप्यस्वीकारे दण्डेन स्वीकार्यम्। तथाप्यस्वीकारे शापभयं [2]दर्शनीयम्।

---

**ख पाठः—**

(1) पुनर्मति स्तनान्तरस्पर्शते मन्त्रः इत्यधिकम्।

(3) निषेधः

(2) श्रुत्यन्तरमूलं

( ) दर्यनीयम्, शापभवाच्यैतत् स्त्री स्वीकुरुते।

**मुद्रित पाठः—**

A- यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत्।

तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत्॥ ३-२७८।

**"इन्द्रियेण ते यशसा यश ^A आदधामी"ति ।**

**(बृह.दार-६४.७)**

मन्त्रपाठः शापनिवर्तनम् ।

# (स्त्रीमन्थ पद्धतिः)

ततः प्रातः काले गणपत्यादि पूजा । स्वस्तिवाचनम् ॥ संकल्पः, अद्य इहेत्यादि "आवाभ्यां श्रीयशोब्रह्मवर्चसपरमकाष्ठाप्राप्ति-पितृपितामहाधिकपुत्रोत्पत्यर्थं स्त्रीमन्थकर्म करिष्यावह इति । ^B शतवर्षायुष्कैक वेदपारग-शुक्लवर्णपुत्रकामनायां क्षीरोदनमन्थकर्मेति । एवं शतवर्षायुष्कद्विवेदपारग-श्यामलोहिताक्षपुत्रकामः दध्योदनमन्थकर्मेति । तथा शतवर्षायुष्कत्रिवेद-पारगकपिलपिङ्गलाक्षपुत्रकामः दध्योदनमन्थनकर्मेति । नात्र वृद्धिश्राद्धम् । व्रीह्यवघातं कुर्विति पत्नीं प्रति प्रैषः । पत्न्या व्रीह्यवघातः । आवसथ्यसमीपे उपवेशनम् । ब्रह्मावरणम् । प्रणीताप्रणयनम् । क्षीरोदन दध्योदनपक्षे द्विभूमि ? प्रणीतापात्रे उत्तरपार्श्वे दध्नः पयसो वा प्रणयनम् । पात्रासादने आज्यानन्तरं पत्न्यवहतचरुतण्डुलाः । तिलोदनपक्षे तिलाश्च ।

---

**मुद्रित पाठः—**

A- आददे

B- अत्र श्रुतिर्यथा— स य इच्छेत् पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरोदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै । १४ ।

अथ य इच्छेत् पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै । १५ ।

अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदानुब्रुवीत सर्वमायुरियादित्युदोदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ —बृहदार-६।४।१६ ।

[1]उदकपात्रस्योदकस्य [2]चोपकल्पनम्, पवित्रकरणाद्यसंचरे प्रोक्षणीनिधानान्तम्। आज्यनिर्वापनानन्तरं सोदकचरुपात्रे [3]तण्डुलप्रक्षेपः। सः क्षीरे वा दध्नि वा। आज्याधिश्रयणं पत्युः, [4]पत्न्याश्चरोरधिश्रयणम् उदकस्पर्शनम्। अग्निसंधुक्षणादिना पत्न्याश्चरुपाकः। स्रुवप्रतपनाद्याज्यभागान्तम्। स्थालीपाकादादाय होमः।

**"[A]अग्नये स्वाहा, अनुमतये स्वाहा, देवाय सवित्रे सत्यप्रसवाय स्वाहा।"**

इति प्रधानाहुतयः॥

स्विष्टकृदपि स्थालीपाकात्। आज्येन भूरादिप्रजापत्यान्ता नवाहुतयः। संश्रवप्राशनादिप्रणीताविमोकान्तम्। ब्राह्मणभोजनम्। अच्छिद्रावधारणम्। आशीर्वादः। भोजनपात्रे चरुस्थालीतश्चरुमुद्धृत्य स्थापनम्। गव्यघृतमिश्रयणम्। भोजनधर्मेण चरोरर्धभोजनम्। पत्न्यै [5]चरोरर्धस्योच्छिष्टस्य दानम्। तस्या भोजनम्। [6]तयोर्हस्तक्षालनपूर्वकमाचमनम्। [7]उपकल्पिते उदपात्रे उपकल्पितोदकपूरणम्। तेनोदकेन पत्नीं त्रिः प्रोक्षति—

---

**ख पाठः—**

(1) पात्रस्थोदकस्य (2) शेषकल्पनम्

(3) चरुतण्डुलप्रक्षेपः (4) पत्न्याश्चर्वधिश्रयणम्।

(5) चर्वर्धस्य (6) द्वयो (7) उपकल्पितोदकपात्रे च कल्पितोदकपूरणम्।

**मुद्रित पाठः—**

A- अत्रमूलभूता श्रुतिः—

"अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नयेस्वाहानुमतये स्वाहा, देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सहेति। —बृ. दार-६।४।१९।

"A उत्तिष्ठातो विश्वावसोन्यामिच्छ प्रपूर्व्याम् । सं जायां पत्या सहे"ति सकृन्मन्त्रः ।

रात्रौ यथोक्तलग्ने संवेशनकाले पत्न्या आलिङ्गनं मन्त्रेण—

"Bअमोहमस्मि सा त्वं सा त्वमस्यमोहम् ॥"

सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ।

तावेहि [1]संरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तये ॥"

अथस्या ऊर्वोर्विश्लेषकरणम् "Cविजिहीथां द्यावा पृथिवी" इति तत्र मन्त्रः ।

तस्या योनौ शिश्नप्रवेशः । मुखेन मुखसंधानम् । मुखप्रभृति पादपर्यन्तं तस्या मार्जनं मन्त्रेण—

"Dविष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु ।

आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥"

पुनश्च—

"गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके ।

गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥"

इति तथैवानुमार्जनम् ।

तथा—

"हिरण्मयी अरणी याभ्यां [2]निर्मन्थतामश्विनौ ।

तं ते गर्भं हवामहे दशमे मासि सूतये ॥

ख पाठः—

(1) तावेहि विवहावहे । ( विवहावहै इति पारस्कर पाठः - १।६।३ )

(2) निरमन्थतामश्विनौ ।

मुद्रित पाठः—

A- बृहदारण्यक-६।४।१९ B- बृहदारण्यक-६।४।२०

C- बृहदारण्यक-६।४।२१ D- बृहदारण्यक-६।४।२१

यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।

वायुर्दिशां यथागर्भ [A]एवं गर्भं दधातु तेऽसौ ॥"

इति पुनस्तथैवानुमार्जनम् । असौ पदस्थाने अमुकादेवीति स्त्री नाम ग्रहणम् । तत्र प्राणपूरणं कृत्वा—

"इन्द्रियेण ते रेतःसा रेत आदधामि ।"

इति प्राणं विरेच्य रेतःसेकः । ततः स्नात्वा [1]पृथक्शय्याशयनम् । एवमनुत्पन्ने गर्भे पुनरार्त्तवदर्शने समन्त्रमालिङ्गनम् । त्रिर्मन्त्रेण मार्जनम् । प्राणधारणपूर्वकं समन्त्रकप्राणरेचनम् । रेतः सेकः । यावद्गर्भमेवमेवाभिगमनमिति ।

गर्भे बस्तिदेशं प्राप्ते सोष्यन्तीकर्मणि विशेषः । सोष्यन्तीमद्भिरभ्युक्षति मन्त्रेण ।

[" [1]यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः ।

एवा ते गर्भ एजतु सहैवैतु जरायुणा ॥

इन्द्रस्यायं [B]व्रजः कृतः सार्गलः सपरिश्रयः ।

तमिन्द्र निर्जहि गर्भेण सावरां सह ॥" । इति ।

एवमुत्पन्नस्य जातकर्मणि विशेषः । जातेऽग्निस्थापनम् । अङ्के कुमारग्रहणम् । कांस्ये घृतदधिमिश्रणेन पृषदाज्यकरणम् । ब्रह्मवरणम् ।]

प्रणीताप्रणयनम् । पात्रासादने आज्यासादनानन्तरं पृषदाज्यासादनम् । पवित्रकरणात् पृषदाज्यभागान्ते पृषदाज्यात् स्रुवेण होमः ।

"अस्मिन सहस्रं पुष्यासमेधमानः स्वे गृहे । [C]अस्योपसद्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा इदमग्नये ।

---

ख पाठः-

(1) पृथक्शय्यायां शयनम् (2) बन्धनस्थपाठो नास्ति ।

मुद्रित पाठः-

A- एवंगर्भं दधामि तेऽसाविति-बृ. दार-६।४।२२ ।

B- व्रजः कृतः - बृ. दार-६।४।२३ ।

C- अस्योपसन्द्यां मा छैत्सीत् प्रजया च पशुभिश्च स्वाहा -बृ. दार-६।४।२४।

"मयि प्राणास्त्वयि मनसा जुहोमि स्वाहा इदमग्नये।"

"यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरम्।
अग्निष्टत् स्विष्टकृद् विद्वाँस्विष्टं [A1]सुततं
करोतु नः स्वाहा इदमग्नये स्विष्टकृते॥"

भूरादिप्राजापत्यान्ते स्विष्टकृदाज्येन। संस्रवप्राशनादिदक्षिणादानान्ते बालस्य दक्षिणकर्णसन्निधौ वागिति त्रिर्जप। दधिघृतमेकत्र पात्रे कृत्वाऽनावृतेन हिरण्येन प्राशनं प्रतिमन्त्रम्।

"[B]भूस्ते दधामि। भुवस्ते दधामि। स्वस्ते दधामि। भूर्भुवःस्वः सर्वं त्वयि दधामि इति। वेदोऽसीति कुमारस्य मातापितृवेद्यनामकरणम्। अङ्कस्थमेव बालकं मात्रे प्रदाय तस्मै मातुः स्तनसमर्पणम्।

[C]यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः॥

इति मन्त्रेण।

अथास्य मातुरभिमन्त्रणम्—

इलासि मैत्रावरुणी वीरे [D]वीरमजीजनः।
सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत्॥

श्रीशङ्करसुरेश्वरवाचां मीमांसयापि च।
नृसिंहानुग्रहादेव स्त्रीमन्थे पद्धतिः कृता।

---

ख पाठः—

(1) सुकृतम्।

मुद्रित पाठः—

A- सुहुतं—बृ. दार-६।४।२४। B- भूस्त्वयि दधामि। भुवस्त्वयि दधामि। स्वस्त्वयि दधामि। भूर्भुवः स्वः सर्वं त्वयि दधामीति। पारस्कर- १।१६।४

C- बृहदार — ६।४।२७।

D- वीरमजीजनत्—बृहदार ६।४।२८। मजीजनथाः—पारस्कर १।१६।१५।

# (पुत्रलाभप्रयोगाः)

औषधमन्त्रयोगेन प्रजामुत्पादयेदित्यत्र मन्त्रयोगपदस्य [1]वैदिकपुत्रकामपरत्वात् प्रयोगो लिख्यते— श्रौतं स्मार्तं च द्विविधम्। तथा श्रौतं तावत्—

**"द्वादशाहेन प्रजाकामं याजयेत्।"**

इति [2]द्वादशाहं पुत्रफलम्।

**चैत्ररथनामकोऽहीनः द्विरात्रं प्रजाकामस्य स च मासापवर्गः सहस्रदक्षिणः प्रत्यहं शतदक्षिणो वा।**

**"नव सप्तदशेनातिरात्रेण प्रजाकामं याजयेत्।"**

इति वचनात् नव सप्तदशस्तोमकोऽतिरात्रः प्रजाकामस्य।

तथा—

**"प्रजाकामस्यौपसदः।"**

औपसदो नाम द्वन्द्वयज्ञः। स प्रजाकामस्य। तस्योभयतो वैश्वदेवः पशुः।

**सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः।"**

इति अग्निष्टोमसंस्थो ज्योतिष्टोमः पुत्रफल।

तथा—

**"वैश्वदेवेन प्रजाकामं याजयेत्।"**

इति चातुर्मास्य प्रथमपर्व "दाक्षायण यज्ञः [3]प्रजापश्वन्नयशस्कामस्य।"

**"आग्नेयं [4]वा प्रतिकाममाहरेत्।"**

इति पुत्र[5]कामार्थमाग्नेयः कार्यः।

यजुर्विधानोक्तप्रयोगाः—

[6]ते च तुलापुरुषकृच्छ्रचान्द्रायणादिभिः पूतशरीरस्य कर्तुः कर्मापेक्षया शतं सहस्रमयुतं [7]लक्षं वा मन्त्रस्य पुरश्चरणजपः।

---

**ख पाठः—**

(1) वैदिकपुत्रकामनाप्रयोगपरत्वात् प्रयोगो (2) द्वादशाहं प्रजाकामस्य
(3) प्रजापश्वन्नकामस्य (4) 'वा' इति नास्ति (5) ०कामस्याग्नेयं कार्यं···
(6) तत्र (7) 'लक्षम्' इति खपुस्तके नास्ति।

तत्र

"पुत्रकाम आदित्याभिमुखः महाव्याहृतीस्तिस्त्रोयुतं मासं जपेत् ॥"

अन्यद्वारा करणे स्वस्तिवाचनसंकल्पपूर्वं वरणम् । माससमाप्तौ दक्षिणादानम् । एवमन्यत्र ।

तथा गायत्र्यधिकारे—

"शुचौ देशे अग्निमुपसमाधाय स्त्रीशूद्रसंभाषणवर्जं त्रिरात्रमयुतं जप्त्वा विपापो भवति । द्वितीयं विद्यार्थी तृतीयमारोग्यकामः [1]चतुर्थं पुत्रकामः ।

अत्र त्रिरात्रमध्ये अयुतजपः । द्वितीयत्रिरात्रे पुनरयुतजपः । तृतीयत्रिरात्रे पुनरयुतजपः । एवं चतुर्थत्रिरात्रे पुनरयुतजपः । एवं द्वादशरात्रैः अयुतचतुष्टयगायत्रीजपकर्म पुत्रकामः कुर्वीतेति संकल्पः ॥ स्वयमन्यद्वारा वाऽयुतचतुष्टयजपः । अग्न्युपसमाधानमदृष्टार्थम् ।

शातातपः[A]—(४-२८-२९)

विप्ररत्नापहारी यः सोऽनपत्यः प्रजायते ।
तेन कार्यं विशुध्यर्थं महारुद्रजपादिकम् ।
मृतवत्सोदितः सर्वो विधिरत्र विधीयते ॥

इति वचनात् हरिवंशश्रवणं ब्राह्मणोद्वाहनमपि संगृह्यते । व्यस्तं समस्तं वा कार्यम् । महारुद्रेति रुद्र[2]तन्त्रे विशेषः—

"दशांशहोमः कर्तव्यः पालाशेन यथाविधि"

(शातातपः ४-२९)

---

ख पाठः—

(1) 'चतुर्थं पुत्रकामः' इति नास्ति । (2) 'रुद्रतन्त्रे' इति नास्ति ।

मुद्रित पाठः—

A- विप्ररत्नापहारी चान.

पालाशकुसुमेनेति सम्प्रदायः। इदं च प्रायश्चित्तरूपत्वेन पर्षदुपस्थानादि-पूर्वकं कर्तव्यम्। महारुद्रविधानं चोक्तमनुसरणीयम्।

यजुर्विधाने-

A"परि णोहेति रुद्रस्येति वटावरोहसमिधामयुतं जुहुयात्।

[[1]पुत्रान् आयुष्मत उपपद्यते]"

अस्य प्रजापतिः ऋषिः। त्रिष्टुप् छन्दः। एकरुद्रो देवता। होमेतिकर्त्तव्यता चोक्ता।

तत्रैव-

"तदेनमित्यौदुम्बरसमिधामयुतहोमः पुत्रकामस्य।"

"तदेनमित्यस्य प्रजापतिः ऋषिः। अनुष्टुप् छन्दः। अग्निर्देवता।

"तदेनमुत्तरां नयाग्ने घृतेना[2]हूत रायस्पोषेण सꣳसृज प्रजया च बहुं कृधि।

तथा—

"तपनः सूनवः इति दधिमधुघृतं मिश्रीकृत्यायुतहोमः प्रजाकामस्य।"

सुहोत्र ऋषिः। गायत्री छन्दः। विश्वेदेवा देवताः। पुत्रोत्पत्तौ विनियोगः।

तपनः सूनवो [3]गिरः शृण्वन्त्वमृतस्य ये [4]सु...लोक भवन्तु नः।

---

ख पाठः—

(1) इदं वाक्यं नास्ति। (2) घृतमयाहुतः।

(3) शितः श्यन्वामृतस्य ये सुमनसो भवन्ति नः।। (4) ...पाठोनष्टः

मुद्रितपाठः—

A- परि णो रुद्रस्य हेतिदित्यादि पाठः शु. य, माध्य १६-५०

तथा—

अनुत्तमा त इति महाव्याहृतिवत् कर्म । पुत्रकामश्च जपेत् ।

पुत्रकामस्यायुतजपः ।

परमेष्ठी ऋषिः अगस्त्यऋषिर्वा त्रिष्टुप् छन्दः, इन्द्रो देवता पुत्रोत्पत्तौ विनियोगः ।

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ।

(काण्व ३२।७९, ऋक् १।१६५।९)

तथा—

"अन्विदिति प्रजाकामस्य वटा(व)रोहसमिधा[1]युतहोमः ।

परमेष्ठी ऋषिः अनुष्टुप् छन्दः अनुमतिर्देवता पुत्रार्थे विनियोगः ।

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वेदक्षाय नो हिनु प्रण आयूंषि तारिषः ।

(माध्य. ३४-८)

तथा—

"सिनीवालि प्रजाकामस्यायुत[2]जपः ।

सिनीवालि इत्यस्य गृत्समदऋषिः अनुष्टुप् छन्दः सिनीवाली देवता पुत्रार्थे विनियोगः ।

सिनीवाली पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं देवि दिदिड्ढि नः । (ऋक् २।३२।६)

---

**ख पाठः—**

(1) समिधामयुतहोमः (2) होमः

तथा—

त्वन्नो अग्ने इति पुत्रकामस्याज्येनायुतहोमः ।

[1]तस्याङ्गिरा ऋषिः जगतीछन्दः अग्निर्देवता पुत्रार्थे विनियोगः ।

त्वन्नो अग्ने तव देवपायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।

त्राता तोकस्य तनये गवामस्य निमेषं रक्षमाणस्तव व्रते ॥

(ऋग् १.३१-१२, काण्व ३३।७, माध्य ३४.१३)

प्रवोमह इति षडर्चेन नित्यपितृपूजा पुत्रकामस्य ।

उदकादौ पितॄणां गन्धाद्यैरुपचारैः पूजनम् ।

प्रवोमह इत्यस्य परमेष्ठी ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता ।

इच्छति त्वेत्यस्य परमेष्ठी ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता ।

असाल्हँ इत्यस्य सोमो देवता । षण्णां पुत्रार्थे विनियोगः ।

(१) प्रवोमहे महि नमो भरध्व माङ्गूष्यꣳ शवसानायसाम । येना नः पूर्वे पितरः पदज्ञा, अर्चन्तो अङ्गिरसो गा अविन्दन् ।

(२) इच्छन्ति त्वा सोम्यासः सखायः, सुन्वन्ति सोमं दधति प्रयाꣳसि । नितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ।

(३) न ते दूरे परमा चिद्रजाꣳस्या तु प्रयाहि हरिवो हरिभ्याम् । स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने अग्नौ ।

(४) अषाल्हँ युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनुमदेम सोम ।

---

ख पाठः—

(1) अस्याङ्गिरऋषिः

(५) सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ।

(६) त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ ।

(शु. य. काण्व. ३३ । ११, १६-माध्य ३४ । १७ , २२)

विष्णुधर्मोत्तरे—

मधुवातेतिमन्त्रेण हुत्वैवाज्यमतन्द्रितः ।
सहस्रशस्तु राजेन्द्र दीर्घमाप्नोति जीवितम् ।
हुत्वा दध्ना तथा पुत्रान् प्राप्नोति मनसेप्सितान् ॥

मधुवातेत्यस्य गोतम ऋषिः गायत्री छन्दः विश्वेदेवा देवताः पुत्रार्थे विनियोगः ।

मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ।

इति दध्ना सहस्र होमः ।

तथा—

दधिक्राव्णेति जुहुयात् पुत्रान् प्राप्नोत्यसंशयम् ।
अयं [1]च होमो दध्नैव । दध्ना वा भृगुनन्दन ।

इति पूर्वसम्बन्धात् । सहस्राधिकाराच्च सहस्रसंख्यः ॥

अस्य दधिक्रावा वामदेव ऋषिः । अनुष्टुप् छन्दः । अश्वो देवता पुत्रार्थे विनियोगः ।

---

ख पाठः —
(1) च इति नास्ति ।

त्र्यम्बकाधिकारे वसिष्ठकल्पे—

पुत्रकामस्तु जुहुयात् पायसं घृत[1]संप्लुतम् ।
चरुशेषं स्वयं भुक्त्वा पुत्रमाप्नोति मानवः ॥

अत्र संख्याविशेषानुक्तेर्यजुर्विधानोक्तानादेशेऽयुतसंख्या ग्राह्या ।

अथवा—

अल्पेऽल्पकालं कुर्वीत जपहोमादिकाः क्रियाः ।

इत्युक्तदिशा दिना[2]वृत्त्या सहस्रसंख्या ।

ऋग्विधाने—

शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ।
द्वादश्यां पुत्रकामस्तु चरुं कुर्वीत वैष्णवम् ।
दम्पत्योरुपवासः स्यादेकादश्यां सुरालये ।
ऋग्भिः षोड़शभिः सम्यगर्चयित्वा जनार्दनम् ।
चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ।
प्राप्नुयाद् वैष्णवं पुत्रमचिरात्सन्ततिक्षमम् ।

पुरुषसूक्तपाठेन चरुपाकं कृत्वा पुरुषसूक्तेन समस्तेन एकैकाहुतिहोमेन सहस्रहोमः ।एतद्दश[3]गुणो जपः । पूर्वमेव कृष्णैकादशीप्रभृति कर्तव्य इति महार्णवकारः ।

"चरुं पुरुषसूक्तेन जुहुयात् पुत्रकाम्यया ।"

इति पाठे चरुपाके पुरुषसूक्तपाठो निष्प्रमाणकः । एवं तत्पूर्वं होमसंख्या-दशगुणजपेऽपि प्रमाणं मृग्यम् ।

---

ख पाठः—

(1) संयुतम् (2) दिनावृत्त्या इति नास्ति (3) समगुणो

तत्रैव—

अथापरः प्रकारोऽयमेकादश्यामभोजनम् ।
दम्पत्योः पुरुषस्तत्र नित्यकर्माविरोधिनि ॥
काले जपेदिदं सूक्तमेकादश्यां निरन्तरम् ।
द्वादश्यां प्रयतो भूत्वा पयसा निर्वपेच्चरुम् ॥
द्वादशद्वादशीष्वेवं श्रपयेद्विधिवच्चरुम् ॥

एवमित्येकादश्यामुपवासादि कृत्वेत्यर्थः ।

हुत्वाज्यं विधिवच्चाग्नौ ऋग्भिः षोडशभिर्बुधः ।
कृताञ्जलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत् ॥

ताभिः षोडशभिः ऋग्भिः ।

समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात्पुनः ।
उपस्थानं हुताशस्य ध्यात्वा च मधुसूदनम् ।
हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतः शुचिः ।
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
भक्षयित्वाऽऽहुतेः शेषं लघ्वाशी संविशेत् क्षणम् ।

हुतशेषेणैव लघ्वाशी नत्वाहारान्तरेण ।

ततः कुर्य्यादिदं कर्म कर्त्तव्यं द्विजतर्पणम् ।
[1]द्वितीयां स्त्रीं निवर्तेत यावद्गर्भं न विन्दति ।
अपुत्रा मृतपुत्रा च या च कन्याः प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रमृश्यश्रृङ्गो यथाब्रवीत् ॥

---

ख पाठः—

(1) अन्यां स्त्रियं निवर्तेत ।

अथ प्रयोगः —

कृष्णैकादश्यामुपक्रम्य पुरुषसूक्तस्यायुतजपेन पुरश्चरणम्। शुक्लदशम्यामेकभक्तम्। एकादश्यां प्रातः स्वस्तिवाचनम्। सङ्कल्पः —पुत्रकामोऽहं द्वादश्यां पुरुषसूक्तकरणकवैष्णवचरुयागकर्म कुर्वीय। स्वयमशक्तौ [1]आचार्यवरणम्। आचार्यानुज्ञया देवालये दम्पत्योरुपवासेनावस्थानम्। द्वादश्यां प्रातराचार्यस्य पुरुषसूक्तेन शालग्रामे मूर्त्तौ वा विष्णुपूजा। [2]आसनशुद्धि-भूतशुद्धि-प्राणायाम-मातृकाभावना[3]चतुष्टयानन्तरम् ऋष्यादिस्मरणम्—

नारायणऋषिः पञ्चदशार्चामनुष्टुपछन्दः षोडश्याः त्रिष्टुप् छन्दः। जगद् बीजम्। नारायणः पुरुषो देवता। पूजादौ विनियोगः। वामकर-दक्षिणकर-वामपाद-दक्षिणपाद-वामजानु-दक्षिणजानु-वामकटि-दक्षिणकटि-नाभि-हृदय-कण्ठ-वामबाहु-दक्षिणबाहु-मुखाक्षि मूर्धसु षोडशर्चां क्रमेण [4]न्यासः।

एवं [5]संस्कृत्य हृदये नारायणात्मानं पुरुषं ध्यात्वा पूजनम्। अर्घ्यसंस्कारः पाद्यादिसंस्कारश्च।

आद्ययाऽऽवाहनम्। आवाहनादिमुद्रादर्शनम्। द्वितीयाप्रभृतिभिः क्रमेण आसन-पादस्नान-पाद्यार्घाचमनीय-स्नान-वस्त्र-यज्ञोपवीताभरण-गन्ध-माल्य-धूप-दीप-नैवेद्य-नमस्काराः। स्नानवस्त्रनैवेद्येषु षष्ठ्याचमनीयकम्।

प्रदक्षिणं प्रणवेन। पुरुषसूक्तस्य जपः। पुरुषसूक्तेनैव स्तुतिः। ततो देवस्य दक्षिणपार्श्वे प्रथमया ऋचा कुण्डस्थण्डिलयोरन्यतरकरणम्। पञ्चभूसंस्कारान् कृत्वा द्वितीयया प्रोक्षणम्। तृतीययाऽग्निस्थापनम्। [6][ब्राह्मणोऽस्य मुखमासीदित्यादिभिः पञ्चऋग्भिः पञ्चाङ्गसंस्कारः]

ख पाठः —

(1) आचार्यब्राह्मणोर्वरणम् (2) आसनबन्ध (3) चतुष्टय इति नास्ति (4) ब्राह्मणोऽस्य मुखमासीदित्यादिभिः पञ्चभिः ऋग्भिः पञ्चाङ्गन्यासः इत्यधिकम्। (5) एवं न्यासं कृत्वा (6) बन्धनस्थपाठो नास्ति।

चतुर्थ्यां समित्प्र[1] क्षेपेणाग्निसमिन्धनम् । पञ्चभ्याऽऽज्यसंस्कारः । पुरुषसूक्तेन समस्तेन चरुश्रपणम् । आधाराज्यभागान्तं कृत्वा षष्ठ्याग्निमध्ये [2]पद्मासनकल्पनम् । तत्र विष्णोश्चिन्तनम ।

विवृतास्थं बहु[3]शीर्षं रक्तास्यं रक्तलोचनम् ।
दीप्तकालानलप्रख्यं कुण्डस्थं चिन्तयेद्धरिम्[4] ।

ततः सप्तम्यादिपञ्चऋग्भिः पञ्चोपचारेण अग्नौ विष्णोः पूजा । ततः[5] प्रधानहोमः । प्रत्यृचं पुरुषसूक्तेन समिद्धोमः[6] । ततः समस्तेन पुरुषसूक्तेन पायसचरोरष्टशतमष्टसहस्रं वा होमः । सहस्रपक्षे बहवो होतारो वरणीयाः ततः स्विष्टकृदादिपूर्णाहुत्यादिशेषसमाप्तिः । ततो विष्णोः स्तुतिः ।

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेशमहापुरुषपूर्वज ।
[7]नमो हिरण्यगर्भाय[8] प्रधानव्यक्तरूपिणे ।
ओं नमो (भगवते) [9]वासुदेवाय शुद्धज्ञानस्वरूपिणे ।
देवानां [10]दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।
एकस्त्वमसि लोकस्य स्रष्टा संहारक[11]स्तथा ।
अध्यक्षश्चानुमन्ता च सुसम[12]ग्रसमाहितः ।

---

ख पाठः —

(1) समीक्षणेन (2) पद्मपीठ० (3) बाहुशीर्षं (4) हरम् (5) तत्र (6) प्रत्यृचमाज्यहोमः इत्यधिकम् (7) हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे (8) हिरण्यगर्भाय (9) वामदेवाय (10) देवतानां (11) संहारकारकः (12) सुषमाश्रीसमावृतः ।

संसारसागरं घोरमनन्तक्लेशसाधनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ।

न ते रूपं न चाधारो नायुधानि न चास्पदम् ।
तथा[1]ऽभूत् पुरुषाकारो भक्तानां [2]त्वं प्रकाशसे ।

नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ।
[3]नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ।

कार्याणां कारणं पूर्वं [4]वचसां वाच्यमुत्तमम् ।
योगिनां (योगिनः) परमां सिद्धिं [5]वदन्ति परमं पदम् ।

अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ।

कोणेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरेऽपि गतौ वापि वर्तते मे महद्भयम् ।

त्वत्पादकामनादन्यन्न च जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥

विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् ।
जन्मान्तरे मे देवेश मा [6]भूदस्य परिक्षयः ॥

दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम ।
यदि नाथ च विज्ञेयं तावताऽऽशीः कृता सदा ॥

---

ख पाठः—

(1) तथापि (2) तु (3) इयं पङ्क्तिः नास्ति (4) वचसा
(5) विन्दन्ति (6) त्तस्य ।

**अकाम[1]कल्मषं चित्तं मम ते पादयोः स्थितम् ।**
**कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ।**

एवं स्तुत्वा प्रणम्योपवेशनम् । यजमानो विष्णुं संपूज्य प्रदक्षिणी-कृत्यानयैव स्तुत्या संस्तूय[2] षोडशतमयर्चा यथाशक्ति सुवर्णं दक्षिणां दद्यात् । आचार्यः षोडशतमयर्चा देवस्यो[3]द्वासनं कुर्यात् । ततः शान्तिकरणम् अच्छिद्रावधारणम् । ब्राह्मणभोजनम् ।

**॥ अथ अपरः प्रकारः ॥**

इत्यस्य प्रयोगः । पूर्वं पुरश्चरणम् । दशम्यामेकवारं हविष्याशनम् । एकादश्यां प्रातः स्वस्तिवाचनम् । सकल्पः[4] । पुत्रकामोऽहं श्वःप्रभृति [5]द्वादशीषु वैष्णवचरु[6]होमकर्म कुर्वीयेति । आचार्य[7]ब्रह्मवरणम् । दम्पत्योर्देवालये उपवासेनावस्थानम् । नित्यकर्माविरोधिकाले निरन्तरं पुरुषसूक्तजपः आचार्यवरणपक्षे आचार्यस्य । द्वादश्यां पूर्वरीत्या विष्णुपूजा । अग्निस्थापनाद्याऽऽज्यभागान्तम्[8] । पञ्चम्यर्चा चरुश्रपणं कृत्वा पूर्ववदग्नौ विष्णुं ध्यात्वा पूजा । ततोऽश्वत्थसमिधां घृताक्तानां प्रत्यृचं होमः । ततः आज्येन प्रत्यृचं होमः । आग्नेयैर्मन्त्रैरग्नेरुपस्थापनम्[9] । ततः प्रत्यृचं पायसचरुहोमः शतपरिमितः । होमसमाप्तौ कृताञ्जलिपुटस्य पुरुषसूक्तेन विष्णोः स्तुतिः । षोडश्यर्चा दक्षिणा । हुतशेषस्य दम्पत्योः प्राशनम् । [10]क्षणं शयनम् ब्राह्मणेभ्यो [11]भोज्यदानम् । यावद् गर्भो न भवति द्वितीया स्त्री तावद् वर्जनीया । एवं द्वादशद्वादशीषु सङ्कल्पवर्जं कर्म । अन्ते पूर्णाहुतिः । शान्तिकरणम् । अच्छिद्रावधारणम् ।

---

**ख पाठः –**

(1) कलुषं (2) संस्तुत्य (3) देवोद्वासनम् (4) इत्यधिकः (5) द्वादश द्वादशीषु (6) 'होम' इति नास्ति (7) ब्रह्मणोर्वरणम् (8) भागान्ते विशेषः (9) रुपस्थानम् (10) 'आहारान्तर प्राशनम्' इत्यधिकम् (11) भोजनदानम् ।

ऋग्विधाने-

[A]उरोष्ट इति सूक्तेन उपतिष्ठेच्छतक्रतुम् ।
प्रजाकामो यजेन्नित्यं चरुणा च प्रयत्नतः ।
उपहृत्योपहारं च शेषं भुञ्जीत वाग्यतः ।
उच्छिष्टं च प्रदातव्यं भार्यायै पुत्रमिच्छता ।
धेन्वाः सरूपवत्सायाः पयसा निर्वपेच्चरुम् ।
अनुरूपां प्रजामाशु लभते नात्र संशयः ।

उरोष्ट इति मन्त्रस्य अत्रिः ऋषिः अनुष्टुप् छन्दः इन्द्रो देवता ।

पुण्येऽह्नि प्रजाकामः उरोष्टमिति सूक्तकरणकेन्द्रोपस्थानपूर्वकं तत् सूक्तकरणक समानवर्णवत्सकधेनुपयःसिद्धचरुकरणकाष्टोत्तरसहस्रमितहोमं कुर्वीयेति सङ्कल्पः ।

---

मुद्रित पाठः—

A- उरोष्ट इति सूक्तम् ऋ— ५ । ३८

उरोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो
अधानो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ १ ॥
यदीमिन्द्र श्रवाय्यमिषं शविष्ठ दधिषे ।
पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरम् ॥ २ ॥
शुष्मासो ये ते अद्रिवो मेहना केतसापः ।
उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥ ३ ॥
उतो नो अस्य कस्यचिद् दक्षस्य तव वृत्रहन् ।
अस्मभ्यं नृम्णमा भराऽस्मभ्य नृमणस्यसे ॥ ४ ॥
नू त आभिरभिष्टिभिस्तव शर्मञ्छतक्रतो ।
इन्द्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥ ५ ॥

ऋ— ५. ३८

अथ सामविधाने (२-८-३)-

रोहिण्यां वा रोहिण्या गोः सरूपवत्सायाः [A]पयसा रक्तशालीनाꣳ स्थालीपाकꣳ श्रपयित्वा परमेष्ठिनः प्राजापत्यस्य व्रतेनाभिजुहुयात् सहस्रकृत्वः शतावरमेतेनैवाभिगीयोद्धृत्य सभार्यः प्राश्नीयात् सुरूपान् दीर्घायुषः पुत्रान् लभते ।

रोहिणीनक्षत्रे [1](रोहिणीवर्णायाः गोः रोहितवर्णवत्सायाः) इत्यर्थः । शतावरम् – तेन पञ्चषट्शतानि होमपरिमाणं सहस्रपर्यन्तं शतमारभ्येत्यर्थः । प्राशनं च चरोर्होमशेषस्य ।

तथा (२-८-४)-

कृष्णायाः गोः कृष्णवत्सायाः पयसि कृष्णपिष्टकानाꣳ स्थालीपाकꣳ श्रपयित्वा कृष्णपञ्चम्यामुदिते सोमे [B]त्वमिमा ओषधीरित्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । एतेनैवाभिगीयोद्धृत्य सभार्यः प्राश्नीयात् सुरूपान् दीर्घायुषः पुत्रान् लभते ।

तथा (२-८-५)

कौम्भ्यं घृतं पुरुषव्रतेनाभिजुहुयात्, अनुगानशः उत्तरेण सदा प्राश्नीयात् सुरूपान् दीर्घायुषः पुत्रान् लभते ।

---

ख पाठ—

(1) बन्धनस्थ पाठस्थाने रोहितवत्साया इति पाठः ।

मुद्रित पाठः-

A- पयसि

B- त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततनोरुर्वान्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ साम- ६०४

अथातः पुत्रियाणां [A]नित्वा नक्ष्य–[B]नित्वामग्ने–[C]प्रयोराये [D]यमग्नि–[E]जातः परेण–[F]न हिवश्चरमं च न [G]सोमः पवते–जनिता मतीनाम् इति सर्वाण्य – [H]पत्यं – [I]नित्य[J]वत्सा –

---

मुद्रित पाठः—

A- नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम्। सुवीरमग्न आहुत ।साम-२६

B- नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः। साम- ५४

C- प्रयोराये निनीषति मर्तो यस्ते वसो दाशत् ।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम्। साम- ५८

D- यमग्ने पृत्सु। साम १४१५ भवेत्। यमग्निः सुवीर्यस्य इति सामविधान पाठः।

E- जातः परेण धर्मणा यत् सवृद्भिः सहाभुवः।
पिता यत् कश्यपस्याग्निः श्रद्धा माता मनुः कविः। साम- ९०

F- न हि बश्चरमं च न वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचाविश्वे पिबन्तु कामिनः। साम- २४१

G- सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः। साम- ५२७

H- अप त्य वृजिनं रिपुं स्तेनमग्ने दुराध्यम्।
दविष्ठमस्य सत्पते कृधी सुगम्॥ साम- १०५

I- यद्यपि सर्वत्र नित्यवत्सा इति पाठोऽस्ति तथापि नित्यवश्याम् इति पाठः शुद्ध इति सम्भाव्यते । तेन— 'नित्यस्तोत्रो वमस्पतिर्धनामन्तः सवर्दुघाम्। हिन्वानो मानुषा युजा— साम १२०२।

J- वस्यां इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः।
माता च मे छदयथः समावसो वसुत्वनाय राधसे॥ साम- २९२

[A]रथन्तरं–[B]व्याहृतिवर्गो–[C]रूरुचमिति द्वे। एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः सुरूपान् दीर्घायुषः पुत्रान् लभते।

तथा—

"यस्या[1] जातानि प्रमीयेरन् न्यग्रोध शृङ्गान् शरमूलं चोत्थाप्य तदहस्त्रिधृतं कारयेत्। [2]मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाया "[D]बोध्यग्नि" रित्यनेनाभिजुहुयात् सहस्रकृत्वः शतावरं, [E]तृतीयगर्भमासे निदध्यादाज्यशेषं, मेखलायां मणिं धारयेत्। पुमांसꣳह जनयति। जातस्य कण्ठे[3]ऽवसजेत्। कुमारमाज्यशेषं प्राशयेत्। सर्वाणि स्रोतꣳसि तर्पयेदभ्यंञ्जीताहरहस्तत उर्ध्वमुपयुक्ते पुनः प्रयोगः। शतं वर्षाणि जीवति। [4]जरयैव [F]विश्रंस्यते।

---

**ख पाठः—**

(1) यस्य (2) निशि इत्यधिकः (3) करे (4) जरसैव।

**मुद्रित पाठः—**

A- अभित्वा शूर नोनुमोऽदुग्धा इव धेनवः।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ साम- २३३
अत्र गीयमानं साम रथन्तरम्। B- भूरादयो व्याहृतयः।

C- अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः।
साम ५९६- साम ब्राह्मणे तु रूरुचदितिद्वे इति पाठः।

D- अबोध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम्।
यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सस्रते नाकमच्छ। साम- ७३

E- तृतीये गर्भमासि (२. २. १. सामविधाने) F- विस्रंसते

[A]अत्र काम्यानामनादेशे त्रिरात्रमुपवासः पुष्येणारम्भः

इति वचनात् कालविशेष-तपोविशेषानुक्तौ पुष्ये नक्षत्रे त्रिरात्रमुपोष्य चारम्भः ।

[1]अथाङ्गिरसकल्पे—

पूतञ्जीवस्य काष्ठैर्यो वह्निं प्रज्वाल्य तत्फलैः ।

सहस्रं जुहुयान्मासं तस्य पुत्रोऽचिराद् भवेत् ॥

प्रपञ्चसारे—

पुत्रेप्सुः पूतञ्जीवेन्धनचितदहने तत्फलैर्वा (सहस्रम्) ॥

[2] सहस्रमिति सहस्रमात्रम् ।

प्रयोगमाह । [3]अयं मन्त्रराजनृसिंहोपासनवतः प्रयोगः तान्त्रिकविधि संस्कृते [4]वह्नौ कर्तव्यः । [5]कुर्यादिदं बुध इति वचनादावृत्तिः कार्या ।

आङ्गिरसकल्पे—

पलाशसमिधामष्टसहस्रं च घृतस्य च ।

हुत्वा पुत्रमवाप्नोति सर्वलक्षणसंयुतम् ॥

तथा—

पुत्रार्थी मृतवत्सायामभिषेचनपूर्वकम् ।

एतत्कुर्यात् सुतश्चास्य आयुष्मान् संप्रजायते ॥

अतीतकालपुत्रार्थं कर्मेदमपि कारयेत् ।

---

ख पाठः –

(1) अथ इति नास्ति (2) सहस्रमितहोमः (3) अथ (4) अग्नौ

(5) फलस्यादर्शने भूयो भूयः कुर्यादिदं बुधः इति ।

मुद्रित पाठः—

A- अथातः काम्यानाम् (२. १. १३ सामविधाने)

तथा-

चन्दनं सर्पिषा पिष्टं पुत्रार्थं जुहुयान्नरः ।

तत्रैवाभिषेकफलकथने पुत्रलाभ इति ।

तथा नृसिंहबल्यधिकारे पुत्रलाभफलकथनम् ।

क्रमदीपिकायां गोपालमन्त्राधिकारे-

मृतपुत्राय ददतं सुतान् विप्राय सार्जुनम् ।
ध्यात्वा लक्षं जपेदेकं मन्वोः सुतविवृद्धये ।

मन्वोः— अष्टादशाक्षरद्वादशाक्षरयोः ।

प्रयोगान्तरमाह-

पूतञ्जीवेन्धनचिते जुहुयादनलेऽयुतम् ।
तत्फलैर्मधु[1]रासिक्तैः पुत्रा दीर्घायुषोऽस्य तु ।

प्रयोगान्तरमाह-

क्षीरद्रुं चाथ संपूर्णमभ्यर्च्य कलशं निशि ।
जप्त्वाऽयुतं प्रगे नारीमभिषिञ्चे द्विषड्दिनम् ।
सा बन्ध्यापि सुतान् दीर्घजीविनो गदवर्जितान् ।
लभते नात्रसन्देहस्तज्जप्त्वा [2]जपिनी सती ।

प्रयोगान्तरं [3]च—

प्रातर्वाचंयमा नारी बोधि[4]च्छदपुटैर्जलम् ।
अष्टोतरशतं जप्तं मासं पुत्रीयती पिबेत् ॥

---

ख पाठः-

(1) मनुना (2) जपान्नाशिनी सती (3) 'च' नास्ति (4) बोधिद्रुमः चलद्दलम्

वराहपुराणे—

बलकृष्णौ यजेद्धीमान् पुत्रकामो न संशयः ।

तेन बलदेवपूजनं कृष्णपूजनं च पुत्रदं पुत्रार्थिना। [1]प्रत्यहं कार्यम् । [2]

अथवा—

पुत्रार्थिना सन्तानगोपालमन्त्रोपासना कार्या । नारदऋषिः । अनुष्टुप् छन्दः । पुत्रदो गोपालो देवता । पुत्रप्राप्तौ विनियोगः ।

देवकीपुत्र गोविन्देत्यनेन हृदयं भवेत् ।
वासुदेव जगत्पते इत्यनेन शिरः स्मृतम् ॥
देहि मे तनयं देव इत्यनेन शिखा मता ।
त्वामहं शरणं गत इति स्यात् कवचं ततः ॥
पादैश्चतुर्भिरस्त्रं स्यादङ्गन्यासोऽयमीरितः ।
शंखचक्रधरं देवं रथस्थं च चतुर्भुजम् ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
श्रीवत्सकौस्तुभोरस्कं बर्हिबर्हावतंसकम् ॥
समर्पयन्तं विप्राय नष्टानानीय बालकान् ।
एवं ध्यात्वा जपेन् मन्त्रं द्वात्रिंशल्लक्षमात्रकम् ॥

---

ख पाठः—

(1) प्रत्यहम् इति नास्ति (2) चातुर्मास एतत्त्रिषु एकादशीषु उपवासं नक्तमेकभक्तं वा कृत्वा जनार्दनं पूजयित्वा अन्ते विप्रान् भोजयित्वा शक्त्या दक्षिणां दत्त्वा "मुच्यते सर्वपापैस्तु ब्रह्महत्यादिभिर्नरः । अधिपूजनसिद्धश्च लभेत् पुत्रान् गुणान्वितान्" । तथा नित्यं सुवर्ण+ + +न्ते वस्त्रयुग्मसहितं सुवर्णपद्मं दत्वा अमावास्यासु कृष्णतिलैः स्वागतेन सन्तर्प्य ब्राह्मणान् पायसादिभिर्भोजयित्वा तत्र वस्त्रालंकारसहितां कृष्णां गां पयस्विनीं दद्यात् । धनधान्यसमृद्धः पुत्रान् लब्धा ।

अचिराल्लभते पुत्रमायुष्मन्तं गुणान्वितम् ।

अथवा सौभरिमन्त्रोपासना कार्या ।

तारं हृम्भगवान[1]त्रे......ब्रह्मणे वेधसे तथा ।

अष्टौ मे पुत्रा जायन्तामक्षीणरेतसो द्विजाः ।

ब्रह्मास्य देवता प्रोक्ता ऋषिः स्यात् सौभरिः स्वयम् ।

छन्दोऽनुष्टुप् ततो बीजं तारः शक्तिर्वसुप्रिया[2] ।

अरुणकमलसंस्थो रक्तवर्णो विरिञ्चि—

र्विविधरुचिरभूषालंकृतो विश्वयोनिः ।

अभयवरकमण्डल्वक्षसूत्रैः सुबाहु—

र्वितरतु विविधान्नो विश्वभोगान् सुपुत्रान् ॥

समर्चये[3]च्चामरयुग्ममध्ये नानोपहारैः कमलादिपुष्पैः ।

विदिक्षु धर्मादिचतुष्टयं यजेद्दिक्ष्वधर्मादिचतुष्टयं च ॥

ऊर्ध्वः[4] प्रलम्बश्च तथोर्ध्वकेशो[5] विमोहनो गन्धगतिः पुरस्तात् ।

कामः[6] कनङ्ग[7]न्नपि रत्यथाष्टौ यजेद्बहिः षोडशपत्रमध्ये ॥

लोकेश्वरानिन्द्रमुखानथाष्टौ

मध्ये च देवं प्रयजेत मन्त्री ।

अनुदिनमिति मन्त्रं संयतो यो जपेत्त

प्रतिनयति[8] विदारीरीरणस्याधिवासः ।

---

ख पाठः—

(1) वान् तन्मे भो (2) शक्तिः पर्वसु प्रिया (3) दम्बर (4) ऊर्जः (5) कोणो (6) कामं (7) कनर्चाङ्गद (8) प्रतिनियतविहारी वीरणस्याधिवासम् ।

अनुभवति सदैव व्याधिदारिद्र्यहीना-
नपरिमितधनाढ्यान् पुत्रपौत्रान् विचित्रान् ।
अनुदिनमुदये यो भक्तियुक्त[1]स्त्रिसंध्यं
शतमितमथचाष्टौ[2] तस्य मन्त्रं जपेच्च ।

सलिलमपि पिबेद् यो मन्त्रपूतं प्रभाते
स तु सुनिशितबुद्धीन् प्राप्नुयादष्टपुत्रान् ।

स्नात्वा शिरसि मन्त्रं वा प्रजपेच्चदेविंशति
प्रोक्षयेन्मूर्धनि जलं पिबेद्वा मन्त्रपावितम् ।

मूर्धगैश्च[3] तथा सूक्तै रभिमन्त्र्योदकं मुने[4]
वर्णसंख्यायुतं जप्त्वा पर्युक्षेच्चैव मूर्धनि ।

उपास्य सन्ध्यां मन्त्रेण गृहीत्वाऽञ्जलिना जलम् ।
मन्त्रावृत्त्यैकविंशत्या [5]पुनस्तदुदकं पिबेत् ।
पाययेच्चाथवा मर्त्यानन्यानपि यथाविधि ।
आयुर्वृद्धिं यशः कीर्तिं लभते ह्यथवासरे[7] ॥
सर्वलक्षणसंयुक्तानष्टपुत्रान् स विन्दति ॥

प्रपञ्चसारे—

सुदर्शनमन्त्रेणाष्टोत्तरसहस्रमितोदुम्बरसमिद्धोमः पुत्रफल[8]

इत्युक्तम् ।

---

ख पाठः—

(1) नम्र (2) मथवाष्टौ (3) उद्यमैश्च (4) मुदे (5) तज्जलं च पुनः पिबेत् (6) मर्त्या (7) व(त्स)रात् (8) फलक ।

नरसिंहपुराणे-

नरसिंहं प्रतिष्ठाप्य यः पूजामाचरेन्नरः ।

तस्य कामाः प्रसिध्यन्ति पुत्रपौत्रा[A]द्यो भुवि ॥

इत्यभिधानात् नरसिंहपदोक्तविष्णुमूर्तेनर[B]सिंहपुराणविधाना [1]मत्स्य पुराणोक्तविधिना वा स्थापनं [2]पुत्रफलार्थम् ।

तथा हयशीर्षे-

कृत्वैवं बलभद्रं तु यस्तु संस्थापयेन्नरः[3] ।

पुत्रान् ददाति तस्याथ विपक्षांश्च जयत्यसौ ।

बलभद्रलक्षणमस्मत् कृते प्रतिमाप्रदीपेऽनुसधेयम् । प्रतिष्ठाविधिश्चास्मत्कृते प्रतिष्ठाप्रदीपेऽवगन्तव्यः ।

मत्स्यपुराणे लक्षहोममधिकृत्य-

पुत्रार्थीलभते पुत्रं धनार्थी लभते धनम् ।

लक्षहोमश्चास्मत्कृते शान्तिप्रदीपे ।

हरिवंशे-

य इदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।

स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ॥

तेन प्रत्यहं क्रमेण हरिवंशपाठः[4] पुत्रफलः । तथा[5] पुनः पुनर्हरिवंशश्रवणं च । तच्छ्र[6]वणप्रकारश्चोक्तः ।

---

ख पाठः—

(1) 'मत्स्यपुराणोक्तविधिना' इति नास्ति (2) फलदम् (3) बुधः (4) पुत्रफलदः (5) तत (6) तत्प्रकारश्चोक्तः ।

मुद्रित पाठः-

A- परमं पदमाप्नुयात् B- नरसिंहपुराणे ५६ अध्याये नरसिंहप्रतिष्ठा उक्ता ।

सहस्रनामाधिकारे महाभारते (अनु. १४६-१२४)–

प्रजार्थी प्राप्नुयात् प्रजाः[A] ।

इति सहस्रनामपाठः, तच्छ्रवणं वाऽऽवर्तनीयम् ।

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।

(१४९-१२२) इत्युपक्रम्य नित्यश्रवणस्य नित्यपठनस्य वा फलम् । न च यावज्जीवानुष्ठाने नित्यत्वमिहेति शङ्कनीयम् । ऐहिकतात्कालिकफलविरोधात् किन्तु[1] संततानुष्ठानमिह नित्यपदेनोक्तमिति ।

असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ।

इति संख्या विशेषापेक्षायां शतं सहस्रमयुतं वाधिकारितारतम्येनावगन्तव्यम् ।

जाबालिः–

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।

प्राप्नोति पञ्चमे कृत्वा श्राद्धं कामांस्तथेतरान् ॥

तेनाश्विनापरपक्षे श्राद्धं पुत्रफलदम् । तत्र च यद्यपि बहवः प्रकाराः ।

अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।

त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ॥

तथापि यावज्जीवाधिकरणन्यायेन प्रत्येकदिनश्राद्धस्यैव फलसम्बन्धः । इत्येकस्मिन्नपि दिने पुत्रकामनया श्राद्धकरणे फल स्यादेव । दिनान्तरे श्राद्धकरणे पुरुषस्यैव प्रत्यवायो न तु फलानुत्पादः एकप्रयोगाभावात् । एवं वक्ष्यमाणपञ्चम्यादि श्राद्धं बोध्यम् ।

---

ख पाठः–

(1) किञ्च ।

मुद्रित पाठः—

A- प्रजाम् ।

प्रतिपदादितिथ्यधिकारे याज्ञवल्क्यः (१-२६२. २६४)—

कन्यां कन्यावेदिनश्च पशून्द्रव्यं सुतानपि ।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरौप्ये सकूप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ।
प्रतिपत् प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥ (१-२६४)

तेन पञ्चम्यां श्राद्धं पुत्रफलम्[1] । एवमेकादश्याम् । द्वयमपि कृष्णपक्ष एव ।

तथा कृत्तिकादिनक्षत्रेषु क्रमेण—

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं[2] मुख्यतां शुभम् ।
(याज्ञ. १-२६५)

इत्यादि । तेनाश्लेषायां श्राद्धं पुत्रफलम्[3] । एतदपि कृष्णपक्षे ।

मरीचिः—

कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम् ।
विष्कुंभादिषु योगेषु तदेव फलमिष्यते[4] ॥

तेन विष्कुम्भनामकयोगात् सप्तमे सुकर्मयोगे श्राद्धं पुत्रफलदम् ।

मनुः (४-२२९)—

"तिलप्रदः प्रजामिष्टाम्"

तेन प्रभूततिलदानं कार्यम् ।

---

ख पाठः—

(1) पुत्रदम् (2) सुखितां (3) पुत्रदम् (4) फलमाप्यते ।

विश्वामित्रः—

महिषी सुप्रजां राजन् क्षीराढ्यां युवतिं तथा ।
दत्त्वा चैव तु कार्त्तिक्यां धेनूपस्करसंयुताम् ।
दशधेनुप्रदानेन यत्फलं तत्समश्नुते ।
प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छति ।

धेनूपस्करः— दशसुवर्णेन शृङ्गद्वयम् । रूप्यपञ्चपलेन खुराः । कांस्य[1]पृष्ठकांस्यदोहे[2] ।

लिङ्गपुराणे-(पार्वत्युवाच)

पुत्रजन्म मया प्राप्तं न तावज्जगतीपते ।
अपुत्रस्य गतिर्नास्ति इतीयं वैदिकी श्रुतिः ।
तन्मे दिश महाभाग लोकद्वयहितँ विभो ।

श्रीभगवानुवाच—

अपुत्रो पुरुषो यश्च नारी वा पर्वतात्मजे ।
सौवर्णस्तेन दातव्यः कल्पवृक्षो गुणान्वितः ।
बहुशाखः सुवर्णाङ्गो ह्यनेककुसुमान्वितः ।
महास्कन्दस्वरूपश्च रत्नालङ्कृतविग्रहः ॥
फलानि तस्य दिव्यानि सौवर्णानि प्रकल्पयेत् ।
राजतं चैव कुर्वीत समन्तात्पीठमुत्तमम् ॥
प्रवालाङ्कुरसंच्छन्नँ मुक्तादामावलम्बितम् ॥
चतुष्कोणेषु कुर्वीत चतुरः काञ्चनद्रुमान् ॥

---

ख पाठः—

(1) ताम्रपृ कांस्यदोहेच　(2) 'च' इत्यधिकः पाठः

सहस्रेण तदर्धेन तदर्धार्धेन वा पुनः ।
कारयेत् कल्पवृक्षं तु सर्वकामसमृद्धये ॥

सहस्रेणेत्यादौ फलानां संख्यासम्बन्धः ।

कुर्याद्विंशपलादूर्ध्वं [1]शक्त्या च नृपसत्तम ।

इदमपि महाधनविषयम् ।

अल्पवित्तो यथाशक्ति स्तोकं स्तोकं प्रकल्पयेत् ।

इति वक्ष्यमाणत्वात् । तेन मत्स्यपुराणाद्युक्त[2]- त्रिपलादिपरिमाणं ग्राह्यमशक्तस्य। सर्वमेव सुवर्णकार्यमनेन परिमाणेन इत्यवधेयम् ।

दानमेतत् प्रदातव्यं व्यतीपातेऽयनद्वये ।
ग्रहणे चन्द्रसूर्याभ्यां दुःस्वप्नाद्भुतदर्शने ॥
जन्मर्क्षे विषुवे चैव युगाद्या[3]दावथो पुनः ।
नद्यास्तीरे गृहे वापि देवतायतने तथा ॥
[4]प्रागुदक्प्रवणे देशे मण्डपं तत्र कारयेत् ।
दशहस्तप्रमाणेन चतुर्हस्ता च वेदिका ।
हस्तमात्रप्रमाणेन कुण्डमेकं सुशोभनम् ॥
आग्नेय्यां कारयेद्राजन् मेखलात्रयभूषितम् ।
तत्र च ब्राह्मणा योज्या [5]ऋग्यजुः सामपाठकाः ।
[6]उपद्रष्टा च तत्रैव द्वितीयः पञ्चमोऽथवा ॥
सर्वाभरणसम्पन्नाः कांस्यपात्रद्वयान्विताः ।
अनुलिप्ताश्चन्दनेन वस्त्रमाल्यविभूषिताः ॥

---

ख पाठः —

(1) शक्त्या वा गिरिजे शुभे (2) पुराणोक्त (3) युगादावथवा पुनः (4) प्रागुक्तलक्षणोद्देशे (5) ऋत्विजः सामपाठकाः (6) उपदेष्टा ।

शुचिप्रस्थोपरिष्टाच्च स्थापयेत्कल्पपादपम् ।
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ॥
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ।
सन्तानं सह गायत्र्या पूर्वतो लवणोपरि ॥
मन्दारं[1] दक्षिणे पार्श्वे श्रिया सह तथा [2]घृते ।
पश्चिमे पारिभद्रं तु उमया सह जीरके ॥
सुरभिसंयुतं तद्वदुत्तरे मधुसूदनम् ।
कौशेयवस्त्रसंयुक्तान् गन्धमाल्यफलान्वितान् ।
तथाष्टौ पूर्णकलशान् समन्तात् परिकल्पयेत् ॥
अग्निप्रणयनं कृत्वा अधिवास्य तु पादपान् ।
धान्यानि चैव सर्वाणि समन्तात परिकल्पयेत् ।
नानाभक्ष्याणि नैवेद्यं सर्वं तत्र निवेदयेत् ॥
दीपमालां विचित्रां च ज्वालयेत्तु समन्ततः ।
मन्त्रेण [3]पूजयित्वा तं संप्रयुङ्क्ते[4] वरानने ॥
कामदस्त्वं हि वृक्षाणां कामदस्त्वं ततः स्मृतः ।
मया संपूजितो नित्यं पूरयस्व मनोरथान् ॥
एवं संपूज्य विधिना रात्रौ जागरणं ततः ।
शङ्खवादित्रनिर्घोषैः वेदध्वनिविमिश्रितैः ॥
होमं च ब्राह्मणाः कुर्युस्तद्गतेनान्तरात्मना ।
महाव्याहृतिभिश्चैव होमं कुर्युस्ततः परम् ॥

---

ख पाठः —
(1) मन्दरं (2) शुभे (3) योजयित्वा च (4) संयुक्ते च वरानने ।

अयुतेन भवेत् सिद्धिर्यज्ञस्य वरवर्णिनि ।
ततः प्रभाते चोत्थाय स्नात्वा शुक्लाम्बरः शुचिः ॥
त्रिः प्रदक्षिणमामन्त्र्य[1] मन्त्रमेतमुदीरयेत् ।
नमस्ते कल्पवृक्षाय[2] चिन्तिते वरदायक ॥
विश्वम्भराय देवाय नमस्ते विश्वमूर्तये ।
यस्मात्त्वमेव विश्वात्मा ब्रह्म स्थाणुर्दिवाकरः ॥
मूर्तामूर्तपरं बीजमतः [3]पाहि सनातनः ।
एवमामन्त्र्य तं दद्याद् गुरवे पादपं शुभम् ॥
चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत् ।
अल्पवित्तो यथाशक्त्या स्तोकं स्तोकं प्रकल्पयेत् ॥

इति पुत्रप्रदकल्पतरुदानम् ।

---

बृहस्पतिः—

रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत् ।
न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनु[4]त्तमम् ॥

प्रपञ्चसारे- पुत्रप्राप्तये पितृयागविधिः—

अथ सन्तानसंसिद्धिसमाकुलितचेतसाम् ।
तदुत्पत्तिकरं यागं प्रवक्ष्ये गृहमेधिनाम् ॥

---

ख पाठः—

(1) मावृत्य (2) विचित्रार्थप्रदाय च (3) शान्तिं प्रयच्छ मे (4) त्यसंशयम् ।

तत्र[1] श्राद्धक्रियाविमुखानां, विभवे सति किंचिदप्यददताम्, अतिथिभ्योऽदत्त्वा भुञ्जतां[2], हरिशङ्करभक्ति[3]पूजारहितानां स्वभार्यानिन्दकानां, लोकवेदविरोधिनां, दुष्प्रतिग्रहदुष्टानां [4]चात्रैवानपत्यता भवतीति तद्दोष प्रशमपूर्वक [5]पुत्रप्राप्तये पितृयागाख्यं कर्म। तत्तु कृष्णचतुर्दश्यां चन्द्रताराद्यनुकूलेषुण्याहे दन्तधावनपूर्वकं [6]ब्रह्मचर्येण दम्पत्योरुपवासः। अमावास्यायां प्रातः पौर्वाह्णिकक्रियाः समाप्य कर्मारम्भः। स्वस्तिवाचनम्। संकल्पः।

अद्यादिप्रथममावास्यम् अब्दत्रयं पुत्रोत्पत्तिप्रतिबन्धकदोषोपशान्तिपूर्वकपुत्रप्राप्तिकामः पितृयागाख्यं कर्म कुर्वीयेति। ब्रह्मवरणम्। प्रपञ्चसारोक्तविधिना पञ्चगव्यसाधनम्। वमित्यमृतबीजस्य तत्र न्यासः, अमृतबीजेनाष्टोत्तरशतवारं तस्याभिमन्त्रणम्। यज्ञियवृक्षमन्थेन सङ्कोच[7]मन्त्राख्यप्रणवेन मन्थनम्। पृथिव्यात्मने नम इति गोमूत्रस्य पात्रे प्रक्षेपः। तत्रैव पात्रे वार्यात्मने नमः इति गोमयस्य। तेजआत्मने नम इति क्षीरस्य। वाय्वात्मने नम इति दध्नः। आकाशात्मने नम इति घृतस्य [8]प्रक्षेपः। एवमेकत्र कृत्वा द्विधा विभज्य स्वयमर्द्धप्राशनं पत्न्याश्चार्द्ध प्राशनम्। पूर्वतः परशुचक्रगदात्रिशूलधरः सिन्दूरकाञ्चनवर्ण शङ्करनारायणो ध्येयः, महोपचारैः पूज्यश्च। [9]अङ्गैः प्रथमावृत्तिः, ईशानतत्पुरुषाघोरसद्योजातवामदेवैर्द्वितीया,[10] अष्टाक्षर[11]मूर्तिस्तृतीया, केशवादिषोडशमू[12]र्त्तिश्चतुर्थी, लोकेशैः पञ्चमी, तदस्त्रैः षष्ठी, तत्र स्थण्डिले कुण्डे वाग्निस्थापनम्, चरुकरणम्, पलाशसमिधा चरोर्द्विधाकरणम्, दक्षिणभागः पितॄणाम्, उत्तरभागो देवानामिति कल्पनम्, देवपीठ समीपे देवोपासकत्वेन स्वस्य पितृपितामहप्रपितामहमातृपितामहीप्रपितामहीमातामहप्रमातामहवृद्धप्रमातामहा उपविष्ठा इति ध्यानम्। [13]स्रुवे

---

**ख पाठः—**

(1) तत्तु (2) भुक्तवताम् (3) हरिशङ्करपूजाविरहितानाम् (4) चात्रानपत्यता (5) पुत्रपौत्राप्तये (6) ब्रह्मचर्येण इति नास्ति (7) मन्त्राख्य इति नास्ति (8) प्रक्षेपः इति नास्ति (9) अङ्गैश्च (10) द्वितीयावृत्तिः (11) मूर्त्तिभिः (12) मूर्त्तिभिः (13) स्रुवेण।

घृतेनोपस्तरणम् । ततः चरुपिण्डद्वयमार्द्रामलकमानमवदानद्वयरूपेण कर्त्तव्यम् । पुनरपि घृतपूरणम् । अमुकगोत्रायास्मत्पित्रे स्वाहेति होमः । एवं पितामहाय प्रपितामहाय । यथा दैवतं त्यागः । पुनः ॐ भूर्भुवः स्वः स्वाहेति होमः इदं प्रजापतये । पुनः पितृपितामहप्रपितामहेभ्यः[1] प्रत्येकमाज्याहुतयः व्याहृतिभिश्च । ततः पुनश्चरोः पूर्ववद्ववदानग्रहणम् । अमुकसगोत्रायै अस्मन्मात्रे अमुकदेव्यै स्वाहेति होमः । एवं पितामह्यै प्रपितामह्यै । तत्र प्रणवव्याहृतिभिः पूर्ववत् ततो धृतादेतावदेव होमः । मातृपितामहीप्रपितामहीभ्यः प्रत्येकं व्याहृतिभिश्च । ततः पुनः स्रुवेण पूर्ववदेव चरोरवदाय मातामहाय प्रमातामहाय बृद्धप्रमातामहाय च नामगोत्रस्वाहायोगेन होमः । व्याहृतिभिश्च पुनर्घृतेन तेभ्यो होमः । [2]पित्रर्द्धं दक्षिणभागाद्धुत्वा दैवभागाद्धोमः ।

केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरवासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धेभ्योऽकारादिस्वरसहितस्वनाम्ना स्वाहान्तेन होमः । अं केशवाय स्वाहा । आं नारायणाय स्वाहेत्यादि ततोऽष्टाक्षरवर्णैः केशवादिवामनान्ताष्टमूर्त्तिसहितैः प्रत्येकमाहुतयः । ॐ केशवाय स्वाहा । नं नारायणाय स्वाहेत्यदि । अष्टाक्षरेण समस्तेनाष्टाहुतयः ॐ नमो नारामणाय स्वाहेत्येवम् ।

ततः शिवपञ्चाक्षर पञ्चवर्णैः प्रत्येकम् । ईशानतत्पुरुषाघोरवामदेवसद्योजातनामसहितैः होमः । ॐ नम् ईशनाय स्वाहेति पञ्चाक्षरेण समस्ते न च । ॐ नमः शिवाय स्वाहेति पञ्चाहुतयः । पुनश्च केशदादि–षोडशमारभ्य सर्वदेवताभ्यश्चतुराहुतयः आज्येन । देवांशादामलकप्रमाणमेकमंशम् । पैत्र्यांशाच्चामलकमानमवदानं ग्राह्यम् । देवांशावदानस्य पञ्चाक्षराष्टोत्तरशतजपेनाभिमन्त्रणम् । [3]द्वयोरेकत्र स्थापनम् । [4]"विष्णुर्योनिं कल्पयतु त्वष्टा

---

ख पाठः —

(1) महानां पूर्वव (2) पित्र्यवद्दक्षिण- । (3) पित्र्यंशावदानस्याष्टाक्षराष्टोत्तरशतेनाभिमन्त्रणम् इत्यधिकम् (4) अग्निपूजनम् इत्यधिकम् ।

रूपाणि पिंशतु" इत्यादि मन्त्रेणैकादशवारजपेनाभिमन्त्रणम्। दैवावदानस्य पुरुषत्वचिन्तनम्। पैत्र्यस्य प्रकृतित्वध्यानम्। दैवावदानस्य पञ्चाक्षराभिमन्त्र्य तस्य यजमानेन भक्षणम्। अष्टाक्षराभिमन्त्रितस्य पैत्र्यावदानस्य पत्न्या भक्षणम्। द्वयोराचमनम्। अग्निपूजनम्। कर्मोपदेशकाय गुरवे दक्षिणादानम् अग्निब्रह्मणोर्विसर्जनम्। ब्राह्मणत्रयभोजनम्। पुनरनन्तरामावास्यायां सर्वमेव कर्त्तव्यं सङ्कल्पवर्जम्। ब्राह्मणभोजने एकोऽधिकः। एवं तृतीयपर्वणि। ब्राह्मणभोजने द्वयमधिकं भोज्यम्। एवमेकैकब्राह्मणाधिकत्वेन द्वादशमासे चतुर्दश भोजनीयाः। द्वितीयवर्षे पुनरेकैकह्रासः। तृतीयवर्षे पुनरेकैकवृद्धिरिति। अन्ते शङ्करनारायणमूर्त्तेर्महती पूजा। बहुब्राह्मणभोजनम्। दीनान्धकृपणादितोषणं च—

पितृदेवताप्रसादान्मेधायुः कीर्त्तिसंयुतः पुत्रः।
लक्ष्मीतेजोयुक्तो[1]धर्मरुचिर्भवति सन्ततेः कर्त्ता।

इति पुत्रप्रदपितृयागविधिः।

---

## अथ पुत्रप्रदव्रतानि लिख्यन्ते

तत्र सामान्यतो व्रतधर्माः॥

महाभारते (अनु. २२६-२०)—

गृहीत्वोदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः।
उपवासं तु गृह्णीयाद् यद्वासङ्कल्पयेद् बुधः॥

यद्वा अन्यन्नक्तादिकम्

---

ख पाठः—

(1) युक्तः स्याद्ध।

देवलः[A]—

अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ।

सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

भविष्यपुराणे[B]—

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।

देवपूजाग्निहवनं सन्तोषः स्तेयवर्जनम् ।

सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः ।

तथा[C]—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।

अग्निकार्यमधःशय्यां नक्तभोजी समा[1]चरेत् ।

अग्निकार्य—

व्याहृतिभिर्होम इति लक्ष्मीधरः।

तथा[D]—

नक्षत्रदर्शनान्नक्तं केचिदिच्छन्ति मानवाः

मुहूर्त्तोनं दिनं केचित् प्रवदन्ति मनोषिणः ।

नरसिंहपुराणे (६७-६)—

आत्मनो द्विगुणां छायां यदा सन्तिष्ठते रविः

सौरनक्तं विजानीयान्न नक्तं निशि भोजनम् ।

---

ख पाठः—

(1) षड़ाचरेत् । (2) देवलः— उपवासो विनश्येत्तु दिवास्वप्नाक्षमैथुनैः । उपवासेन नश्यन्ति दन्तधावनमञ्जनम् ॥ उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् ॥ इत्यधिकः ।

मुद्रितपाठः-

कृत्यकल्प व्रत— A- ४, B- ५, C- ३, D- ३ ।

मत्स्यपुराणे—

वर्षं कृतोपवासेन स्नानमभ्यङ्गपूर्वकम् ।

तत्रैकादशीव्रतं यदि काम्यं क्रियते यथोक्तधर्मेण तदा पुत्रदं भवति ।

कूर्मपुराणे[A]—

यदीच्छेद् विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
एकादश्यामुपवसेदुभयोः पक्षयोरपि ॥

तत्रोभयैकादशीव्रते एकः प्रयोगः ।

तथा—

एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः
पुत्रानायुः समृद्धिं च सायुज्यं च स गच्छति ।

एवं जन्माष्टमीव्रतम् ।

विष्णु[B]धर्मे अनन्तव्रतम् ।

पुलस्त्य उवाच—

कृतवीर्यो महीपालो हैहयानामभूत् पुरा ।
तस्य शालवती नाम बभूव वरवर्णिनी ॥
सैव पुत्रार्थं......मैत्रेयीं पर्यपृच्छत ।
गुणवत्पुत्रलाभाय कृतासन परिग्रहा
स तं समाराध्य विभुं समाप्नोति जनार्दनम् ।

---

मुद्रितपाठः—

A- नास्ति । B-विष्णुधर्मोत्तरे तु 'मार्कण्डेय उवाच—

पुत्रीयं ते प्रवक्ष्यामि व्रतं भूपालसत्तम ।
अनन्तव्रतमित्युक्तं सेवतां पुत्रजन्मदम् ।
मासि मासि तु नक्षत्रं मासनाम्ना तु चिह्नितम् ।

इत्यादि प्रकारभेदेनदर्शितम् । १-१७३अध्यायः ।

तया च पृष्टा सा सम्यङ् मैत्रेयी ब्रह्मवादिनी
कथयामास परमं नाम्नानन्तव्रतं व्रतम् ।
सर्वकामफलावाप्तिकारकं पापनाशनम्
तस्याः सा पुत्रलाभाय शतपुत्रा तपस्विनी ।

मैत्रेयी उवाच-

यो यदिच्छेन्नरः कामं नारी वा वरवर्णिनी
मार्गशीर्षे मृगशिरो उडु यस्मिन् दिने भवेत् ॥
तस्मिन् संप्राश्य गोमूत्रं स्नातो नियतमानसः
पुष्पैर्धूपैस्तथा गन्धैरुपहारैश्च भक्तितः । ३
वामपादमनन्तस्य पूजयेद् वरवर्णिनि !
अनन्तः सर्वकामानामनन्तभगवान् फलम् । ४
[1]ददावनन्तं च पुनस्तदेवास्त्वन्यजन्मनि
अनन्तपुण्योपचयं करोत्येतन्महाव्रतम् । ५
तथाभिलषितावाप्तिं कुर्वन् पापक्षयं तथा
इत्युच्चार्याभिपूज्यैनं यथावद् विधिना नरः । ३
समाहितमना भूत्वा प्रणिपातपुरःसरम्
विप्राय दक्षिणां दद्यादनन्तः प्रीयतामिति । ७
समुच्चार्य्य ततोऽनन्तं भुञ्जीयात्तैलवर्जितः
ततश्च पौषे पुष्यर्क्षे तथैव भगवत्कटिम् । ८
वाममभ्यर्चयेत् कृत्वा गोमूत्रप्राशनं बुधः ।
[2]भुञ्जीयाच्च तथा विप्रं वाचयित्वा यथाविधि । ९

---

ख पाठः—
1-ददात्यनन्तं च 2-'अनन्तः-सर्वकामानामिति चोच्चारयेद्बुधः' इति अधिकः

माघे मघासु तद्वच्च वासुदेवस्य पूजयेत्
वामबाहुमनन्तस्य तथैव वरवर्णिनि ! १०
स्कन्धं च फाल्गुनीयोगे फाल्गुने मासि भामिनि !
चतुर्ष्वेतेषु गोमूत्रप्राशनं [1]नृपनन्दिनि । ११
ब्राह्मणाय तथा दद्यात्तिलान् कनकमेव च
देवस्य दक्षिणं स्कन्धं चैत्रे चित्रासु पूजयेत् । १२
तथैव प्राशनं चात्र पञ्चगव्यमुदाहृतम्
विप्रवाचनके दद्याद् यवान्मासचतुष्टयम् । १३
वैशाखे च विशाखासु बाहुं संपूज्य दक्षिणम्
तथैवोक्त्वा यवान् दद्यात्तद्वन्नक्तं भुजिक्रिया ।१४
कटिपूजा च कर्त्तव्या ज्येष्ठे ज्येष्ठासु सुव्रते !
आषाढासु तथाषाढे कुर्यात् पादार्च्चनं शुभे । १५
पादद्वयं च श्रवणे श्रावणे सुभ्रु पूजयेत्
घृतं विप्राय दातव्यं प्राशनीयं तथा दधि । १६
कार्त्तिकान्तेषु मासेषु प्राशनं दानमेव च
एतदेव समाख्यातं देवं तद्वच्च पूजयेत् । १७
गुह्यं प्रौष्ठपदायोगे मासि भाद्रपदेऽर्चयेत्
तद्वदाश्वयुजे पूज्यं हृदयं चाश्विनीषु [2]वै । १८
कुर्यात् समाहितमनाः [3]स्नानप्राशनशौचवान्
अनन्तशिरसः पूजा कार्त्तिके कृत्तिकासु च । १९

---

ख पाठः—
1 वरवर्णिनि 2 'च'। 3 स्नानं प्राशनमेव च।

यस्मिन् यस्मिन् दिने पूजा तत्र तत्र तदा दिने
नामानन्तस्य जप्तव्यं [1]युतप्रस्खलितादिषु । २०
घृतेनानन्तमुद्दिश्य पूर्वं मासचतुष्टयम्
कुर्व्वीत होमं चैत्रादि शालिना कुलनन्दिनि ! २१
क्षीरेण श्रवणादौ च होमो मासचतुष्टये
शस्तं च सर्वमासेषु हविष्यान्नस्य भोजनम् । २२
एवं द्वादशभिर्मासैः पारणत्रितयं शुभे
पारिते समवाप्नोति सर्वानेव मनोरथान् । २३
पुत्रार्थिभिर्वित्तकामैर्भृत्यदारानभीप्सुभिः
प्रार्थयद्भिश्च कर्तव्यमारोग्यबलसम्पदः । २४

अत्र कृष्णादिमासप्राधान्येन मार्गशीर्षादिवर्षप्रवृत्तेः मार्गशीर्षादिशब्दस्य कृष्णादिचान्द्रे मुख्यत्वाच्च कृष्णादिमार्गशीर्षमासे यत्र दिने मृगशिरोनक्षत्रयोगो भवति तत्र व्रतम् । तत्र पूर्वदिने हविष्यभोजनम् । तद्दिने स्वस्ति वाच्य सङ्कल्पः, देशकालवाक्यानन्तरं [2]भगवन्-सूर्य भगवत्यः सोमादयो देवताः स्वकर्माभिरतदेवद्विजपरायणशास्त्रज्ञतत्त्वज्ञदीनानाथजनाश्रयनिर्जिताभिसर्वहृदयनन्दनन्दनदैवानुकूलतायुक्तसम्यग्गुणायुक्तमित्रस्वजनानन्दकरपुत्रप्राप्तिकामो विष्णुधर्मोक्तमनन्तव्रतमहं कुर्वीयेति, । स्नानम्, गोमूत्रप्राशनम्, आचमनम्, ब्रह्मवरणम्, स्वगृह्योक्तविधिनाग्निस्थापनम्, अन्ते शय्याशायिन्यां भगवन्मूर्त्तावनन्तनामप्रसिद्धेः शङ्खचक्रगदापद्महस्तशेषशायिभगवन्मूर्त्तिस्थापनम् । अनन्ताय नमः इति तस्य पाददेशे गन्धपुष्पादिभिः पूजनम् । अनन्तः सर्वकामानामिति पूजामन्त्रः । अनन्ताय स्वाहेति घृतेनाष्टोत्तरशतहोमः । अनन्तः प्रीयतामिति ब्राह्मणाय तिलदानम् । एतदेव ब्रह्मदक्षिणा ।

---

ख पाठः —

1- पुलि प्रस्खलि- । 2-भगवन् सूर्य इति नास्ति ।

क्षुत्प्रस्खलितादिषु तद्दिनेऽनन्तनामजपः । रात्रौ त्रिमुहूर्त्तमध्ये चैकवर्जं हविष्यभोजनम् । एवं तत्तन्मासेषु तत्तन्नक्षत्रे । उत्तराफाल्गुनी, उत्तराषाढा, उत्तरभाद्रपदं च ग्राह्यम् संप्रदायात् । तत्तन्मासे तत्तदवयवपूजनम् ।

मार्गशीर्षादिमासचतुष्टये गोमूत्रप्राशनम्, घृतं होमद्रव्यम्, तिला देया: ॥ चैत्रादिमासचतुष्टये पञ्चगव्यप्राशनम्, शालिधान्यं होमद्रव्यम्, यवा देयाः ॥ श्रावणादिमासचतुष्टये दधिप्राशनम्, दुग्धं होमद्रव्यम्, घृतं देयं विप्राय ॥ सर्वमन्यत्समानम् । अन्ते ब्राह्मणभोजनदानमच्छिद्रावधारणम् ।

[A]अथ [1]कृष्णाष्टमीव्रतं वराह[B]पुराणे (६३-२-७)—

मासि भाद्रपदे यावत् कृष्णपक्षे सुरेश्वर[C]
सप्तम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ।
[D]षष्ठ्यां चैव तु सङ्कल्प्य सप्तम्यामर्च्चयेद्धरिम्
देवैस्तूपगतं देवं मातृभिः परिवारितम् ।
ततः प्रभाते विमले अष्टम्यां प्रयतो हरिम्
प्राग्विधानेन गोविन्दमर्च्चयित्वा विधानतः ।
तस्याग्रतः कृष्णतिलैः सघृतैर्होममाचरेत्
ब्राह्मणान् भोजयेद् भक्त्या यथाशक्त्या सदक्षिणान् ।
ततः स्वयं तु भुञ्जीत प्रथमं बिल्वमेककम्
पश्चाद[2]भीष्टं भुञ्जीत स्नेहाद्र्रं षड्रसान्वितम् ।

---

ख पाठः —

1- पुत्रप्रदकृष्णाष्टमीव्रतम् । 2- यथेच्छं ।

मुद्रित पाठः—

A- कृत्यकल्पव्रत—२२४-२२५ ।

B- वराहपुराणपाठापेक्षया कृत्यकल्पतरुपाठेन सहाधिकं संवदति ।

C- नरेश्वर । D- सप्तम्यां चैव संकल्प्य अष्टम्या ।

प्रतिमासमनेनैव विधिनोपोष्य मानवः
कृष्णाष्टमीमपुत्रोपि लभेत् पुत्रमसंशयः ।

अत्रापि कृष्णादिभाद्रपदमासपरिग्रहः, प्रतिमासमितिवचनात् । पुनः श्रावणकृष्णाष्टमीपर्यन्तं द्वादशस्वष्टमीषु व्रतम् । अन्ते ब्राह्मणभोजनम् । देवैः- ब्रह्मादिभिः परिवृतम् । मातृभिः- ब्राह्मणीप्रभृतिभिश्च परिवृतम् । तेषामपि उत्तरदिने प्राग्विधानेन । प्राग्विधानेनेति तस्यातिदेशः । कृष्णाय स्वाहेति होममन्त्र इति केचित् व्याहृतिभि[1]र्होमः । षष्ठ्यां सङ्कल्प,, सप्तम्यामुपोष्य पूजयित्वाष्टम्यां पूजा- होमात्मकं कृष्णाष्टमीव्रतमहं कुर्वीयेति ।

विष्णुधर्मोत्तरे-

प्रौष्ठपद्यामतीतायां कृष्णपक्षाष्टमी च या
सोपवासो नरस्तस्यां नारी वा द्विजपुङ्गव !
स्वाहा शिरसि धर्मज्ञ तोये [2]वाप्यथवा घृते
पूजनं वासुदेवस्य यथा कुर्यात्तथा शृणु ।
घृतप्रस्थेन गोविन्दं स्नापयित्वा जगद्गुरुम्
क्षौद्रेण च तथा पश्चाद्दध्ना च स्नापयेत्ततः ।
क्षीरेण स्नपनं कृत्वा ततः पश्चात् सुरेश्वरम्
सर्वौषधैः सर्वगन्धैः सर्वबीजैः फलैस्तथा ।
स्नापयित्वानुलिम्पेत्तु चन्दनागुरुकुङ्कुमैः
कर्पूरेण तथा राम ! तथा जातीफलैः शुभैः ।
ततः कालोद्भवैः पुष्पैः पूजयित्वा जनार्दनम्

---

ख पाठः—

1- व्याहृतिभिर्वा होमः । 2- वाप्यथवोद्धृते ।

धूपं चागुरुणा दत्त्वा ततो नैवेद्यमुत्तमम् ।

पुत्रान् गुणवतो राम ! प्राप्नुयान्नात्र संशयः

प्रस्थः-षोडशपलम्, क्षौद्रं-मधु, तदपि षोडशपलम्, अन्यानि स्नानद्रव्याणि शतपलमितानि ।

मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम्

शटीचम्पकमुस्तं च सर्वौषधिगणः स्मृतः ।

सर्वगन्धः गरुड़पुराणे—

कर्पूरं चन्दनं दर्पं कुङ्कुमं च समांसकम्

सर्वगन्धमिति प्रोक्तं समस्तसुरदुर्लभम्

सर्वबीजान्यष्टादशधान्यानि [A]स्कन्दपुराणे—

यवगोधूमधान्यानि यवाः कङ्गुकुलत्थकाः

माषा मुद्गा मसूराश्च कोद्रवाः श्यामसर्षपाः ।

गवेधुकाः सनीवारा आन्तिकोत्थकुलत्थकाः

चणकाश्चानकाश्चेति धान्यान्यष्टादशैव तु ॥

अथ फलसप्तमी

[1]भविष्यपुराणे सुमन्तुरुवाच—

अथ भाद्रपदे मासि सितपक्षे महीपते !

कृत्वोपवासं सप्तम्यां विधिवत् पूजयेद्रविम् ।

---

ख पाठः—

1- गारुडपुराणे ।

मुद्रित पाठः—

A- नित्याचारप्रदीप पृ १३६ (एसाइटिक् सोसाइटि)

माहेश्वरेण विधिना पूजयेत्तत्र भास्करम्

अष्टम्यां तु पुनः स्नातः पूजयित्वा दिवाकरम् ।

दद्यात् फलानि विप्रेभ्यो मार्तण्डः प्रीयतामिति

खर्जूरं नारिकेलं च मातुलङ्गफलानि च ।

ब्राह्मणान् भोजयित्वा तु फलाहारस्ततो भवेत्

पूर्वमेकं तु संप्राश्य स सूक्ष्मं फलमादरात् ।

मन्त्रेण भारतश्रेष्ठ भवत्वच्छिद्रमेव च

सर्वे भवन्तु सफला मम कामाः समन्ततः ।

इत्युक्त्वा भोजयेद्राजन् पूर्वोक्तानि फलानि तु

आकण्ठं तत् कुरुश्रेष्ठ नचान्यत् किञ्चिदेव हि ।

फलाहारो भवेदेवं सप्तम्यां कुरुनन्दन

इति संवत्सरं यावत् कर्त्तव्या फलसप्तमी ।

कृता च [1]या महाबाहो ! पुत्रपौत्रान् प्रयच्छति ।

पूर्वमुपवासस्य कथितत्वात् फलाहारः सप्तम्यां भवेदिति सप्तमीपदं व्रतपरम् । सप्तम्यां [2]व्रतरूपायामेवमुक्तप्रकरणाष्टमीदिने फलाहारो भवेदित्यर्थः । प्रथमोपस्थितोपवासपदेऽसंजातविरोधित्वेन लक्षणाकल्पनाया असम्भवात् । अत्र व्याहृतिहोमः कार्योऽष्टम्यां व्रतधर्मत्वात् ।

इति फलसप्तमी ॥

---

तथा [3](पुष्य)मासे मासव्रतम् । एकभक्तव्रतेन पुत्रप्राप्तिः ।

---

ख पाठः —

1- सा 2- व्रतरूपायामुक्तप्रकारेणाष्टमीदिने । 3· तथा पुष्यमासे मासमात्रमेकभक्तेन पुत्रप्राप्तिः ।

स्कन्दपुराणे—

एकभक्तेन यो देवि ! [1]मासं मार्गं क्षपेन्नरः
स तेन कर्मणायुक्तः सुभगो भवति ध्रुवम् ।
पौषमासे तु पुत्राँश्च बहूनाप्नोति धार्मिकान् ॥

इति पुत्रप्रदमेकभक्तव्रतम् ।

———

भविष्यपुराणे,

आदित्य उवाच—

माघमासे तु सप्तम्यां शुक्लायां समुपोषितः
यः पूजयेत्तु मां भक्त्या तस्याहं पुत्रतां व्रजे ।
एवं चोभयसप्तम्यां कृत्वा स्नानादिकाः क्रियाः
पूजयित्वा तु मां भक्त्या सुमेकमेकमादरात् ।
प्रयच्छामि सुतं तस्य [A]ममैवांशसमुद्भवम् ।

एकं—सुतम्, सुमेकं—वर्षम् । व्रतसामान्यात् व्याहृतिहोमः ।

[2]इति पुत्रसप्तमी ।

———

---

ख पाठः—

1- मासं मार्गशिरं क्षिपेत् । 2- इति पुत्रप्रदसप्तमी ।

ख पाठः—

A· ह्यात्मनोह्यङ्ग सम्भवम् । कृत्यकल्प...व्रत—१६६

तथा—

माघमासे तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः
पाषण्डान् पतितान् नग्नानजल्पन् विजितेन्द्रियः ।
उपोष्य विधिवत् षष्ठ्यां श्वेतमाल्यविलेपनैः
पूजयित्वा तु मां भक्त्या निशि भूमौ स्वपेद् बुधः ।
पुनरुत्थाय सप्तम्यां कृत्वा स्नानादिकाः क्रियाः
पूजयित्वा तु मां ब्रह्मन् वीरहोमं समाचरेत् ।
प्रीणयित्वा हरिं भक्त्या हविषा पद्मलोचनम्
दध्योदनेन पयसा पायसेन द्विजांस्तथा ।
[A]तस्यैव कृष्णपक्षस्य सप्तम्यां षष्ठ्युपोषितः
रक्तोत्पलैः सुगन्धाढ्यै रक्तपुष्पैश्च धूपयेत् ।
य एवं पूजयेद् भक्त्या नरो मां विधिवत् सदा
उभयोरपि देवेन्द्र स पुत्रं लभते [1]वरम् ।

[2]वीरहोमम्—अग्निहोत्रम् । हविषा—घृतेन । हरिं-सूर्यम् । प्रीणयित्वेति—होमे सूर्यस्य देवतात्वमुक्तम् । पूर्वव्रतं वर्षसमाप्तं सप्तम्युपवासयुक्तम् ।

इति पुत्रप्रदसप्तमी ।

---

ख पाठः —

1- नरः । 2- वीरहोमः- अग्निहोमः ।

मुद्रितपाठः-

A- तस्यैव कृष्णपक्षस्य षष्ठ्यां सम्यगुपोषितः, कृत्यकल्पद्रुम—१६७ ।

भविष्यपुराणे[A]—

फाल्गुनामलपक्षस्य सप्तम्यां क्ष्माधराधर
उपोषितो नरो नारी समभ्यर्च्च्य तमोपहम् ।
सूर्यनाम जपन् भक्त्या भावयुक्तो जितेन्द्रियः
उत्तिष्ठन् प्रस्वपंश्चैव सूर्यमेवानुकीर्त्तयेत् ।
ततोऽन्यदिवसे प्राप्ते अष्टम्यां नियतो रविम्
स्नात्वा सम्यक् समभ्यर्च्च्य दद्याद् विप्राय दक्षिणाम् ।
रविमुद्दिश्य चैवाग्नौ घृतहोमकृतक्रियः
प्रणिपत्य जगन्नाथमितिवाणीमुदीरयेत् ।
यमाराध्य महादेवी सावित्री काममाप वै
स मे दद्यात्तु देवेशः सर्वकामान् विभावसुः ।
यमभ्यर्च्च्य दितिः प्राप्ता सर्वान् कामान् यथेप्सितान्
स दत्त्वा सकलान् कामान् प्रसन्नो मे दिवस्पतिः ।
भ्रष्टराज्यः स देवेन्द्रो यमभ्यर्च्च्य दिवाकरम्
कामानवाप्तवान् राज्यं स मे कामान् प्रयच्छतु ।
एवमभ्यर्च्च्य पूजां च निर्वर्त्येह विशेषतः
भुञ्जीत प्रयतः सम्यक् [1]हविष्यं पन्नगध्वज ।
फाल्गुनं चैत्रवैशाखौ [B]ज्येष्ठमुक्तं तथापरम्

---

ख पाठः—

1. हविष्यान्नं च सुव्रत ।

मुद्रितपाठः—

A. कृत्यकल्प-व्रत १६९ । B. ज्येष्ठमन्त्यं तथापरम् इति हेमाद्रिपाठः ।

चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत् ।
करवीरैश्च चतुरो मासान् संपूजयेद्रविम् ॥
नैवेद्यं[1] खण्डवेष्टं च दद्याद् विप्रेभ्य एव हि ।
ततश्च श्रूयतामन्या आषाढादिषु या क्रिया ॥
जातिपुष्पाणि शस्तानि धूपो गुग्गुलुरेव च ।
कुतपोदकमश्नीयात् नैवेद्यं पायसं मतम् ॥
स्वयं तदेव चाश्नीयात् शेषं पूर्ववदाचरेत् ।

कुतपोदकम्— [A]कूपोदकम् ।

[2]कार्त्तिक्यादिषु मासेषु गोमूत्रं कायशोधनम् ।
महाङ्गधूपमुद्दिष्टं पूजा रक्तोत्पलैस्तथा ॥
कासारं चैव नैवेद्यं प्रदद्याद् भास्कराय वै ।

कासारं— महिषीक्षीरं ।

प्रतिमासं च विप्राय दातव्या दक्षिणा तथा ।
प्रीणयन्निच्छया भानोः पारणे पारणे गते ॥
यथाशक्ति यथायोगं वित्तशाठ्यं विवर्जयेत् ।
स्वभावेनैव सप्ताश्वः पूजितः प्रीयते यतः ॥
पारणान्ते यथाशक्ति पूजितः प्रीणितो रविः ।
[3]स्थापितश्चेप्सितान् कामान् दद्यादव्याहतान् रविः

---

ख पाठः—

(1) खण्डलेपांश्च (2) कार्त्तिकादिषु (3) ख-पुस्तके नास्ति

मुद्रितपाठः—

A- कुतपोदकं— कुशोदकम् इति कल्पतरुः । व्रत १७१ ।

अपुत्रः पुत्रमाप्नोति [1]निर्द्धनो धनमाप्नुयात् ।
सर्वान् कामानवाप्नोति गोगतश्चापि मोदते[2] ।
पुनरेत्य महाकृष्णघनाघनसमो नृपः ।
क्ष्मातले स्यान्नसन्देहः प्रसादाद् गोपतेर्नरः ।

महाङ्गधूपो भविष्यपुराण एवोक्तः । तद्यथा—

कर्पूरं चन्दनं पुण्यमगुरुं तगरं तथा ।
गृञ्जनं [3] शर्करा कृष्णमहाङ्गं सिह्लकं तथा ।

गोगतः— स्वर्गतः । गोपतिः— स्वःपतिः । इति कामदा सप्तमी ।

अथ दूर्वाष्टमीव्रतम्

भविष्यपुराणे [A]कृष्ण उवाच—

ब्रह्मन् भाद्रपदे मासे शुक्लाष्टम्यामुपोषितः ।
पूजयेत् शङ्करं भक्त्या यो नरः श्रद्धयान्वितः ।
स याति परमं स्थानं यत्र देवस्त्रिलोचनः ।
गणेशं पूजयेद् यस्तु दूर्वया सहितं मुने ।
फलानां सकलैर्दिव्यैर्गन्धपुष्पविलेपनैः ।
दूर्वां पूज्य तथेशानं मुच्यते सर्वपातकैः ।

---

ख पाठः—

(1) निर्द्धनोधनमाप्नुयात् । अपुत्रः पुत्रमाप्नोति गोगतश्चापिमोदते ।

(2) रोगाभिभूतश्चारोग्यं कन्या विन्दति सत् पतिम्

सर्वान् कामानवाप्नोति शोकतश्चापि मुच्यते । इति अधिकः

(3) शर्कराचैव महाङ्गं सिह्लकं तथा

मुद्रितपाठः—

A- विष्णुरुवाच कृत्यकल्पव्रत २३९

शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः ।
स्थाप्य लिङ्गं ततो गन्धैः पुष्पधूपैः समर्च्चयेत् ।
खर्जूरैर्नारिकेलैश्च मातुलङ्गफलैस्तथा ।
पूजयेत् शङ्करं भक्त्या दूर्वया विधिवद् द्विजः ।
दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने ।
दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः ।
स वै सुकृतजन्मासौ सर्वदेवैश्च वन्दितः ।
विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् ।
धनार्थी धनमाप्नोति भार्य्यार्थी लभते च ताम् ।
मनसा यद्यदिच्छेच्च तत्तदाप्नोति मानवः ।
य एवं पूजयेद्दूर्वां भूतेशं मानवः फलैः ।
[1]स सप्तजन्मपापौघान्मुच्यते नात्र संशयः ।
कृत्वोपवासं सप्तम्यामष्टम्यां पूजयेच्छिवम् ।
दूर्वासमेतं विप्रेन्द्र दध्यक्षतफलैः शुभैः ।
ततः संपूजयेद् विप्रान् फलैर्नानाविधैर्द्विज ।
अनग्निपक्वमश्नीया[A]दन्यदेव फलं तथा ।
अक्षारलवणं ब्रह्मन्नश्नीयान्मधु[B]रान्वितम् ।
दद्यात्फलानि विप्रेषु फलाहारः स्वयं भवेत् ।

---

ख पाठः —

(1) समस्त ।

मुद्रित पाठः—

A-दन्नं दधिफलं तथा— कृत्यकल्प व्रत २४० B- मधुनान्वितम् । कृत्यकल्प

प्रणम्य शिरसा दूर्वां [A]शिवं शिवमुपाश्नुते ।
य एवं कुरुते भक्त्या महादेवस्य पूजनम् ।
गणत्वं यात्यसौ ब्रह्मन् मुच्यते ब्रह्महत्यया ।
एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता ।
चतुर्णामपि वर्णानां स्त्रीजनस्य विशेषतः ।

अत्र षष्ठ्यामेकभक्तम्, सप्तम्यामुपवासः, अष्टम्यां पूजा, अनुक्तोऽपि [1]व्याहृतिभिर्होमः, सप्तम्यां सङ्कल्पः । अष्टम्यामुद्यापनम्, ब्राह्मणभोजनम् । सकृदेवं कृतं फलदम् । वर्षान्तरेऽपि कामनायां पुनः सङ्कल्प्य कर्त्तव्यम् ।

इति दूर्वाष्टमी

---

अथ वृतीया कृष्णाष्टमी

[2]भविष्यपुराणे विष्णुरुवाच—

कन्यां गते सवितरि [3]कृष्णपक्षाष्टमी तु या ।
सा च पापहरा पुण्या शिवस्यानन्दवर्धिनी ।
स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।
सर्वं प्रीतिकरं स्याद्वै कृतं[4] तस्य त्रिलोचने ।
विशेषतः कृतं श्राद्धं होमश्च विधिवन्मुने ।
[5]तस्मात्सर्वप्रयत्नेन तस्यां कुर्याद्विचक्षणः ।

---

ख पाठः —

(1) व्याहृतिभिः तिलहोमः कार्य्यः (2) भविष्यपुराणे इति नास्ति
(3) कृष्णपक्षेऽष्टमी च या (4) देवे (5) तस्मात् श्राद्धं प्रयत्नेन ।

मुद्रितपाठः —

A- शिवं च शिवमाप्नुते— कृत्यकल्पव्रत २४१

एकभक्तं च पञ्चम्यां [A]षष्ठ्यां नक्तं विदुर्बुधाः ।
उपवासस्तु सप्तम्यामष्टम्यां पूजयेच्छिवम् ।
पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत् ।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितम् ।
यस्तस्यां कुरुते श्राद्धं पूजयित्वा त्रिलोचनम् ।
तस्य वर्षाणि सन्तृप्ताः पितरो दश पञ्च च ।
एवं व्रतमिदं कुर्य्यात्सुमेकं चैवमादरात् ।

[B]सुमेकं— वर्षम ।

नामभिः पूजयेद्देवं त्रिपुरान्तकरं परम् ।
मासि भाद्रपदे शम्भुं शङ्करं तु तथापरे ।
शिवं तु कार्त्तिके मासि शर्वं मार्गशिरे तथा ।
पौषे मासि तथेशानमुग्रं माघे प्रकीर्त्तितम् ।
फाल्गुने रुद्रनामानं चैत्रे भीमं प्रकीर्त्तितम् ।
वैशाखे नीलकण्ठं च ज्येष्ठे नाम भवं परम् ।
महादेवं तथाषाढे श्रावणे त्र्यम्बकं द्विज ।
एतानि मासनामानि प्रीणनानि निबोध मे ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
गोरोचनं पञ्चगव्यं [1]मन्दा[C]रोन्मत्तकं तथा ?

---

ख पाठः —

(1) मन्दारो वासकं तथा ।

मुद्रितपाठः —

A- नक्तं सूक्ष्मं विदुर्बुधाः कृत्यकल्पव्रत २५०

B- कल्पतरौ सर्वत्र सुमेकस्थाने स्वमेकम् २५१

C- मन्दारोन्मृत्तिकां तथा ॥ कृत्यकल्प २५१

तिलान् यवान् तथा वीर [1]प्राशयेत् कायशुद्धये ।
वच्मि पुष्पाणि ते वीर देवदेवस्य प्रीतये ।
करवीर तथा जाति[A]मुत्पलानि कदम्बकम् ।
उन्मत्तकं तथा बिल्वं शमीपत्रं बकं तथा ।
मालतीकुसुमं [B]वीरं तथा मञ्जिरकस्य च ।
कुशपुष्पं तथा पुण्यमगस्तिकुसुमं तथा ।
सिह्लकं वर्जयन् धूपं माहिषाख्यं च गुग्गुलम् ।
य एवं पूजयेदेवं शङ्करं च त्रिलोचनम् ॥
सुमेकमेकं विप्रेन्द्र स याति परमं पदम् ।
ब्राह्मणं पूजयेद् यस्तु वाचकं च विशेषतः ॥
महादेवस्य वै भक्तो[2] भक्त्या पाशुपतान् द्विजान्
एवं यः कुरुते श्राद्धमष्टम्यामष्टकासु च ॥
पूजयित्वा महेशानं शिवविप्रैर्महर्षिभिः ।
तृप्यन्ति पितरस्तस्य दशवर्षाणि पञ्च च ।
दिव्यानि मुनिशार्दूल सप्त सप्त च सप्त च ।
य एवं प्रीणयेद् भक्त्या कृष्णाष्टम्यां तपःपरः ।

---

ख पाठः—

(1) प्रीणयेत् (2) भक्तान् भक्त्या ।

मुद्रितपाठः—

A- प्रालेयानि कृत्यकल्प व्रत २५१ ।

B- विप्र तथा मुकुरकस्य च । (मुकुटकस्य, मुदगरकस्य)

यं यं कामयते कामं तं तमाप्नोति मानवः ।
पुत्रकामो लभेत् पुत्रं धनकामो धनानि च ।
विद्यार्थी लभते विद्यां कन्यार्थी कन्यकां पराम् ।

शुक्लादिमासपरिग्रहेण भाद्रपदापरपक्षे प्रौष्ठपदूर्ध्वं कन्यां गते सवितरि चेत् कृष्णाष्टमी तस्यां व्रतारम्भः । यस्मिन् वर्षेऽष्टमदिनादूर्ध्वं कन्यासंक्रान्तिः तदास्यां नारम्भः । गोमूत्रादिप्राशनं च स्नानोत्तरं, पूजा ततः पूर्वं कायविशोधनमितिलिङ्गात् । शिवविप्रैरति पाशुपतैः सह शिवं पूजयित्वे त्यनुवादः । दिव्यानीति वर्षविशेषणम् । सप्त सप्तेत्यादि वर्षसंख्या ।

तथा वराहद्वादशीव्रतं पुत्रकामेन कर्त्तव्यम् ।

वराहपुराणे दुर्वासा उवाच (४१श अध्यायः)—

एवं माघे सिते पक्षे [1]द्वादश्यां धरणीभृतः
वराहस्य शृणुष्वान्यां पुण्यां परमधार्मिक । (१)
प्रागुक्तेन विधानेन सङ्कल्पं स्नानमेव च
कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः । (२)
पुष्पैर्नैवेद्यकैर्गन्धैरर्चयित्वा नरोऽच्युतम्
पश्चात्तस्याग्रतः कुम्भं जलपूर्णं च विन्यसेत् । (३)
वराहायेति वै पादौ माधवायेति वै कटिम्
क्षेत्रज्ञायेति जठरं विश्वरूपेत्युरो हरेः । (४)
सर्वज्ञायेति वै कण्ठं प्रजानां पतये शिरः
प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् । (५)

---

ख पाठः—
1- द्वादशीं ।

अमृतोद्भवायेति शङ्खमेष एवार्च्चने विधिः
एवमभ्यर्च्य मेधावी तस्मिन् कुम्भे तु विन्यसेत् । (६)

सौवर्णं रौप्यं ताम्रं वा पात्रं विभवशक्तितः
[A]सर्वबीजैस्तु सम्पूर्णं स्थापयित्वा विचक्षणः । (७)

तत्र शक्त्या तु वाराहं सौवर्णं स्थापयेद् [B]बुधः
दंष्ट्राग्रेणोद्धरन् पृथ्वीं सपर्वतव[C]नद्विपाम् । (८)

माधवं मधुहन्तारं वाराहं रूपमास्थितम्
सर्वबीजयुते पात्रे रत्नगर्भ-घटोपरि । (९)

स्थापयेत् परमं देवं जातरूपमयं हरिम् ।
सितवस्त्रयुगाच्छन्नं ताम्राभावे तु वैणवे । (१०)

स्थाप्यार्च्चयेद् गन्धपुष्पैर्नैवेद्यैर्विविधैः फलैः
[D]पुष्पमण्डपिकां कृत्वा जागरं तत्र कारयेत् । (११)

प्रादुर्भावान् हरेस्तत्र [1]वाचयेज [E]ज्ञापयेद् बुधः
एवं संस्तूयमानस्य प्रभातेऽभ्युदिते रवौ । (१२)

शुचिः स्नातो हरिं पूज्य ब्राह्मणाय निवेदयेत्
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते । (१३)

---

**ख पाठः—**

(1) वाचयेत् कारयेदबुधः ।

**मुद्रित पाठः—**

A- वाराहे-सर्ववित्तैः B- ततः C- बनद्रुमाम् D-पुष्पमण्डलिकां E- भावयेद्

विष्णुभक्ताय [A]विप्रर्षे विशेषेण तु दापयेत्
एवंविधानतो दत्त्वा हरिं वाराहरूपिणम् । (१४)
ब्राह्मणाय भवेद्यद्धि फलं तस्य निशामय
इह जन्मनि सौभाग्यं श्रीः [1]कीर्त्तिस्तुष्टिरेव च ।
ज्ञानवान् वित्तवान् भोगी अपुत्रः पुत्रवान् भवेत् ॥(१५)

प्रागुक्तेन विधानेनेति—मत्स्यद्वादश्युक्तेन । स चैवम्—

[2]माघशुक्लदशम्यां नियतात्मा व्रती [3]नद्यादौ—नद्यादिस्नानपूर्वकं पञ्चयज्ञादिकं विधाय हविष्यभोजनम् । आचमनम् । उच्छिष्टस्थानात् [4]पञ्चपदगमनम् । पुनः पादप्रक्षालनम् । [5]आचमनम् । क्षीरवृक्षोद्भवाष्टाङ्गुलकाष्ठेन दन्तधावनम् । पुनराचमनम् । इन्द्रियस्पर्शनमावश्यकम् । ततः—

शङ्खचक्रगदापाणिं पीतवासःकिरीटिनम्
प्रसन्नवदनं देवं सर्वलक्षणलक्षितम् ।

[6]इति विष्णोश्चिरं ध्यानम् । शुचिनिर्मलजलेनाञ्जलिपूरणं गुरूपदेशात् ।

जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च
ध्यानेन पुरुषाख्यश्च द्रष्टव्यः सूर्यमण्डले ।

---

**ख पाठः—**

1- कान्तिः पुष्टिरेव च ।
2- माघशुक्लद्वादश्याम् ।
3- नद्यादौ- इति नास्ति ।
4- पञ्चदशपदगमनम् ।
5- आचमनम्- इति नास्ति ।
6- इति विष्णोः शिरःस्नानम् ।

**मुद्रितपाठः—**

A- शान्ताय ।

"ध्येयः सदे"त्युक्तप्रकारेण च। सूर्य आत्मा जगतस्तस्थुषश्च। योऽसावादित्ये पुरुषः सोऽ[1]हम्। इत्यादिप्रकारेण सूर्यमण्डलेऽनिर्वचनीयं निराकारं [2]भर्गस्तदिति यन्निरूपितं तदेव भक्तजनानुग्रहाय साकारमिति ध्यानम्।

**एकादश्यां निराहारो भूत्वा चैवापरेऽहनि।**
**भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत॥**

(वराहपु. ३९।३२)

इति ब्रुवतः अञ्जल्युदकेन सूर्येऽनस्तमिते सूर्यार्घ्यदानम्। ततः सन्ध्या। तदनन्तरं गुरुपदिष्टमार्गादष्टाक्षरेण[3] जपः। भगवत् प्रतिभासन्निधौ शयनम्। एवं दशम्यां कृतनियमः एकादश्यां प्रातः नित्यकृत्यानन्तरं स्वस्तिवाचनम्। संकल्पः। दूर्वाक्षतगन्धपुष्पयुक्तजलपूर्णताम्रपात्रग्रहणम्। देशकालवाक्यानन्तरं भगवन् सूर्य, भगवत्यः सोमादयो देवताः पुत्रकामो वराहपुराणोक्तवराहद्वादशीव्रतकर्माहं करिष्य इति। व्रतोपदेशगुरुवरणम्, ब्रह्मवरणम्, गुर्वनुज्ञया व्रताङ्गस्नानम्। समुद्रगनद्यां तदभावेऽसमु[4]द्रगायामपि तदभावेऽन्यत्राप्यकृत्रिम[5]जलाशये, [6]सर्वासम्भवे कृत्रिमेऽपि पञ्चपिण्डोद्धरणपूर्वकम् उद्धृतोदके गृहे वा। नाभिमात्रे जले प्रवेशः शुद्धदेशोद्भवयथोक्तमृत्तिकाग्रहणम्। तस्याः [7]प्रसादाय मन्त्रपाठः।

**धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा।**
**तेन सत्येन मां दिव्ये पापान्मोचय मृत्तिके॥**

इति मृत्तिकां प्रसाद्य सूर्यप्रसादनम्—

**ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे**
**[8]भवन्ति पूतानि ततो मृत्तिकामालभे ततः।**

---

ख पाठः—

1- सोऽहमस्मि। 2- ब्रह्मेति। 3- अष्टाक्षरजपः। 4- 'तदभावेऽसमुद्रगायामपि' इति नास्ति। 5- जले। 6- तदसम्भवे। 7- ग्रहणाय। 8- भगवन् तेन मे सर्वं पापजातं प्रमोचय। मृत्तिकालंभनम्।

आयुर्मेधां बलं [1]पुष्टिमारोग्यं च दधासि मे
तेनेमां मृत्तिकां कृष्णामालभामि त्वयेधि ताम् ।

ततो वरुणप्रसादनं मन्त्रेण—

त्वयि सर्वे रसा नित्यं स्थिता वरुण सर्वदा
तेनेमां मृत्तिकां प्लाव्य मां पूतं कुरुमाचिरम् ।

मृत्तिकाया भागत्रयपरिकल्पनम् । मुखप्रभृतिनाभिपर्यन्ते [2]भागैकलेपनम् । नाभिप्रभृतिचरणपर्यन्ते [3]द्वितीयभागलेपनम् । तृतीयभागेन जले हस्तमात्र-कुण्डकल्पनम् । नारायणमात्मानं विचिन्त्य वारत्रयं निमज्ज्योन्मज्जनम् । एतदेवचक्रवत्युर्पचारपदेनोक्तम् । उत्तीर्याचम्य वासःपरिधानम् । गृहे गत्वाऽऽचम्य देवागारे प्रविश्य गुर्वनुज्ञया वराहरूपिणो विष्णोः पूजा । यथाविधि षोडशोपचारेण पुष्पान्तं पूजयित्वा देवस्याङ्गानां पूजनम् ।

'वराहाय नमः' इति पादयोः । एवं शङ्खान्तं पूजनम् । पश्चाद् धूपदीपनैवेद्यताम्बूलादिभिः मूलमूर्तेर्वराहाय नमः इति पूजनम् । तस्याग्रतो जलपूर्णकुम्भस्थापनम् । तत्रापि पञ्चरत्नप्रक्षेपः । शुक्लवस्त्रद्वयेन वेष्टनम् । पञ्चपल्लवप्रक्षेपः । गन्धमाल्यैरलङ्करणम् । तदुपरि सौवर्णरौप्यताम्रवैणवा-न्यतमपात्रनिधानम् । अत्र सर्वबीजपूरणम् । तत्र सपर्वतवनद्वीपवन्महीस-मुद्धरणपरवराहरूपसुवर्णमूर्त्तिस्थापनम् । शुक्लवस्त्रद्वयेन च तस्या वेष्टनम् । तत्र पुष्पमण्डपकरणम् । तत्र गन्धपुष्पधूपदीपनानाविधफलादिनैवेद्यैस्तस्याः पूजनम् । तस्याग्रतो व्याहृतिभिर्घृताष्टोत्तरशतहोमः । रात्रौ जागरणम् । हरिप्रादुर्भावविषयपुराणपठनम् । तद्विषयगीतगायनम् । स्तुतिभिस्तोषणम् । प्रातः स्नात्वा वराहपूजनम् । माघमासाधिपो माधवो वराहरूपी प्रीयता-मिति वाक्येन वेदवेदाङ्गविदुषे विशेषेण विष्णुभक्ताय सुवर्णवराहदानम् । [4]गुरवे दक्षिणा । अच्छिद्रावधारणम् । ब्राह्मणभोजनम् ।

इति वराहद्वादशीव्रतम् ॥

---

**ख पाठः—**

1- पुत्रमारोग्यं च दधातु मे । 2-भागैकेन लेपनम् । 3-द्वितीयभागेन लेपनम् । 4- गुरवे दक्षिणा इति नास्ति ।

इदं पुत्रप्राप्तौ रहस्योपायभूतं यत्नेन करणीयम्।

अथ वामनद्वादशी-

[1]वराहपुराणे (अ. ४३) दुर्वासा उवाच-

एवमेव मुने मासे चैत्रे संकल्प्य द्वादशीम्
उपोष्याराधयेद्भक्त्या देवदेवं जनार्दनम्।
वामनायेति पादौ तु विष्णवे कटिमर्चयेत्
वासुदेवेति जठरमुरः संकर्षणाय च।
कण्ठं विश्वभृते[2] पूज्यं शिवे वै व्योमरूपिणे
बाहू विश्वजिते पूज्यौ स्वनाम्ना शंखचक्रकौ।
अनेन विधिनाभ्यर्च्य देवदेवं सनातनम्
प्राग्वद्रत्नोदरं कुम्भं सयुग्मं पुरतो न्यसेत्।
प्रागुक्तपात्रे संस्थाप्य वामनं काञ्चनं बुधः
यथाशक्ति कृतं ह्रस्वं[A] सितयज्ञोपवीतकम्।
कुण्डिकां स्थापयेत्पार्श्वे छत्रिकां पादुके तथा
अक्षमालां च संस्थाप्य वृसिकाञ्च विशेषतः।
एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तम्
दापयेत् प्रीयतां विष्णुर्ह्रस्वरूपीत्युदीरयेत्।
मासनाम्ना तु संयुक्तं प्रादुर्भावविधानवत्
प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः।

---

ख पाठः-

1- वराहपुराणे इति नास्ति। 2- सृजे।

मुद्रितपाठः-

A- सर्वम् वराह पु.।

श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः
अपुत्रः स तपस्तेपे पुत्रमि[1]च्छंस्तपोधनः ।

तस्यैवं कुर्वतस्त्विष्टिं पुत्रार्थे मुनिसत्तम
आजगाम हरिर्देवो विप्ररूपसमन्वितः ।

स उवाच नृपं राजन् किं ते व्यवसितं त्विति
पुत्रार्थमिति चोवाच तं विप्रः प्रत्युवाच ह ।

इदमेव विधानं तु कुरु राजन् प्रयत्नतः
स विप्र एवमुक्त्वा तु क्षणादन्तर्हितस्ततः ।

राजापि तं चकाराथ मन्त्रवित्तं[2] द्विजातये
दरिद्राय तथा प्रादात् ज्योतिर्गर्भाय धीमते ।

यथाऽऽदितेरपुत्रायाः स्वयं पुत्रत्वमागतः
भगवंस्तेन सत्येन ममाप्यस्तु सुतो वरः ।

अनेन विधिनोक्तेन तस्य पुत्रोऽभव[3]न्मुनेः
उग्राश्व इति विख्यातश्चक्रवर्ती महाबलः ।

अपुत्रो लभते पुत्र[4]मधनो धनवान् भवेत्
भ्रष्टराज्यो लभेद्राज्यं मृतो विष्णुपुरं व्रजेत् ।

इदमेव विधानं वामनद्वादशीविधानम् । मन्त्रवित् यथाऽऽदितेरपुत्राय इत्यादि मन्त्रज्ञः सन् स्वर्णवामनं प्रादात् । [5]मासनाम्नेत्यादिसर्वद्वादशीषु प्रतिमादानवाक्यम् । मार्गशीर्षाधिपः केशवः प्रीयतामिति[6] दानवाक्यमित्यर्थः । दशमीकृत्यं सङ्कल्पादि स्नानान्तं पूर्ववत् कर्त्तव्यम् ।

---

**ख पाठः —**

1-मिच्छस्तु 2-वित्त 3-भवेत् 4-पुत्रान्निर्धनो लभते धनम् । 5-मार्गशीर्षादिषु । 6- मित्यादि ।

वामनलक्षणम्—

कर्तव्यो वामनो देवः संकटैर्गात्रपर्वभिः
कृष्णाजिनधरश्छत्री दण्डी पीनकलेवरः ।

इति पुत्रदवामनद्वादशी ।

---

अथ पुत्रदजामदग्न्यद्वादशी

वराहपुराणे (अ ४४) दुर्वासा उवाच—

वैशाखेऽप्येवमेवन्तु सङ्कल्प्य विधिना नरः
तद्वत् स्नानं मुदा कृत्वा ततो देवालयं व्रजेत् ।
तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः
जामदग्न्याय पादौ तु चोदरं सर्वधारिणे ।
मधुसूदनायेति कटि[A]मुरः[1] श्रीवत्सधारिणे
क्षत्रान्तकाय बाहू च [2]मणिक[B]ण्ठाय कण्ठकम् ।
स्वनाम्ना [3]शङ्खचक्रे तु शिरो ब्रह्माण्डधारिणे
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ।
विन्यस्येत् वेष्टितं वस्त्रयुग्मेन च विशेषतः
वैणवेन च पात्रेण तस्मिन् संस्थापयेद्धरिम् ।

---

ख पाठः—

1- ऊरू । 2- शितिकण्ठाय कूर्चकम् । 3- खड्ग ।

मुद्रितपाठः-

A- कटिमूरू, वराहपु., कटिमुरः- कृत्यकल्प व्रत-३२६ ।

B- शितिकण्ठाय कूर्चकम्, वराहपु. मणिकण्ठाय कण्ठकम् कृत्यकल्प-

जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ।

[A]सर्वगन्धैश्च सम्पूज्य पुष्पैर्नानाविधैस्तथा
ततस्तस्याग्रतः कुर्याज्जागरं भक्तिमान्नरः ।

प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत्
"आसीद्राजा महाभागो वीरसेनो महाबलः ।
अपुत्रः स पुरा तीव्रं तपस्तेपे महायशाः ॥

चरतस्तु तपो घोरं याज्ञवल्क्यो महामुनिः
आजगाम महायोगी तं द्रष्टुं नातिदूरतः ।

राजोवाच—

कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज
एतन्मे कथय प्रीत्या भगवन् प्रणतस्य वै ।

दुर्वासा[B] उवाच—

एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना
आचख्यौ द्वादशीं चेमां वैशाखसितपक्षजाम् ।

स हि राजा विधानेन पुत्रकामो विशेषतः
उपोष्य लब्धवान् पुत्रं नलं परमधार्मिकम् ।

योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नरोत्तमः
प्रासङ्गिकं फलं ह्येतद् व्रतस्यास्य महामुने ।

---

मुद्रितपाठः-

A- अर्घगन्धैश्च - वराहपु. । B= वराहपु. पाठः ।

सुपुत्रो जायते वित्तं विद्या वा शान्तिरुत्तमा
इह जन्मनि किञ्चित्रं परलोके शृणुष्व मे ।
कल्पमेकं ब्रह्मलोके उषित्वाप्सरसां गणैः
क्रीडन्ति ते पुनः सृष्टौ जायन्ते चक्रवर्तिनः ।
त्रिंशत् कल्पसहस्राणि [1]जीवन्ते नात्र संशयः ।

दशमी[2]प्रभृति मृतिकास्नानसङ्कल्पादिकं [3]सर्वं पूर्ववदेव । जामदग्न्यलक्षणम्—

कृष्णाजिनी जटा[4]जूटधारी परशुधारकः ।

इति पुत्रप्रदजामदग्न्यद्वादशी[5] ।

---

अथ पुत्रप्रदराघवद्वादशी

वराहपुराणे ( अ ४५) दुर्वासा उवाच—

ज्येष्ठे मासेऽप्येवमेव सङ्कल्प्य विधिवन्[6]नरः ।
अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः ।
[7]ॐ [A]नमो नारायणायेति पादौ पूर्वं समर्चयेत्
त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ।
उरः संवत्सरायेति कण्ठं संवर्त्तकाय च

---

ख पाठः —

1- जायन्ते । 2- दशमीकृत्यप्रभृति । 3- कृत्वा सर्वं । 4- जिनजटा ।
5- द्वादशीव्रतम् । 6- पूर्वकम् । 7- ॐ नमो इति नास्ति ।

मुद्रित पाठः—

A- नमो रामाभिरामाय- वराहपु. । ॐ नमो राघवायेति-कृत्यकल्पव्रत-३२७

सर्वास्त्रधारिणे बाहू [1]स्वनाम्नाब्जरथा[A]ङ्गके । (३)

सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ।

अब्ज - शङ्खः । रथाङ्गं- चक्रम् ।

एवमभ्यर्च्य विधिवत् पाग्वत् कुम्भं प्रकल्पयेत् । (४)

प्राग्वद्वस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ

अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ । (५)

दातव्यौ मनसा काममहिता पुरुषेण तु

अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन तु । (६)

वसिष्ठः पुत्रकामाय प्रोवाच परमार्चितः

इदमेव विधानं तु कथयामास स द्विजः । (७)

प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम्

तस्य पुत्रः स्वयं जज्ञे रामाख्यो मधुसूदनः । (८)

चतुर्धा [B]सोऽप्य[2]भूद् विष्णुः परितोषान्महामुने

एतदैहिकमाख्यातं पारत्रिकमतः शृणु । (९)

[C]दिव्यान् भोगान् भुञ्जते स्वर्गसंस्थान्

यावदिन्द्रा दश च द्विद्विसंख्याः ।

---

ख पाठः -

1- तन्नाम्ना । 2- भवद्विष्णुः ।

मुद्रितपाठः —

A-रथाङ्गकेः - वराहपु. । B- सोव्ययो विष्णुः वराहपु.

C- दिव्यानित्यादिश्लोकपाठः कल्पतरुपाठेन सह संवदति । व्रत-३२९

वराहपुराणे तु— तावद् भोगान् भुंजते स्वर्गलोके यावदिन्द्रो देवसंघाश्च सर्वे । अतीतकाले पुनरेत्य मर्त्यं भवेत् स राजा शतयज्ञयाजी (४५/१०)

अतीतकाले पुनरेत्य मर्त्यं
स राजराजो जयते यज्ञयाज्ञी ।

[1]दश द्विद्विः—चतुर्दश ।

नश्यन्ति पापानि च तस्य पुंसः कामानवाप्नोति यथा सभीहम्
निष्कामतस्तद्व्रतमेत्र तीर्त्वा प्राप्नोति निर्वाणपदं स्थिरं तत् ।

अत्रापि दशमीकृत्यमृत्तिकास्नानसंकल्पाग्निकार्यादिकं पूर्ववत् । रामलक्ष्मण-मूर्त्तिद्वयं पूज्यम् । तन्त्रेण मन्त्रः । स्वर्णमयमूर्त्तिद्वयमपि रामलक्ष्मणयोस्तन्त्रेण पूज्यम् । रामलक्ष्मणौ च शरकामुर्कहस्तौ । प्राग्वद्वस्त्रयुगच्छन्नावित्यत्र प्राग्वत्पदेन कुम्भप्रतिमाधारपात्रातिदेशः । स च निकायि[2]नां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् इति न्यायेन कूर्मद्वादशी[3]घृतपूर्णताम्रपात्रस्यातिदेशः । यद्वास्य वचनातिदेशत्वेन सन्निहितस्य प्राक्शब्दादुपा[4]स्थितेः । समानमितरत् श्येनेनेति न्यायेना व्यवहित जामदग्न्यद्वादश्युक्तविधिना वैणवपात्रग्रहणमिति ।

इति पुत्रप्रदराघवद्वादशी ॥

---

## अथ पुत्रप्रदकृष्णद्वादशीव्रतम् ।

वराहपुराणे (अ ४६) दुर्वासा उवाच—

आषाढेऽप्येवमेवं तु सङ्कल्प्य विधिवन्नरः
अर्चयेत् परमं देवं गन्धपुष्पैर्विधानतः ॥
[वासुदेवाय पादौ तु कटिं सङ्कर्षणाय च
[A]प्रद्युम्नायेति जठरमनिरुद्धाय वै उरः ।]

---

ख पाठः—

1- दश द्वि द्वि चतुर्दश इति नास्ति । 2- निकायानां । 3- द्वादश्युक्त-
4- प्राक्शब्दानुपपत्तेः ।

मुद्रितपाठः-

A- स्कन्दं च पापहतये त्वनिरुद्धाय वै उरः । इति कल्पतरौ व्रत ३२९
वराहपुराणे·तु बन्धनस्थ [ ] पाठो नास्ति ।

चक्रपाणये इति भुजौ कण्ठं भूपतये नृप ॥ (१)
स्वनाम्ना शङ्खचक्रे च पुरुषायेति वै शिरः
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् । (२)
विन्यस्यद् वस्त्र[1]संयुक्तं तस्योपरि [2]ततो न्यसेत्
काञ्चनं वासुदेवं च चतुर्बाहुं सनातनम् । (३)
[[A]दक्षिणोर्ध्वे गदा यस्य वामोर्ध्वे चक्रमुत्तमम्
दक्षाधः पद्ममुद्दिष्टं वामाधः शङ्ख[3] एव च ॥
श्रीपुष्टी चैव पार्श्वस्थे ब्रह्मेशौ चापि पार्श्वयोः ॥]
तेनाभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात्
प्राग्वत्तं ब्राह्मणे दद्याद् [4]वेदवादिनि सुव्रते । (४)
एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे
वसुदेवोऽभवद्राजा यदुवंशविवर्द्धनः । (५)
देवकी तस्य भार्यासीत् समानव्रतचारिणी
सात्वपुत्रा भवत् साध्वी पतिधर्मपरायणा । (६)
तस्य कालेन महता नारदोऽभ्यगमद् गृहम्
वसुदेवेन [5]भक्त्या स पूजितो वाक्यमब्रवीत् ।

---

ख पाठः —

1- वस्त्रयुगलम् । 2- च विन्यसेत् । 3- खड्ग । 4- वेदवादरते तथा ।
5- भक्त्यासौ ।

मुद्रितपाठः—

A- कल्पतरु - वराहपुराणयोः [ ] बन्धनस्थपाठो नास्ति ।

[A]कथयामास धर्मज्ञो देवकीवसुदेवयोः
तावप्येवं विधिं भक्त्या चक्रतुः श्रद्धयान्वितौ ।
तयोस्तुष्टः स्वयं विष्णुः पुत्रत्वं च जगाम ह
एवमेषा पापहरा द्वादशी पुत्रदा स्मृता ।
[1]इमामुपोष्येह सुतान् विद्यां वित्तं लभेत च
राज्यं च भ्रष्टराज्यस्तु पापिनः पापसंक्षयः ।
[2]यथाभावोपपन्नस्तु धरण्यां केशवाय वै
मृतो विष्णुपुरे रम्ये मोदते कालमक्षयम् ।
मन्वन्तराणि षट्त्रिंशत् ततः कालात्यये पुनः
इह लोके भवेद्राजा सप्तवर्षायुतानि च ।
दाता यज्वा [3]समायुक्तस्ततो निर्वाणमाप्नुयात् ॥

इति कृष्णाद्वादशीव्रतम् ।

## अथ पुत्रप्रदबुद्धद्वादशी

वराहपुराणे (अ ४७) दुर्वासा उवाच—

[B]एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम्

---

**ख पाठः—**

1- इमामुपोष्य च सुतान् विन्दते वित्तमश्नुते । 2- यथालाभोप-
3- श्रिया युक्तः ।

**मुद्रितपाठः-**

A-कथयामासेत्यारभ्य पाठः कल्पतरुपाठेन सह संवदति । वराहपुराणपाठेन सह न संवदति ।

B- अयं पाठः कल्पतरुपाठसदृशः न तु वराहपुराणपाठसदृशः ।

अर्च्चयेत् परमं देवं गन्धपुष्पनिवेदनैः ।
बुद्धाय पादौ संपूज्य श्रीधरायेति वै कटिम्
पद्मोद्भवाय जठरमुरः संवत्सराय च ।
सुग्रीवायेति कण्ठं तु भुजौ द्वौ विश्ववाहवे ॥
प्राग्वत् शस्त्राणि सम्पूज्य शिरो वै परमात्मने ।
एवमभ्यर्च्य मेधावी तस्याग्रे पूर्ववद् घटम्
[1](विन्यसेद् वस्त्रसंयुक्तं तस्योपरि ततोन्यसेत्)
स्थापयेत्तत्र सौवर्णं बुद्धं कृत्वा विचक्षणः ।
कषाय वस्त्रसंवीतः स्कन्धसंसक्तचीवरः
पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्तितः ॥

[2]इत्युक्तं बुद्धलक्षणम् ।

तमप्येवं तु सम्पूज्य ब्राह्मणाय निवेदयेत्
अनेन विधिना पूर्वं द्वादशीयमुपोषिता ।
शुद्धोदनेन तस्याभूत् स्वयं पुत्रो जनार्दनः
महतीं च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः ।
भुक्त्वा राज्यं श्रियं सोऽथ गतिं परमिकां गतः

इति पुत्रदबुद्धद्वादशी ।

---

ख पाठः—

1- बन्धनस्थपाठः ख पुस्तकस्थः ।

2- इत्युक्तलक्षणो बुद्धः ।

## अथ [A]पुत्रदयोगेश्वरद्वादशी

वराहपुराणे (अ ५०) दुर्वासा उवाच—

शृणुष्व भक्तितो राजन् कार्तिकैकादशी तु या
उपोष्य विधिना येन सर्वासां प्राप्नुयात् फलम् ।
प्राग्विधानेन सङ्कल्प्य तद्वत्स्नानं समाचरेत्
विलोमेनार्चयेद्देवं नारायणमकल्मषम् ।
नमः सहस्रशिरसे शिरः सम्पूज्य वै हरेः (७)[B]
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे ।
ज्ञानात्मनेति चास्त्राणि श्रीवत्साय तथा ह्युरः । (८)
जगद् ग्रसिष्णवे तुभ्यमुदरं दिव्यमूर्तये
कटिं सहस्रपादाय पादौ देवस्य पूजयेत् ।(९)
अनुलोमेन देवेशं पूजयित्वा विचक्षणः
नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः । (१०)

अनुलोमेन [1]दिव्यान्तररीत्या पादादिक्रमेण तत्तद्देवतानामभिः । पूर्वं विलोमेनेति व्रतान्तरवैपरीत्यम् । शिरःप्रभृतिपूजनात् ।

एवं सम्पूज्य विधिना तस्याग्रे चतुरो घटान्
स्थापयेद्रत्नगर्भांश्च सितचन्दनचर्चितान् । (११

---

ख पाठः—

1- व्रतान्तरित पादावितिक्रमेण ।

मुद्रितपाठः—

A- धरणीव्रतमिति वराहपु. । B- वराहपुराणीयः श्लोकाङ्कः ।

स्रग्दा[1]मबद्धग्रीवांस्तु सितवस्त्रा[2]वगुण्ठितान्
स्थापितान् ताम्रपात्रैस्तु [A]रत्नगर्भैः सकाञ्चनैः । (१२)

चत्वारः सागराश्चैते कल्पयेद् द्विजसत्तम
तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद् हरिम् । (१३)

योगेश्वरं योगिगम्यमनन्तं पीतवाससम्
तमप्येवं तु सम्पूज्य जागरं तत्र कारयेत् । (१४)

कुर्याच्च वैष्णवं यागं यजेद् योगेश्वरं हरिम्
षोडशारे रथाङ्गे तु योगिभिर्बहुभिः [3]कृते । (१५)

पञ्चवर्णैरित्यर्थः ।

एवं कृत्वा [4]प्रभाते तु ब्राह्मणान् पञ्च वाचयेत्
चत्वारः कलशा देयाश्चतुर्णां पञ्चमस्य तु । (१६)

योगेश्वरं तु सौवर्णं प्रदद्यात् प्रयतः शुचिः
वेदाध्येत्रे समं दानं तद्विदे द्विगुणं तथा । (१७)

आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत्
यस्त्विदं सरहस्यं तु मन्त्रतश्चोपपादयेत् । (१८)

विधानं तस्य भक्त्या वै दत्तं कोटिगुणोत्तरम्
गुरौ तिष्ठति यस्त्वन्यमासन्नं पूजयेत् कुधीः ।। (१९)

---

ख पाठः-

1- स्रक्सूत्रबद्ध । 2- सितवस्त्र समान्वितान् । 3- वृते । 4- विधानेन ।

मुद्रितपाठः-

A- तिलपूर्णैः - वराहपुराणे ।

स दुर्गतिमवाप्नोति दत्तं तस्य च निष्फलम्
प्रयत्नेन गुरौ पूर्वं पश्चादन्यस्य दीयते । (२०)

अविद्यो वा सविद्यो वा गुरुर्ज्ञेयो जनार्दनः
मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः । (२१)

गुरुरत्र व्रतोपदेष्टा तस्यैव पूर्वनिर्दिष्टत्वात् ।

"एवं दत्त्वा[1] विधानेन तत्त्वतो विष्णुमर्च्य च
विप्राणां भोजनं दद्यात् यथाशक्त्या च दक्षिणाम् । (२३)

धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः
प्रजां लेभे तथा मुक्तिं ब्रह्मण्यविरले शुभे । (२४)

युवनाश्वश्च राजर्षिरेतेन विधिना पुरा
मान्धातारं सुतं लेभे परं ब्रह्म च शाश्वतम् ।

तथा हैहयदायादः कृतवीर्यो नराधिपः
कार्तवीर्य-सुतं लेभे परंब्रह्म च शाश्वतम् ।

शकुन्तलाप्येतमेव व्रतं तीर्त्वा महामुने
लेभे शाकुन्तलं पुत्रं दौष्यन्तं चक्रवर्तिनम् । (२६)

अनेन विधिना प्राप्तं चक्रवर्तित्वमुत्तमम्
धरण्यापि च पाताले मग्नया च कृतं पुरा ।
व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते ॥ (२८)

समाप्तेऽस्मिन् धरा देवी हरिणा क्रोडरूपिणा
उद्धृता वापि तुष्टेन धारिता नौरिवाम्भसि । (२९)

---

ख पाठः–

1- एवंविधविधानेन ।

य इदं शृणुयान्नित्यं यश्च कुर्यान्नरोत्तमः ॥ (३०)

सर्वपापविनिर्मुक्तो [1]विष्णुसालोक्यतां व्रजेत् ॥ (३१)

योगेश्वरलक्षणम्—

पद्मासनसमासीनः किञ्चिन्मीलितलोचनः ।

घ्राणाग्रेदत्तदृष्टिश्च[2] श्वेतपद्मोपरिस्थितः ।

वामदक्षिणहस्तौ तावुत्तराधरमङ्गगौ ।

तत्करद्वयपार्श्वस्थे पङ्केरुहमहापदे ।

ऊर्ध्वं करद्वये तस्य पाञ्चजन्यं सुदर्शनम् ।

वैष्णवयागश्च विष्णुमुद्दिश्य होमः । षोडशारचक्रे पूजैव वैष्णवयागो वा । योगेश्वरदानं गुरवे । एवमन्ये ष्वपि च[3] व्रतेषु गुरवे मूर्त्तिदानम् । कार्तिकाधिपो दामोदरो योगेश्वरमूर्तिः प्रीयतामिति दानमन्त्रः । अत्र सर्वद्वादशीषु [4]मूर्तिदानं गुरवे मुख्यकल्पः ।

---

## भविष्यपुराणीयं नन्दानवमीव्रतम्

^फाल्गुनामलपक्षस्य नवमी या [5]महीपते ।

आनन्दा सा महापुण्या सर्वपापहरा मता ॥

फाल्गुनशुक्लचतुर्थ्यां हविष्यं भुक्त्वा पञ्चम्यां संकल्पः । अद्यादि-प्रतिमासं शुक्लपक्षे कृच्छ्रपादव्रताचरणेनानन्दानवमीव्रतं कुर्वीयेति । पञ्चम्या मेकभक्तम् । (षष्ठ्यां नक्तं) अयाचितं सप्तम्याम् । अष्टम्यामुपवासः । नवम्यां

---

**ख पाठः —**

(1) विष्णु सायुज्य माप्नुयात् (2) तु (3) तेषु (4) गुरवे मूर्तिदानं मुख्यकल्पः (5) महामुने ।

**मुद्रितपाठः—**

A- कृत्यकल्पव्रत- २९९ ।

पञ्चगव्यस्नानम् । किंचित् पञ्चगव्यप्राशनम् । ततो दुर्गापूजनम् । श्रीखण्डचन्दनकर्पूरागुरुभिर्गन्धिः । मुञ्जैरपुष्पमालाप्रधानानि पुष्पाणि । धूपोऽगुरुः । नैवेद्यं पायसं मोदकं च । अरुणायै नमः इति पूजा । [1]तिलैर्व्याहृतिहोमः । आवश्यककृत्यान्तराले अरुणेति नामजपः । पूजयित्वा ब्राह्मणकन्या ब्राह्मणस्त्रीणां भोजनम् । एवं चैत्रवैशाखज्येष्ठेषु शुक्लपञ्चम्यामेकभक्तादि नवम्यां पूजान्तम् ।

आषाढश्रावणभाद्रपदाश्विनेषु शुक्लपक्षे पञ्चम्यामेकभक्तम् । षष्ठ्यां नक्तम् । सप्तम्याम् अयाचितम् । अष्टम्यामुपवासः [2]समान एव । नवम्यां विशेषः बिल्वपत्रोदकस्नानम् । तस्य प्राशनम् । जातीपुष्पमालाप्रधानानि पुष्पाणि । रक्तचन्दनकस्तूरिकागन्धः । माहिषाख्यगुग्गुलु[3]धूपः । गुडप्रधानपूपखण्डवेष्टनादि यथाशक्ति नैवेद्यम् । दुर्गायै नमः इति पूजामन्त्रः । आवश्यककृत्यान्तराले तन्नामजपः । व्याहृत्या तिलहोमः । [4]कुमारीब्राह्मणीनां भोजनम्

कार्तिकमार्गशीर्ष (पुष्य) पौषमाघशुक्लेषु पञ्चम्यामेकभक्तादि अष्टम्यामुपवासान्तं समम् । नवम्यां तिलैः स्नानम् । तिलप्राशनम् । पूजायां तत्कालोद्भवपुष्पमाला(स्रग्)भिः पुष्पाणि । कुङ्कुमागुरुकर्पूरैर्गन्धिः । मांसप्रधानभक्ष्यप्रधानं नैवेद्यम् । बिल्वसारघृतगुग्गुलुधूपः । अपराजितायै नमः इति पूजा मन्त्रः । व्याहृतिभिस्तिलै[5]र्होमः । आवश्यककृत्यान्तराले अपराजितानामजपः । [6]एवं ब्राह्मणकन्या[7]ब्राह्मणीभ्यो भोजनदानम् । अत्रोपवासः परेऽहन्यभिधाय पुनः सोपवास इति [8]वचनान्नवमीदिनेऽप्युपवासः इति प्रतिभाति । तथा[9] दशम्यां ब्राह्मणान् [10] भोजयित्वा, दूर्वां पूजयित्वा व्रतं [11]समाप्य पारणमिति ।

---

ख पाठः —

(1) व्याहृतिभिस्तिलहोमः (2) समानमन्यत् (3) लुधूपः (4) कुमार (5) तिलहोमः (6) 'एवं' इति नास्ति (7) ब्राह्मणब्राह्मणस्त्रीभ्यो (8) इत्यभिधानात् (9) तथा च (10) सम्भोज्य (11) समाप्याशीः करणमिति

[A]एवं ये कृच्छ्रपादेन नवमीं समुपासते ।
मासि मासि महाबाहो यावदेव हि वत्सरम् ।
[1]स हि पुत्रानवाप्याग्र्यान् धनं धान्यं बलं यशः ॥
विपुलां च तथा कीर्तिमारोग्यमचलां श्रियम् ।
ततस्त्विन्द्रपुरं [2]याति सिद्धयानमवस्थितः[3] ॥

स्कन्दपुराणे—स्कन्द उवाच—

भगवन् कथितं सर्वं यदभीष्टं मम प्रभो ।
साम्प्रतं श्रोतुमिच्छामि भुवि जातस्य कस्यचित् ॥
येन पुत्रवियोगो न भवेच्चैव कदाचन ।

शङ्कर उवाच—

मासि मार्गशिरे कृष्णपक्षे[4]ऽष्टमी षडानन ।
रुक्मिण्यष्टमी संज्ञा सा सर्वकामफलप्रदा ।
तस्यां प्रातः शुचिर्भूत्वा नारी नियमकारिणी ।
वर्षे तु प्रथमं कुर्यादेकद्वारं गृहं सदा ।
गृहोपकरणं सर्वं तस्मिन्निक्षिप्य सादरम् ।
व्रीहीन् पूपप्रकारान् वै घृतादींश्च रसांस्तथा ॥
([5]आदर्शं चामरं चैव मुसलोल्लूखले तथा)

---

ख पाठः —

(1) ते (2) यान्ति (3) स्थिताः (4) ष्टम्याम् (5) बन्धनस्थपाठोधिकः

मुद्रितपाठः—

A- कृत्यकल्प व्रत ३०१ ।

[1]शङ्खकुन्दप्रतीकाश रोहिणीप्रियवल्लभ ।
गृहाणार्घं मया दत्तं शङ्कराय नमोऽस्तु ते ।

इति चन्द्रार्घमन्त्रः

अर्घं दत्वाथ भुञ्जीत मित्रस्वजनबन्धुभिः ।
ततः प्रभातसमये कुमार्यै तद्गृहं शुभम् ।
दद्यात् प्रीतेन मनसा सर्व्ववस्तुसुपूरितम् ।
ततो द्वितीये बर्षे तु कुर्याद्द्विमुखमन्दिरम् ॥
पूर्ववत् पूरितं कृत्वा कुमार्यै विनिवेदयेत् ।
ततस्तृतीये त्रिमुखं वर्षे तस्यै निवेदयेत् ॥
चतुर्मुखं चतुर्थेऽब्दे पञ्चद्वारं तु पञ्चमे ।
षष्ठे षण्मुखसंयुक्तं कुमार्यै [2]गृहमर्पयेत् ।
ततस्तु सप्तमे वर्षे कुर्यादुद्यापनं शुभम् ।
सप्तद्वारं गृहं कृत्वा सुधाधवलितं महत् ।
शय्या तूली सयानं च छत्रोपानहसंयुतम् ।
आदर्शं चामरं चैव मुसलोलूखलं तथा ।
कांस्य भोजनपात्राणि [3]ताम्रस्य च महान्ति च ॥
नानाविधानि वस्त्राणि तथैवाभरणानि च ।
कृष्णं च रुक्मिणीं चैव प्रद्युम्नं च मनोहरम् ।

---

ख पाठः—

(1) शंखकुन्देतिश्लोकः "नरो वा यदि वा नारी नैव दुःख मवाप्नुयात्" इत्यनन्तरं वर्त्तते । (2) पुनरर्पयेत् । (3) ताम्राण्यपि ।

कृत्वा स्वर्णमयान् [1]शय्यापीतवस्त्रावगुण्ठितान्
पूजयित्वोपवासेन रात्रिजागरणेन च ।
ततः प्रभातसमये तद्गृहं परिपूरितम्
सपत्नीकं द्विजं पूज्य वस्त्रालङ्कारभूषणैः ।
तस्मै च तद्गृहं दद्यात् गां च दद्यात् सुशालिनीम्
एवं कृते व्रते पुत्र पुत्रशोकं नचाप्नुयात् ।
नरो वा यदि वा नारी नैव दुःखमवाप्नुयात् ।

इति श्रीमहामहोपाध्यायाग्निचिद् वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे रात्रिकृत्ये निषेकाधिकारे
पुत्रकामवैदिककर्माणि ॥

## स्वप्नपरीक्षा

प्रकृतमनुसरामः— [2]मैथुनानन्तरं ऋतो स्नात्वा [3]अनृतावाचम्य पृथक्शय्यायां शयनम् ।

दूरदेशजिगमिषोर्वार्धक्यादिना निमित्तेन वा[4] मरणादिज्ञानार्थं वा स्वप्नपरीक्षाकामनायामेवं कार्यम् ।

पराशरः— "अभियास्यन् यातव्यदिशीशेन्द्रवरुणयमसोमेभ्यः पृथिव्यै वायवे सूर्याय ग्रहेभ्यश्च यथाकल्पं यथामन्त्रमुपहारमुपा[5]हृत्य शुचौ देशे

---

ख पाठः —

1- शक्त्या । 2- 'एव' इत्यधिकम् । 3- 'अनृतौ' इति नास्ति ।

4- क्षतविषादिनिमित्तत्वेन इत्यधिकः पाठः ।

5- उपहृत्य ।

कुशास्तृतभूमौ शय्याशीर्षके श्रियै पद्भ्यां भद्रकाल्यै बलिमुपहृत्य सर्वरत्नोषधिबीजगर्भानुदकुम्भान् कल्पयित्वा कृतस्वस्त्ययनः शुचिः [1]सूक्ष्मक्षौमाहितवसनः प्राङ्मुखो रुद्ररुद्रेति जपेत् स्वप्नदर्शनाकाङ्क्षा··· ··· ··· ··· ··· यातव्यदिशीशाश्च··· ··· ··· ··· ··· ··· ·· इन्द्रा[2]दयश्च ।

यथाकल्पमिति—कल्पे [3]वास्तुपूजादौ विधाने यस्य देवस्य यो बलिर्यस्य यो मन्त्रो मत्स्यपुराणादौ तेन प्रकारेण बलिदानम् ।

**वराहः—**

**यज्ञाग्रतो दूरमुदेति दैवमावृत्य मन्त्रान् प्रयतस्त्रिरेतान्**
**लघ्वेकभुग दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ।**

मन्त्रानितिबहुवचनान्माध्यन्दिनशाखाशिवसंकल्पषडर्चग्रहणम् । तस्य च त्रिरावृत्तिः । स च सूर्योपस्थाने दर्शितः ।

**नमः शम्भो त्रिनेत्राय शूलिने वरदाय च**
**वाम नाम विरूपाय स्वप्नाधिपतये नमः ।**
**भगवन् देवदेवेश शूलधृग् वृषवाहन**
**इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वत ।**
**एवं सुप्तः कुशास्तीर्णे ततः प्रयतमानसः**
**निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ।**
**प्रत्यक्षवद् भवति यः स्फुरतीव चान्तः**
**स्वप्नस्य तस्य नियमात्सदसत्फलाप्तिः ।**

तत्र धातुप्रकोपजः स्वप्नोऽप्य[4]लीकः (स्वप्नोपालकः) शुभाशुभफलहीनः । वाङ्मनःसंयमिनां देवता प्रत्यक्षवदभिदर्शयति तद् यथार्थम् । योऽन्यदर्शना-

---

**ख पाठः—**

1- सूक्ष्म इति नास्ति । 2- इन्द्राद्याश्च । 3- कल्पे इत्यधिकम् ।
4- स्वप्नोऽनर्थकः ।

दन्यफल: आत्मनिमित्तान्यफलसूचकत्वादन्यार्थः । यथा त्रिजटास्वप्नो रामरावणयोरिष्टानिष्टसूचक: ।

पाककालमाह—

आद्ये वर्षाद्वत्सरार्द्धाद्द्वितीये यामे पाको वर्षपादात्तृतीये ।

मासात् पाकः शर्वरीपश्चिमांशे, सद्यः पाको गोविसर्गेषु दृष्टः ।

शुभस्वप्नाः

मत्स्यपुराण—विष्णुधर्मोत्तरयोः (मत्स्य. अ. २४१)

शैल प्रासादनागाश्च [1]वृषभारोहणं हितम् ।
द्रुमाणां श्वेतपुष्पाणां [A]गगने च [2]तथा [B]द्विजाः ॥
[C]तृणगुल्मोद्भवो नाभौ तथैव बहुबाहुता ।
तथैव बहुशीर्षत्वं [3]पलितो[D]द्भव एव च ॥ (२२)
[E]सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ।
चन्द्रार्कताराग्रहणं परिमार्जनमेव च ॥ (२३)
शक्रध्वजालिंगनं च तदुच्छ्रायक्रिया तथा ।
भूम्यम्बुधीनां[4] ग्रसनं शत्रूणां वै वधक्रिया ॥ (२४)
जयो विवादे द्युतेषु संग्रामे च तथा [F]जयः ।
भक्षणं चाममांसानां मत्स्यानां पायसस्य च ॥ (२५)

---

ख पाठः—

(1) ऋषभा (2) यथा (3) पश्चता (4)म्बुदानां ग्रसनं ।

मुद्रित पाठः—

A- गमने च B- द्विज C-द्रुमतृणोद्भवो D- फलितोद्भव- E-सुशुक्ल F- द्विज ।

दर्शनं रुधिरस्यापि स्नानं तु रुधिरेण च ।
सुरारुधिरमद्यानां पानं क्षीरस्य [1]चाप्यथ[A] ॥ (२६)
[B]अहेर्विवेष्टनं भूमौ निर्मलं गगनं तथा ।
मुखेन दोहनं शस्तं महिषीणां तथा गवाम् । (२७)
[2]सिंहीनां हस्तिनीनां च वड़वानां तथैव च ।
प्रासादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ॥ (२८)
अम्भसा त्वभिषेकश्च [C]गवां शृंगोदकेन च ।
[3]चक्र[D]भ्रष्टेन वा राजन् ज्ञेयो राज्यप्रदो हि सः ॥ २९
राज्येऽभिषेकश्च तथा छेदनं शिरसस्तथा ।
मरणं [E]वह्निलाभश्च वह्निदाहो गृहादिषु ॥ (३०)
[F]प्रलब्धी [4]राजलिंगानां तन्त्रीवाद्याभिवादनम् ।
[G]रथोदकानां तरणं तथा विषमलङ्घनम् ॥ (३०)
हस्तिनी–बडवानां च गवां च प्रसवो गृहे ।
आरोहणमथाश्वानां रोदनं च तथा शुभम् । (३२)
वरस्त्रीणां तथा लाभस्तदालिंगनमेव च ।
निगडैर्बन्धनं शस्तं तथा विष्ठानुलेपनम् ॥ (३३)

---

ख पाठः—

(1) वाप्यथ (2) इयं पङ्क्तिर्नास्ति (3) इयं पङ्क्तिर्नास्ति (4) राज्य ।

मुद्रितपाठः —

A- चाथवा B- अन्त्रैर्वा वेष्टनं C- गवां शृङ्गाश्रितेन वा D- चन्द्राद् भ्रष्टेन E- बह्निदाहश्च F- लब्धिश्च राज्यलिंगानां G- रथो ।

[1]जीवतां भूमिपालानां सुहृदामपि दर्शनम्
दर्शनं देवतानां च [2]द्विजानां[A] च तथाम्भसाम ।(३४)
[B]स्वप्नैरथैतैर्ध्रुवमर्थलाभो
व्याधेर्विमोक्षश्च तथातुराणाम्[3] ।

वराहः—

शाद्वलतीरोपेतां वसुधां नवशस्यशालिनीमटताम्[4]
पद्मानि चिन्वतां वा स्वप्नान्ते वृद्धयः पुंसाम् ।

पराशरः—

सिंहव्याघ्र[5]तुरगर्षभभु[6]जङ्गमानां लाभो लाभश्च कुसुमितलता स्रग्विन्या[7]सनकर्णिकाञ्जनिकापादुकानां स्त्रीलाभाय । वृश्चिकादिदंशनं मणिरत्नादर्शकाञ्चनगजकलभतुरगकिशोरवत्सहंससर्प[8]लाभः पुत्रलाभाय ।

चरकः—

स्वप्ने चोपलभते पद्मोत्पलकुमुदादीनि
तां ब्रूयात् पुत्रमियं जनयिष्यतीति ।

---

ख पाठः —

1- इयं पङ्क्तिर्नास्ति । 2- विद्यानां । 3- वृद्धिकराण्युक्तानि स्वप्नान्ते च लिङ्गानि । 4- मटवीम् । 5- व्याघ्रोरग । 6- भल्लुजङ्गमानां । 7- स्रग्विणा सनशयनकचिकाञ्जनिका । 8- सर्पारिकर्मार इत्यधिकः पाठः ।

मुद्रितपाठः —

A- विमलानां ।

B- शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम्
स्वप्नानि वै धर्मभृतां वरिष्ठ व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि । २४२/३५

**पराशरः—**

श्वेतवस्त्रव्यजनसित[1]चामरध्वजातपत्रसैन्धवलवणदधिपयः सितकुसुमलाभोऽर्थलाभाय। चन्द्रसूर्यनिर्गत[2]जलाभिषेचनं राज्यदम्। [[3]वह्निप्रवेशनं नानाशिरोवाहुता ब्राह्मणेन सितच्छत्रधारणं च राज्यदम्]। [4]द्विजसुरगुरुराज्ञां दर्शनानि मणिरजतसुवर्णानां भोजनपात्रे भोजनं च राज्यदम्। अभयविजय भुङ्क्ष्व [5]चेतिव्याहाराः राज्यदाः।

**वराहः—**

जिह्वया स्वनेत्रलेहनं राज्यदम्। चन्द्रार्कताराधिरोहणं ज्वलितरथनृपतिशिरोधिरोहणं नरशिरोभक्षणं परैः स्वतनोर्दिक्षु प्रक्षेपणं, प्रवराङ्गनायाः सुश्लिष्टायाः स्वतनौ प्रवेशः सप्तधा पञ्चधा त्रिधा वा [6]स्वमूर्ध्नो विदारणं वा राज्यलाभाय। अमलसलिलपुलिनविमलनभोग्रहार्कचन्द्रतारोदयादिवोक्षणं नृपसिद्धसाधुद्विज [7]प्ररूढपुष्पितवनशस्यशालिभूमिदर्शनं च राज्यदम्। शकृन्मदिराभक्षणम[8] ङ्गाभिताडनमगम्यागमनमपलितपालित्यमभिवृद्धकेशश्मश्रु[9]त्वं च शुभप्रदम्।

---

ख पाठः—

(1) 'सित' इति नास्ति। (2) निर्मल (3 बन्धनमध्यस्थपाठो नास्ति। (4) क्षितिगिरिपति वर्तोन्मूलनं च राज्यदम् इत्यधिकः पाठः (5) भुङ्क्ष्वेति शब्दव्याहाराः राज्यदाः (6) मूर्धविदारणं राज्यलाभाय (7) द्विजगुरुपुष्पित (8) मद्याभि (9) श्मश्रुनखरोमदवं च।

वराहः—

दृष्ट्वा स्वप्नं शोभनं नेह सुप्यात्
पश्चाद् दृष्टो यः स पाकं विधत्ते ॥
शंसेद् दृष्ट्वा तं च साधुद्विजेभ्य-
स्ते चाशीर्भिः पूजयेयुर्नरेन्द्रम् ॥

मत्स्यपुराणे (२४१-१९/२०—

एकस्यां यदि चेद्रात्रौ शुभं वा यदि वाऽशुभम् ।
पश्चाद्दृष्टश्च यस्तत्र तस्य पाकं विनिर्दिशेत् ॥

———

अथ दुःस्वप्नः[1]

मत्स्यपुराण- विष्णुधर्मोत्तरयोः —

(मत्स्य. अ. २४१)—

[2]नाभिं विनान्यगात्रेषु तृणवृक्ष[A]समुद्भवे २।
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गं पङ्कदिग्धता ॥ (३)
उच्चात् प्रपतनं चैव [3]दोलारोहणमेव च ।
[B]अर्चनं खड्गलोहानां हयानामपि मारणम् । (४)

---

ख पाठः —

(1) दुःस्वप्नाः (2) नाभेरन्यत्र (3) दोलायामवरोहणम् ।

मुद्रितपाठः—

A- समुद्भवः B- अर्जनं पङ्कलोहानाम् ।

रक्तपुष्पद्रुमाणां च चण्डालस्य तथैव च ।
[1]वराहार्द्धखरोष्ट्राणां तथा चारोहणक्रिया ॥ (५)
भक्षणं पक्वमांसानां तैलस्य कृसरस्य च ।
नर्तनं हसनं चैव विवाहो गीतमेव च ॥ (६)
[A]तन्त्रीवाद्यातिरिक्तानां वाद्यानामपि वादनम् ।
[B]स्रोतोवहाधोगमनं स्नानं गोमयवारिणा । (७)
[2]पङ्कोदकेनापि तथा [3]महीतोयेन चाप्यथ ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥ (८)
शक्रध्वजाभिपतनं पतनं शशिसूर्य्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥ (९)
देवद्विजातिभूपाल[C]प्रजानां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥ (१०)
हानिश्चैव स्वगात्राणां विरेचवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥ (११)
[D]फलाप[4]हारश्च तथा शाद्वलानां विशोधनम् ।
[E]गृहाणां चैव पातश्च गृहसम्मार्जनं तथा ॥ (१२)

---

ख पाठः—

(1) वराहर्षभखरो (2)पक्वतोयेनापि (3) महातोयेन (4) फलोपहार ।

मुद्रितपाठः-

A- तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम् B- स्रोतोवगाहगमनं
C- गुरूणां D- फलापहानिश्च तथा पुष्पहानिस्तथैव च
E- ग्रहाणां चोपघातश्च ।(ग्रहणां चैव पातश्च)

क्रीड़ापिशाचक्रव्याद[A]वा[1]नरान्त्यनरैरपि ।
पराद्भिभवश्चैव तस्माच्च व्यसनोद्भवः ॥ (१३)
काषायवस्त्रधारित्वं त[2]द्वत्स्त्रीक्रीडनं तथा ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥ (१४)
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ।(१५)

पराशरः—

[3]श्ववानरोष्ट्रखरनकुल[4]मार्जारमहिषद्वीपिभासाद्यप्रशस्तान्यद्रंष्ट्रिनखिक्रव्याददर्शनम् अभिद्रवणं वा तैः क्लेशाय। यानं व्याधये मरणाय वा । वधो वधाय । निपातः परविजयाय । केशरोमनखदर्शनपतनशिरोरत्नाभरणपतनानि च्छेदनाय। हरणं व्याधिक्लेशबन्धुनाशाय

श्मश्रुकर्मोन्मर्दनं घृततैलवसावपाभ्यङ्गः अमानुषैरसकृदभिद्रवणं व्याधिक्लेश[5]भवाय । घृतोदकुम्भकमण्डलुप्रस्थानच्छत्ररज्जुदर्शनं लाभो वाध्वगमनाय ।

मत्तप्रव्रजितनग्नमौण्ड़िकपाशुपत - नदीनदह्रदतीर्थाभिदर्शनं [6]शुकमयूरमूषिकाजानटनर्तकशरणगीतवादित्रं, (स्वयं वा

---

ख पाठः —

(1) वानराश्वतरैरपि (2) तद्वत्स्त्रीक्रीडनं (3) श्वमार्जारोष्ट्रः (4) वानर (5) भयाय (6) शुकमयूरमूषिकाञ्जनत्रपुसीसकताम्रलोहानां दर्शनं चात्रपतनं पङ्कवल्मीकपांशुसिकतासु रोहणं कलिक्लेशाय । स्वोहर्म्यभवनप्रासादपतनं स्वगृहादुत्थितरुदितानां निष्क्रमणं सर्वस्वनाशाय। नगरपुरशिखरतोरणेन्द्रध्वजसुरपतिभवनपतनं राज्यनाशाय ।

मुद्रितपाठः- A- वानरर्क्ष

गीतनृत्यादिवादित्रं), कांस्यभाण्डावभेदः, प्रवेशस्तमसि शून्यभिन्नागारेषु च शुष्कवृक्षदर्शनारोहणं, भूमेश्च खननम्, अशनिमेघतमोनीहारदर्शनम्, कृमिकीटपतङ्गदंशमशकमक्षिकाभिदर्शनम्, अभिलम्भनं वा अंजनत्रपुताम्रसीसलोहानां दर्शनम्, गर्भप्रचलनम्, पङ्क वल्मीकपांशुसिकताधिरोहणं कलिक्लेशाय ।

स्वहर्म्यभवनप्रासादपतनं स्वगृहाद्दुस्थितरुदितानां निष्क्रमणं सर्वनाशाय । नगरपुरशिखरतोरणेन्द्रध्वजसुरपतिभवनपतनं राजनाशाय ।

बराहः—

सर्पे [1]कर्णे नासिकायां प्रविष्टे

तच्छेदः स्याद् वेष्टनेनाशुबन्धः ।

तथा—

देववर्जितचित्रकर्मदर्शने शोकः,

औषधपाने रोगः, हरिणारोहे भ्रमणम् ।

पराशरः—

कुसुमितकिंशुककोविदारकरवीरचैत्यय[2]ष्टियूपाधिरोहणं, कृष्णनीलरक्तवस्त्राभिः स्त्रीभिर्याम्याशाभिकर्षणं करवीरकमलमालाबन्धो, भस्मतैलवसापानमनुलेपनं च मरणाय ।

---

ख पाठः—

(1) सर्पे कर्णं नासिकां च प्रविष्टे शिरः स्वेदस्थोद्भवे चेष्टनाशः ।

(2) वृक्ष ।

[1]कालावल्याम्—

रक्तगन्धप्रलिप्ताङ्गो रक्तमाल्योपशोभितः ।
खरमारुह्यवेगेन दक्षिणां दिशमाव्रजेत् ॥

मरणलिङ्गमित्यर्थः ।

देवलः—

कृष्णैश्च विकृतैश्चैव पुरुषैश्चोद्यतायुधैः ।
पाषाणैस्ताडयते स्वप्ने षण्मासानथ[2] जीवति ।
दृष्ट्वात्मानं मृतं स्वप्ने द्वादशाहं स जीवति ॥
छिद्रं वासश्च कृष्णं च रक्तं वा बिभृयाच्च यः ॥
भस्माङ्गाराश्मकेशांश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद् यो दशरात्रं तु न जीवेत्तादृशः पुमान् ॥

---

ख पाठः—

(1) कलावत्याम्—

गृध्रगोमायुवर्गप्रेतपिशाचैर्यस्य देहो भक्ष्यते तस्य मृत्युः ।
सुवर्णरजतमूत्रपुरीषवमने दशमे मासि मृत्युः ॥

देवलः—

छर्दिमूत्र-पुरीषेषु सुवर्णं रजतं तथा ।
प्रत्यक्षं यदि वा स्वप्ने नवमासान् स जीवति ॥
दृष्ट्वा श्वानं मृतं स्वप्ने द्वादशाहं स जीवति ।
छिद्रं वासस्तथा कृष्णं रक्तं वा विभृयात्तु यः ॥
भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद् यो दशरात्रं तु न जीवेत् तादृशः पुमान् ॥

पराशरः— यक्षरक्षः पिशाचाद्यतीन्द्रियस्वप्नदर्शनं नवममासि मरणाय ।

इति अधिकः पाठः ।

(2) षड्मासान्नस ।

कालावल्याम्–

लोहदण्डयुतं कृष्णं पुरुषं कृष्णपिङ्गलम् ।
स्वप्ने च पार्श्वतो दृष्ट्वा त्रिमासान् मृत्युराप्यते ।

[1]सुश्रुते–

अन्त्यावसायिभिर्दक्षिणाशाकर्षणं व्याधये, रोगिणां मरणाय ।

लैङ्गे–

राक्षसवानरखरोष्ट्र[2]युक्तरथेन गायतो नृत्यतो दक्षिणाशागमनं मरणाय । कृष्णरक्ताम्बर[3]गायदप्सरोभिर्दक्षिणाशानयनं [4]रिष्टम् ।[5]

मार्कण्डेये— हसमान[6]नग्नश्रमणकदर्शनं रिष्टमुक्तम् ।

वायुपुराणे–

स्वप्ने निपतितः श्वभ्रे द्वारं चास्य पिधीयते ।
न चोत्तिष्ठति यस्तस्मात्तदन्तं तस्य जीवितम् ॥
अग्निप्रवेशं कुरुते स्वप्नान्ते यश्च मानवः ॥

मार्कण्डेये[A]–(४०--३१)

स्वप्नेऽग्निजलप्रवेशो न च निष्क्रमते चेन्मरणम् ।

---

ख पाठः—

(1) 'सुश्रुते' इति नास्ति (2) युतेन रथेन (3) म्बराभिः (4) मरणाय (5) सुश्रुते· कृष्णाम्बरमुक्तकेशनारोभिः दक्षिणाशानयनं रिष्टम् इत्यधिकः (6) नग्ननृत्त ।

मुद्रितपाठः–

A- स्वप्नेऽग्निं प्रविशेद यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥

चरके[A] – य: स्वप्नेऽम्भसा सीदति स्रोतसा च यो ह्रियते,

---

मुद्रितपाठः —

A –
गृध्रोलूक श्वकाकाद्यैः स्वप्ने मः परिवार्यते ।
रक्षः प्रेतपिशाचस्त्री चण्डाल द्रविड़ान्धकैः ।। २८
वंशवेत्रलतापाशतृणकण्टकसंकटे ।
संसज्जति हि यः स्वप्ने यो गच्छन् प्रपतत्यपि ।। २९
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि ।
श्मशानायतनश्वभ्रे स्वप्ने यः प्रविशत्यपि ॥३०
कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते ।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥ ३१
स्नेहपानं तथाभ्यङ्गः प्रच्छर्द्दनविरचने ।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ।। ३२
उपानद्युगनाशश्च प्रपातः पांशुचर्मणोः ।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चावभर्त्सनम् ।। ३३
दन्तचन्द्रार्कनक्षत्र-देवतादीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ।। ३४
रक्तपुष्पं बनं भूमिं पापकर्मालयाश्चिताम् ।
गुहान्धकारसम्बाधं स्वप्ने यः प्रविशत्यपि ।। ३५
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम् ।
दारुणामटवीं स्वप्ने कपियुक्तेन याति वा ॥ ३६
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥ ३७
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ३८
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ।। चरकः (५।५।३९)

रक्षः प्रेतपिशाच[1]स्त्रीचण्डालद्रविड़ान्धकैः
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते
कण्टकवंशवेत्रलतापाशतृणसंकटे मुह्यति प्रपतति वा ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च निलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ।
(५ । ५ । २७)

स्वप्नोऽयं व्याधितानां वधायाव्याधितानां व्याधये ।

नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने [A]सद्यो मरिष्यतः ॥
(५ । ५ । १४)

[B]स्वप्ने नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ॥
(५ । ५ । २२)

तस्यापस्मारा[2]न्मृत्युः ।

[C]शष्कुलोर्वाप्यपूपान् वा स्वप्ने खादति यो नरः ।
स चेच्छर्दयते तादृक् प्रतिबुद्धो न जीवति ॥
(५ । ५ । २४)

---

**ख पाठः—**

(1) ...... चैश्च चण्डालकबिड़ालकैः गृध्रोलूकवराहाद्यैः स्वप्ने यः परिदीयते कण्टकवेत्रवंशवेत्रलतापाशतृणसंकरे मुह्यति पतति वा ।

(2) स्मारोन्मादः ।

**मुद्रितपाठः—**

A- कुण्ठैः । B- मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २२

C- शष्कुलीरप्यपूपान्वे ।

प्रेतैः सह पिबन् मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य [A]म्रियते नात्र संशयः ॥ (५ । ५ । ८)

[B]चाण्डालैः सह बहुविधस्नेहपानं प्रमेहाय ।

[1]अन्यार्थस्वप्ने [C]रामायणे भरतस्वप्ने–(अयोध्या ६९)

संशुष्कः सागरश्चैव सूर्यो ग्रस्तश्च राहुणा । (११)
पीतं कार्ष्णायसे [2]चैनं निषण्णं कृष्णवाससम्[3] ।
प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ (१४)
प्रदीप्तमम्भसा शान्तं दृष्टवानस्मि पावकम् ॥
सीदन्तं च [4]तथाद्राक्षं पङ्के मग्नं महागजम् ।
विशीर्यमाणं शैलेन्द्रं भग्नं चैत्यमहाद्रुमम् ॥

---

ख पाठः—

(1) अकालस्वप्ने । (2) चैव । (3) वायसम् ।
(4) तथाऽद्राक्षं पङ्के लग्नं महागजम् ।
विशीर्यमाणं शैलेन्द्रं भग्नं चैत्यमहाद्रुमम् ॥

मुद्रितपाठः-

A- न जीवेन्न च मृज्यते ॥ (चरकः)
B- स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
वध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ (चरकः ५ । ५ । १६)
C- स्वप्नेपि सागरं शुष्कं चन्द्रं च पतितं भुवि । ११
पीठे कार्ष्णायसे चैव निषण्णं कृष्णवाससम् ।
सहसा चापि संशान्ता ज्वलिता जातवेदसः ।१२
अवदीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान् ।
अहं पश्यामि विध्वस्तान् सधूमांश्चैव पर्वतान् ।।१३
प्रहरन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ।। १४

[A]सुन्दरकाण्डे त्रिजटास्वप्नः—(२७-२३)

विमानात् पुष्पकादद्य पतितो रावणो मया । २३

कृष्यमाणः स्त्रिया दृष्टो मुण्डो रक्ताम्बरो हसन् । २४

तथा—

लङ्का चेयं पुरी कृत्स्ना स वाजिरथकुञ्जरा ।

सागरे पतिता दृष्टा भग्नगोपुरतोरणा । ३७

नन्दिपुराणे त्रिपुरवधे मयवाक्यम्—

मयाद्य दृष्टः स्वप्नान्ते पिनाकी क्रोधमूर्च्छितः ।

उदरेऽस्मतपुरीं सर्वां [1]प्रवेशयति वेगतः ॥

मौसले वृष्णिक्षये– (३–१ . २)

काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।

[B]स्त्रियः[2] स्वप्ने प्रसुप्यति द्वारकां परिधावति ॥

तथा—

अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु ।

[C]वृष्ण्यन्धकान्[3] प्रखादन्तः स्वप्ने गृध्रा भयानकाः ।

---

ख पाठः—

(1) निवेशयति । (2) स्वप्ने गृहे प्रमुह्यन्ती ।

(3) खादती च स्वप्ने चोष्ट्रान् भयानकीं ।

मुद्रितपाठः—

A- रक्तवासाः पिबन् मत्तः करवीरकृतस्रजः इति पूर्वार्द्धं विमानादिति उत्तरार्द्धम् । B- स्त्रियः स्वप्नेषु मुष्णन्ती । C- वृष्ण्यन्धकानखादन्त ।

[1]वराहः—

गोलिङ्गद्विज देवतापितृसुहृद् भूपाश्च शंसन्ति यत् ।
स्वप्ने तन्नियतं भवत्यवितथं चेष्टं शुभं वा फलम् ॥

तथा—

भूयः प्रस्वपनं नरस्य कथनं गङ्गाभिषेको जपः ।
शान्तिः स्वस्त्ययनं निषेवणमपि प्रातर्गवाश्वत्थयोः ॥
विप्रेभ्यश्च तिलान्न[2]होमकुसुमैः पूजा यथाशक्तितः ।
पुण्यं भारतकीर्तनं च कथितं दुःस्वप्नविच्छित्तये ॥

मत्स्यपुराणे— (२४-१६ । १७)

स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनम् ।
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम् ॥

पराशरः—

देवद्विजार्चाप्रतिपूजनानि [3]मन्त्रेण जाप्यानि पवित्रसेवा ।
तिलान्नगोभूमिहिरण्यदानं दुःस्वप्नसंदर्शननाशनानि ॥

नारदः-

चन्द्रादित्ययोराकाशे स्वप्ने चैवार्धदर्शने ।
प्रातः स्नातस्तिलाना[4]मयुतं जुहुयात्ततः ॥

---

ख पाठः —

(1) वराह इत्यारभ्य तद्वचनं नास्ति ।

(2) दान

(3) मन्त्रोपजाप्यानि ।

(4) नां च अयुतं ।

(तिलोसि इति मन्त्रेण ततः सम्पद्यते शुभम्)[1]

ब्राह्मणान् भोजयेद्दद्याद्दानं[2] च विविधं ततः ।

षड्भिर्मासैश्च सम्पूर्णैरन्यथा मरणं भवेत् ॥

[A]याज्ञवल्क्यः[3]–

... ... मित्यपामार्गहोमो दुःस्वप्ननाशनः ।

तथा–

दुःस्वप्ने नाभिमात्रमुदकमवतीर्य

[4]सहस्रं गायत्रीमावर्तयेच्छान्तिर्भवति ।

मार्कण्डेये–देवीमाहात्म्यविषये---

दुःस्वप्नं च[5] तथा दृष्टं सुस्वप्नमुपजायते ।

मन्त्रराजकल्पे---

दुःस्वप्नेष्वपि दृष्टेष्ववशिष्टा[6] निशा जाग्रता नेया ।

पव(जप)मानमन्त्रशक्त्या सुस्वप्नो भवति तत्क्षणादेव ॥

नरसिंहकवचे[B]--

सुखारोग्यप्रदं नृणां धन्यं दुःस्वप्ननाशनम् ।

---

ख पाठः–

(1) धेनुं च दक्षिणां दद्याततः सम्पद्यते शुभम् (2) दानानि विविधानि च ।

(3) अपादा इत्यपा– (4) गायत्र्या सहस्रमावर्तयेत् ।

(5) दुःस्वप्नं च नृभिर्दृष्टं (6) अवशिष्टा जाग्रता निशा नेया ।

मुद्रितपाठः–

A- याज्ञवल्क्यस्मृतौ नास्ति । B- इदं रहस्यमायुष्यं बलपुष्टिविवर्द्धनम् ।

इति पूर्वार्द्धम् । (नारदीय पञ्चरात्रोक्तं नरसिंहकवचम्) ॥

अन्यत्र च—

सहस्रनामपठनमुक्तं दुःस्वप्ननाशनम् ।

विद्याकरपद्धतौ—

[1]आदित्यस्योदयप्राप्तौ विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नं तु[2] निहन्ति सः ।

[3]नरसिंह[A]पुराणे– (३४ । ५३)

दुःस्वप्नदर्शने घोरे ग्रहपीडासु चात्मनः ।
तथा महाज्वरग्रासे[4] धारां देवस्य मूर्धनि ॥
सन्ततां नरसिंहस्य कुर्याद्वा कारयेद् बुधैः ।
होमं च भोजनं चैव तस्य दोषः प्रशाम्यति ॥

ब्रह्मपुराणे---

महोदधिस्नानं दुःस्वप्न[5]नाशनम् ।

मत्स्यपुराणे— याम्या शान्तिराथर्वणी दुःस्वप्ने ।

विष्णुधर्मे---

अश्वत्थं [6]भास्करं गङ्गां नैमिषारण्यमेव च ।
पुष्करं च गयां चैत्र रेवां चैव सरस्वतीम् ।
प्रयागं ब्रह्मसदनं दण्डकारण्यमेव च ।
संस्मरिष्यन्ति ये मर्त्या न ते दुःस्वप्नभागिनः ।

---

ख पाठः–

(1) आदित्योदयसम्प्राप्ती (2) दुःस्वप्नं प्रतिहन्ति सः (3) नृसिंहपुराणे (4) महाज्वरान्ते (5) दुःस्वप्ननाशनमुक्तम् (6) भारतं गां च ।

मुद्रितपाठः–

A- तथा महाज्वरेति मध्यवर्त्ति श्लोको नास्ति ।

तथा—

अग्नित्रयं त्रीणि च पुष्कराणि
रामत्रयं त्रीणि पदानि विष्णोः ।
हरं त्रिनेत्रं त्रिपथां च गङ्गां
स्मरामि दुःस्वप्नविनाशनाय ॥

तथा—

दुःस्वप्ने स्मर गोविन्दं विपत्तौ मधुसूदनम् ॥

यदा तु व्याधितोऽ[1]न्तर्दशादिरिष्टकाले वा दुःस्वप्नं मरणसूचकं पश्यति तदा [2]तुलापुरुषादिमहादानं लक्षहोमं वा समर्थः कुर्यात्, असमर्थस्तु विष्णुभक्तिमेव सततं कुर्यादिति ।

इति [3]श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपेरात्रिमध्यमयामद्वयकृत्यम् ।

---

ख पाठः—

(1) दशारिष्टकाले ।  (2) तुलापुरुषमहादानम् ।

(3) 'श्रीमहामहोपाध्याय' इति पाठो नास्ति ।



## मरणलिङ्गानि

दुःस्वप्नप्रसङ्गादन्यान्यपि मरणलिङ्गानि तत्तन्नैमित्तिक कथनार्थमिहैव कथ्यन्ते ।

चरकः—

**मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम् ।**

सुश्रुतः—

**शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।**
**तत्त्वरिष्टं[1] समासेन कथितं मुनिपुङ्गवैः ॥**

तच्चारिष्टं द्विविधं, नियतमनियतं च । तत्र कालमृत्युसूचकं नियतम् । गणितशतायुः[2]समाप्त्या मरणं कालमृत्युः । अकालमृत्युसूचकमनियतम् । अन्तर्दशा-योगरिष्टक्रूरदशा-मरणम् अकालमृत्युः ।

तत्र कालमृत्यौ प्रतीकाराभाव इति केचित् ।

**[A]न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः ।**
**शक्नुवन्ति परित्रातुं नरं कालेन पीड़ितम् ॥**

इति महाभारतात् अकालमृत्यौ प्रतिकाराः ।

वस्तुतस्तु कालमृत्योरपि प्रतीकारस्य वक्ष्यमाणत्वात् "शतायुर्वै पुरुष" इत्यादिसिद्धशब्दवत् कीर्त्तनात् सिद्धं शतवर्षपर्यन्तम् । ग्रहषोडशं

---

**ख पाठः —**

(1) तच्चारिष्टम् (तत्रारिष्टम्) । (2) गणितशतायुः प्राप्त्या ।

**मुद्रितपाठः—**

A- न मन्त्रा न तपो दानं न माता न पिता सुतः ।
शक्नुवन्ति परित्रातुमागतां मत्समीपतः ॥
(पुना) Appendix— 13. 20. 101

वर्षशतमित्यादिकमङ्गलवाक्याच्च षोडशाधिक-शतवर्षपर्य्यन्तम्। गणितायुः समाप्तावपि ([1]आयुर्वृद्धिकरकर्मणा आयुर्वृद्धिर्भवत्येव। यत्तु "रिष्टशान्त्यायुर्वृद्धि"रिति) व्याख्यानं तद्गणितशतायुःसमाप्तेः पूर्वं रिष्टसम्भावनायां तन्नाशकत्वेनायुर्वृद्धिकर्माण्युपयुज्यन्ते। [2]तदूर्ध्वमपि आयुर्वृद्धि[3]कर्माणि शतवर्षपर्यन्तायुर्वृद्धौ यथायोग्यं व्याप्रियन्ते।

शतात्परं तु आयुर्वृद्धिर्न कर्मणा नौषधादिनापि, सहस्रसंवत्सराधिकरणे निर्णीतत्वात्।

यद्यपि तत्र—

**पञ्चाशतः त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः।**

इतित्रिवृदादिपदस्य अहर्वाचित्वात् संवत्सरपदस्य शतान्यवाचिनो लक्षणामाश्रित्याहःपरत्वमाश्रित्य निर्णयः कृतस्तथापि सिद्धवच्छतायुरित्यनुवादात् अर्द्धोदयादियोगरुण्डीभूतजनसमूहमध्येऽपि शताधिकवर्षायुर्मनुष्यादर्शनात्।

**अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः**

**(मनुः- १ । ८३)**

**चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे।**

**(मनुः- १ । ८१)**

इति मनुवचनात्।

---

**ख पाठः—**

(1) बन्धनमध्यपाठो नास्ति।

(2) तदूर्ध्वं तु

(3) कराणि।

शतपदस्य बहुपरत्वेन चतुर्भागेन शतसंख्यमेवेति, [A]मेधातिथिव्याख्यानात्, पुराणादौ •सहस्रायुःपुरुषकथनस्यान्यपरत्वोपपत्तेः शतवर्षपर्यन्तमेवायुः ।

अन्ये तु—

**दशवर्षसहस्राणि दशवर्षशतानि च ।**
**त्रेतायुगे विशुद्धात्मा रामो राज्यमकारयत् ।**
**षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।**
**अलर्कादपरो नान्यो बुभुजे पृथिवीमिमाम् ।**

[1]इत्यादेः, दीर्घजीविमार्कण्डेयादिदृष्टत्वेन ( इत्यादि मार्कण्डेयादौ दीर्घजीवित्वद्रष्टत्वेन)[2] प्रामाण्योपपत्तेः, "चतुर्वर्षशतायुष" इत्यादेश्च क्लेशेन कुव्याख्याने मानाभावात्, शतायुरस्येत्येवं शतायुःपदस्य चतुःशतायुष्यपि सम्भवात्, द्विवचन बहुवचन-विग्रहनिषेधस्य [3]चोत्सर्गत्वेन प्रमाणान्तरेण तात्पर्यग्रहे साधुत्वोपपत्तेः, [4]शतसंख्याधिकमप्यायुर्योगवशाद् भवत्येव । यथा तस्मात् प्रजा दशमासान् गर्भे स्थित्वा सम्भवतीत्यस्य सिद्धवत् कीर्त्तनस्यैकादश[5]द्वादश-मासादिगर्भवास[6]दर्शनेन, "संवत्सर[7]जातस्ये"त्यादिचयन निमित्तकथने संवत्सरगर्भवासकीर्त्तनाच्च दशमासस्यौत्सर्गिकत्वम् । एवं शतायुष्यमौत्सर्गिकमिति ।

---

**ख पाठः—**

(1) इति (2) तु स्मरणस्य दृष्टमूलत्वेन (अधिकपाठः) ।

(3) चोत्सर्गत्वे (4) शतसंख्यागत योगादिवशाद् ।

(5) द्वादशमासादिषु (6) दर्शनात् (7) जातस्य स्यादित्यादि चयन ।

**मुद्रितपाठः —**

A- ननु'सषोडशवर्षशतमजीवत्' इति परमायुर्वेदे श्रूयते । अतएवाहुर्वर्षशतशब्दोऽत्र वयोभेदप्रतिपादकः । चत्वारि वयांसि जीवन्तीति । न पुरायुषः प्रमीयन्ते, नाप्राप्य चतुर्थं वयो प्रमीयन्ते । अतएव द्वितीये श्लोकार्द्धे वयो ह्रसतीत्याह ।

## अरिष्टानि

यथा पराशरः—

मन्दा बुद्धिः सूक्ष्मदर्शिनी सूक्ष्मा वा ॥ मन्दा चेत्तदा मृत्युः । लज्जा चेन्नश्यति, कान्तिस्मृतिधृतिश्रियोऽकस्माद् [1]यदि भजन्ते तस्य मृत्युः ।

तथा—

[A]शयनासनादिभ्योऽविद्यमानवस्तु विचिन्व तां रिष्टम् ।

तथा—

यैः [2]पूर्वं तृप्तिस्तेषु द्वेषः प्राणक्षये । तथा भयधैर्य्यविपर्य्यासः । अतिक्रुद्धोऽतिभीतश्चेद् वर्षमेकं [3]स जीवति ।

तथा—

अकस्मात् स्थूलोऽकस्मात् कृशः[4] । [B]भिषग् भैषज्यगुरु-[5]मित्रद्वेषोऽरिष्टम् । देवद्विजावज्ञा च ।

भारते- (उद्योग ३३ । ९३ . ९५)

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते । (७५)

---

ख पाठः—

(1) यं । (2) येषु पूर्वं तोषः । (3) न । (4) च (अधिकः) । (5) मित्र ।

मुद्रितपाठः—

A- शयनादासनादङ्गात् काष्ठात् कुड्यादथापि वा ।
असन्मृगयते किंचित् स मुह्यन् कालचोदितः ॥ चरकः ५ । ११ । १९

B- भिषग् भेषजपानान्न गुरुमित्र द्विषश्च ये ।
वशगा सर्व एवैते बोद्धव्याः समवर्त्तिनः ॥ चरकः ५ । ११ । २५

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति
[1A]नैतान् स्मरतिकृत्येषु याचितस्याभ्यसूयति
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ।

नयनरिष्टम्

देवलः—

अरुन्धती-[2]ध्रुव-सोमच्छाया-महापथानामदर्शने, वर्षान्ते मृत्युः ।[3]छायाच्छादितचन्द्रबिम्बैकदेशादर्शनं रिष्टम् । निर्मलाकाशे चन्द्रसूर्ययोः प्रभां यदि न पश्यति तथा वह्निच्छायां तारागणं वा, तदा वर्षान्ते मृत्युः ।

चरकः—

तारकाणामग्निवद्दर्शनं चन्द्रवत् सूर्यं पश्यति, सूर्यवच्चन्द्रं[4] तदा व्याधितस्य मृत्युः । आकाशगङ्गारोहिण्योरदर्शनं रिष्टम् । [5]भ्रूमध्यादर्शनम असम्पूर्णस्य चन्द्रस्य पूर्णत्वदर्शनं रिष्टम् । सप्तर्षि-ग्रह[6]चक्र निर्मल[7]दिक्स्वघ्राण-स्वरसनानामदर्शनं च ।

[8]अरुन्धत्याद्यदर्शने मयूरचित्रे शान्तिः ।

---

ख पाठः—

(1) नैतान् इति श्लोकार्द्धं रमते इति श्लोकार्द्धात् परमस्ति । (2) ध्रुव(नास्ति)
(3) सोमच्छाया वर्णनं चन्द्रच्छाया । (4) सुश्रुत । (5) ( ) भ्रूमध्ये इत्यादि वाक्यं नास्ति । (6) चन्द्र । (7) निर्मलप्राणस्वर श्रीनामदर्शनम्
(8) अरुन्धत्यदर्शने ।

मुद्रितपाठः—

A- मूलग्रन्थे—

नैतान् स्मरतीति रमते निन्दये त्यनयोर्व्यत्यासः ।

हिरण्मय-यथेच्छस्वर्णकृत स्वमूर्त्तिदानम् । 'ब्रह्मजज्ञान'मिति मन्त्रेणाष्टोत्तरोदुम्बर[1]समित्पञ्चसहस्रहोमः । चरुप्राशनम् । अदृष्टार्थं ब्राह्मणेभ्यो भूरिदक्षिणा ।

रश्मिरहितं सूर्यं, दिवा रश्मिवन्तं वा वह्निं पश्यति मृत्यवे ।

नारदः—

भूमिच्छिद्रं, रविच्छिद्रं दृष्ट्वा मासमेकं जीवति । [2]इमारुते इति मन्त्रेण [3]सर्षपाहुतिसहस्रद्वयहोमः । वृषभो दक्षिणा ।

गार्ग्ये—

एकशृङ्गमशृङ्गं वा विशीर्णं पूर्णमेव वा
प्रतिपद्युदितं चन्द्रं यः पश्यति स नश्यति ।

चरकः[A]- (५ । ४ । १३ . १५)

मृन्मय-मसीपात्रसदृशत्वेन सूर्य्यदर्शन-
मपर्वणि ग्रहणदर्शनं च मृत्यवे ।

---

— -ख पाठः—

(1) समिधां च । (2) इमारुद्रायेति । (3) सहस्राहुतिः ।

मुद्रितपाठः-

A- मृण्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ १३
अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम् ।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ १४
नक्तं सूर्यमहश्चन्द्रमनग्नौ धूममुत्थितम् ।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १५

रात्रौ सूर्यं, निष्प्रभं वह्निं, धूमं चानग्नौ दृष्ट्वा मृत्युः ।

मार्कण्डेये- (४०-१०)

अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रिताम् ।

[A]उदकेन्द्र[1]धनुर्वापि जीवितं[2] द्वित्रिमासिकम्

शक्रायुधं चार्धरात्रे दिवा ग्रहगणं तथा ॥

कालावल्याम्—

दिवोल्कादर्शनं मरणाय ।

मयूरचित्रे—

विना वातं विना मेघं तोयपाते जनक्षयः ।

मासत्रयस्य मध्ये च प्रभुर्दृष्टा विनश्यति ।

अत्र शान्तिः—

[3]कया नश्चेति मन्त्रेण, वेतससमित्सहस्रेण[4]

होमः, गौर्दक्षिणा, विप्रभोजनम् ।

कालावल्याम्—

छत्रध्वजविमानानि दृश्यन्ते गगने यदि ।

मासत्रये द्रष्टुर्मृत्युः । वृक्षाग्रे गन्धर्वनगरदर्शनं

कालावल्यां दशमे मृत्युदम् ।

लैङ्गे-

प्रेतपिशाचदर्शनं सुवर्णसमवृक्षदर्शनं चैवम् ।

---

ख पाठः—

(1) उत्तरे चेन्द्रधनुर्वा । (2) तु (अधिकपाठः) । (3) कया नश्चित्र ।
(4) समित्सहस्रहोमः ।

मुद्रितपाठः—

A- रात्राविन्द्रधनुश्चापि जीवितं हि त्रिमासिकम् ।

कालावल्याम्—

कृष्णपिङ्गलाकस्मिकपुरुषदर्शनं रिष्टम् ।

पराशरः—

पृथिवीमिव चाकाशमाकाशमिव मेदिनीम् ।
आकाशमिव चात्मानं पूर्णमिन्दुमपर्वणि ।
तोयवन्मेदिनीं तोयं मेदिनीमिव पश्यति ।
शुक्लकृष्णविपर्य्यासं स्थूलसूक्ष्मविपर्ययम् ।
विपर्य्यासं सदसतामीक्षते जीवितक्षये ।

सुश्रुतः— (सूत्र- ३० । १८ . १९)

धूमनीहारवासोभिरावृतामिव मेदिनीम् । (१८)
प्रदीप्तमिव[A] चालोकं यो वै प्लुतमिवाम्भसा ।
भूमिमष्टापदाकारां रेखाभिर्यश्च पश्यति ॥ (१९)
[B]स्वस्थः स लभते व्याधिं व्याधितो [1]मृत्युमृच्छति ।

[C]चरकः— (५ । ४-८)

आकाशे यस्य वायुः प्रत्यक्षं तस्य मृत्युः ।

आदित्यपुराणे—

समीपस्थमाह्वयन्तं समीपस्थो न

---

ख पाठः—

(1) मृत्युमेति च ।

मुद्रितपाठः—

A- चालोकं यो वा B- आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥

C- यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति चादीप्तस्तस्यायुःक्षयमादिशेत् ॥ २३

जानाति चेन्मृत्युः। तथा आपूर्य्य वदनं जलैः [1]प्रत्यक्षं फूत्कृत्य जलकणौघमध्ये शक्रधनुः प्रत्यहं येन दृश्यते यदा तन्न पश्यति तदा रिष्टम्।

लैङ्गे-

दिवा वा यदि वा रात्रौ प्रत्यक्षं यो निहन्यते।
हन्तारं न च पश्येच्च स गतायुर्न जीवति।

कालावल्याम्-

एकत्र हंसकाक-शिख[2]ण्ड़कानां चरण[3]मेलनदर्शनं रिष्टम्।

मयूरचित्रे—

खरोष्ट्राः श्वमृगाला वृत्तस्था द्रष्टुमृत्युदाः।
सायं चोषसि रात्रौ वा ज्योत्स्नावत्यां प्रयत्नतः।
बाहू वितत्य चाशा[4]यां छायामालोक्य सर्वतः
[5] ( )

---

ख पाठः—

(1) प्रत्येकं। (2) शिखण्डिनां। (3) मन्दक ( – ) (4) वा सायं।

(5) शनैरुत्तोलयेन्नेत्रे स्वच्छाया दृश्यतेम्बरे
न दृश्यते यदा तत्र शिरो मरणमादिशेत्
दक्षबाहोरदर्शने भ्रातृनाशो भवेद्ध्रुवन्
वामबाहोर्व्यदृष्टौ तु नाशः पुत्रकलत्रयोः।
आदित्यपुराणे सूर्योदये चेति ··· ··· मपस्तथा।
इति अधिकपाठः।

ईषत्प्रविततौ बाहू जानूपरि निधापयेत्
एकीकृत्य करावूर्द्ध्वं दिदृक्षुस्तु करोद्भवम् ।
रक्ताशोकनिभां छायां लक्षयेत् प्रत्यहं नरः
यदा त्वेकदलं तत्र विकाशि परिलक्षयेत्
तस्यामेव तदा नूनं पूर्ववत् परिकल्पयेत् ।

षण्मासे मरणमित्यर्थः ।

---

मोक्षधर्मे—

परचक्षुषि स्वप्रतिविम्बदर्शनं वर्षे मृत्युदम् । तथा यस्य चक्षुषि बहुभिः स्वप्रतिबिम्बो न दृश्यते तस्य मृत्युः ।

वायुपुराणे—

घृते तैले तथादर्शे तोये वा नात्मनस्तनुम् ।
यः पश्येदशिरस्कां वा मासादूर्द्ध्वं न जीवति ॥

[A]सुश्रुतः- (सूत्र-३०।२१-२२)

श्व-काक-कङ्क-गृध्र-प्रेत-यक्षरक्षः पिशाच नाग[1]सदृशत्वेन स्वप्रतिविम्बदर्शनं रिष्टमाह ।

---

ख पाठः-

(1) नाना सत्व ।

मुद्रितपाठः-

A- ज्योत्स्नादर्शोष्णतोयेषु च्छायां यश्च न पश्यति ।
पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्त्वजाम् । २१
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ।
पिशाचोरगनागानां भूतानां विकृतामपि ॥ २२
यो वा मयूरकण्ठाभं विकृतं वह्निमीक्षते ।
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥२३

तथा—

श्या[1]वा लोहितका नीला पीतका वापि स्वच्छाया रिष्टम् ।

नारदः—

विकृतप्रतिबिम्बदर्शने प्रतिबिम्बादर्शने वा इमा रुद्रायेति घृताहुतिसहस्रद्वयहोमः । वृषभो दक्षिणा ।

— इति नयनरिष्टम् —

## अथ श्रोत्ररिष्टम्

पराशरः—

गीताध्ययनवाद्यानामकस्माच्छृणुयाद्ध्वनिम् ।
प्रवृत्तानां न शृणुयाद् विपरीतं शृणोति च ॥
वाचं दद्यात्यनाहूत आहूतो न शृणोति च ।
दिव्यं ध्वनिं वा शृणुयाच्छृणुयाद्वापि भैरवम् ॥

एतानि रिष्टमित्यर्थः ।

मार्कण्डेये— (४०-२८)

पिधाय कर्णौ निर्घोषं न शृणोत्यात्मसम्भवम् ॥[A]

स न जीवतीत्यर्थः ।

अकस्माद् घण्टानाद श्रवणं कालावल्यां रिष्टमुक्तम् ।

यदि वा सुरतान्तेषु घण्टानादः श्रुतो भवेत् । तस्य षण्मासात् ।

---

ख पाठः —

(1) श्यामा । (2) च्छवर्णं नचेत् ।

मुद्रितपाठः —

A– नश्यते चक्षुषोर्ज्योतिर्यस्य सोऽपि न जीवति । इति उत्तरार्द्धम् ।

—घ्राणरिष्टम्—

चरकः---

यो वै गन्धं न गृह्णाति शान्ते दीपे च मानवः ।

[A]सुश्रुतः—

विपर्ययेण यो वेत्ति गन्धानां साध्वसाधुताम् ।

स्वस्थः स लभते व्याधिं व्याधितो मृत्युमाप्नुयात् ॥

– रसनारिष्टम् –

ज्योतिःपराशरः --

षण्णां रसानां [1]पर्य्यास इष्टानिष्टविपर्ययः ।

अभक्ष्यलौल्यमत्यर्थं मरणायोप[2]जायते ।

सुश्रुतः-- (सूत्र-३०।१२)

यो वै [B]रसान् न सम्वेत्ति तं ब्रुवन्ति गतायुषम् ॥

---

ख पाठः —

(1) पर्य्याय (2) मरणायोपपादयेत् ।

मुद्रितपाठः—

A– सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ।

गृह्णीते वान्यथा गन्धं शान्ते दीपे च नीरुजः । १३

यो वा गन्धान्न जानाति गतासुं तं विनिर्दिशेत् । (सूत्र– ३०-१४)

चरकेऽपि—

विपर्ययेण यो विद्याद् गन्धानां साध्वसाधुताम् ।

न वा तान् सर्वशो विद्यात्तं विद्याद् विगतायुषम् । (५।४।२१)

B- यो वा

## त्वग्रिष्टम्

विष्णुधर्मोत्तरे-

श्लक्ष्णं खरं खरं श्लक्ष्णं शीतोष्णस्य विपर्ययम्
अकस्माद्वेत्ति यो देही दुर्लभं तस्य जीवितम् ।

चरकः—

प्रहारं नाभिजानाति स गच्छेद् यमसादनम् ।

संक्षेपतस्तु चरकः—(५ । ४ । २४)

अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम्
इन्द्रियैरधिकं पश्यन् पञ्चत्वमुपगच्चति ।

## प्रत्यवयवरिष्टानि

उत्पाटितान् केशान् न जानाति चेत् षड्भिर्दिनैर्मृत्युः चरकोक्तः ।

कालावल्याम्—

मस्तकादुपरि धूममधारानिर्गमाः [1]पञ्चाहपर्यन्तं त्रिवर्ष-मृत्युलिङ्गम् ।

[A]चरके— (५ । १२ । ३)

गोमयचूर्णाभचूर्णं मस्तके रिष्टम् । मस्तकमारुह्य गतः कृकलाशो वर्णत्रयं बिभर्त्ति चेन्मृत्युलिङ्गम् ।

---

ख पाठः—

(1) पञ्चदिनपर्यन्तम् ।

मुद्रितपाठः—

A- यस्य गोमयचूर्णाभं चूर्णं मूर्धनि जायते ।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥

कालावल्यां देवलः–

काकः कपोतो गृध्रोवा निलीनो यस्य[1]मूर्द्धनि ।
क्रव्यादाः पक्षिणश्चान्ये षण्मासान्न स जीवति ।
गृध्र-काक-श्व-गोमायु-खरोष्ट्रैःसारसैः शरभ-भक्षणे मरणं वत्सरात् ।

### ललाटे

चरकः[A]–(५ । ११ । ६)

चन्द्ररक्तरेखादर्शनं ललाटे । अपूर्वान्यजीवसमूहदर्शनं च ललाटे वालेन्दुनिभनीलरेखादर्शनं वा षण्मासे रिष्टम्

### भूरिष्टम्

चरकः[B]– (५ । ८ । ६)

भ्रुवोरपूर्वाकृत्रिमसीमन्तावर्त्तिदर्शनं त्र्यहरिष्टम् ।

[C]अक्षिपक्ष्मणि जटा मृत्युलिङ्गम् ।

### अक्षिरिष्टम्

विनारोगं नयनस्रावो रिष्टम् । [D]तस्य चेच्चक्षुषी प्रकृति-

---

मुद्रितपाठः-

A– लेखाभिश्चन्द्रवक्राभिर्ललाडमुपचीयते ।
यस्य तस्यायुषः षड्भि र्मासैरन्तं समादिशेत् ॥

B– भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून् ।
असजानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत् ।
त्र्यहमेते न जीवन्ति लक्षणेनातुरा नराः ॥

C– तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः परासुरिति विद्यात् ।

D– तस्य चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते अत्युत्पिण्डते, अतिप्रविष्टे, अतिजिह्मे, अतिविषमे, अतिमुक्तबन्धने, अतिप्रसृते सततोन्मिषिते, निमिषोन्मेषातिवृत्ते, विभ्रान्तदृष्टिके, विपरीतदृष्टिके, नकुलान्धे, कपोतान्धे, अलातवर्णे, कृष्णपीतनीलश्यावताम्रहरितशुक्लवैकारिकाणां वर्णानामन्यतमेनातिप्लुते स्यातां, तदा परासुरिति विद्यात् ॥
(चरकः ५ । ३ । १२)

विहीने, अतिविपुले अतिनिर्गते अतिप्रविष्टे अतिजिह्मे अतिविषमे अति[1]विमुक्तबन्धने अतिप्रसृते सततोन्मिषिते [2]नकुलान्धे कपोतान्धे अलात[3] कृष्णनील-[4]शीत-ताम्र-हरित-शुक्लानां वैकारिकाणां वर्णानामन्यतमे एतं परासुं विद्यात् ।

नकुलान्ध-कपोतान्धलक्षणम्—

नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति ।
कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति ॥

## नासारिष्टम्

देवलः-

नासा तु[5] वक्रा भवति स ज्ञेयो नष्टजीवितः ।

विष्णुधर्मोत्तरे-

नासाभङ्गे ध्रुवहे मरणम ।

शोथं विना नासिकास्थौल्यं कृशदेहस्य रिष्टं चरके ।

## कर्णरिष्टम्

कालावल्याम्—

कर्णौ भ्रष्टौ स्वदेशतो रिष्टम् ।
गण्डयोः पीटके[6] रक्ते तस्यमृत्युरुपस्तितः

---

ख पाठः—

(1) अतिमुक्त । (2) नास्तिपाठः । (3) मन्दारवर्णे (4) श्याम-ताम्र-हरित (5) च । (6) पीठके ।

[A]चरकः– (५ । १ । २५)

यस्य नीलावुभावोष्ठौ तं च विद्यादूगतायुषम् ।

दन्तरिष्टम्

पराशरः [1]दन्तरिष्टे–

अकस्मात् परुषा रुक्षा दग्धास्थिसदृशाश्चलाः
सूक्ष्माः स्थूला विपर्य्यस्ता विरलाः संहतास्तथा ।
अतिह्रस्वा अतिदीर्घा नताः कर्करिणोऽशिताः
प्रकृत्या विकृता दन्ताः दृश्यन्ते जावितक्षये

जिह्वारिष्टम्

स्थूला निश्चेतना गुर्वी कण्टकोपचिता भृशम्
श्यावा स्थूलाथवा शुष्का प्रेतजिह्वाप्रसर्पिणी
स्वस्थस्य यदि [2]पञ्चाहं घण्टिकाविगत द्रवा ।
सुस्थो दिनशतं जीवेद्रोगी तूर्णं विपद्यते ।
[3]मुखादि अन्यवर्णं चेदद्धं रुद्धं च मृत्युदम्
आरक्तवर्णं पद्माभं मुखं सद्यो मरिष्यतः ।
कण्ठमूलेऽतिनिष्पन्दे षण्मासं नाभिपङ्कजे ।
चतुरः वृषणस्फुरणे, द्वयमूरु[4]स्फुर्त्तौ,सप्त जानौ मासाः ।

---

ख पाठः–

(1) दन्तरिष्टम् । (2) पञ्चत्वं घराटकानिगद द्रवा । (3) मुखादिमन्यवर्णं चेदन्यरूपं पश्यति । (4) द्वयमुरः स्फुर्त्तौ ।

मुद्रितपाठः–

A- यस्य नीलावुभावोष्ठौ पक्कजाम्बवसन्निभौ ।
मुमुर्षुरिति तं विद्यान्नरो धीरो गतायुषम् ॥

विष्णुधर्मोत्तरे- (३ । २३८ । १६)

सद्यः स्नातानुलिप्तस्य हृदयाद्[1]शिरो भवेत् ।

क्षिप्रं संशोषणं तस्य त्र्यहान् मरणमादिशेत् ।

चरकः-

तस्य चेदुदरे शिराः श्याव-ताम्र-हारिद्र-नील-शुक्ला वा स्युः परासुः स्यात् ।

## नाभिरिष्टम्

मार्कण्डेये—

मुखस्य चोष्मा शुषिरं च नाभेः शंसन्ति पुंसामपरं शरीरम् ।

[A]चरकः- (५ । ३ । ६)

शेफश्चा[2]त्यन्तमुक्तं तु निःसृतौ वृषणौ भृशम् ।

[3]मृत्युलक्षणमित्यर्थ ।

हस्तपादयोरनामिकोत्तरे देशे कृष्णरेखादर्शनं रिष्टम् ।

पादयोश्च कृष्णरेखा तथा । [4]अङ्गुलीनां सर्वथा स्फुटनं रिष्टम् ।

---

ख पाठः—

(1) हृदादि शिरसां भवेत् । (2) शीर्षश्चा त्यन्तमुक्तं तु ।

(3) भृशमित्यनन्तरम्— "मासद्वयं नरो जीवेत् निःश्वास्ये लिङ्गमर्मणि । कालावल्याम्— गच्छतः पुरतः पश्चात् निर्गमे बाहुजंघयोः । ब्रह्मसूत्र विनाशो वा नाशस्तस्येकवत्सरम् । हस्तौ पादौ च मन्ये च तालु चैवाति शीतलम्" मृत्युदमित्यर्थः- इत्यधिकः । (4) अलकानां ।

मुद्रितपाठः—

A- तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजंघोरुस्फिगुदरपार्श्वपृष्ठेषिका-पाणि-ग्रीवा-ताल्वोष्ठ-ललाटं स्विन्नं शीतं स्तब्धं वीतमांसशोणितं वा स्यात् परासुरयं पुरुषो न चिरात् काल मरिष्यतीति विद्यात् ।

[1]नखावीतमांसशोणिताः पक्वजाम्बुसदृशा मरणाय ।

[2]देवलः—

मारणे यस्य गात्रेषु परं मर्माणि कृन्तति

जीवेत् त्र्यहं जलस्पृष्टो नरस्य चेत्तदा द्व्यहम् ।

कालावल्याम्—

आकस्मिकस्थूल आकस्मिककृशः, बहुभोजनोऽपि दुर्बलः द्विबहुवर्णगात्रो वा मासार्द्धे म्रियते । देहस्य विरसत्वं मृत्युलिङ्गम् ।

चरकः- (५ । २ । २१)

मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।

विरसादपसर्पन्ति जन्तो[A]र्देहान् मुमूर्षतः ॥

तथा—

अतिसरसत्वमपि मृत्युलिङ्गम् ।

स्नातस्यापि मक्षिका यस्य देहं न त्यजति ।

---

ख पाठः—

(1) नखावीत मांस इत्यारभ्य...... यस्य देहं न त्यजति । इत्यन्तं नास्ति ।

(2) पांशौ वा कर्दमे वापि यस्य खण्डं पदं भवेत् । अग्रतः पृष्ठतो वापि सप्तमासान् न जीवति । अति ह्रस्वश्वासो दीर्घश्वासश्च मरणाय । ग्रसितो यस्य पत्राणि परं मर्माणि कृन्तति । जीवेत् त्र्यहं जलस्पृष्टो न स्पृशेच्चेत् तदा त्र्यहं न जीवति ।

मुद्रितपाठः—

A- काया ।

विष्णुधर्मोत्तरे—

[A]स्वशरीरदुर्गन्धोऽर्द्धमासात्मृत्युदः। छागसमगन्धश्चैवम्।

सुश्रुतः-(सूत्र- ३१। २५)

पङ्कमत्स्यवसातैलघृतगन्धाश्च ये नराः

[B]मृष्टगन्धाश्च ये वान्ति गतास्ते यमसादनम्।

चरकः- (५। २। ८)

[1]नानापुष्पोपगो गन्धो यस्य वाति दिवानिशम्

पुष्पितस्य वनस्येव [C]स वै पुष्पित उच्यते।

पुष्पितत्वं मरण-लक्षणम्।

अर्द्धं [2]शीतमुष्णमर्द्धं शरीरं मरणाय वै।

पांशुकीर्णानि गात्राणि मन्यते चायुषः क्षये।

एको वा यदि वानेको यस्य वैकारिकः स्वरः।

मृत्युलिङ्गमित्यर्थः।

अतिदीर्घोतिह्रस्वो वा भृशमुष्णोऽतिशीतलः।

इदं मृत्युलिङ्गम्।

सूर्योदये यस्य शिवा क्रोशन्त्यायाति संमुखम्।

मृगः पशुर्वा पक्षी वा स मनुष्यो विनश्यति।

---

ख पाठः —

(1) नाना पुष्पोपमो। (2) अर्द्धशीतमर्द्धमुष्णं।

मुद्रितपाठः —

A- मासेन विकृता नासा वक्रा च मरणप्रदा।
अर्द्धमासेन दुर्गन्धप्रभवं स्वशरीरतः॥ ३। २३८। १७

B- मृष्टान् गन्धांश्च ये वान्ति गन्तारस्ते यमालयम्।

C- नानाद्रुमलतावतः।

त्रिद्याकरपद्धतौ—

मार्गशीर्षशुक्लद्वादश्यामुपोष्य श्रीवासुदेवस्य द्वादशाक्षरमन्त्रं सुगन्धद्रव्येण द्वादशारचक्रे [1]सम्यग्विलिख्य तत्र वासुदेवमावाह्य [2]पूजयित्वा आयुःप्रमाणं [3]भगवन् मम प्रदर्शयेति संप्रार्थ्य स्वपेत् प्रातरभ्यर्च्य[4] विलोकयेत्। ततो यत् संख्याक्षर[5]लोपस्तत् संख्य मासे दिवसे मृत्युः।

ललाटे [6]मुकुलं बद्ध्वा न्यस्तनासाग्रलोचनः
[7]अधोग्रे मुकुलं पश्येत् कदलीकुसुमोपमम्।
दृश्यन्ते द्वादशदलान्यभ्यासात्तस्य मन्त्रितः
यदा त्वेकदलं नष्टं [8]रुद्रमासं स जीवति।
द्विहीने दशमासं च क्रमादेवं प्रकल्पयेत्।
यदा त्वेकदलं पश्येन्मासैकं तस्य जीवितम्।
दलैके चिछद्रं दृष्ट्वा तु छिद्रवृद्ध्या दिनक्षयः।

वसिष्ठयोगशास्त्रे—

वत्सरस्यादिकाले तु संजाते चोत्तरायणे
अनन्तरं वहेद्वायुर्दक्षिणे पञ्च नाडिकाः।
ततः सव्येऽपि नाडीनां पञ्च वायुर्वहे[9]द्यदि
[10]गतायुः स तु विज्ञेयो ह्यल्पायुश्चेत् तदन्यथा

---

ख पाठः—

(1) सम्यगालिखेत्। (2) पूजयेत्। (3) मम भगवन् दर्शय इति प्रार्थ्य स्वपेत्। (4) प्रातः रव्युदयमवलोकयेत्। (5) लोप इति नास्ति। (6) मुकुलीं। (7) नासाग्रे मुकुलं पश्येत् कदम्बकुसुमोपमम्। (8) दशमासं (9) भवेद्। (10) शतायुः स च विज्ञेयोल्पायुश्चेत्तत् तदन्यथा।

घटिका षड्वहेद्यस्य पञ्चविंशतिवत्सरान् ।
घटिका सप्त यस्य स्युः षष्ट्यायुः स तु विन्दतु ।
घटिकाष्टौ वहेद्यस्य पञ्चाशत् तस्य निर्दिशेत्
घटिका नव वहेद्यस्य तस्य त्रिंशत् समाधिकम् ।
घटिकानां दश वहेदष्टाविंशत् समाः स्थितम्
दिवसार्द्धं वहेद् यस्य पञ्चविंशतिवत्सरान् ।
दिनं यस्य वहेद् [1]याम्ये द्वादशाद्वं स जीवति
अहोरात्रं वहेद् वायुर्दशाद्वं[2] तस्य जीवितम् ।
दिनद्वयं वहेद्वायुरष्टौ वर्षाणि जीवति ।
दिन[3]त्रयं वहेद्वायुः षड्वर्षाणि स जीवति
चतुर्दिनं तु यस्य स्याच्चतुर्वर्षं स जीवति ।
पञ्चरात्रं वहेत् पौष्णं तस्यायुर्वत्सरत्रयम्
दशरात्रं वहेत् पौष्णं द्विवर्षान्मरणं भवेत् ।
वहेत् पञ्चदशाहानि तस्यायुर्वत्सरं भवेत्
दिनानि विंशतिर्वामे षण्मासायुः स जीवति ।
[4]पञ्चविंशतिरह्ना च त्रिमासायुः स विन्दति ।
षड्विंशतिदिनं यस्य द्विमासान् मरणं भवेत्
सप्तविंशतिश्चेद् [5]वामे मासमेकं स जीवति ।
अष्टाविंशतिरस्मिं[6] श्चेन् मासार्द्धं तस्य जीवितम्
एकोनत्रिंशदह्नां चेद् दशरात्रं स जीवति ।

---

ख पाठः—

(1) वहेदास्ये द्वादशाहं। (2) दशाहं। (3) नास्तिपाठः। (4) नास्तिपाठः
(5) याम्ये। (6) रह्ना श्चेन् मासार्द्धं।

त्रिंशद्दिनानि चेद्वामे पञ्चरात्रं स जीवति
एकत्रिंशद्वहेद्यस्य त्रिरात्रान्मरणं भवेत् ।
द्वात्रिंशतं वहेद्यस्य तस्यायुः स्यादहान्तिकम्
एकाहान्मरणं तस्य त्रयस्त्रिंशद्वहेद्यदि ।
आरभ्यायनकालं तु विषुवे चैव दक्षिणे
यथोक्तं सर्वसंक्रान्तिमतिक्रम्य दिवानिशम् ।
वायुश्चरति यस्यैवं क्रोधरोगादिपीड़ितः
म्रियते वत्सरादर्वागिति शास्त्रविदो विदुः ।

तथा—

माघमासस्य संक्रान्तिमारभ्य दिनपञ्चकम्
वायुर्यस्य वहेद्वामे[2] त्रिवर्षं तस्य जीवितम् ।

एवं चैत्रसंक्रान्तिमारभ्य यास्ये दिनपञ्चकवहने षड्वर्षं तस्य जीवितम् । ज्येष्ठे चेदेवं नववार्षिकम्, आश्विने पञ्चदशाब्दिकम् । मार्गशीर्षेऽष्टादशाब्दिकम् । कृष्णप्रतिपदमारभ्य दिनत्रयं सूर्ये दिनादौ वहति ततो दिनत्रयं चन्द्रे । ततो दिनत्रयं सूर्ये । ततश्चन्द्रे । तथा सावित्रयोगे वायुचारणे मृत्युज्ञानम् ।

जन्मराशिगते चन्द्रे सवितुर्यस्य[3] सप्तमे
सावित्रो योग इत्युक्तः पौष्णं योगं परे विदुः ।

तत्र काले वायुरेकत्वाद्ध दिनं वहति चेन्मृत्यु श्चतुर्दशाब्दे । तद्दिनमारभ्यैकैकं दिनं सम्पूर्णं चेद् वहेद् द्वादशाब्दे मृत्युः । सम्पूर्णमहोरात्रं चेद् दशाब्दे, सावित्रमारभ्य दिनद्वय चेदष्टादशाब्दान्ते ।दिनत्रयं चेत् षड्वर्षान्ते, दिनचतुष्टयं चेत् चतुरब्दान्ते । पञ्चाहं चेद् वर्षमृत्युः । षडहं चेत् चतुर्विंशत्यहोरात्रन्यून त्रिवर्षे, सप्ताहं चेद्द्विसप्ततिदिनन्यून त्रिवर्षे । अष्टाहं चेत् षड्विंशत्यधिक सार्द्ध द्विवर्षे ।

---

ख पाठः—
(1) याम्ये । (2) यामे । (3) यदि ।

नवाहं चेच्चतुर्मासाधिकद्विवर्षे मृत्युः दशाहं चेदद्विवर्षान्ते । एकादशदिनं चेच्चतुर्विंशत्यहन्यूनद्विवर्षे । द्वादशाहं चेद द्विसप्तत्यहन्यूनद्विवर्षे । त्रयोदशाहं चेत् षड्विंशत्यधिक सार्द्धवत्सरेमृत्युः ।

चतुर्द्दशदिनं चेच्चतुर्मासाधिकवर्षान्ते । पञ्चदशाहे वर्षान्ते । षोडशाहं चेद्वादशाहहीनवर्षान्ते । सप्तदशाहं चेत् षड्बिंशतिदिनहीनवर्षे । अष्टादशाहं चेद द्विसप्ततिदिनन्यूनवर्षे । ऊनविंशतिदिनं चेत् अष्टममासे । विंशतिदिनं चेत् षण्मासे । एकविंशतिदिनं चेत् पञ्चन्यून षण्मासे । द्वाविंशतिदिनं चेत् अष्टादशाहहीनषण्मासे । त्रयोविंशत्यहं चेत् षट्त्रिंशद्दिनहीनषण्मासे । चतुर्विंशत्यहं चेत चतुर्मासान्ते । पंचविंशत्यहं चेत्रिमासान्ते मृत्युः । षड्विंशत्यहे द्विमासान्ते मृत्युः । सप्तविंशत्यहं चेन्मासान्ते मृत्युः । अष्टाविंशतिदिने पक्षान्ते । ऊनत्रिंशद्दिने दशाहान्ते त्रिंशद्दिने पंचाहे । एकत्रिंशद्दिने त्र्यहात् । द्वात्रिंशद्दिने त्रिरात्रात् । त्रयस्त्रिंशद्दिने एकाहे । दक्षिणभागे वहने एतानि लिङ्गानि ।

तथा मङ्गलवार युक्तचतुर्थ्यां केवलायां वा त्रिरात्रव्रतयुक्त 'क' कारे क्लीववर्जद्वादशस्वरान् क का कि की कु कू के कै को कौ कं कः । अम् आम् इम् ईम् उम् ऊम् एम् ऐम् ॐ ओम् अम् अः गुरुवारे [1]स्नातो द्वादशस्वरेभ्यो नम इति पूजयित्वावलोकयेत् ।

**संपूर्णदर्शने तेषां जीवेद्द्वादशवत्सरान् ।**

यावद्वर्णलोप[2]स्तसंख्येऽब्दे मृत्युः ।सानुस्वारे मासः । केवले तिथिः ।

## (अपमृत्युहरकर्माणि)

एवं मृत्युलिङ्गं ज्ञात्वा यदि योगजान्तर्दशारिष्टनिर्णयो ज्योतिःशास्त्रात् तदा तद्ग्रहशान्तिः पूर्वं कर्त्तव्या । सा [3]चतुर्विधाग्रहतिथ्या,अयुतहोमो लक्षहोमः कोटिहोमश्च इति दोषगुरुलाघवमपेक्ष्य कर्त्तुश्च धनवत्तातारतम्येन व्यवस्था कर्त्तव्या । तत्प्रकार श्चास्माभिः शान्तिकपौष्टिकप्रदीपे प्रपञ्चितः ।

ख पाठः—

(1) स्नात्वा । (2) लोपस्तावत् । (3) सा च त्रिविधा ।

मार्कण्डेय पुराणे— (५५-६९.७१)

लोकवादांश्च शान्तिं च ग्रहपीडासु कारयेत् ।(६९)

[A]भूदोहानुपवासांश्च शस्तं चैत्याभिवादनम् ।

अद्रोहं सर्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः ।

वर्जयेदुशतीं वाचमतिवादांस्तथैव च । (७१)

शिवायतनभूमौ गोदोहः । चैत्याभिवादनमश्वत्थसेवनम् । जपहोमादिकं ग्रहपीडाशान्तिकामनया[1]भिहितम् । अस्य चापमृत्युत्वादपमृत्युहरकर्माण्य त्रोपयुज्यन्ते । तत्र चायुःकामकर्मणामुपरिष्टात्सूचितापमृत्युनिवर्त्तन व्यतिरेकेण स्वफलस्यायुषः संपादनाशक्तेरर्थादपमृत्युशान्तिः फलं सिध्यति । यानि त्वपमृत्युनिवारकत्वेनैव श्रूयन्ते तानि साक्षादेवोपयुज्यन्ते ।

विशेषश्चायम्—

रिष्टनिश्चयेऽपमृत्युनिवर्त्तकं प्रतिपदोक्तं वा कर्त्तव्यम् ।

आयुःकामकर्म[2] तन्निश्चये [3]तत्संशये च कर्त्तव्यम ।

बृहदारण्यके— (२ । १ । १०)

[B]य एवायं यन्तं पश्चात् शब्दोनूदेति तस्य चासुरिति

---

ख पाठः—

(1) कामनयाव विहितम् । (2) कर्मा तु । (3) तत्संशये इति नास्ति ।

मुद्रितपाठः -

A- अद्रोहानुपवासांश्च शस्तं देवादिवन्दनम् । दमोहोमस्तथादान स्नानं क्रोधादि वर्जनम् । अद्रोहं सर्वभूतेषु मैत्रीं कुर्यात्तु पण्डितः । वर्जयेदसतीं वाचमतिवादां स्तथैव च ।

B-स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेव मुपास्ते सर्वं ध्हैवास्मिं लोके आयुरेति नैनं पुराकालात् प्राणो जहाति ।

उपासनावतः । नैवं पुराकालात् प्राणो जहाति ।

इति अपमृत्युनाशः फलम्

[A]तथा– (बृहदा २ । १ । १२)

छायामयः पुरुषो मृत्युरित्युपासनावतः अपमृत्युनाशः मित्रविन्दा श्रीराष्ट्रमित्यायुः कामस्येति ।

आयुष्कामेन मित्रविन्दानामेष्टिः कर्त्तव्या । महाव्याहृतिभिर्दूर्वायुतहोमः ऋग्जुर्विधानोक्त आयुष्कामस्य ।

शंखः गायत्रीमधिकृत्य–

नर्त्तुकामोऽपमृत्युं च घृतेन जुहुयात्तथा ।

तत्र दोषापेक्षयाऽयुतमितो लक्षमितो वा गायत्र्या घृतहोमोऽपमृत्युतारकः ।

तथा [B]आयुःकामस्य ग्रहयज्ञः प्रसिद्धः ।

तापनीयश्रुतौ– (१ । २ । १)

यो मृत्योः पाप्मभ्यः संसाराच्च विभीयात् स [C]एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात् स मृत्युं जयति । स पाप्मानं तरति । संसारं तरति ।

---

मुद्रितपाठः —

A- सहोवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति सहोवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा मृत्युरिति वा अहमेतमुपास इत्यादि ।

B- श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि इति याज्ञ १।२९५ वचनात् आयुः कामना सिद्धयति ।

C- एवं ।

यद्यपि प्रतिग्रहमात्रान्मन्त्रस्य मृत्युजयः श्रूयते तथापि प्रयोगादवगन्तव्यः[1] । दृष्टे सत्यदृष्टकल्पनानुपपत्तेः ।

अभिषेकद्वारा मृत्युनाशकत्वोपपत्तेः । [2]अपमृत्युनाशने मुख्योऽभिषेकविधिः "मृत्योरपि मुच्यते मुखादिति (२५।१६) Aप्रपञ्चसारात् ।

तथा- (प्रपञ्चसार २५ । १६)

विभवानुरूपतोऽस्मै दातव्या दक्षिणा निजगुरवे ।
प्राणप्रदानकर्त्रे न च कार्यं वित्तशाठ्यममलधिया ॥

निजगुरुश्चाभिषेकाचार्यः ।

आङ्गिरसकल्पे [3]नृसिंहाभिषेकफलाधिकारे-

अपमृत्युजयो वापि [4]शत्रुजयो वापि

तद्विधिश्च-[5]

प्राणायामं विधायादौ यजमानः शुचिः स्वयम् ।
श्रीनृसिंहमनुस्मृत्य संकल्पं विधिवत्ततः ।
आचार्यं वृणुयात् सोऽथ गोमयेनोपलेपयेत ।
भूभागे च पंचवर्णरजोभिस्त्व[6]ष्टपत्रकम ।
पद्ममुल्लिख्य तन्मध्ये बीजमा[7]लिख्य तत्तले ।

---

ख पाठः—

(१) दवगन्तव्यम् । (2) तत्र अपमृत्यु । (3) नरसिंह । (4) महाशत्रु ।
(5) आङ्गिरसे इति अधिकः । (6) रष्ट । (7) मुल्लिख्य ।

मुद्रितपाठः-

A- यथोक्तमार्गेण समर्च्य साष्टकं सहस्रसंख्यं प्रजपेन् मनुं ततः ।
त्रिरुच्चरन्मन्त्रमथाभिषेचयेद् यमेष मृत्योः प्रतिमुच्यते मुखात् ॥ २५।१६

अत्र यद्यपि पद्ममात्रमुक्तं तथापि "Aसुलक्षितं मण्डलमन्यलक्षणैः" (२१ । १५) इति प्रपञ्चसारपाठात् सर्वतोभद्रBमण्डलं पद्ममध्ये लेख्यम् ।

**फलं समुल्लिखेत् पद्मपत्रेषु चतुरक्षरैः ।**
**अष्टसु प्रलिखेत्तत्र मन्त्रराजं विचक्षणः ॥**

कर्णिकायां क्षौमिति नृसिंहबीजं विलिख्य तदधस्ताद्देवदत्तस्याप-मृत्युं नाशयेति लेखनम् । पूर्वाद्यष्टपत्रेषु [1]मन्त्रस्य चतुश्चतुर्वर्णा[2]लेखनं च कार्य्यम् ।

**तद्बीजस्योपरिष्टात्तु तण्डुलान् स्थापयेत्ततः[3]**
**विष्टरे तत्र सौवर्णं राजतं ताम्रमेव वा ।**
**अम्भः[4]कुम्भं निधायात्र दिव्यवस्त्रैः ससूत्रकैः ।**

तन्त्रान्तरात् पार्थिवकुम्भं वा । दिव्यवस्त्रपदं कौशेयवस्त्रपर[5]मुत्तम-वस्त्रं वा । बहुवचनात्त्रयम् ।

**सितमाल्यैरलङ्कृत्य तन्मध्ये चन्दनादिकम् ।**
**चन्दनोशीरकर्पूरकुङ्कुमागुरुपाटलैः ।**
**कक्कोल जातिपत्रेलानागकेशरचम्पकैः ।**
**पञ्चरत्नानि निक्षिप्य यवाश्चाप्यत्र निक्षिपेत् ।**

---

**ख पाठः—**

(1) मन्त्रवर्णानां । (2) वर्णा इति नास्ति । (3) बुधः । (4) अद्रवणं कुम्भं ( ) उत्तममित्यादि नास्ति ।

**मुद्रितपाठः—**

A- विधाय तद्बीजविशिष्टकर्णिकं चतुश्चतुर्वर्णलसद्दलाष्टकम् ।
सुलक्षित मण्डलमन्यलक्षणैर्विधाय तस्मिन् कलशं प्रपूर्य्य च ॥

B- सर्वतो भद्रमण्डलमध्ये पद्मं लेख्यमिति पाठः संगच्छते ।

स्थापयेत्तस्य कुम्भस्योपरिष्टात् [1]पंच पल्लवान् ।
तेषु तण्डुलपात्रे च नारिकेलफलं क्षिपेत् ।
ततः प्राङ्मुख आचार्यः पूजयेद् विधिना, घटे ।
श्रीनृसिंहं समाहूय तत्तन्मूर्त्तिमलौकिकीम् ।

षोडशोपचारेण महाविभवेन पूजयेदित्यर्थः ।

शान्तिके पौष्टिके शुक्लश्चतुर्बाहुः सुधामयः ।
आयुष्ये कर्मणि तथा प्रसन्नवदनो हरिः ।

इति [2]वैरंचोक्तरीत्याध्यानम् ।

अष्टोत्तरसहस्रं तं कुशकूर्चेन मन्त्रयेत् ।

यजमानोऽपि घटस्योत्तरतः प्राङ्मुखो वसेत् ।

नृसिंहानुज्ञयाऽऽचार्य ऋष्यादींस्तत्र विन्यसेत् ।

नृसिंहमनुज्ञाप्य तस्य देहे ऋषिच्छन्दोदैवतकरन्यासाङ्गन्यासप्रत्यक्षरन्यासान् कुर्य्यादित्यर्थः ।

सोऽञ्जलौ नारिकेलं च कुम्भस्योपरिसंस्थितम् ।
[3]उपादत्ते ततस्तं [4]च तण्डुलैः परिवेष्टयेत् ।
[5]तं नृसिंहं समाध्यायन् त्रिः पठन्मुनिपुङ्गवः ।
तत्कुम्भवारिणाचार्योऽभिषिंचेत्तं नराधिपः
ततोऽस्मै दक्षिणां दद्याद् यथासौ परितुष्यति ।

वामनभवदासीये 'जातरूपशत'मितिवचनात् सुवर्णशत मुख्यम् । तदभावे सुवर्णरक्तिकाशतम् । तस्या[6]प्यभावे रक्तिकाचतुर्थांशशतम् । एतेषु प्रकारेषु गुरुर्येन तुष्यतीत्यर्थः ।

---

ख पाठः—

( ) नव । (2) प्रपञ्चसारोक्त । (3) पीठोपविष्टं च । (4) नाति ।
( ) श्रो । (6) स्याप्यसम्भवे सुवर्णरक्तिका ।

प्रपञ्चसारे (२५ । २०)—

सं प्रीणयित्वा गुरुमात्मशक्त्या

[A]संभोजयेद् विप्रवरान् यथावत् ।

स त्वैहिकीं सिद्धिमवाप्य [B]भूयः

परं परत्रापि पदं [C]प्रयाति ॥

इति अपमृत्युहरनृसिंहाभिषेकविधिः ।

—*—

स्वयं प्रोक्ते विशेषः—

रजसा महाचक्रं लिखित्वा तत्र कुम्भस्थापनम् । कुम्भे नृसिंहं पूजयित्वा पारचारेभ्योऽष्टदिक्षु बलिः । अनुलोमेन मन्त्रमुक्त्वा प्रतिलोमेन त्रिवारेणाभिषेकः । अभिषिक्तस्य शिरसि हस्तं दत्वा जपः ।

नित्यं सर्वेश्वरो देवो नित्यं गौरी सुरेश्वरी ।

रक्षतां त्वां महापुण्यं चक्ररूपी हरिस्तथा ॥

सुवर्णशतं दक्षिणा । राजा नगरं ग्राममश्वं वा । भक्षणभक्ष्यवस्त्रादिना गुरुतोषणम् ।

आङ्गिरसकल्पे-

दूर्वात्रिकसहस्रं गोघृतं तावच्च होमयेत् ।

तस्यायुर्वर्द्धते यद्वा दूर्वाहोमाच्च केवलात्

तथा—

उपसर्गे तु संप्राप्ते श्रीनृसिंहं प्रपूज्य च

शतधा मन्त्रितं भस्म न्यासस्थानेषु निक्षिपेत् ।

---

मुद्रितपाठः—

A- संपूजयेद् B- शुद्धं C- समेति ।

वर्णानुच्चारयन् सर्वोपद्रवं शमयेद् बुधः

मन्त्री दूर्वात्रिकेणैव मन्त्रराजमुदीरयन् ।

देहं सम्मार्जयेदस्य[1] तस्य रोगः प्रशाम्यति ।

सप्तकृत्वः शरीरं यो मन्त्रराजेन मार्जयेत् ।

स सर्वरोगं[2] शमयेत् श्रीनृसिंहप्रसादतः

तथा—

शतधा मन्त्रितं सूत्रं यस्य हस्ते निबध्यते ।

मन्त्रस्य शक्तितस्तस्य ग्रहणी रुक् प्रशाम्यति ॥

[3]यन्त्रसंबद्धगात्रस्य देहन्यस्तमनोस्तथा ।

भस्मसंलग्नदेहस्य बद्धसूत्रस्य वा तथा ॥

अभिमन्त्रितकायस्य सम्मार्जिततनोस्तथा ।

विधिना चाभिषिक्तस्य कृतहोमादिकस्य वा ॥

सर्वे रोगाः शमं यान्ति विशेषवचनं वृथा ।

जले दूर्वात्रिकैर्होमात्सर्वे नश्यन्त्युपद्रवाः ।

घृतस्यायुतहोमेन शाम्येत्सर्वाभिचारिकम् ॥

अत्र च—

सर्वं चैतत् कर्म कुर्याज्जपमात्रेण शक्तितः ।

इति वचनात् होमाद्यशक्तौ जपेनापि कार्य्यसिद्धिः । जपश्च होमसंख्यः नृसिंहपूजापूर्वकश्च ।

तदुक्तं तत्रैव—

होमाशक्तौ महाचक्रे नृसिंहमभिपूज्य च ।

होमसंख्यं [4]जपेत्सोऽपि ततः स लभते जयम् ॥

---

ख पाठः—

( ) दयस्य । (2) स सर्वरोगान् शमयेन्मन्त्रराजप्रसादतः ।

(3) हस्तसम्बद्धसूत्रस्य । (4) जपेद्योपि

केवल—

पूजाहोमजपा मुख्याः पूजाहोमौ च मध्यमौ ।
[1]अधमावर्च्चनजपौ जपः स्यादधमाधमः ॥
तस्मादुक्तेऽप्यनुक्ते तु पूजाहोमजपान् सदा ।
कुर्वीत तदशक्तौ [2]तु पूजाहोमौ ततश्चरेत् ॥
तत्राशक्तोऽर्च्चनजपौ तदशक्तौ जपेद् द्विजः ।

इति वचनादधिकारिभेदेन [3]तारतम्यम् । शक्तस्यानुकल्पे नाधिकारः ।

तापनीयश्रुतौ (१ । ५ । २)—मध्यचक्रमधिकृत्य

तदेतद्रक्षोघ्नं मृत्युतारकं गुरुणा
लब्धं कण्ठे बाहौ शिखायां वा बध्नीत ।
सप्तद्वीपवती भूमिर्दक्षिणार्थं [A]न कल्पते ।
तस्मात् श्रद्धया यां [4]कांचिद्[B] दक्षिणां
ददाति सास्य दक्षिणा भवति ॥

शुभदिने स्वस्ति वाच्य ममापमृत्युतारणार्थं संस्कृतमहाचक्रबन्धनमहं गुरुद्वारा[5] कारयिष्ये इति संकल्पः । [6]संस्कृतमहाचक्रबन्धने गुरुर्भवेति गुरुवरणम् ।

---

ख पाठः—

(1) अशक्तौ कर्मणामेष जपः स्यादधमः परम् (2) च पूजाहोमौ समाचरेत् (3) फलतारतम्यम् (4) कांचन दद्यात् सास्य (5) अहं करिष्ये (6) सुसंस्कृतमहाचक्रबन्धनकर्मणि ।

मुद्रितपाठः —

A- नावकल्पते । B- कांचिद्दद्यात् सा दक्षिणा भवति ।

अथ गुरुकर्म—

भूर्जपत्रे स्वर्णपत्रे वा चक्रलेखनम्। भूर्जपत्रे चेत् कुंकुमादिना[1]। अन्तर्बहिर्विभागेन पञ्चचक्रलेखनम्। मध्ये नाभिः, नाभ्यां प्रणवः, क्ष्रौमिति नृसिंहबीजं च लेख्यम्। तत्र सत्यज्ञानेत्याद्युक्तलक्षणनृसिंहध्यानम्। अकारः उकारः मकारश्च नाभ्यामेव बीजाधः। तेषु ब्रह्मविष्णुमहेश्वरचिन्तनम्। बीजस्य पार्श्वयोर्हंस इति वर्णद्वयम्। तत्र चन्द्रसूर्य्ययोश्चिन्तनम्। त्रिकोणाकाराणि पत्राणि। पत्राणामेव मूलानि वृत्तदण्डरूपाण्यरशब्दवाच्यानि। [2]प्रथमपत्रं षट्चक्रम्, षट्पत्रम्, षडरम्, नाभिसंलग्ना अराः। अराणां[3] दीर्घकाररूपमन्त्रबीजरूपया मायया पीतया बहिर्वेष्टनम्, [4]पत्रासंस्पर्शन वेष्टनम्। ईकारस्यैव मण्डलाकारतया लेखनम्। तदेव द्वितीयचक्रस्याराधारः।

द्वितीयचक्रमष्टपत्रमष्टारम्। तत्र ह्रीम् इति मायया शुक्लया मण्डलाकारत्वेन लिखितया वेष्टनम्। तृतीयचक्रं द्वादशाक्षरं[5] द्वादशपत्रम्। [6]तत्रापि ह्रीमिति मायया [7]श्वेतया वेष्टनम्। चतुर्थचक्रं षोडशारं षोडशपत्रम्। तत्र पीतया दीर्घकाररूपमन्त्रबीजमायया बहिर्वेष्टनम्। पंचमचक्रं द्वात्रिंशदर द्वात्रिंशपत्रम्। [8]ध्रा (प्रा) मिति शुक्लमायया वेष्टनम्। सर्वत्र [9]च पत्राणा[10]मग्राणि माया न स्पृशति। अनन्तरचक्रस्यारा मायालग्नाः। प्रथमचक्रस्याराणां पत्राणां च षड्तुत्वेन चिन्तनम्। ईशानादि क्रमेण सहस्रारं हुँ फट् इति सुदर्शनमन्त्रस्य प्रत्येकपत्रे प्रत्येकवर्णलेखनम्।

---

**ख पाठः—**

(1) गजमदमृगमदकाश्मीरैर्मन्त्रितमः सुरभिरोचनायुक्तैः। विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्यार्थी'ति प्रपञ्चसारे। (३४।२६) अन्यत्रच काश्मीरलोचनालाक्षामृगेभमदचन्दनैर्विलिखेद्धेमलेखिन्या पत्राणि सकलान्यपि। स्वर्णपत्र पक्षेऽप्येतैर्लेखनमित्याहुः। इत्यधिकपाठः। (2) प्रथमचक्रं षट्पत्र नाभिसंलग्ना अरा (3) पत्राणां (4) पत्राग्रसंस्पर्शनेन (5) द्वादशारं (6) अत्रापि (7) प्येतया (8) ह्रीमिति (9) च इति नास्ति 10) पत्राग्राणि।

तद्वर्णेषु शंखचक्रगदापद्मखड्गाङ्कुशपाशमुसलगदाहस्तरक्त[1] जटिलाष्टभुजोपविष्टसुदर्शनमूर्त्तिचिन्तनम् । द्वितीयचक्र[2]पत्रेषु (द्वितीयपत्रचक्रेषु) अष्टाक्षर नारायणमन्त्रलेखनमीशानादि । अराणामृग्वेदमयत्वचिन्ता । पत्राष्टकस्य गायत्रीच्छन्द[3]आत्मकत्वचिन्ता । अष्टस्व[4]क्षरेषु कृष्णवर्णचतुभु जा सितसुपीतक्षिति [5]लक्ष्मीपरिष्वक्तप्रदक्षिणबामोर्ध्वक्रमेण पद्मशंखचक्रगदाहस्तोपविष्टनारायणमूर्त्यष्टकचिन्तनम् ।

तृतीयचक्रस्यारा यजुर्वेदमयाः । जगत्यात्मकानि पत्राणि । ईशानादिक्रमेण ॐ नमो भगवते वासुदेवायेति द्वादशाक्षर[6]लेखनम् । द्वादशसु अक्षरेषु वामोर्ध्वक्रमप्रादक्षिण्येन [7]शंखचक्रगदापद्महस्तशुक्लवर्णास्मितपद्मोपविष्टद्वादशवासुदेवमूर्त्तिचिन्तनम् ।

[8]तृतीयचक्रस्य ह्रीमिति शुक्लया मायया वेष्टनम् । तत्संलग्नं षोडशारं षोडशपत्रं चतुर्थचक्रम्[9] । षोडशकल[10]पुरुषात्मकाः षोडशाराः । तदात्मकान्येव पत्राणि षोडश[11]पत्रेष्वीशानादि सबिन्दुकषोडशस्वरलेखनम् । तेषु केशवनारायणमाधवगोविन्द विष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरवासुदेवसंकर्षणप्रद्युम्नानिरुद्धानां चिन्तनम् । सर्वे [12]च चतुर्भुजाः । दक्षिणोर्ध्वक्रमेण प्रादक्षिण्येनायुधानि ।

**शङ्खचक्रगदापद्मैः केशवः कनकप्रभः ।**
**क्षीराभोऽब्जगदाचक्रशङ्खैर्नारायणः स्मृतः ॥**
**माधवः चक्रशंखाब्जगदाहस्तो जवानिभः ।**
**मनःशिलाभो गोविन्दो गदापद्मदरारिभिः ॥**

---

**ख पाठः—**

(1) चक्रेषु । (2) द्वितीयचक्रेषु । (3) आत्मत्वचिन्ता । (4) अष्टस्वरेषु । (5) लक्ष्मीभ्यां । (6) क्षरमन्त्रलेखनम् । (7) चक्रशंखपद्मगदा । (8) तृतीयचक्र.........षोडशपत्रम् इति पाठो नास्ति । (9) चक्रस्य । (10) कल इति नास्ति । (11) षोडशसु पत्रेषु । (12) च इति नास्ति ।

[1]पद्मशंखारिगदो विष्णुश्चालक्तकप्रभः ।
शंखचक्रगदापद्मै रर्जुनो मधुसूदनः ॥
[2]सगदाशंखचक्राब्जो नीलाश्माभस्त्रिविक्रमः ।
[3]गदाचक्रशंखपद्मै र्वामनो नवमेघवत् ॥
चक्री दरी गदी साब्जः श्रीधरः कुमुदप्रभः ।
काश्मीराभो हृषीकेशः स चक्राब्जदरो गदी ॥
पद्मचक्रगदाशंखैः पद्मनाभोऽञ्जनद्युतिः ।
दामोदरः शंखगदाचक्राब्जैः क्षीरसन्निभः ॥
स्फटिकाभो वासुदेवः शंखार्यब्जगदाधरः ।
सङ्कर्षणो [4]गदाब्जारिगदाभिः कनकप्रभः ॥
शंखी गदी साब्जचक्रः प्रद्युम्नो वज्रसन्निभः ।
गदी शंखी साब्जचक्रस्त्वनिरुध्दोऽसितप्रभः ॥

एवं [5]ध्यात्वा [6]ईमितिदीर्घेकारपीतमायावेष्टनलेखनम् । तत् सलग्नमेव द्वात्रिंशदरं द्वात्रिंशत्पत्रं पञ्चमचक्रम् । सामवेदात्मका अराः । अनुष्टुवात्मकानि[7] पत्राणि । ईशानादि तन्मन्त्रराजा[8]क्षरप्रत्येकलेखनम् । तत्र प्रत्येकं द्वात्रिंशन्नृसिंहमूर्त्तिचिन्तनम् । नृसिंहाकारमुखाः सर्वे त्रिलोचनाः

दधाति स्रुक्स्रुवौ ब्रह्मा विष्णुश्चक्रं सशंखकम ।
महेश्वरः शूलचापौ पुरुषः शंखचक्रभृत् ॥

---

ख पाठः —

(1) सपद्म । (2) सगदाचक्रशंखोऽब्जो । (3) रक्तश्चक्रपद्मशंखैर्वामन उच्यते (4) दराब्जारि । (5) ध्यानम् । (6) ईमित्यादिपङ्क्तिर्नास्ति । (7) अनुष्टुप् छन्द आत्मकानि । (8) राजाक्षराणि लेख्यानि ।

दधाति चेश्वरः शूलं डमरुं च यथाक्रमम् ।
[1]लेखनी पुस्तकं चेति द्वे दधाति सरस्वती ॥
पद्मद्वयं दधाति श्री गौरी नीलोत्पलद्वयम् ।
प्रकृतिश्च तथाविद्या पाशाङ्कुशधरे उभे ॥
[2]अभीतिवरदाश्चैते धवलाश्च चतुर्भुजाः ।
एकादशोदरे[3] विश्वरूपधृक् चक्रशंखिनः ॥
ॐकाराङ्कितवक्त्रास्तु[4] पीत ॐकार उच्यते ।
ॐकारानन्तरं मात्राश्चतस्रस्तस्य संस्थिताः ॥
वेदाः साङ्गा [5]सशिखाश्चक्रे ज्ञेयास्तदनन्तरम् ।
पञ्चाग्नयस्ततो ज्ञेयाः सप्त व्याहृतयस्तथा ॥
लोकपालास्ततश्चाष्टौ वसवोऽष्टौ ततः स्मृताः ।
रुद्राः परं[6] ततो ज्ञेयाः सप्त व्याहृतयस्तथा ॥
अष्टौ ग्रहास्ततः पश्चान् महाभूतानि पंच च ।
यात्रानेकात्मक[7]स्तेषामनेकमुखचिन्तनम् ॥
कालः [8]पाशाङ्कुशी कालश्चक्री शंखी मनुः सितः ।
धूम्रः पाशाङ्कुशी मृत्युः श्यामौ ज्ञेयौ यमान्तकौ ॥
तौ पाशमुद्गरधरौ प्राणश्चक्री दरी सितः ।
रक्ताब्जद्वयवान् रक्तः सूर्यः सोमस्तुपाण्डुरः[9] ॥
दधात्यमृतसंपूर्णं कुण्डं दण्डं च शोभनम् ।

---

ख पाठः—

(1) लेखनं । (2) द्वयं पङ्क्तिर्नास्ति । (3) दशोत्तरे । (4) च ।
(5) सशाखाश्चविज्ञेयास्तदनन्तरम् । (6) ततः परं । (7) त्मका ।
(8) पाशाङ्कुशाकार । (9) पाण्डरः ।

स [1]विराट् पुरुषो जीवः शुक्लश्चक्रदरायुधः ॥
सर्वैर्वर्णायुधैः सर्वं चेतनाचेतनात्मकम् ।

पञ्चवर्णं चतुर्भुजं चतुर्वक्त्रं शंखचक्रगदापद्महस्तं चेत्यर्थः । तस्य च ह्रीमिति शुक्लवर्णमायावेष्टनम् । चक्रस्य पूर्वे कं खं गं घं ङं चं छं जमित्यष्टवर्णलेखनम् । तत्र खड्गचर्मधरहरिद्वर्णवस्वष्टकध्यानम् ।

चक्रदक्षिणे झं ञं टं ठं डं ढं णं तं थं दं धमित्येकादशवर्णलेखनम् । तत्र शुक्लखट्वाङ्गधरजटिलभस्मच्छन्नशुक्लैकादशरुद्रचिन्तनम् । चक्रपश्चिमे नं पं फं बं भं मं यं रं लं वं शं षमिति द्वादशवर्णलेखनम् । [2]तत्र सुरक्ताब्जद्वयहस्तलोहितद्वादशादित्यचिन्तनम् । चक्रोत्तरे[2] सं हं ळं क्षं सं हमितिवर्णदशकचिन्तनम् । तत्र बाणधनुर्द्धरशुक्लदशविश्वेदेवचिन्तनम् ।

एवं महाचक्रं लिखित्वा तस्य प्रतिष्ठा । गोचर्ममात्रभूमिलेपनम् । तत्र खट्वायां तूलिकाशिरस्थानानां[3] स्थापनम् । तत्पूर्वे जलपूर्णता[4]म्रमयपञ्चरत्नपल्लवोदकुम्भं निधायेन्द्रादिपूजनम् । सुवर्णपत्रलेखनपक्षे पञ्चगव्येन पञ्चामृतेन स्नपनम् । [5]भूर्जपत्रपक्षे उभाभ्यां प्रोक्षणम् । अथवा भूर्जपत्रलिखितयन्त्रं सुवर्णरजतताम्रान्यतमडमरुके[6] निक्षिप्य तत्र स्नानम् । होमसपातावनयनं [7]च कार्यम् ।

खट्वोपरि दिव्यवस्त्रमास्तीर्य तत्र [8]चक्रस्थापनम् । [9]प्राणप्रतिष्ठामन्त्रेण प्राणप्रतिष्ठा । यन्त्रदेवतयोरभेदचिन्तनम् । तत्र मन्त्रराजेन महोपचारेण नृसिंहपूजनम् । सामगानां चक्रमालभ्य मन्त्रराजस्याष्टोत्तरसहस्रजपः । कुण्डे वैष्णवाग्निं संस्कृत्य घृतेन मन्त्रराजसहस्रहोमः । होमसपातस्य चक्रे पातनम् ।

---

ख पाठः—
(1) तेषु रक्ताब्ज । (2) चक्रस्योत्तरे । (3) शिरस्थानादिस्थापनम् । (4) ताम्रपात्रद्वय पञ्चरत्नपञ्चपल्लवोपेत कुम्भं । (5) भूर्जपत्रे ताभ्यां प्रोक्षणम् । (6) डमरुकुरके । (7) च इति नास्ति । (8) चक्र इति नास्ति (9) भूमौ रजसा महाचक्रलिखनम् तत्र खट्वास्थस्य महाचक्रस्य स्थापनम् । इत्यधिकं प्राणप्रतिष्ठेत्यारभ्य सहस्रहोम इत्यन्तं नास्ति होमसंपातइत्यारभ्य समानम् ।

अं ब्रह्मणे स्वाहेत्याहुतिः । तथा उं विष्णवे स्वाहा । मं महेश्वराय स्वाहा । हं सूर्याय स्वाहा । सं चन्द्राय स्वाहा इति पूर्वेषामष्टावष्टावाहुतयः । ततः सुदर्शनमन्त्रेणाष्टोत्तरशतहोमः । तथाष्टाक्षरमन्त्रेणाष्टोत्तरशतहोमः । तथा द्वादशाक्षरमन्त्रेणाष्टोत्तरशतहोमः । तथा सबिन्दुकस्वाहान्तषोडशस्वरेणाष्टोत्तरशतहोमः । पुनर्मन्त्रराजेनाष्टोत्तरशतहोमः । "अग्निमीले पुरोहित"मित्यृचा ऋग्वेदाय स्वाहेत्याष्टाहुतयः । एवं 'इषेत्वे'ति कण्डिकान्ते यजुर्वेदाय स्वाहेत्यष्टाहुतयः । तथा "अग्न आयाहि वीतय" इति सामवेदाय स्वाहेत्यष्टाहुतयः । [1]गायत्र्यै स्वाहा, जगत्यै स्वाहा । अनुष्टुभे स्वाहा, इत्यष्टावाहुतयः । ऋतुभ्यः स्वाहेत्यष्ट । वसुभ्यः स्वाहेत्यष्ट । रुद्रेभ्यः स्वाहेत्यष्ट, आदित्येभ्यः स्वाहेत्यष्ट । विश्वेभ्यो देवेभ्यः स्वाहेत्यष्टाहुतयः । सर्वाहुतीनां संपातस्य चक्रे पातनम् ।

ततो महाचक्राय नम इति पूजनम्, [2]स्नपनम् । ततः पुनर्नृसिंहपूजनम् । स्वस्तिवाचनम्, ब्रह्मघोषादिभिः कण्ठे बाहौ शिखायां वा मूलमन्त्रेण [3]पूजनम् गुरवे स्वशक्त्यनुसारेण सुवर्णदक्षिणादानम् । पूजार्थमहाचक्रसंस्कारे यन्त्रान्तरसंस्कारे च । होमान्ते यन्त्रपूजां कृत्वा पुनः स्नाप्य पुनस्तत्रेष्टदेवं पूजयित्वा रक्षणम् । यन्त्रप्रतिष्ठाकर्मणोऽङ्गत्वेन सुवर्णदक्षिणां [4]ददामीति दक्षिणादानम्, ब्राह्मणभोजनम्, शान्तिकरणम्, अच्छिद्रावधारणम् । इत्याङ्गिरसस्वयंप्रोक्तकल्पाद्यनुसारेण महाचक्रसंस्कारविधिः ।

**वसिष्ठयोगे—**

**संसारपाशबद्धानां योगिनां[5] मोक्षकाङ्क्षिणाम् ।**
**[8]नान्यत् पश्यामि भैषज्यं मृत्योस्त्रैयम्बकादृते ॥**

संसारिणां योगिनां च त्र्यम्बकमन्त्र एव मृत्युजयोपायः इत्यर्थः ।

---

**ख पाठः—**

(1) गायत्र्यै इत्यारभ्य...... देवेभ्यः स्वाहेत्यष्टाहुतय इति पर्यन्तं नास्ति ।
(2) स्नपनं इति । नास त (3) बन्धनम् । (4) ददानीति ।
(5) योगिनामप्ययोगिनाम् ।

यजुर्विधाने—

त्रियम्बकेनापमृत्युं जयति मृत्युमेव वा ।

त्र्यम्बकमधिकृत्य वसिष्ठकल्पे—

अनेनैव हि मन्त्रेण पूर्वं ब्रह्मर्षयोऽमलाः ।
मृत्युं विजित्य संप्राप्ता ऐश्वर्यमणिमादिकम् ॥

तत्रैव—

अपमृत्युजयोपायमहं वक्ष्याम्यतःपरम् ।
पूर्वोक्तदेशकालेषु शुचिर्भूत्वा समाहितः ॥
मधुत्रितययुक्ताभिर्दूर्वाभिर्जुहुयात् पुनः ।
अपामार्गैस्त्रिकैर्वापि शतमष्टोत्तरं तु वा ॥
श्वेतार्कसमिधैर्वापि जुहुयाद् गोघृतप्लुतैः ।
कपिलायाः [1]घृतं क्षीरं प्रशंसन्ति महर्षयः ॥

पूर्वोक्तदेशकालेष्विति—

मनोरमे शुचौ देशे गोमयेनोपलेपिते ।

इत्यादिदेशः ।

शान्तिकर्माभिचाराणा[2]मपमृत्युजयं तथा ।
त्रिषूत्तरासु पूर्वासु जन्मर्क्षत्रितये तथा ॥

उत्तरासु शान्तिः, पूर्वास्वभिचारः । जन्मर्क्षेष्वपमृत्युजयः ।

एवं कालः—

एकाहं च [3]द्व्यहं वापि दशाहं द्वादशाहिकम् ।
पक्षं मासं द्विमासं वा मासत्रयमथापि वा ॥

---

ख पाठः—

(1) अपि । (2) चाराणि अपमृत्युजयस्तथा । (3) त्र्यहं ।

अथवा चतुरो मासान् षण्मासानथ हायनम् ।
अब्दद्वयं त्रयं वापि मन्त्री कुर्य्यात्समाहितः ॥
अल्पेऽल्पकालं कुर्वीत जपहोमादिकाः क्रियाः ।

अत्र यत्र कर्मणि [1]संख्याम्नानं नास्ति तत्र एकाहादिवर्षान्तकालपरिच्छेदेन तद्दोषापेक्षया संख्या परिकल्पनम्। शतात् प्रभृति कोटिपर्यन्तम्। असंख्याते दोषश्रवणात्। यत्र तु संख्या श्रुतास्ति। यथा—

आयुष्कामो घृतेनाष्टौ जुहुयाल्लक्षसंख्यया।

इति तत्र लक्षेण फलासिद्धौ तस्यैव त्रिवर्षपर्यन्तावृत्तिरिति विवेकः। कपिलायाः क्षीरं घृतं चेत्तदा शस्तं मन्तव्यम्। तेनाप्यपमृत्युशान्तये होम इत्यर्थः तथा—

पलाशखदिराश्वत्थसमिद्भिर्जुहुयात् शुचिः।
बिल्ववृक्षोद्भवैर्वापि सोऽपमृत्योर्विमुच्यते ॥

तथा—

शनैश्वरदिनेऽश्वत्थं नित्यमालभ्य पाणिना।
मासान् मृत्योर्विमुच्येत किं पुनस्त्वपमृत्युतः ॥
अथोपायान्तरं वक्ष्ये साक्षान्मृत्यो र्निवर्त्तनम्।
प्रागुदक्प्रवणे देशे शुचौ स्थाने समाहितः ॥
तण्डुलैर्व्रीहिभिर्वापि चतुरस्रां समन्ततः।
हस्तप्रमाणमात्रेण वेदीं कृत्वा समाहितः ॥
तन्मध्ये स्थापयेत् कुम्भं सितसूत्रेण वेष्टितम्।
वासोयुग्मेन संवेष्ट्य तीर्थतोयेन पूरयेत् ॥

---

ख पाठः—

(1) संख्या नास्ति।

लवलीक्षीरवृक्षाणामथवा चूतपल्लवान् ।
प्रक्षिप्य तत्रालङ्कृत्य गन्धमाल्याक्षतादिभिः ।
पूजयेत्तत्र देवेशं जपेदष्टसहस्रकम ॥
अभिषिञ्चेत्तु तोयेन यमिच्छेद्रक्षितुं नरः ।
प्रोक्षयेद्वापि कूर्चेन राजानं तु विशेषतः ॥
राजा हि सर्वलोकानां पिता भवति धर्मतः ।
तस्यार्थं च प्रयत्नेन कर्म कुर्यात्तु शान्तये ॥
नापमृत्युभयं तस्य न च व्याधिकृतं भयम ।
तथा शत्रुकृतं नैव दीर्घमायुश्च विन्दति ॥
परार्थे धनलोभेन मोहादज्ञानतोऽपि वा ।
मृत्योर्निवर्त्तनं कुर्वन् स्वयं मृत्युमवाप्नुयात् ।
मातरं पितरं शिष्यं गोसहस्रप्रदायिनम् ।
आचार्यं च सदा रक्षेन्मन्त्रेणानेन मन्त्रवित् ॥

अत्र चाभिषिञ्चेदिति सामान्योक्त्या मन्त्रेणानेन रक्षेदित्युपसंहारेऽभिधानेन मन्त्रेणाभिषेक इति गम्यते । [1]मन्त्रगताभिषेकसाधनत्वं [2]यथा प्रदेशान्तरे मन्त्रराजादीनां दृष्टं [3]तथावगन्तव्यम् । तेन [4]कुशकूर्चेन स्पृष्ट्वा सहस्रजपेन कुम्भाभिमन्त्रणम् त्रिरुच्चारणेनाभिषेचनं च गम्यते । यथा प्रवर्ग्यस्य पौर्णमासधर्मग्राहकत्वेऽपि प्रोक्षणीः संस्कृत्येत्यभिधाने[5] पौर्णमासदृष्टप्रोक्षणीसंस्कारो गृह्यते ।

---

ख पाठः-

(1) मन्त्रस्य चात्राभिषेकसाधनत्वम् । (2) प्रदेशान्तरे यथा । (3) तथा अत्रावगन्तव्यम् । (4) कुम्भ इत्यधिकम् । (5) धानेन ।

अतएव ऋग्विधाने—

अनयार्चाभिषिक्तस्तु दीर्घमायुरवाप्नुयात् इति ।

त्र्यम्बकेनाभिषेकस्यायुर्वृद्धिकरत्वेनाप्ययमर्थो गम्यते ।

तथा—

औपासनाग्निहोत्रीयं गृहीत्वा भसितं सितम् ।
ततोऽभिमन्त्र्य तद् भस्म मन्त्रेणानेन मन्त्रवित् ॥
[1]तेनैव भस्मना मन्त्री सर्वाण्यङ्गानि [2]संस्पृशेत् ।
ललाटे हृदये कण्ठे बाह्वोश्चैव विशेषतः ।
अनेनैव विधानेन यस्य रक्षा कृता भवेत् ।
नापमृत्युभयं तस्य न च व्याधिकृतं भयम् ।
भवत्यव्याहतैश्वर्यो दीर्घमायुश्च विन्दति ।

अत्र औपासनाग्निहोत्रीयमिति द्वितीयाश्रुत्या संस्कार्यत्वा[3]दवगतं साहित्यमविवक्षितम् । तेन प्रत्येकस्य संस्कार्यत्वात् प्रत्येकमेवं भस्माङ्गसंस्कारकत्वेनोपादेयम् ।

### तथापमृत्युहराक्षरन्यासः

वसिष्ठकल्पे—

अथ न्यासविधिं वक्ष्ये मन्त्रस्यास्य महामुने ।
सर्वरोगप्रशमनं सर्वकारणकारणम ॥
येनैव मुच्यते सद्यो मृत्योः कालकृतादपि ।
अक्षराणि त्रयस्त्रिंशदस्मिन् मन्त्रे महामुने ॥

---

ख पाठः—

(1) मन्त्रवित् इत्यनन्तरं तेनैवभस्मनामन्त्र्य मन्त्रेणानेन मन्त्रवित् इत्यधिकः

(2) मन्त्रयेत् । (3) दङ्गावगतं ।

तानि देवास्त्रयस्त्रिंशदिति तन्त्रेषु निश्चितम् ।
आदितोऽष्ट वसून् विद्याद् रुद्रानेकादशान्ततः ।
ततश्च द्वादशादित्याः प्रजापतिरनन्तरम् ।
वषट्कारोन्तिमः प्रोक्तः सर्वारम्भमयः शिवः ।
एवमेतानि देवानां रूपाणि कथितानि वै ।
अक्षराणि न्यसेन्मन्त्री सर्वाङ्गेषु समाहितः ।
(क)पूर्वादिपञ्चस्थानेषु प्रथमं पञ्चकं न्यसेत् ।
दक्षिणस्य करस्यापि सन्धिस्थानेषु पञ्चसु ।
ततस्य देवतां ध्यात्वा न्यस्येत् पञ्चाक्षराण्यतः ।
[1]ततः पराणि पञ्चैव वामहस्ते न्यसेत् क्रमात् ।
ततस्तु दक्षिणे पादे सन्धिस्थानेषु पञ्चसु ।
पराणि पञ्च विन्यस्य वामपादे न्यसेत्तथा ।
ततस्तु दक्षिणे पार्श्वे वामपार्श्वे न्यसेत् क्रमात् ।
पृष्ठे नाभौ च गुह्ये च मुखाक्षित्रितये न्यसेत् ।
भ्रूमध्ये च परं ध्यायेत्त्रयस्त्रिंशद्धृदि न्यसेत् ।
एवं विन्यस्य सर्वाणि ततोऽन्ते प्रणवं न्यसेत् ।
यस्याङ्गेषु न्यसेदेवं मन्त्रं मन्त्री समाहितः ।
नापमृत्युभयं तस्य न च व्याधिकृतं भयम् ।
एवमेतेन रौद्रेण कवचेनाभिरक्षितम् ।
वेतालश्च पिशाचश्च गन्धर्वोरगराक्षसाः ।

---

ख पाठः—

(क) 'पूर्वादि' इत्यत्र 'मूर्द्धादि' इति सम्भवति । (1) ततोपराणि ।

**पराभिचारकृत्याश्च यच्चाप्यन्ये ग्रहादयः ।**

**द्रष्टुं न शक्तास्तेप्येनं साक्षान्मन्त्रशरीरिणम् ।**

**एतद्रहस्यं परमं [1]साक्षादेव मया श्रुतम् ।**

अत्र मूर्द्धादिपञ्चस्थानेष्विति—

मूर्द्धा, शिरःपूर्वभागः, शिरो दक्षिणभागः, शिरःपश्चिमभागः(क) । करस्य सन्धिस्थानेष्वित्यत्र सन्धिपदं सृष्टिन्यायेन कराग्रपरम् । एवमुत्तरतः । भ्रूमध्ये रुद्रध्यानमात्रं नाक्षरन्यासः । प्रणवस्यापि हृदये न्यासः सर्वाङ्गे वा । प्रणवं जपेदिति क्वचित् पाठः । अत्र [2]तद्देवतां ध्यात्वेति लिङ्गात् । वस्वष्टकादीनां प्रत्येकस्य वर्णात्मकत्वेन ध्यानम्, ॐ त्रि ध्रुवाय नम इति शिरसि, यम् अध्वराय नमः इति शिरः पूर्वभागे, वं सोमाय नम इति शिरोदक्षिणभागे कम् अद्भ्यो नम इति शिरः पश्चिमे । यम् अनिलाय नम इति शिरउत्तरभागे, जाम् अनलाय नम इति दक्षिणांस बाहुसन्धौ, मं प्रत्यूषाय नम इति दक्षिणकूर्परसन्धौ, हें प्रभासाय नम इति मणिबन्धस्थसन्धौ, सुम् अजैकपादाय नम इति अङ्गुलिमूलसन्धौ, गम् अहिर्बुध्नाय नम इति अङ्गुल्यग्रेषु । इति दक्षिणकरे ।

अथ वामकरसन्धिषु—

न्धि विरूपाक्षाय नम इति वामस्कन्धपार्श्वसन्धौ, पुं रैवताय नम इति कूर्परसन्धौ, ष्टि हराय नम इति मणिबन्धसन्धौ, वं बहुरूपाय नम इति अङ्गुलिमूलसन्धौ । र्द्धं त्र्यम्बकाय नम इति अङ्गुल्यग्रेषु ।

अथ दक्षिणपादसन्धिपञ्चके—

नं सावित्राय नमः इति ऊरुमूलसन्धौ । उं जयन्ताय नम इति जानुस्थसन्धौ, र्वा पिनाकिने नम इति गुल्फसन्धौ रुम् अपराजिताय नम इति पादाङ्गुलिमूलसन्धौ, कं धात्रे नम इति पादाङ्गुल्यग्रेषु ।

---

**ख पाठः —**

(1) साक्षाद्देवान् । (2) तत्तस्य देवतां ध्याये दिति । (क) शिरउत्तरभाग इति अपेक्ष्यते ।

अथ वामपादसन्धिषु—

।मम् अर्यम्णे नम इति ऊरुमूलसन्धौ । वं मित्राय नम इति जानुस्थसन्धौ । वं वरुणाय नम इति गुल्फस्थसन्धौ, न्धम् अंशवे नम इति पादाङ्गुलिमूलसन्धौ ।नाम् भगाय नम इति पादाङ्गुल्यग्रेषु ।

न्मृम् इन्द्राय नम इति दक्षिणपार्श्वे । त्यों विवस्वते नम इति वामपार्श्वे । मुं पूष्णे नम इति पृष्ठे । क्षीं पर्जन्याय नम इति नाभौ । यं त्वष्ट्रे नम इति गुह्ये । मां विष्णवे नम इति मुखे । मृं प्रजापतये नम इति लोचनद्वये । भ्रूमध्ये त्र्यम्बकरुद्रध्यानम् । तात् वषट्काराय नम इति हृदये । [1]ॐ शिवाय नम इति ॐकारं शिवं ध्यात्वा हृदि सर्वतनौ वा न्यासः । जपेदिति प्रणवस्य शिवत्वेन ध्यानपूर्वकं जपमात्रम् । अत्र च [2]विकल्पपाठव्याख्यानानां शिष्टात्मतुष्ट्या निजनिश्चयेनानुष्ठानम् । अस्माकं तु [3]प्रणवजपपक्षे विश्वासः ।

वसिष्ठकल्पे—

अथापरं प्रवक्ष्यामि योगं मृत्युभयापहम् ।
ग्रहरोगोरगादिभ्यो भयं येन न विद्यते ।
यथेच्छं तु सुवर्णेन कारयेदङ्गुलीयकम् ।
पञ्चलोहेन वा कुर्यात् त्रिलोहेनाथवा पुनः ।
विनायकं समभ्यर्च्य पुण्याहं वाचयेत्ततः ।
ततः संपूज्य देवेशं गन्धपुष्पादिभिः क्रमात् ।
त्रियम्बकेन मन्त्रेण मनसैव समाहितः ।
कुण्डे वा स्थण्डिले वापि विधिवन्मन्त्रकोविदः ।
जुहुयाद् गोघृतेनैव ध्यात्वा देवं निरञ्जनम ।

---

ख पाठः –
(1) ॐ नम शिवाय इति (2) वैकल्पिकपाठ व्याख्यानां (3) प्रणव जपप्रयोगे

शतं सहस्रमयुतं नियुतं वा यतव्रतः ।
होतुश्च दक्षिणे पार्श्वे हैमे वा राजते पिऽथ्वा ।
कांस्ये त्रपुमये वापि पात्रे न्यस्याङ्गुलीयकम् ।
सर्वाहुतिषु संपातं तस्मिन् संपातयेद् बुधः ।
ततः स्विष्टकृदारभ्य होमशेषं समाप्य च ।
अङ्गुलीयं स्पृशन्मन्त्रमष्टोत्तरशतं जपेत् ।
एवमाहुतिसंपातैः संस्कृतं चाभिमन्त्रितम् ।
अङ्गुलीयकमादाय मुहूर्त्ते शोभने तथा ।
वाचयित्वाशिषो विद्वन् ब्राह्मणैर्वेदपारगैः ।
अङ्गुष्ठेनामिकायां वा प्रदेशिन्यामथापि वा ।
सर्वदा सर्वरक्षार्थं धारयेदङ्गुलीयकम् ।
अथवानेन मन्त्रेण परिजप्यैव धारयेत् ।
अनेनैव विधानेन सर्वाण्याभरणानि च ।
नवानि धारयेद् यस्तु जीवेद् वर्षशतं बुधः ।
याः स्त्रियो धारयन्त्येवं नवान्याभरणानि च ।
माङ्गल्यं [1]परमं कान्तं सौभाग्यमतुलं तथा ।
वहून् गुणवतः पुत्रान् लभन्ते नात्र संशयः ।

तथा—

शनैश्चरदिनेऽश्वत्थं स्पृशन्मन्त्रमिमं जपेत् ।
साक्षान्मृत्यो[2]र्विमुक्तः स्यात्किं पुनस्त्वपमृत्युतः ।
अथवा पयसा देवमभिषिञ्चेद् घृतेन वा ।

---

ख पाठः—

(1) परमां कीर्त्तिं । (2) विमुच्येत ।

पलाशखदिराश्वत्थसमिद्भिर्जुहुयात्सुधीः ।
बिल्ववृक्षोद्भवैर्वापि सोऽपमृत्योर्विमुच्यते ।

तथा—

आयुष्कामो घृतेनाष्टौ जुहुयाल्लक्षसंख्यया ।
अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा ।
दूर्वातिलैर्वा जुहुया[1]न्मधुरत्रयसंयुतैः ।
गुलूचीखण्डिकाभिर्वा चतुरङ्गुलमानतः ।
अथवा जुहुयान्मन्त्री अक्षतैः शालितण्डुलैः ।
प्रसादितैस्तिलैर्वाथ[2] जुहुयाद्गोघृतप्लुतैः ।
पलाशसमिधावापि सर्वमायुरवाप्नुयात् ।
अथवा गोघृताक्तेन पायसेनाभिहोमयेत् ।
अथवा तर्पयेद्देवमुदकेन समाहितः ।
आसीनः प्राङ्मुखो भूत्वा जपेद् वा पूर्वसंख्यया
ब्राह्मणान् भोजयेत्तत्र वेदवेदाङ्गपारगान् ।

प्रपञ्चसारे (२८ । ३१)—

खसप्तमः कर्णयुतोऽर्धचन्द्रभाग्[A]
लपञ्चमो विन्दुयुतो ध्रुवादिकः ।
मनुस्त्वयं मृत्युजयात्मकः स्फुटं
समीरितः साधकरक्षणक्षमः ।

---

ख पाठः—
(1) मधुत्रितय । (2) वापि ।
मुद्रितपाठः —
A- वान् कुपञ्चमो द्वीन्दुयुतो ।

खसप्तमो जकारः, कर्णयुत उकारयुतः, अर्धचन्द्रभाग् बिन्दुयुतः, लपञ्चमः सकारः। प्रणवादित्र्यक्षरो मन्त्रः।

[1]ऋषिः कहलो दैवी तु गायत्री छन्द उच्यते।
मृत्युञ्जयो महारुद्रो देवता तु समीरितः।
[2]दीर्घयुक्तसकारेण षडङ्गानि प्रकल्पयेत्।

ध्यानम्- (प्रपञ्चसार २८।३३. ३५)

पुटितनलिनसंस्थं मौलिवद्धेन्दुरेखा-
गलादमृतजलार्द्रं चन्द्रवन्ह्यर्कनेत्रम्।
स्वकरकलितमुद्रापाशवेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि। (३३)

जप्तव्योऽयं मन्त्रवर्यः स्त्रिलक्षं
दीक्षापूर्वं होम [A]कृत्तद्दशांशैः।
दुग्धाज्याक्तैः शुद्धखण्डैर्गुलूच्या
गुर्वादेशात्साधको हव्यवाहे। (३४)

अर्चा कार्या नित्यशः शैवपीठे
स्यादप्यङ्गैर्लोकपालैस्तदस्त्रैः। (३५)

गुलूचीवटतिलदूर्वापयः सर्पिःपायसं सप्तमं च।
एतैस्तु सप्तभिर्हव्यैर्जुहुयात् सप्तवासरम्।

---

ख पाठः—

1- कहोलोऽत्र ऋषिर्दैवी गायत्रीछन्द ईरितम्। (2, दीर्घयुक्तजकारेण।

मुद्रितपाठः—

A- स्याद्दशांशैः।

क्रमाद्दशशतं नित्यमष्टोत्तरमतन्द्रितः ।
सप्ताधिकान द्विजान् नित्यं भोजयेन्मधुरान्वितम् ।
विकारानुगुणं मन्त्री वर्द्धयेद्धोमवासरान् ।
होतृभ्यो दक्षिणां दद्याद्धरितो[1] गाः पयस्विनीः ।
गुरुं संप्रीणयेत् पश्चाद्धनाद्यैर्देवताधिया ।
अनेन विधिनाऽसाध्यकृत्या[2] द्रोहज्वरादिभिः ।
विमुक्तः स[3] चिरं जीवेत् शरदां शतमञ्जसा ।
असाध्यरोगग्रासे च होमोऽयं शान्तिदः स्मृतः ।
द्रव्यैरेतैः प्रजुहुयात्त्रिजन्मसु यथाविधि ।
भोजयेन्मधुरैर्भोज्यै ब्राह्मणान् वेदपारगान् ।
दीर्घमायुरवाप्नोति वाञ्छितां विन्दति श्रियम् ।
एकादशाहुतीर्नित्यं दूर्वाभिर्जुहुयाद् बुधः ।
अपमृत्युजिदेव स्यादायुरारोग्यवर्द्धनः ।
त्रिजन्मसु सुधावल्ली[4]काश्मरीतनुलोद्भवैः ।
समिद्वरैः कृतो होमः सर्वमृत्युभयापहः ।
अपामार्गसमिद्धोमस्तथा मृत्युभयापहः ।
इति कृतयन्त्रविभूषितमण्डलमध्ये निधाय कलशमपि ।
आपूर्य चाभिषिञ्चेत् श्रीवश्याकरं ग्रहाभिचारहरम् ।
तत्र छिन्नोद्भवानां च समिद्भिश्चतुरङ्गुलैः ।

---

ख पाठः—

(1) दद्यादरुणा गाः । (2) साध्यं कृत्यं सर्वं यथोदितम् । (3) सुचिरं ।

(4) कास्मीर ।

दुग्धसिक्तैः समिद्धेऽग्नौ षट्सहस्रद्वयं हुनेत् ।
यस्तु वह्नौ जुहोत्येवं यावत्संख्येन साधकः ।
तावत्संख्यैः सुधाकुम्भैरग्निः प्रीणाति शङ्करम् ।
आप्यायितेऽग्निना सर्वः साधकश्चेप्सितान् वरान् ।

यजुर्विधाने महाव्याहृतिहोमाधिकारे—

दूर्वयायुष्कामः ।

तथा—

आकूत्या इति तिलाहुतोनाम् अयुतं जुहुयात नाकाले कश्चिन्म्रियते ।

आकूत्या इति परमेष्ठि-प्रजापति ऋषिः, यजुः, अग्निर्देवता [A]आकूत्या इत्यादिविधेम स्वाहेत्यन्तया कण्डिकया होमः ।

[B]युञ्जत इत्यनुवाकं सायं प्रातः प्रयुञ्जानो दीर्घायुर्भवति ।

[C]शतं व इत्याम्रसमिधः पलाशपत्त्राणि वा जुहुयादायुष्मान् भवति

शतं व इत्यस्य प्रजापतिः ऋषिः, अनुष्टुप् छन्दः, ओषधयो देवताः, होमे विनियोगः ।

---

मुद्रितपाठः—

A- ॐ आकूत्यै प्रयुजेऽग्नये स्वाहा, मेधायै मनसेऽग्नये स्वाहा, दीक्षायै तपसेऽग्नये स्वाहा, सरस्वत्यै पूष्णेऽग्नये स्वाहा, आपो देवीर्बृहतीर्विश्व-सम्भवो द्यावापृथिवी उरो अन्तरिक्ष, बृहस्पतये हविषा विधेम स्वाहा

शु. यजुः ४ । ७

B- युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ।

शु. यजुः ५ । १४

युञ्जते मनोऽनुवाकं जप्त्वा दीर्घायुराप्नुयात् । अग्नि. पु. २६० । १९

C- शतं व इति चैतेन पर्णफलानि वै ।
आरोग्यं चिरमाप्नोति दीर्घमाप्नोति जीवितम् । विष्णु. ध. २।१२५।७३

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।**

**अधा शतक्रत्वो यूयमिम्मम्मे अगदं कृधि ।**

**[A]इमा रुद्रायेति दूर्वाप्रवालानां शतं सहस्रं**

**जुहुयान्महाज्वरोपघाते शतायूरूपो दीर्घायुर्भवति ।**

इमा रुद्रायेत्यस्य प्रजापतिः ऋषिः, जगती च्छन्दः, रुद्रो देवता, इमा रुद्रायेत्यादि अनातुरमित्यन्तम् ।

**[B]आ नो भद्राइत्यनुवाकं शतं जपेदायुष्मान् भवति ।**

आ नो भद्रा इत्यनुवाकस्य गौतम ऋषिः जगतीच्छन्दः विश्वेदेवा देवताः जपे विनियोगः ।

**अमुत्र भूयादित्यायुष्कामो दूर्वां जुहुयात् ।**

अमुत्रभूयादित्यस्य परमेष्ठी प्रजापतिः ऋषिः, त्रिष्टुप् छन्दः, बृहस्पतिर्देवता अश्विनौ वा, होमे विनियोगः ।

**अमुत्र भूयादधयद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।**

**प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ।**

(काण्व. २१ । ९)

**इन्द्रो वृत्रमित्यायुष्काम आज्यं जुहुयात् ॥**

इन्द्रो वृत्रमित्यस्य विश्वामित्र ऋषिः, त्रिष्टुप् छन्दः, इन्द्रो देवता, होमे विनियोगः ।

---

**ख पाठः—**

(1) पद्रुतो गतायुरपि ।

**मुद्रित पाठः—**

A- इमारुद्रायेति तिलैर्होमाच्च धनमाप्यते ।

दूर्वाहोमेनचान्येन सर्वव्याधि विवर्जितः ॥ अग्नि. पु. २६० । ५९

B- आ नोभद्रा इत्यनेन दीर्घमाप्नुयात् ॥ अग्नि. पु २५९ । २२

इन्द्रो वृत्रमवृणोच्छर्द्धनीतिः प्रमायिनामभिनाद्वर्पणीतिः ।
अहन् व्यꣳसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ।

(काण्व. ३२ । २६)

अन्विदिति दूर्वामायुष्कामो जुहुयात् ।

अन्विदित्यस्य परमेष्ठी प्रजापतिः ऋषिः । अनुष्टुप् छन्दः, अनुमति-र्देवता होमे विनियोगः ।

अन्विदमनुमते त्वं मन्यासे शं च नस्कृधि ।
क्रत्वेदक्षाय नो हिनु प्रण आयूꣳषि तारिषत् ।

(काण्व. ३३ । ३)

आयुष्मानग्न इत्यायुष्काम आज्यं जुहुयात् ॥

आयुष्मानग्न इत्यस्य वैश्वानर ऋषिः, त्रिष्टुप् छन्दः, अग्निर्देवता, होमे विनियोगः ।

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादि^A^मꣳ स्वाहा ।

(काण्व. ३५ । ४९)

ऋग्विधाने च—

अशक्ये चाप्रतिकार्य्ये भये प्राणान्तिकेऽपि च ।
जातवेदस इत्येतां जपन् सद्यः प्रमुच्यते ।
अथ व्रतं द्वादशाहमादावेव द्विजश्चरेत् ।
कुर्वन् त्रिषवणं स्नानं होमं जप्यं तथैव च ।
पयोयावकभक्ष्याणामद्यादन्यतमं सकृत् ।

---

मुद्रितपाठः—

A- दिमान् (काण्व, माध्यन्दिनयोः पाठः)

गोब्राह्मणहितैषी स्यात् [1]स्त्रीशूद्रैश्च न संवदेत् ।
द्वादशाहे गते तद्वन्निवृत्ते [2]च त्रयोदशे ।
कृत्वा साहस्रिकं जाप्यमाग्नेयं निर्वपेच्चरुम् ।
तमाज्यपूर्वकं हुत्वा ब्राह्मणान् भोजयेत्ततः ।
भुक्तांस्तानर्च्च ये[3]च्चैतान् कुर्य्याद्व्रतविसर्जनम् ।
प्रीयतां जातवेदोऽग्निः सफलं चास्तु मे व्रतम् ।
कर्मसिद्धिं च मे नित्यं जातवेद जुषस्त्विति ।
सहस्रेण नवं पापान्निमज्याप्सु प्रमुच्यते ।
अथ काम्यानि कर्माणि नित्यमेवात्मनश्चरेत् ।

एवं [4]व्रतवतः काम्यारम्भः । "वैष्णवेनायुरन्विच्छन्नि"तिवचनात श्रवण-नक्षत्रे प्रारम्भः । "अश्वत्थमायुष्कामार्थ"मितिवचनात् अश्वत्थसमिद्भिरयुत-होमः । जातवेद इत्यस्य मारीचकाश्यप ऋषिः,त्रिष्टुप् छन्दः,जातवेदोऽग्निर्देवता होमे विनियोगः ।

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।
(ऋक्. १ । ९९ । १)

ऋग्विधाने विष्णुधर्मोत्तरे च-
(विष्णुधर्म २।१२४।१११-११२) (अग्नि. पु. २५९ । ७५-७६)

स्वादिष्टयेति सूक्तानां सप्तषष्टिरिहोदिता[A]
[B]दशोत्तराण्यृचां चैताः पावमान्यः शतानि षट् ।(१११)

---

ख पाठः—
(1) शूद्रैः स्त्रीभिर्न । (2) तु । (3) भुञ्जानानर्च्च येदेतान् । (4) कृतवतः ।

मुद्रितपाठः—
A- रुदाहृता । B- दशोत्तरा ऋचश्चैताः ।

[A]एता जुह्वञ्जपंश्चैतद् घोरमृत्युभयं तरेत् । (११२)
[B]व्याधीनां मोक्षणं चैव लभते नात्र संशयः ।
पवमानं परं ह्येतदंहसामपनोदनम् ।
[1]प्राणानायस्य चाध्यायेदन्ते देवान् ऋषीन् पितृन् ।
उपोष्याज्यं च जुहुयादग्निं सोमं च पूजयेत् ।
सरस्वतीं चार्चयीत पयोम्बुदधिसर्पिषा ।

सप्तमाष्टकस्थस्वादिष्टयेत्यारभ्य पावमानीसूक्तानि सप्तषष्टिः ।

(प्रथमोऽनुवाकः)

स्वादिष्ठया दश । मधुच्छन्दा, गायत्री, पवमानः सोमो देवता ।
पवस्व दश । मेधातिथिः, गायत्री, सोमः पवमानः ।
एष देवो दश । शुनःशेफः, गायत्री, सोमः पवमानः ।
सना दश । हिरण्यस्तूपः, गायत्री, सोमः पवमानः ।
समिद्ध एकादश । काश्यपः असितो देवलो वा, गायत्री, अन्त्याश्चतस्रोऽनुष्टुभः ।
समिद्धो वाग्निस्तनूपान्नराशंस, इलो, बर्हि, र्देवीर्द्वारः उषासानक्ता, दैव्यौ होतारौ प्रचेतसौ, देव्यः सरस्वतीलाभारत्यः, त्वष्टा, वनस्पतिः, स्वाहाकृतय इति प्रत्यृचं देवताः । एतदाप्रीसूक्तम् ।
मन्द्रया सोम नव । असित ऋषिः, गायत्री छन्दः, सोमः पवमानः ।
असृग्रम् नव । असितः गायत्री सोमः पवमानः ।
एते सोमा नव । असितः, गायत्री, सोमः, पवमानः ।
परि प्रिया नव । असितः गायत्री सोमः पवमानः ।
प्र स्वानासो नव । असितः, गायत्री, सोमः पवमानः ।

---

**ख पाठः—**

(1) प्राणानायस्येति श्लोकार्द्धं नास्ति ।

**मुद्रित पाठः—**

A- एतज्जुह्वञ्जपंश्चैव । B- विष्णुधर्मोत्तरे नास्ति ।

उपास्मै नव । असितः, गायत्री, सोमः पवमानः ।

सोमा असृग्रं नव । गायत्री, सोमः पवमानः । षष्ठेऽष्टकेऽष्टमोध्यायः ।

सोमः पुनानो नव । असितः, गायत्री, सोमः पवमानः ।

परि प्रास्यष्टौ ।असितः, गायत्री, सोमः पवमानः ।

एष धिया अष्टौ । असितः, गायत्री, सोमः पवमानः ।

प्र ते सोतारोऽष्टौ । असितः, गायत्री, सोमः पवमानः ।

प्र निम्नेनेवाष्टौ । असितः, गायत्री, सोमः पवमानः ।

परिसुवानः सप्त । असितः, गायत्री, सोमः पवमानः ।

यत् सोम सप्त ।असितः, गायत्री, सोमः पवमानः ।

प्र कविः सप्त । असितः, गायत्री, सोमः पवमानः ।

एते धावन्ति सप्त । असितः, गायत्री, सोमः पवमानः ।

एते सोमासः सप्त । असितः, गायत्री, सोमः पवमानः ।

सोमा असृग्रं सप्त । असितः, गायत्री, सोमः पवमानः ।

प्र सोमासः सप्त । असितः, गायत्री, सोमः पवमानः

एतदन्तः अनुवाकः

## (द्वितीयोऽनुवाकः)

पवस्व षट् । आगस्त्यो दृल्हच्युतः, गायत्री, सोमः पवमानः ।

तममृक्षन्त षट् । दाढर्यच्युत ईध्मवाहः । गायत्री, सोमः पवमानः ।

एष कविः षट् । नृमेधः, गायत्री, सोमः पवमानः ।

एष वाजी षट् । प्रियमेधः । गायत्री, सोमः पवमानः ।

प्रास्य धारा षट् । नृमेघः, गायत्री, सोमः पवमानः ।

प्र धारा अस्य षट् । बिन्दुराङ्गिरसः, गायत्री, सोमः पवमानः ।

प्र सोमासः षट् । गोतमो राहूगणः । गायत्री, सोमः पवमानः ।

प्र सोमासः षट् । श्यावाश्वः । गायत्री, पवमानः सोमः ।

प्र सोमासः षट् । त्रितः । गायत्री, पवमानः सोमः ।

प्रसुवानः षट् । त्रितः, गायत्री, पवमानः सोमः ।

आनः पवस्व षट् । प्रभूवसुः, गायत्री, सोमः पवमानः ।

अप्सर्जि षट्। प्रभूवसु:। गायत्री, सोम: पवमान:।
स सुतः षट्। रहूगण ऋषि:, गायत्री, सोमः पवमान:।
एष उ स्य षट्। रहूगणः, गायत्री, सोमः पवमानः।
आशुरर्ष षट्।:बृहन्मतिः, गायत्री, सोम: पवमानः।
पुनान: षट्। बृहन्मति:, गायत्री, सोम: पवमान:।
प्र ये गाव: षट्। [A]मेधातिथि:, गायत्री सोम:, पवमान:।
जनयन् षट्। मेधातिथि:, गायत्री, सोम:, पवमान:।
यो अत्य इव षट्। मेधातिथि:, गायत्री, सोम: पवमान:।

षष्ठोऽष्टक: समाप्त:।

## ( सप्तमोऽष्टकः )

प्र ण इन्दो षट्। अयास्य:, गायत्री, सोम: पवमानः।
स पवस्व षट्। अयास्य:। गायत्री, सोम: पवमान:।
असृग्रन् षट्। अयास्य:, गायत्री, सोम: पवमान:।
अया सोम: पञ्च। भार्गवकवि: ऋषि:। गायत्री, सोम: पवमान:।
तं त्वा नृम्णानि पञ्च। भार्गवकविः ऋषि:। गायत्री, सोम:, पवमान:।
पवस्व वृष्टि: पञ्च। भार्गवकवि: ऋषि:, गायत्री, सोम: पवमान:।
उत् ते शुष्मास: पञ्च। उचथ्य: ऋषिः। गायत्री, सोम: पवमान:।
अध्वर्यो अद्रिभि: पञ्च। उचथ्यः। गायत्री, पवमान: सोमः।
परि द्युक्षः पञ्च।उचथ्य:। गायत्री, पवमानः सोमः।
उत् ते शुष्मासः चत्वारः। अवत्सारः। गायत्री, पवमान: सोमः।
अस्य प्रत्नाम् चत्वारि। अवत्सारः। गायत्री, सोमः पवमानः।
यवं यवं नश्चत्वारि। अवत्सार:। गायत्री, सोमः पवमानः।
परि सोमश्चत्वारि। अवत्सारः। गायत्री, सोम: पवमानः।

---

**मुद्रित पाठः—**

A- मेध्यातिथिः (सर्वत्र)

प्र ते धाराश्चत्वारि। अवत्सारः। गायत्री, सोमः पवमानः।

तरत्स मन्दी चत्वारि। अवत्सारः। गायत्री, सोमः पवमानः।

पवस्व गोजित् चत्वारि। अवत्सारः। गायत्री, सोमः पवमानः।

प्र गायत्रेण चत्वारि। अवत्सारः। गायत्री, उपान्त्या, पुर उष्णिक्, सोमः पवमानः।

। एतदन्तः अनुवाक।

## (तृतीयोनुवाकः)

अया वीती त्रिंशत्। अमहीयुः ऋषिः। गायत्री, सोमः पवमानः।

एते असृग्र त्रिंशत्। जमदग्निः। गायत्री, सोमः पवमानः।

आ पवस्व त्रिंशत्। काश्यपो निध्रुविः ऋषिः। गायत्री, सोमः पवमानः।

वृषा सोम त्रिंशत्। काश्यपः। गायत्री, सोमः पवमानः।

॥ इति सप्तमेऽष्टके प्रथमोऽध्यायः॥

## (द्वितीयोध्यायः)

हिन्वन्ति त्रिंशत्। वारुणि भृगुःऋषिः जमदग्निर्वा। गायत्री सोमः पवमानः। पवस्व त्रिंशत्। ३०शतं वैखानसा ऋषयः। गायत्री, अष्टादश्यनुष्टुप्, सोमः पवमानः। एकोनविंशाद्यास्तिस्र आग्नेय्यः।

त्वं सोमासि द्वात्रिंशत्। भरद्वाजः कश्यपो गौतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठः इत्येते, यथाक्रमं प्रतित्र्यृचमृषयः, शेषे (२२-३२) पवित्र ऋषि वसिष्ठऋषिर्वा उभौ वा। गायत्री, पवस्व सोममन्दयन्निति तिस्रो नित्यद्विपदा (गायत्री)। सप्तविंशी अन्त्ये (३१-३२) द्वे चानुष्टुभः, त्रिंशी पुरउष्णिक्। सोमः पवमानः। अवितान इति तिस्रः (१०-१२) पौष्णयो वा। यत्ते पवित्रमिति द्वे (२३-२४) आग्नेर्य्यौ उभाभ्याम् इति द्वे (२५-२६) सावित्र्यौ। एते वैश्वदेव्यौ वा। अन्त्ये द्वे पावमान्यध्येतृस्तुतिः —

अत्र प्रयोगः—

शुभे दिने संकल्पः ममापमृत्युप्रशमनार्थमारोग्यार्थं वा × × ष्वेदमध्य-पतित पावमानीसंज्ञकसप्तर्षिष्टसूक्तजपकर्म करिष्ये इति। होमपक्षे जपहोमं करिष्ये इति। आचार्यवरणम्। प्राणायामत्रयं कृत्वा यथोक्तऋष्यादिस्मरणं कृत्वा सप्तर्षिष्टसूक्तानां जपः। अन्ते देवर्षिपूजनम्। पयोऽम्बुदधिसर्पिर्भि-रग्नीषोमसरस्वतीनां पूजा। होमपक्षे उपोष्यारम्भः। प्रत्यृचं घृतेन होमः। यथोक्तदेवतामुद्दिश्य त्यागः, अन्ते देवर्षिपितृपूजनम्। अग्निषोमसरस्वतीनां पयोऽम्बुमधुसर्पिषा पूजनम्। यथाशक्ति दक्षिणा।

**ऋग्विधानविष्णुधर्मोत्तरयोः (विष्णुधर्म. २। १२४। ११४)—**

**उपतिष्ठेत राजानं यमसूक्तेन वै द्विज।(११४)**
**[A]स्थालीपाकं च कुर्वीत पक्षयोर्यमदैवतम्।**
**[B]अष्टम्योश्च चतुर्दश्योर्यजेत हविषा यमम्।**
**परेयिवांसमित्येतत्सूक्तमन्त्रं प्रयोजयेत्।(११५)**
**[C]परायुषः प्रमीयेत न स जातु कथंचन।(११६)**
**[D]प्रीतस्तस्य यमो राजा स्मृतिं चान्ते प्रयच्छति।**
**धर्मराजाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः।**

सप्तमेऽष्टके षष्ठाध्याये यमसूक्तं परेयिवांसमिति षोडशर्च्चम्। हविर्द्धान ऋषिः। त्रिष्टुप् छन्दः, यमो देवता, यमाय सोममित्याद्यास्तिस्रोऽनुष्टुभः। यमो देवता, षष्ठी लिङ्गोक्तदेवता, सप्तमाद्यास्तिस्रः पितृदैवत्यः अन्ययोः सारमेयश्वानौ देवते।

---

**मुद्रित पाठः—**

A- चतुर्दश्यां तु कुर्वीत स्थालीपाकं यथाविधि।

B- श्लोकार्द्धं नास्ति। C- परायुषः इति यद्यप्युभयत्रपाठ स्तथापि पुरायुष इति पाठःशुद्धः। D- प्रीत इत्यादि नास्ति।

अत्रायमर्थः—

कृष्णाष्टम्यां स्वस्तिवाचनम् । संकल्पः- अकालमृत्यु[1]प्रशमकामः एतन्मासे कृष्णाष्टम्यां कृष्णचतुर्दश्यां ततः शुक्लाष्टम्यां शुक्लचतुर्दश्यां यमसूक्तकरणकयमोपस्थानसहित-तत्करणकस्थालीपाकाष्टोत्तरशतहोमं कुर्वीयेति । [3]आचार्यवरणम् । आचार्यो यमसूक्तेनोपस्थानं कृत्वा यमसूक्तेन धर्मराजाय स्वाहेत्यन्तेन समस्तेनाष्टशतं जुहुयात् । एवं कृष्णचतुर्दश्यां शुक्लाष्टमी-चतुर्दश्योः । शुक्लचतुर्दश्यां पूर्णाहुतिः, दक्षिणादानं च ।

ऋग्विधाने विष्णुधर्मोत्तरे (विष्णुधर्म २ । १२४ । ११७)—

वैशाख्यां पौर्णमास्यां तु [A]कर्म नित्यं प्रयोजयेत्
मृत्युमेव प्रपद्येत परं मृत्यो इति द्विजः ।
नक्तभोजी मिताहारी प्रतिसंवत्सरं सदा
नैनं पुरायुषो मृत्युर्नयेत समुतस्त्रजम् ॥

परं मृत्यो इति चतुर्दशर्चं सूक्तम् । सङ्कुशिकऋषिः । त्रिष्टुप् छन्दः । एकादशी प्रस्तारऋषिः । पंक्तिः त्रयोदशी जगती चतुर्दश्यनुष्टुप् । आद्याश्चतस्रो मृत्युदेवत्याः, पञ्चमी धातृदेवत्या, षष्ठाद्याः पितृदेवत्याः प्राजापत्या वा । अत्र नित्यं प्रयोजयेदिति वचनाद यावज्जीवमकालमृत्युप्रशमनकामः वैशाखपौर्णमास्यां यावज्जीवं प्रतिसंवत्सरं मृत्युसूक्तेन मृत्यूपस्थानकर्म कुर्वीयेति सकल्पः । [4]यमसूक्तेन पौर्णमास्यां मृत्युपस्थानमष्टोत्तरशतकृत्वः कार्यम् । रात्रौ सकृदल्पहविष्यभोजनम् । एवं प्रतिसंवत्सरम् । अत्र सूक्त-शब्दाभावात् "परं मृत्यो" इत्यनेनैव मन्त्रेणोपस्थानमिति केचित् ।

---

ख पाठः—

(1) प्रशमन । (2) होमकर्म । (3) आचार्यब्रह्मवरणम् । (4) मृत्युसूक्तेन ।

मुद्रित पाठः—

A- नक्तभोजी सदा नरः । पुरायुषः प्रमीयेत । न स जातु कथञ्चन ११७ ।

ऋग्विधाने (विष्णुधर्म २ । १२४ । ६२)—

तच्चक्षुरित्यृचा [A]नित्यमुपतिष्ठेद्दिवाकरम्

उद्यन्तं [B]मध्यगं वापि शतमायुर्जिजीविषुः । (६२)

तच्चक्षुरित्यस्य । व सष्ठऋषिः । त्रिष्टुप्छन्दः, सूर्यो देवता ।

ऋग्विधाने (विष्णुधर्म २ । १२४ । ३३)—

[C]मानो महान्तमित्याभ्यां त्रिरात्रोपोषितः शुचिः

ओदुम्बरीश्च जुहुयाद्दधिमध्वाज्य[D]संयुता । (३३)

[E]सूक्तेन जुहुयादाज्यमादावन्ते च कर्मणः

[F]हित्वा सर्वान् मृत्युपाशान् जीवेद्रोगविवर्जितः । (३४)

इमा रुद्राय इत्येकादशर्च्चं सूक्तम् । कुत्स ऋषिः । जगती च्छन्दः, अन्त्ये द्वे त्रिष्टुभौ, रुद्रो देवता, मानोमहान्तमिनि ऋग्वेदीयेनाष्टोत्तरशतसहस्रमयुतं वा औदुम्बरसमिद्धोमः । आदौ इमारुद्रायेति सूक्तेनाज्याहुतिहोमान्ते च तत्र उदीच्याङ्गानि । ततः सूक्तेन ऊर्द्ध्वबाहोः शतवारं रुद्रोपस्थानम् ।

सामविधाने —

अरिष्टवर्ग इति द्वादशसाम्नां नाम । तेन पूर्णायुषः प्राप्तिः ।

[1]श्येनस्य साम्नः । प्रजापतिर्ऋषिः । त्रिष्टुप् छन्दः, अग्निर्देवता ॥१॥

[2]पाष्ठौहस्यसाम्नः । प्रजापतिर्ऋषिः । गायत्री छन्दः, इन्द्रो देवता ॥२॥

[3]साकमश्वसाम्नः । प्रजापतिर्ऋषिः । गायत्री छन्दः, इन्द्रो देवता ॥३॥

[4]गौरीवीतसाम्नः । वैश्वानरऋषिः । त्रिष्टुप् छन्दः, इन्द्रो देवता ॥४॥

---

टिप्पणी—

(1) अबोध्यग्नि इत्यत्र गीतम् । (2) महित्रीणामित्यत्र गीते सामनी पाष्ठौहे । (3) त्वावत इत्यत्र गीतम् । (4) इन्द्रं नरः इत्यत्र गीतम् ।

मुद्रित पाठः—

A- स्नात । B- मध्यमं चैव दीर्घ । C- मानस्तोक इतिद्वाभ्यां । D- संस्कृताः । E- श्लोकार्द्ध नास्ति । F- छित्वा ।

[1]तार्क्ष्यसाम्नः। तार्क्ष्य ऋषिः। त्रिष्टुप् छन्दः इन्द्रो देवता ॥५॥

[2]तातसाम्नः। इन्द्र ऋषिः। त्रिष्टुप् छन्दः, इन्द्रो देवता ॥६॥

[3A]आदिषाकोयत्थसाम्नः। इन्द्र ऋषिः। उष्णिक् छन्दः, सोमो देवता ॥७॥

[4]कार्णश्रवससाम्नः। वसिष्ठ ऋषिः। ककुप् छन्दः, सोमो देवता ॥८॥

[5]वरुणगोतमयोरर्कस्य साम्नः। वसिष्ठजमदग्नी ऋषी। बृहती च्छन्दः, वरुणो देवता ॥९॥

[6]आयुर्नोवस्तोभसाम्नः। वसिष्ठ ऋषिः। द्विपदा गायत्री छन्दः, इन्द्रो देवता ॥१०॥

तथा च सामविधानब्राह्मणम्—

[B]काम्यानामनादेशे त्रिरात्रमुपवासः, पुष्येणारम्भः। आयुष्याण्येव प्रथमम्। अवोध्यग्निर्महित्रीणामिति द्वे। त्रावत, इन्द्रं नरो ग्रामेगेयमायुरिति [C]वास्य निधनं कुर्यात्। यमूषु द्वे। त्रातारमिन्द्रं हविरित्येतस्य स्थाने स्वस्तिन इति, सोमः पुनन्त्यंससुप्रथमं विश्वतो दावन्निति पूर्वं रहस्य। उदुत्तमं वरुणपाशमित्येषोऽरिष्टवर्गः। [D]एषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः शतं वर्षाणि जीवति जरयैव विस्रंसते (२।१।२।२) गौरान् सर्षपांस्तुचेतुनाय तत्सुन

टिप्पणी—

(1) त्यमूषु इत्यत्र गीतम् सामनी तार्क्ष्यसामनी।
(2) त्रातारमिन्द्रमित्यत्र गीतम्। (3) सोमपुनान इत्यत्र गीतम्।
(4) ससुन्वे इत्यत्रगीतम्। (5) उदुत्तममित्यत्रगीतम्।
(6) विश्वतोदावन् इत्यत्रगीयम् आयुःसाम। अत्र आणंचय साम्न इति पाठो युज्यते रुणंचयस्य ऋषित्वात्।

मुद्रित पाठः—

A- आतीषादीयम्, सामब्राह्मण पृ. २५३। B- अथातः काम्या।
C- चास्य। D-एतेषां।

इत्यतेन प्राश्नीयात् दीर्घायुर्भवति । त्रीन् वोदकाञ्जलीन् सदाचामेत् पिबासोममिन्द्रमन्दत्वित्येताभ्यां दीर्घायुर्भवति (२ । १ । १ । ५) ।

नरसिंहपुराणे (७ । ६३ – ७५)

मार्कण्डेय उवाच—

ॐ नमो भगवते वासुदेवाय

नारायणं सहस्राक्षं पद्मनाभं पुरातनम्
प्रणतोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति । (७–६३)
गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम्
केशवं च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (७–६४)
वासुदेवं जगद्योनिं [A]भानुमन्तमतीन्द्रियम्
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (७–६५)
शङ्खचक्रधरं देवं [B]छन्नरूपिणमव्ययम्
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (७–६६)
वराहं वामनं विष्णुं नरसिंहं जनार्दनम्
माधवं च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ।(७–६७)
पुरुषं पुष्करं पुण्यं क्षेमबीजं जगत्पतिम्
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (८–६८)
भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम्
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (७–६९)

---

मुद्रित पाठः—

A- भानुवर्णं । B- छन्न ।

सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् ।
महायोगं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति । (७-७०)
इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः
अपयातस्ततो मृत्युर्विष्णुदूतैश्च पीडितः । (७-७१)
इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् । (७-७२)
[A]मृत्व्यष्टकमिदं पुण्यं मृत्युप्रशमनं परम्
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह । (७-७३)
य इदं पठते भक्त्या त्रिकालं नियतः शुचिः
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः । (७-७४)
हृत्पद्ममध्ये पुरुषं पुराणं
नारायणं शाश्वतमादिदेवम् ।
संचिन्त्य सूर्यादपि[1] राजमानं
मृत्युं स योगी [B]जितवांस्तदित्थम् ॥७-७५

इति नरसिंहपुराणीयं मृत्व्यष्टकं त्रिसन्ध्यमभ्यस्यतो नापमृत्युः ।

## [2]मृत्युञ्जयोक्तापमृत्युहरदानविधिः

लोहपात्रे स्थितं कांस्यं तत्र पद्मं तु राजतम् ।
[3]तस्मिन कालेश्वरः [4]स्वार्णः पुरुषाकारतां गतः ।

---

ख पाठः—

(1) दति । (2) मृत्युञ्जयपुराणोक्त । (3) तत्र ।

मुद्रित पाठः—

A- मृत्युञ्जयमिदं । B- जितवांस्तदेव । (4) स्वर्णः ।

वस्त्रालङ्कारसंयुक्तो भयदास्त्राणि सर्वतः ।
त्रिलोहाकारपुरुषैः कालदूतैश्च पार्श्वतः ।
कृत्वा च माहिषे पृष्ठे तं दद्याद् यममालपन् ।
अष्टम्यां च चतुर्द्दश्यां करोति विधिना तु यः ।
स मुच्यते ध्रुवं नाशाद् दत्त्वा घृतघटोत्तमम् ।

पद्ममष्टदलम्, यमो दण्डहस्तः पाशहस्तः । सुवर्णपरिमाणाऽनिर्देशेऽपि तथा परिमाणं कार्य्यं यावता ब्राह्मणतुष्टिः । भयदास्त्राणि खड्गादीनि । त्रिलोहं-ताम्रकांस्यपित्तलम् । [1]लोहपत्रे स्थितमिति क्वचित् पाठः । घृतघटश्च न दक्षिणा किन्तु देयद्रव्यम् । दक्षिणा यथाशक्ति काञ्चनम् । यममालपन्—इमं यमं महिषपृष्ठस्थितलोहपात्रोपरिस्थितकांस्यगतराजत-पद्मस्थितं वस्त्रालङ्कारभूषितं सर्वतोन्यस्तभयदखड्गाद्यहस्तं त्रिलोहमयकाल-दूतत्रयपार्श्वकं सघृतघटम् अपमृत्युनाशाय ददानीति वदन् दद्यात् इत्यर्थः ।

मृत्युञ्जयोक्तदानेषु सर्वेष्वेषु विधिः स्मृतः ।

इति मृत्युञ्जयपुराणवचनान्मृत्युञ्जयपूजापूर्वकं दानम् । तद्विधिश्च—

मृत्युञ्जयमन्त्रस्य । कहोल ऋषिः । देवी गायत्री छन्दः, मृत्युञ्जयो देवता जां हृदयाय नमः, जीं शिरसे स्वाहा, जूं शिखायै वषट्, जैं कवचाय हूम्, जौं नेत्राभ्यां वौषट्, जः अस्त्राय फट् । ॐ जूंसः मन्त्रः । देवोऽयं चतुर्भुज-स्त्रिनेत्रः ।

चतुर्भुजस्त्रिनेत्रोऽसौ देवो मृत्युञ्जयो मतः ।
अक्षमालाधरो देवो दक्षिणेन च पाणिना
वामेनामृतकुण्डं च धारयन्नमृतान्वितम् ।
[2]वरदाभयपाणी द्वौ दिव्याभरणभूषितः
शुक्लोऽसौ नीलवासाश्च शुक्लपद्मोपरि स्थितः ।

ख पाठः—

(1) त्रिलोहपात्रे । (2) वरदाभयदौ पाणी ।

ॐकार आवाहने मन्त्रः ॐकारो विसर्जने ।

अष्टशक्तीः शृणुष्वात्र यथावत् कथयामि ताः ।
जया च विजया चात्र अजिता चापराजिता ।
भद्रकाली कपाली च क्षेमा मृत्युपराजिता ।
ॐ जूं सः मन्त्रप्रयोगेण पूज्यो मृत्युञ्जयः शिवः ।
गन्धादिभिर्यथान्यायं यथाब्राह्मणपूजनम् ।
ॐ जूं सः सदा चैव दान्तः स्थानाष्टके बुधैः ।
मण्डलोद्धृतदेवोऽयं ग्रहीता हृदि रोपयेत् ।
शिरोललाटकण्ठेषु जिह्वामूले च गण्डयोः ।
नाभौ च ब्रह्म [1]गुह्ये च एतदङ्गाष्टकं न्यसेत् ।

अत्र ग्रहीता हृदि रोपयेदिति [2]लिङ्गात् [3]ग्रहीता पूजयेदिति प्रतिभाति । तेन यजमानः स्वकर्त्तृकपूजां कर्त्तुं प्रतिग्रहीतारं वरयेत् । मत्-कर्त्तव्यमृत्युञ्जयपूजाकर्म कर्त्तुं त्वामहं वृणे इति । स च यथोक्तरूपेण पूजयेत् ।

सामान्यपूजाङ्गभूतशुद्धि मातृकान्यास प्राणायाम-सामान्यार्घ्यसंस्कारान् कृत्वा [4]यथोक्तरूपेण मन्त्राङ्गन्यासः शिरोललाटकण्ठजिह्वामूलगण्डद्वय-नाभिब्रह्मरन्ध्रगुह्येषु समस्तस्य मन्त्रस्य प्रत्येकं न्यासः । ततो हृदयादावङ्ग-न्यासः। यथोक्तरूपेण मृत्युञ्जयं ध्यात्वा पूजनं मनसा । बहिः पीठपूजा ।

---

ख पाठः—

(1) रन्ध्रे । (2) वचनात् । (3) प्रतिग्रहीतृकर्त्तृकपूजा ।

(4) मृत्युञ्जयमन्त्रस्य ऋष्यादिस्मरणम् । हृदयादावङ्गन्यासः । शिरोललाटादिषु समस्तमन्त्रन्यासः । अङ्गुष्ठादावङ्गन्यासः । ध्यानम् । ॐकारेणावाहनम् । मन्त्रेण गन्धपुष्पधूपदीपदानम् । जयादिभिर्द्वितीयम् । इन्द्राद्यैस्तृतीयम् । वज्राद्यैश्चतुर्थम् । नैवेद्यदानम् । आचमनम् । पुष्पाञ्जलिः । अष्टशतं जपः । स्तुतिः । नमस्कारः । ॐकारेण मृत्युञ्जय क्षमस्व यजमानहृदये स्थिरो भव इति यजमानहृदये विसर्जनम् ।

कूर्माय नमः, मण्डूकाय नमः, कालाग्निरुद्राय नमः, पृथिव्यै नमः। अनन्तरम् ॐकारेणावाहनम्। मूलमन्त्रेण मृत्युञ्जयाय गन्धं नमः इति गन्धपुष्पदानम्। अङ्गैः प्रथमावरणम्। जयायै नमः इत्यादिरूपेण पूर्वाद्यष्टदिक्षु जयाद्यष्टशक्तिपूजनं द्वितीयावरणम्। ईन्द्राद्यैस्तृतीयावरणम्, वज्राद्यैश्चतुर्थम्। वज्राय, शक्तये, दण्डाय, खड्गाय, पाशाय, अङ्कुशाय, गदायै, त्रिशूलाय, पद्माय, चक्राय। ततो मूलेन धूपदीपनैवेद्यदानम्। आचमनं, ताम्बूलम् पुष्पाञ्जलिदानम्, स्तुतिः, अष्टशतं जपः। मृत्युञ्जयं ध्यात्वा ॐकारमुचार्य मृत्युञ्जय क्षमस्व, यजमान हृदये स्थितो भवेति यजमानहृदये विसर्जनम्।

यजमानदेहे मृत्युञ्जयमन्त्रस्य करन्यासः। शिरोललाटजिह्वामूलगण्डद्वयनाभिरन्ध्रगुह्येषु ॐ जूं सः इतिमन्त्रस्य प्रत्येकं न्यासः। हृदयादिष्वङ्गन्यासः। ततो देयद्रव्यपूजनं प्रतिगृहीतृपूजनं च कृत्वा दानानुष्ठानम्। एवं सर्वत्र मृत्युञ्जयोक्तदाने पूजाविधिः।

अथ लोहतुलादानं मृत्युञ्जयग्रन्थे—

आत्मानं तोलयित्वा तु दद्याल्लोहं [1]तु तत्समम्।
[2]द्विजाय शिवभक्ताय यद्वान्यस्मै द्विजातये।

एतदप्यपमृत्युनाशकम्। मृत्युञ्जयपूजापूर्वकं देयम्। सुवर्णं दक्षिणा। [3]तत्र च तुलाकाष्ठादिकं विष्णुधर्मोक्ततुलादानादनुसन्धेयम्।

[4]तत्र हि—

पुण्यं दिनमथासाद्य तृतीयायां विशेषतः।
गोमयेनोपलिप्तायां भूमौ कुर्याद् घटं शुभम्।

---

ख पाठः—

(1) च। (2) यज्वने शिवभक्ताय दद्याच्चैतत् द्विजातये।

(3) अत्र तु। (4) तत्रायं क्रमः।

**दारवं शुभवृक्षस्य चतुर्हस्तप्रमाणतः ।**

**सुवर्णं तत्र बध्नीयात् स्वशक्त्या घटितं धटे ।**

**सौवर्णं स्थापयेत्तत्र वासुदेवं चतुर्भुजम् ।**

**शिक्यद्वयं तु बध्नीयात् स्थापयेत् पट्टके ततः ।**

**तत्रारोहेत वस्त्रास्त्रपुष्पालङ्कारभूषितः ।**

**अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः ।**

**तुलादानस्य सर्वस्य विधिरेष प्रकीर्तितः ।**

इत्यस्य विधेः सर्वसाधारणत्वाल्लोहतुलायामयं विधिः ।

[1](शुभदारुतोरणस्तम्भद्वयं तोरणं च यथेच्छपरिमाणम् तुलाकाष्ठं चतुर्हस्तम् ।) अभीष्टदेवतां स्नपयित्वा ग्रहणम् । अवरुह्य दानम् । इति लोहतुला ।

अथापमृत्युहरलोहदण्डदानं [2]मृत्युञ्जये—

**पञ्चाशत्पलसंयुक्तं दण्डमायससंज्ञितम्**

**वस्त्रेणाच्छाद्य दानाच्च यमदण्डो न विद्यते ।**

**पलं सुवर्णाश्चत्वारः (मनु- ८ । १३५), ।**

**अरत्निर्हस्तमात्रं वा मानं तस्य प्रकीर्त्तितम् ।**

दातुर्हस्तेन अरत्निमात्रं हस्तमात्रं वा लोहदण्डं चतुः सौवर्णिकपलेन पञ्चाशत्पलमितं मृत्युञ्जयपूजापूर्वकं देयम् । सुवर्णं दक्षिणा । यमदण्डोऽपमृत्युरेव । इति लोहदण्डदानम् । मृत्युञ्जयपुराणे एव त्रिपुरुषदानम् । एतदपि मृत्युञ्जयपूजापूर्वकम् ।

**सुवर्णरक्तिकानां च शतेनैकेन [3]शक्तितः ।**

**कार्यो ब्रह्मा च विष्णुश्च शङ्करश्च तथैव च ।**

---

**ख पाठः—**

(1) बन्धनस्थ पाठो नास्ति । (2) मृत्युञ्जयपुराणे यथाविधि क्रमः ।
(3) वा पुनः ।

पलद्वादशमानेन पीठं लोहेन कारयेत् ।
देवानां स्थापनार्थाय चक्रवत्परिमण्डलम् ।
तत्र ब्रह्मादयः स्थाप्या यमदूतं पुरो न्यसेत् ।
चतुर्मुखश्चतुर्बाहुः पद्महस्तः पितामहः ।
शङ्करो द्विभुजः शूली वृषारूढस्त्रिलोचनः ।
विष्णुश्चतुर्भुजश्चक्री गदी गरुड़वाहनः ।
यमदूतः पाशपाणिर्दण्डवान् विकृताननः ।
स तु लोहमयः कार्यो भीतो बद्ध इवाग्रतः ।
ततो विधाय देवानां पूजां पुष्पफलादिभिः ।
यजमानः करे खडगं गृहीत्वा निशितं नवम् ।
इदं शिरश्छिनद्मीति दूतस्यास्य दुरात्मनः ।
इत्युच्चार्य्य शिरश्छिन्द्याद् दूतस्य यमदिङ्मुखः ।
ततश्चतुर्भिर्विप्रैस्तु कार्य्यं ब्राह्मणवाचनम् ।
ततो ब्रह्मादिदेवानां दानं कुर्य्यात् प्रयत्नतः ।
देवालये गृहे वापि तीर्थे वान्यत्र कुत्रचित् ।
ब्राह्मणाय तु तान् दद्यादव्यङ्गाय सुशीलिने ।
सुवर्णदक्षिणायुक्तान् ब्रह्मादीननुपूर्वशः ।
अपमृत्युभयत्रस्तो यो दद्याद्देवतात्रयम् ।
तस्य मृत्युर्विनश्येत दानादस्मान्न [1]संशयः ।

---

ख पाठः—

(1) इति त्रिपुरुषदानम् इत्यधिकम् ।

## [1]कालचक्रदानम्

एतदपि मृत्युञ्जयोक्तत्वान्मृत्युञ्जयपूजापूर्वकं कार्य्यम् ।

चक्रं रूप्यमयं कृत्वा मुक्तारश्मिविभूषितम् ।
कृत्वा मूर्द्धिन शरच्चन्द्ररश्मिमध्यान्तरस्थितम् ।
तमांस्यनेकरूपाणि गात्रेषु च समन्ततः ।
एवं ध्यानवतस्तस्य स चन्द्रः कृष्णतां व्रजेत् ।
ततोऽप्यनन्तरं पश्चात् कृत्वा विप्रः प्रदक्षिणम् ।
तं गृहीत्वा व्रजेद्दूरमदृश्यत्वमपि व्रजेत् ।
स्वयं चामृतसंपातपूर्णकाय इव स्थितः ।
कालचक्रमिदं नाम्ना दानं मृत्युविनाशनम् ।
इमं ते राजतं चन्द्रं रश्मिजालसमाकुलम् ।
अपमृत्युविनाशाय ददामीति समुच्चरन् ।
सुवर्णदक्षिणायुक्तं ब्राह्मणाय निवेदयेत् ।
एवं कृते विनश्येत्तु अपमृत्युर्न संशयः ।
तस्मादेतत्सदा देयमपमृत्युभयान्वितैः ।
ज्वरादिरोगग्रस्तैर्वा महापत्पतितैरपि ।
ततो गृह्योक्तविधिना स्थापयेज्जातवेदसम् ।
जुहुयात् कालनाम्ना तु शतमष्टोत्तरं तिलैः ।
ततश्च भोजयेद् भक्त्या विप्रान् द्वादशसंख्यया ।

---

ख पाठः—

(1) अथ काल- ।

स्वयमक्षारलवणं भुञ्जीत सकृदेव हि ।
एवं कृते नरो नूनं चिरं जीवेन्न संशयः ।

अत्र स्वशिरःपर्य्याप्तचन्द्राकारं रजतं प्रान्तबद्धमुक्तादाम शिरसि (बद्ध्वा)दत्त्वा शुभचन्द्रत्वेन ध्यात्वा स्वगात्रनिर्गततमस्तोमव्याप्त्या कृष्णतां गतं तं चन्द्रं ध्यायेत् । ततो निजपृष्ठस्थब्राह्मणं पूजयित्वा चन्द्रं च पूजयित्वा इमं मुक्तारश्मियुक्तराजतचन्द्रमपमृत्युविनाशाय ददामीति [1]सुवर्णदक्षिणां दद्यात् । प्रतिग्रहीता मूर्द्ध्नि स्थितं चन्द्रं दक्षिणां च प्रतिगृह्य दातुरदृश्यो व्रजेत् । ततो दातुर्होमादि । स्त्रीशूद्राणां तु [2]ब्राह्मणान्तरद्वारा होमः । [3]दानविवेकादौ होमे ब्राह्मणभोजनादि नास्ति ।

मृत्युञ्जयग्रन्थे–

आर्त्तो यदि स्यात् पातं वा प्राप्नुयात् पुण्यदेशतः ।
नित्यं मृत्युञ्जयप्राप्तविधिना यत् प्रदीयते ।
तदेव सर्वशान्त्यर्थं भवतीह न संशयः ।

मृत्युञ्जयप्रोक्तविधिना— मृत्युञ्जयं पूजयित्वेत्यर्थः ।

मूलं फलादि वा द्रव्यं संहतं वाथवैकशः
मृत्युञ्जयं समुद्दिश्य दद्यादायु[4]र्विवर्द्धते ।

अत्र-शिष्टं फलमूलादि सुवर्णरजतादिद्रव्यान्तरं वा । मृत्युञ्जयं पूजयित्वा-युष्कामोऽहं मूलं फलं वा [5]ददामि मृत्युञ्जयः प्रीयतामिति देयम् ।

द्रव्येण वाथ केनापि तोषयित्वान्यतश्च यः
आयुर्दानं तु गृह्णीयात् ततोऽपि विधिनोदितम् ।

---

ख पाठः—

(1) दत्त्वा । (2) ब्राह्मणद्वारा । (3) दानविवेकादौ तु होमब्राह्मणभोजनादि नास्ति । (4) विवृद्धये । (5) ददानि ।

एवं संपूज्य देवेशं संदधीत ततस्तनोः
राजपट्टं प्रवालं [1]च रजतं ताम्रमेव [2]च ।
बध्नीयात् स्वस्य शिरसि प्र ... ...धातुसप्तकम् ।

([3]यं किञ्चन्मनुष्यं दानाधिकारिणं तोषयेत् । स च तोषितो यथोक्तरीत्या मृत्युञ्जयं पूजयित्वा पात्रबुद्ध्या तं पूजयेत् । आयुषे नमः इत्यायुश्च पूजयेत् ।) ततोऽमुकशर्मणे तुभ्यं ममायुर्ददामीत्यायुर्दद्यात् । स च इदमायुः प्रतिगृह्णामीति प्रतिगृह्णीयात् । तत आयुः प्रतिगृह्य यथोक्तविधिना मृत्युञ्जयं पूजयेत् । राजपट्टं प्रवालं रजतं ताम्रं च बध्नीयात् ।

तथा—

दद्यादुत्पाद्य विधिना विप्रायाथ तपस्विने ।
सुवर्णं कांस्यं लोहं च सततं प्रय(यु)तः कृती ।
सप्तधातुप्रदानेन कृतकृत्यो भवेन्नरः ।

तथा च राजपट्टादिबन्धनं कृत्वा सुवर्णरजतादिसप्तधातून् मृत्युञ्जयमुद्दिश्य ब्राह्मणेभ्यो दद्यात् । आयुःप्रतिग्रहाङ्गत्वेन सप्तधातूनां दानम् । सुवर्णकांस्यलोहादिकमुपलक्षणम् । [4]एतदन्तं कृत्वा कृतकृत्यो निर्वाहितायुःप्रतिग्रहकृत्यः ।

तथा—

आयुःक्षयविपक्षाणां द्रव्याणां चैव दानतः ।
सुवर्णमन्नं महिषो भूमिरन्यापि शाश्वती ।
सुवर्णशृङ्गिकाः शय्या गावोऽश्वो रथादिकम् ।

---

ख पाठः—

(1) वा । (2) वा ।

(3) अयमर्थः— द्रव्यादिना सन्तोषयेत् । ममायुषा त्वं चिरं जीवेति आयुर्दानम् । तं बुद्ध ........ । (4) एतत् कर्म ।

प्रपाकृतिः सुचारित्र्यं धान्यदानं तिलो घृतम् ।
देया घृतादिधेनुश्च कृष्णाजिनमथोदकम् ।
तुलापुरुष आस्तिक्यं भयेभ्यो रक्षणक्रिया ।
परापन्नाशनं चैव यथावत् प्रतिपादयेत् ।

आयुःक्षयस्य यानि द्रव्याणि विपक्षाणि- येषु दत्तेषु आयुर्न क्षीयत इत्यर्थः । तान्येव दर्शयति सुवर्णमन्नमित्यादि । तेन मृत्युञ्जयं पूजयित्वा आयुष्कामोऽहमिदं सुवर्णं रजतं कांस्यं लोहं त्रपुषं सीसं वा ददामीति मृत्युञ्जयः प्रीयतामिति देयम् । एवमन्नमहिषभूम्यादिकम् । मृत्युञ्जयं पूजयित्वा वायुष्कामोऽहम् इमां प्रपां ददामि मृत्युञ्जयः प्रीयतामित्युत्सृज्य प्रपां कारयेत् । तथा मृत्युञ्जयं पूजयित्वा परभयरक्षां परविपत्खण्डनं वोद्दिश्य द्रव्यादिदानं पुरुषव्यापारं वा कुर्य्यात् ।

॥ इति मृत्युञ्जयदानविधिः ॥

## अथापमृत्युहरकालपुरुषदानम्

भविष्योत्तरे—

पुण्यं दिनमथासाद्य भूमिभागे समे शुभे ।
चतुर्द्दश्यां चतुर्थ्यां वा षष्ठ्यां वा पाण्डुनन्दन ।
पुमान् कृष्णतिलैः कार्य्या [1]रूप्यदन्तः सुवर्णदृक् ।

सुवर्णादिपरिमाणं यथाशक्ति ।

खड्गोद्यतकरी दीर्घो जवाकुसुमकुण्डलः ।
रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः ।

---

ख पाठः—

(1) रौप्य ।

तीक्ष्णासिपुत्रीबन्धेन विस्फारितकटीतटः ।

असिपुत्री छुरिका ।

उपानद्युगयुक्तांघ्रिः कृष्णकम्बलपार्श्वगः ।
गृहीतमांसपिण्डश्च वामे [1]करतले तथा ।
एवं विधं नरं कृत्वा [2]गृहीत्वा कुसुमाञ्जलिम् ।
यजमानः प्रसन्नात्मा इमं मन्त्रमुदीरयेत् ।
संपूज्य गन्धकुसुमैर्नैवेद्यं विनिवेदयेत् ।
सर्वं कलयसे यस्मात् कालस्त्वं तेन चोच्यसे ।
ब्रह्मविष्णुशिवादीनां त्वमसाध्योऽसि सुव्रत ।
पूजितस्त्वं मया भक्त्या प्रार्थितश्च यथासुखम् ।
यद्युज्यते तव विभो तत् कुरुष्व नमो नमः ।
एवं संपूजयित्वा तं ब्राह्मणाय निवेदयेत् ।
ब्राह्मणं प्रथमं पूज्य वासोभिर्भूषणैस्तथा ।
दक्षिणां शक्तितो दत्वा प्रणिपत्य विसर्जयेत् ।
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
सोपमृत्युं विनिर्जित्य शतं वर्षाणि जीवति ।
नापमृत्युभयं तस्य न च व्याधिकृतं भयम् ।
भवत्यव्याहतैश्वर्यः सर्वबाधाविवर्जितः ।
देहान्ते सूर्य्यभवनं भित्त्वा याति परं पदम् ।
पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ।

---

ख पाठः-

(1) कटितटे । (2) गृहीतकुसुमाञ्जलिः ।

दक्षिणां शक्तित इति ।

शतयाजी श्रिया युक्तः पुत्रपौत्रसमन्वितः ।

एतद्दानोपक्रमे ।

देयं निष्कशतं पार्थ दानेषु विधिरुत्तमः ।
मध्यमस्तु तदर्धेन तदर्धेनावरः स्मृतः ।
एवं [1]वृषरथोष्ट्रे च धेनोः कृष्णाजिनस्य च ।
अशक्तस्यापि क्लृप्तोऽयं पञ्चसौवर्णिको विधिः ।
[2]अतोऽप्यल्पेन यो दद्यान्महादानं [3]नराधिपः ।
प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत् ।

इति वचनात् अत्यन्ताशक्तस्य पञ्चसुवर्णं दक्षिणा । ततोऽल्पेन नाधिकारः ।

## अथायुष्करं दानम्

[A]ब्रह्माण्डे–

अथ दानं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
आयुष्करमिति प्रोक्तमारोग्यं सर्वसिद्धिदम् ।

आयुष्करमितिवचनादायुर्दाने मुख्यम् । गोमयोपलिप्तभूमौ सिततण्डुलपूर्णपात्रचतुष्टयस्थापनम् । तत्र सुवर्णमयमण्डलचतुष्टयस्थापतम् । तेषु सुवर्णमयमूर्त्तिचतुष्टयस्थापनम् । सुवर्णपरिमाणं यथाशक्ति । पूर्वं ब्रह्मा, तदनन्तरं विष्णुः, तदनन्तरमीश्वरः, तदनन्तरं शतक्रतुरिन्द्रः । एते च दक्षिणो-

---

ख पाठः–

(1) एवं वृषे रथोष्ट्रे । (2) अतोऽत्यल्पेन । (3) नराधमः ।

मुद्रित पाठः–

A- नास्ति ।

त्तरपङ्क्तिरूपेण स्थाप्याः। गन्धादिपञ्चोपचारैः [1]पूज्याः। [2]ब्राह्मण-चतुष्टयं क्रमेण पूजयित्वा दद्यात्। [3]इदं ब्राह्मणाय ददानीत्युच्चार्य्य सम्प्रीयतां मे भगवानात्मभूरित्युदीरयेत्। तथा विष्णुं दत्त्वा— संप्रीयतां जगद्व्यापी भगवान् विष्टरश्रवाः। तथा शिवं दत्त्वा— संप्रीयतां मे भगवान् कृत्तिवासाः। ततः इन्द्रं दत्त्वा— संप्रीयतां मे भगवान् वज्रपाणिः शतक्रतुः। इति दत्त्वा ब्राह्मणेभ्यश्चतुर्भ्यः एव दक्षिणां दद्यात्।

## अयुष्कामस्य चतुर्मूर्त्तिदानम्

[A]ब्रह्माण्डे—

चतुर्मूर्त्तिविधानं च स्त्रीणां माङ्गल्यकारकम्।
धन्यमारोग्यमायुष्यं भुक्तिमुक्तिफलप्रदम्।
पुत्रदं श्रीकरं पुंसामभीष्टफलसिद्धिदम्।
सर्वेषु पुण्यकालेषु चन्द्रसूर्य्यग्रहादिषु।
देवागारादिदेशेषु गृहे वा दानमाचरेत्।
समभूमौ विलिप्तायां नवकोष्ठं तु मण्डलम्।
दिक्कोष्ठे च लिखेत्तत्र रम्यं पद्मचतुष्टयम्।
अक्षुण्णतण्डुलैः शुक्लैः शुक्लपुष्पाणि तत्र च।
पलस्यार्द्धं सुवर्णेन कुर्य्यान्मूर्त्तिचतुष्टयम्।
शङ्खचक्रगदापाणिं पीतवाससमच्युतम्।
श्रीवत्साङ्कं चतुर्बाहुं केयूरमुकुटोज्ज्वलम्।

---

ख पाठः—

(1) पूजा। (2) ब्रह्मादि। (3) इमं ब्रह्माणं।

मुद्रित पाठः—

A- नास्ति।

नीलाम्बरधरं देवमनन्तं मुसलायुधम् ।
सङ्कर्षणं चतुर्बाहुं कटकादिविभूषितम् ।
प्रद्युम्नं चानिरुद्धं च शङ्खचक्रगदाधरौ ।
पीतश्वेताम्बरधरौ केयूरादिविभूषितौ ।
प्रागादिदिक्षु पद्मस्थान् वासुदेवादिकान् यजेत् ।
उपचारैः षोडशभिर्जलधारात्रयेण च ।
तेषां परित इन्द्रादिलोकपालस्य पूजनम् ।
त्रिः प्रदक्षिणमावर्त्य गृहीतकुसुमाञ्जलिः ।
उद्वास्य विप्रानाराध्य [1]दद्यान्मन्त्रानुदीरयेत् ।
नमोऽस्तु वासुदेवाय जगतां पतये नमः ।
तव [2]संकीर्त्तनाद्दानात् श्रेयः स्यात्तु सदा मम ।
सङ्कर्षण नमस्तेऽस्तु जगत्स्थित्यन्त[3]कर्मणे ।
तव देव प्रदानं मे सर्वपापहरं भवेत् ।
प्रद्युम्नायाखिलेशाय भक्तानां दुःखहारिणे ।
नमोऽस्तु देवदेवाय भक्तानामार्त्तिहारिणे ।
सदा नमोऽस्तु जगतः सृष्टिस्थित्यन्तहेतवे ।
अनिरुद्धाय देवाय विष्णवे परमात्मने ।

क्रमेण चतुर्भ्यो ब्राह्मणेभ्यो मन्त्रैरेतैरेकैकं [4]दत्त्वा दक्षिणादि क्रमेण दद्यात् ।

---

ख पाठः—

(1) नुदीरयन् । (2) संकीर्त्तनादेव ।
(3) कारितो । (4) दत्त्वा इति नास्ति ।

## अथायुष्कामस्य पञ्चमूर्त्तिदानम्

[A]ब्रह्माण्डे—

दानमारोग्यमायुष्यं श्रीकरं भुक्तिमुक्तिदम् ।
पुण्यकालेषु सर्वेषु गृहे वा दानमाचरेत् ।

आचार्य्यवरणम् । आचार्यकर्म । त्रिहस्तमात्र[1]नवकोणेषु चतुरस्र-करणम् । कोणकोष्ठानि त्यक्त्वा दिक्कोष्ठेषु मध्ये च शुक्लतण्डुलैरष्टपत्रपद्म-पञ्चकम् । तेषु पञ्चतण्डुलपद्मेषु पश्चिमे सद्योजातं वराभयहस्तं त्रिलोचनं [2]बालार्काकारं चन्द्रमौलिम्, उत्तरपद्मे वामदेवं [3]खड्गखेटहस्तं रक्ताङ्ग-माल्य[4]वस्त्रोपवीतं तुङ्गनासम्, दक्षिणपद्मे अघोरं [5]बद्धभ्रू कुटिविकृतानन-मष्टभुजं दक्षिणपाणिचतुष्कधृतशूलदण्डकुठारकपालं वामबाहुचतुष्टयधृत पाशखेटकखट्वाङ्गकालदण्डम्, पूर्वपद्मे तत्पुरुषं परशुशूलहस्तं पीताम्बरं पीतवर्णं सौम्यं चन्द्रमौलिम्, मध्ये ईशानं चतुर्भुजं दक्षद्वये परश्वभयधरं वामे मृगशूलधरं त्रिनेत्रं कटकमुकुटादिभूषितम् । अत्र पञ्चानां यथेच्छसुवर्णेन निर्माणम् । केवलमीशानस्य यावता सुवर्णेन निर्माणं तदर्द्धेन [6]सद्योजाता-दिमूर्तिचतुष्टयनिर्माणम् । आचार्य [7]एवमुक्तक्रमेण पञ्चमूर्त्तीः स्थापयित्वा सद्योजातादिपञ्चमन्त्रैः तैत्तिरीयसिद्धैः पञ्चब्राह्मणैः षोड़शोपचारैः पूजयेत् । पूजासमाप्तौ गुरुः "सुरास्त्वामभिषिञ्चन्तु" इत्यादिमन्त्रैः कुशोदकैर्दातारं स्नापयेत् । दाता स्नातः शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः गृहीत-कुसुमाञ्जलिः त्रिःप्रदक्षिणमावर्त्य देवेषु पुष्पाञ्जलिं प्रक्षिप्य प्रणम्य उपविश्य

---

**ख पाठः—**

(1) कोष्ठक । (2) बालाकारं । (3) खेटक । (4) वस्त्रयज्ञोपवीतं ।
(5) भ्रू कुटिकुटिलानन । (6) अन्यमूर्त्ति । (7) प्रकारेण ।

**मुद्रित पाठः—**

A- नास्ति ।

पञ्च ब्राह्मणान् पूजयित्वा मूर्तिपञ्चकं क्रमेण दद्यात्। मध्यममीशानं गुरवे दद्यात् अन्यस्मै वा दद्यात्। तत्र दानमन्त्राः—

सद्योजातदाने—

**नमोऽस्तु सद्योजाताय [1]भवाय भवभङ्गिने।**
**भयभङ्गो भवेन्मह्यं तव रूपप्रदानतः।**

वामदेवदाने—

**सोमाय वामदेवाय शिवाय शिवरूपिणे।**
**सदा मे शिवमेवास्तु तव रूपप्रदानतः।**

अघोरदाने—

**नमोऽघोराय [2]घोराय जगत्संहृतिकर्मिणे।**
**शरणं त्वां प्रपन्नोऽहमशङ्कं [3]मम शं कुरु।**

तत्पुरुषदाने—

**पुरुषाय पुराणाय हराय वरदाय च।**
**तव रूप प्रदानं मे श्रेयसेऽस्तु नमोऽस्तु ते।**

गुरवे ईशानदाने—

**ईशानो जगतामीशो देवानामभयङ्करः।**
**रक्षत्वशेषभूतानामीशो मां शरणं गतम्।**

एवं दत्वा प्रत्येकं दक्षिणां च दद्यात् आचार्य्यव्यतिरिक्ताय। मध्यप्रतिमादान-पक्षे आचार्य्याय सुवर्णं वासोयुगं दक्षिणां दद्यात्।

॥ इति पञ्चमूर्त्तिदानम् ॥

---

**ख पाठः—**

(1) हराय भवभञ्जने। (2) जगतः सृष्टिस्थित्यन्तकर्मणे।
(3) मां सदाकुरु।

Aब्रह्माण्डे पञ्चदैवतदानं सम्पूर्णायुःफलम् आरोग्यफलं श्रीकरं पापघ्नं दुःस्वप्नाद्भुतशान्तिकरं च । कुशोदकैः प्रातःस्नात्वा[1](चार्यवरणम् । आचार्य्यं उपलिप्तभूमौ अग्निः सोमः वरुणः सरस्वती अग्निविष्णू इति पञ्चदेवताः यथेच्छसुवर्णघटिताः पीठे शुक्लतण्डुलकृतपञ्चपद्मे संस्थाप्य पूजयेत । अग्निः छागस्थस्त्र्यक्षः अक्षसूत्रशक्तिवराभयहस्तः । सोमो) दशाश्वरथस्थो गदापाणि द्विवाहुर्वरदः [2]वरुणः पाशहस्तो मकरवाहनः । सरस्वती वरपुस्तकाक्षसूत्रा-भयचतुर्भुजा हंसवाहना, अग्निविष्णू एकपद्मे उपविष्टौ । अग्निः साक्षसूत्र-कमण्डलुः । विष्णुः शङ्खचक्रगदाहस्तः । एवं पूजानन्तरं दाता देवान् प्रदक्षिणीकृत्य उपविश्य पञ्च ब्राह्मणान् सुवर्णवस्त्रयुग्मैः पूजयित्वा तेभ्यः प्रत्येकं सम्पूर्णायुष्कामोऽहमिममग्निं ददे । सम्प्रीयतामयं देवो भगवानग्निः । सम्प्रीयतामयं मे देवो भगवान् सोम [3]इत्यादिवाक्यैः पञ्चमूर्त्तीर्दद्यात् । उपदेष्ट्रे आचार्य्याय तत्समां दक्षिणां दद्यात् । पश्चात् पञ्च ब्राह्मणान् पूजयित्वा पुण्याहं स्वस्ति ऋद्धिं वाचयित्वा तेभ्योऽपि किञ्चिद्दद्यात् इति ।

## आयुष्करं रोगहरं [4]चाश्विनदानं ब्रह्माण्डोक्तम्

अश्विनौ द्विहस्तौ, दक्षिणे औषधयः, वामे पुस्तकं द्वयोः । एकस्य दक्षिणपार्श्वे नारी अन्यस्य वामपार्श्वे । रत्नभाण्डं हस्ते । एवं देवद्वयं यथाशक्ति सुवर्णेन कृत्वा तण्डुलढक्कृतहस्तमितवेदीद्वये प्रत्यङ्मुखं स्थापयित्वा प्राङ्मुखः पूजयित्वा दद्यात् । पुष्पाञ्जलिं गृहीत्वा प्रदक्षिण–

---

**ख पाठः–**

(1) बन्धनस्थ पाठो नास्ति । (2) चन्द्रप्रतिमो इत्यधिकः ।

(3) संप्रीयतां मे भगवती सरस्वती, संप्रीयतां मे भगवान् वरुणः, संप्रीयतां मे भगवान् विष्णुः इति वाक्यैः । (4) चाश्विदानं ।

**मुद्रित पाठः–**

A- ब्रह्माण्डे नास्ति ।

मावृत्य ब्राह्मणद्वयमाहूय पूजयित्वा प्रत्येकमेकैकं दद्यात् । आयुष्कामोऽहमारोग्यकामो वा इमामश्विप्रतिमां ददामि ।

**नासत्यदस्रौ युवयोर्हिरण्यरूपप्रदानान्मम शान्तिरस्तु ।**

**यथा युवां देवभिषग्भवेनां तथा च मे [1]रोगशमाय देवौ ।**

इति मन्त्रः ।

द्विवचनान्तोऽप्युभयत्रावर्त्तनीयः । ततो दक्षिणा । ग्रहसूचितापमृत्युनिवारणेनायुष्कामो नक्षत्रग्रहपीडादुःस्वप्नाद्युतशान्त्यर्थं ब्रह्माण्डोक्तं ग्रहदानं कुर्य्यात् । विषुवायनग्रहणार्क्षरविवारसर्वपुण्यकालेषु पुण्यदेशे गृहे वा कार्य्यम् । भूमिलेपनम् । हस्तमात्रं द्विहस्तं त्रिहस्तं वा स्वीकृत्य पूर्वापरदक्षिणोत्तरचतूरेखाकरणम् । नवकोष्ठेषु सिततण्डुलैः पद्मनवकलेखनम् । तत्र वक्ष्यमाणमन्त्रोक्तलक्षणसुवर्णमयग्रहनवकस्थापनम् । सुवर्णनिष्कत्रयेण एकैकग्रहप्रतिमा यथाशक्ति वा । मध्ये सूर्य्यं प्राङ्मुखम्, आग्नेये सोममादित्याभिमुखम्, दक्षिणे भौमम्, ईशाने बुधम्, उत्तरे गुरुम्, पूर्वे शुक्रम्, पश्चिमे शनिम्, नैर्ऋते राहुम्, वायव्ये केतुम्। सर्वानादित्याभिमुखान् स्थापयित्वा आकृष्णेन, इमंदेवा, अग्निर्मूर्द्धा, उद्बुध्यस्व, बृहस्पते अति, अन्नात् परिस्रुतः, शन्नो देवी, काण्डात् काण्डात्, केतुं कृण्वन्, एतैर्मन्त्रैः स्व स्व वर्णवस्त्रगन्धपुष्पधूपाद्यैः [2]पूजनम् । [3](आदित्यभौमयोः रक्तवर्णम्, सोमभार्गवयोः शुक्लम्, बुधबृहस्पत्योः पीतं, शनिराह्वोः कृष्णम्, केतो धूम्रम्। एवं पूजोपकरणम् ।) स्त्रीशूद्रयोर्दातृत्वे ब्राह्मणमाचार्य्यत्वेन वृत्वा आचार्य्यद्वारा भूलेपनादिपूजान्तकरणम् । दानकाले दातुस्तिलकुशोदकैः स्नानम् । उपविश्य सूर्य्यादीनां पूजनम् । नव ब्राह्मणानुपवेश्य पूजनम् । वक्ष्यमाणमन्त्रैः प्रत्येकस्यैकैकग्रहदानम् ।

---

**ख पाठः—**

(1) रोगहरौ भवेताम्। (2) पूजयित्वा नवब्राह्मणेभ्योःदानम् ।

(3) बन्धनस्थपाठो नास्ति ।

मन्त्राः—

पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहः ।
दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ।
श्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दण्डधरो द्विबाहुः ।
चन्द्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं प्रददातु देवः ।
रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् ।
धरासुतः शक्तिधरश्च शूली सदा मम स्याद् वरदः प्रशान्तः ।
पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी ।
चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्च ।
पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः ।
दधाति दण्डं च कमण्डलुं च तथाक्षसूत्रं वरदोऽस्तु मह्यम् ।
श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः ।
तथाक्षसूत्रं च कमण्डलुं च जटां च बिभ्रद् वरदोऽस्तु मह्यम् ।
नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् ।
चतुर्भुजः सूर्यसुतः प्रशान्तो ददातु मह्यं वरमल्पगामी ।
नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ।
चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यम् ।
धूम्रो द्विबाहुर्वरदो गदाभृद् गृध्रासनस्थो विकृताननश्च ।
किरीटकेयूरविभूषिताङ्गः सदास्तु मे केतुगणः प्रशान्तः ।
"इत्युक्त्वा दापयेत्सर्वानादित्यादिनवग्रहान्"

इतिवचनादेतान् मन्त्रान् पठित्वा प्रत्येकसम्प्रदान नामग्रहपूर्वकं प्रत्येकमेकैक-ग्रहं ददामीति युगपद्दद्यात् ।

**मध्यमं गुरवे दद्यादन्यस्मै वा प्रदापयेत् ।**

एतस्मिन् पक्षे आदित्यं गुरवे ब्राह्मणाय अन्येभ्यः प्रत्येकं सोमं भौममित्येवं वाक्यम् । - अन्यस्मै आदित्यदानपक्षे गुरवे वासोयुग्मं सुवर्णं च देयम् । स्त्रीशूद्रयोगु रुद्वारा नियमः । अन्येषां वैकल्पिक इति प्रतिभाति । इति ग्रहदानम् ।

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे

॥ अपमृत्युहराणि कर्माणि समाप्तानि ॥



([1]ख पुस्तके अधिकपाठः पञ्चब्रह्ममन्त्रान्तः( यथा—

पञ्चमूर्त्तिदाने पञ्चब्राह्मणैः षोडशोपचारेण पूजयेदित्युक्तम् । इदानीं तद् विधिर्लिख्यते ।

**शौनक उवाच-**

**अत्राचारं प्रवक्ष्यामि पञ्चब्रह्मविधिं द्विजाः**
**यस्य विज्ञानमात्रेण रुद्रलोके महीयते । १ ।**
**अघोराख्यस्य मन्त्रस्य वक्ष्ये प्रथमतो विधिम्**
**अघोरेऽस्य मुनिः प्रोक्तो छन्दोनुष्टुबुदीरितम् । २ ।**
**अघोरो रुद्र उद्दिष्टो देवता मन्त्रिसत्तमैः**
**हृदयं चतुर्भिरुद्दिष्टं शिरस्तावद्भिरेव च । ३ ।**
**शिखा सप्तभिरुद्दिष्टा अष्टभिः कवचं स्मृतम्**
**अष्टभिर्नेत्रमुद्दिष्टमस्त्रं दशभिरुच्यते । ४ ।**

---

**ख पाठः-**

(1) अपमृत्युहराणि कर्माणि समाप्तानि- इत्यनन्तरमधिकःपाठः खपुस्तके ।

सजलघन-सुनीलं पञ्चवक्त्रं त्रिनेत्रं
भुजगधरमघोरं रक्तवस्त्राङ्गरागम्
परशुडमरुखट्वाखेटकं बाणचापौ
त्रिशिखनरकपाले बिभ्रतं भावयामि ।५।

अभिचारे परदेशे कृष्णवर्णो भवेत् प्रभुः
वश्ये कुङ्कुमसंकाशो मुक्तौ चन्द्रसमप्रभः । ६ ।
लक्षमेकं जपन् मन्त्रं घृतसिक्तैस्तिलैः शुभैः
तद्दशांशं प्रजुहुयान् मन्त्री मन्त्रस्य सिद्धये । ७ ।

ॐ नमो . . . .
गुणात्मशक्तियुक्ताय योगमायात्मने नमः । ८ ।
शैवे सम्पूजयेत् पीठे षट्कोणान्तस्थपङ्कजे
अङ्गपूजां केशरेषु कृत्वा पत्रेषु तत्परम् । ९ ।
परशुं डमरुं खट्वां खेटं बाणं च कार्मुकम्
शूलं कपालं प्रयतो येषामस्त्राणि देशिकः । १० ।
दलाग्रेषु ततः पूज्या ब्रह्माद्याः प्रोक्तलक्षणाः
लोकेशान् पूजयेत् पश्चादायुधैः स्वैः समृद्धितः । ११ ।
पूजादिभिः समृद्धेन मन्त्रेणानेन साधकः
इष्टान् प्रयोगान् कुर्वीत सिध्यन्ते ते न संशयः । १२ ।
कुर्य्यात् सर्पिरपामार्गतिलसर्षपपायसैः
साज्यैः सहस्रं प्रत्येकं यामिन्यां जुहुयात् सुधीः । १३ ।
होमोऽयं नाशयेत् सद्यो भूतकृत्याद्युपद्रवान्
चतुर्ष्वन्येषु मन्त्रेषु अघोरः कीर्त्तितो ऋषिः । १४ ।

सद्योजातेऽनुष्टुब्युक्तं वामदेव्यं यजुः स्मृतम्
तत्पुरुषाय गायत्री ऐशानं च यजुस्तथा । १५ ।
देवता चैव लिङ्गोक्ता नियोगोऽभीष्टसाधने
पञ्चाङ्गमन्त्रै .... .... परिकीर्तिता । १६ ।
वराभयं हस्तयुगे दधानं त्रिलोचनं चन्द्रनिबद्धमौलिम्
बालाकृतिं श्वेतदुकूलयुक्तं श्वेतं सद्योजातमहं प्रपद्ये । १७ ।
रक्ताकृतिं रक्तदुकूलमाल्यं यज्ञोपवीतं च सतुङ्गघोषम्
हस्तद्वये खेटखड्गे दधानं विभावये सम्प्रति वामदेवम् । १८ ।
पीताङ्गकं पीतदुकूलमाल्यं कुठारशूलौ निशितौ दधानम्
सौम्यं मृगाङ्केन विबद्धमौलिं नित्यं च तत्पूरुषकं नतोऽस्मि ।१९।
चतुर्भुजोऽभीतिकुठारवेदशूलान् दधानः सुमुखस्त्रिनेत्रः
हारी किरीटाङ्गदभूषिताङ्ग ईशान एष प्रीयतां सदा मे ।२०।
पीठमावरणं चैषामघोरेण समं श्रुतम्
पुरश्चर्य्या तथैवोक्ता केन केन ...... । २१ ।
... ... पुरश्चर्य्यानिन्दिते
यावता वा जपेनासौ पूतोहमिति मन्यते । २२ ।
मन्त्रान् प्रणवसंयुक्तान् जपेत् तावत् समाहितः
य एतैः पञ्चभिर्मन्त्रैः जपहोमादिकं चरेत् । २३ ।
इष्टान् कामानवाप्येह रुद्रेण सह मोदते
शत्रवः प्रशमं यान्ति नश्यन्ति व्याधयस्तथा
कार्य्याणिसिद्धिमायान्ति जपादेर्नात्र संशयः ।

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्
पुत्रार्थी लभते पुत्रान् जपमात्रान्न संशयः ।
ये जपन्ति सदा भक्त्या शिवासक्तेन चेतसा
देहान्ते तारकं ब्रह्म तेषां वक्ति महेश्वरः ।
यान् यानिच्छति कामान् यः स तानाप्नोति निश्चितम्
महादेवप्रसादेन नात्र कार्य्या विचारणा ।

इति शौनकीये पञ्चब्रह्मविधिः ।

मन्त्राश्च—

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः
भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः । (१)
वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः ।
कालाय नमः कलविकरणाय नमो बलविकरणाय नमो
बलाय नमो बलप्रमथनाय नमः ।
सर्वभूतदमनाय नमो मनोन्मनाय नमः । (२)
अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः,
सर्वतः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । (३)
तत्पुरुषाय विद्महे महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात् ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोधिपति र्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।

( इति पञ्चब्रह्ममन्त्राः )

# अथ कालमृत्युहराणि

न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ।

इति महाभारतवचनात् [1]कालमृत्युप्रतीकाराभाव इति [2]प्रसिद्धः, युक्तं चैतत् । इदं हि शरीरं यावत्कालीनपुण्यपापफलभोगार्थमारब्धं तत्समाप्तौ शरीरपातस्यावश्यकत्वात् । प्रारब्धकर्मभोगकालीनमेवायुर्ज्योतिःशास्त्रप्रमेयम् । यद्यप्ययमुत्सर्गस्तथापि , "अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते, इति येन अतितरां पुण्यमायुर्विवृद्धयर्थं कृतं तस्य स्यादेवायुर्वृद्ध्या कालमृत्यु[3]वञ्चनम् ।

तथा च स्मरन्ति—

रसायनतपोजप्ययोगयुक्तैर्महात्मभिः
कालमृत्युरपि प्राज्ञैर्जीयते [4]नालसैर्नरैः ।

रसायनादीनां तावद् वैद्यशास्त्रप्रामाण्यादेवायुर्वृद्धिहेतुत्वम् "जीवेत् सहस्रं स समा विरोगः" इत्यादिश्रवणात् । तपांसि च नानाविधान्यायुर्विवृद्ध्यर्थानि श्रूयन्ते ।

प्रणवोपासकस्य जीवनेच्छोः कालमृत्युजयः ।

वसिष्ठयोगे—

विनिश्चित्यात्मनः कालं बाह्याभ्यन्तरलक्षणम् ।
कुर्वन् विध्युक्तकर्माणि नित्यनैमित्तिकानि तु ।
योगेन परमात्मानं गुहायां प्राप्य चेतसा ।
तारकं तु जपेन्नित्यं यतात्मा कामवर्जितः ।
स कालं समतिक्रम्य दीर्घायुर्ब्रह्मविद् भवेत् ।

---

ख पाठः—

(1) कालमृत्यौ । (2) प्रतिभाति । (3) निवर्त्तनम् । (4) नाधमै ।

तत्रोङ्कार[1]जपात् पूर्वमेवं ध्यातव्यम् :—

इदमग्रे सदेवासीत् सौम्यजन्मनि कारणम् ।
कारणं च समभवच्चतुर्वर्णाक्षरात्मकम् ।
[2]संहारसंज्ञकं चास्य व्यञ्जनं चार्धमात्रकम् ।
[3]मकारोदूर्ध्वे बिन्दुरूपं बिन्दोर्नादः परं स्थितः ।
तस्मिन् विश्वार्चितो रुद्रो महर्द्धिः कृष्णपिङ्गलः ।
ऊद्र्ध्वरेता विरूपाक्षस्तिष्ठतीत्याहुरागमाः ।
ॐकारो वाचकस्तस्य वाच्यो रुद्रोऽमृताक्षरः ।

इति ध्यानवतः सततं प्रणवजपयुक्तस्य कालमृत्युरपिनश्यति ।

तापनीयश्रुतौ-

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं जयति ।

अत्र तापनीयश्रुत्युक्तदिशा मन्त्रराजमासोपासनायां निरन्तराभ्यासयुक्तस्य मृत्युजयः फलम् । प्रागुक्तनृसिंहविद्याया नित्यतयानुष्ठाता यच्छद्वेन निर्दिश्यत इति शङ्कराचार्यव्याख्यानात् ।

भार्गवसंहितायां मार्कण्डेयं प्रति [4]भृगुवाक्यम्—

सनत्कुमारं योगीन्द्रं ब्रह्मणः पूर्वजं सुतम् ।
दण्डवत्प्रणिपातेन तमहं [5]समुपस्थितम् ।
ततोऽपृच्छमहं तस्मै लोकानां हितकाम्यया ।
चतुर्वर्गस्य कर्तारः श्रुता धर्मा न तु श्रुतम् ।

---

ख पाठः—

(1) जपे । (2) संहारसकलं । (3) मकारोऽर्द्धे न्दुसंरूपं बिन्दुर्नादः परंस्थितः । (4) ब्रह्मवाक्यम् । (5) समुपस्थितः ।

मृत्योर्निवर्त्तनं धर्ममिम त्वं वक्तुमर्हसि ।
अयं हि पञ्चमो वर्गः सर्वधर्मोत्तमोत्तमः ।
ततः स प्राह मन्त्राणामुत्तमं स्वर्गमोक्षदम् ।
मृत्योर्निवर्त्तनोपायं तं वदामि तवानघ ।

इत्युपक्रम्य मन्त्रराजः कथितः ।

[1]गच्छन् तिष्ठन् वसन् वापि जाग्रद् वा शयने स्थितः ।
मन्त्रैकशरणो नित्यं मनसामुं मनुं स्मरेत् ।

नरसिंहपुराणे मार्कण्डेयं प्रति भृगुवाक्यम्— (७। ३८. तः)

नरसिंहमजं देवं यदि पूजयसे सदा ।
वत्स ! जेतासि मृत्युं त्वं ससैन्यं नात्र संशयः । (३८)
[2A]तयोर्भद्रातटे वत्स ! त्वं प्रतिष्ठाप्य केशवम् । (४१)
[B]तमाराध्य जगन्नाथं गन्धपुष्पादिभिः क्रमात् ।
हृदि कृत्वेन्द्रियग्रामं मनः संयम्य [C]यत्नतः । (४२)
हृत्पुण्डरीके देवेशं शङ्खचक्रगदाधरम् ।
ध्यायन्नेकमना वत्स ! द्वादशाक्षरमभ्यसन् । (४३)
इमं मन्त्रं हि [3]जपतो देवदेवस्य [4]शार्ङ्गिणः ।
प्रीतो भवति [5]विश्वात्मा मृत्युं [D]चाप्यपनेष्यति । (४४)

---

**ख पाठः—**

(1) गच्छन्निति श्लोको नास्ति । (2) ततो भद्रातटे । (3) पठतो ।
(4) चक्रिणः । (5) धर्मात्मा ।

**मुद्रित पाठः—**

A- तत्र भद्रवटे । B- आराधय । C- तत्वतः । D- येनापने ।

[A]शास्त्रोक्तकाले त्वासन्ने दिने तस्मिन् महामतिः ।(४९)
स्नात्वा यथोक्तविधिना कृत्वा विष्णोस्तथार्चनम् ।
हृदि कृत्वेन्द्रियग्रामं विशुद्धेनान्तरात्मना । (५०)
आसनं स्वस्तिकं बद्ध्वा कृत्वासौ प्राणसंयमम् ।
ॐकारोच्चारणाद्धीमान हृत्पद्मं [B]च विकाशयन् ।(५१)
तन्मध्ये रविसोमाग्निमण्डलानि यथाक्रमम् ।
कल्पयित्वा हरेः पीठं [C]तस्मिन्नेव सनातनम् । (१२)
पीताम्बरधरं [D]विष्णुं शङ्खचक्रगदाधरम् ।
भावपुष्पैः समभ्यर्च्य मनस्तस्मिन्निवेश्य [E]सः । (५३)
ब्रह्मरूपं हरिं ध्यायंस्ततो मन्त्रमुदीरयेत् । (५४)
मनस्तत्रैव संलग्नं देवदेवजगत्पतौ । (५५)
मृत्युश्च किङ्कराश्चैव विष्णुदूतैः प्रपीडिताः ।
[F]स्वराजसन्निधौ गत्वा चुक्रुशुर्वेपिता भृशम् । (८ । १)

[1]यम उवाच

हृदिस्थे पुण्डरीकाक्षे सततं भक्तवत्सले ।
[2]पश्यन्तं विष्णुदूतं तु को हिंस्यात् केशवाश्रयम् ।

---

ख पाठः—

(1) सुमन्तुरुवाच । (2) पश्यतां विष्णुदूतानां ।

मुद्रितपाठः—

A- मात्रोक्तकाले । B- स । C- तस्मिन् देशे । D- कृष्णं । E च ।
F- स्वराजस्तेनुनिर्देशं गत्वा ते चुक्रुशुर्भृशम् ।

वासिष्ठयोगे—

एवं वा विजयोपायः कालस्य मुनिसत्तम ।
नारायणं जगन्नाथं वासुदेवमजं हरिम् ।
चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम् ।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ।
पद्मोदरदलाभोष्ठं सर्वलोकाभयप्रदम् ।
स्मरन् ब्रह्मपुरे तस्मिन् हृत्सरोरुहमध्यगम् ।
जपन् नारायणायेति मन्त्रमोङ्कारसंयुतम् ।
विधिनोक्तेन मार्गेण कालजित् सोऽपि पुत्रक ।

वसिष्ठकल्पे वासिष्ठयोगे च—

मृत्युभीतस्त्वशुद्धोऽपि सर्वावस्थासु सर्वदा ।
सर्वापत्सु च सर्वत्र मृत्युसञ्जीवनीं जपेत् ।

तथा—

एवं च विजयोपायः कालस्य मुनिसत्तम ।
हृत्पद्मेऽष्टदलोपेते [1]कल्पमध्यात् समुत्थिते ।
द्वादशाङ्गुलनालेऽस्मिन् चतुरङ्गुलवन्मुखे ।
प्राणायामैर्विकशित केशरान्वितकर्णिके ।
सुधारसं विमुञ्चद्भिः शशिरश्मिभिरावृते ।
ऋतं सत्यं परं ब्रह्मपुरुषं कृष्णपिङ्गलम् ।

---

ख पाठः—

(1) कन्दमध्यात् ।

ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं सदाशिवम् ।
पञ्चवक्त्रं महादेवं दशबाहुं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं सर्वभूतहृदि स्थितम ।
षोड़शच्छदसंयुक्तात् शिरःपद्मादधोमुखात् ।
निर्गतामृतधाराभिः सहस्रैश्च समन्ततः ।
प्लावितं पुरुषं तत्र चिन्तयन् सुसमाहितः ।
त्र्यम्बकेन तु निष्कामो यजेत्तद्गतमानसः ।

वासिष्ठे—

मृत्युभीतस्त्वशुद्धोऽपि सर्वावस्थासु सर्वदा ।
सर्वापत्सु च सर्वत्र मृतसञ्जीवनीं जपेत् ।

मृतसञ्जीवनी— त्र्यम्बकम् । मन्त्रराजाधिकारे भार्गवसंहितायाम्—

गच्छंस्तिष्ठन् वसन् वापि जाग्रद् वा शयने स्थितः ।
मन्त्रैकशरणो नित्यं मनसा तं मनुं स्मरेत् ।

तथा—

[1]यद् वा समाधिमभ्यस्य वञ्चयेत् कालमागतम् ।
समाधिः समतावस्था जीवात्मपरमात्मनोः ।
कृत्वा कूर्मासनं प्राणं संयम्य हृदये स्मरन् ।
मृत्युञ्जयं [2]सुधाम्भोधौ मग्न(ग्न)मासीत् कृतान्तजित् ।

मृत्युञ्जयं— ओम् जूं सः इति पूर्वोक्तमन्त्रम्—

---

ख पाठः—

(1) यद्वेति श्लोको नास्ति ।

(2) सुधाम्भोधिमग्नोयंस्यात् कृतान्तजित् ।

[1]पवनयोगे मृत्युजयोपायाः—

गुरूपदेशमार्गेण खेचरी यदि सिध्यति ।
तदा विगतरोगः सन् योगी मृत्युञ्जयो भवेत् ।
पञ्चानामपिभूतामां धारणा यदि सिध्यति ।
तदा [2]दृढशरीरः सन् योगी मृत्युञ्जयो भवेत् ।

तथा—

मूलस्थानं समाकुञ्च्य उड्ड्याणाख्यं तु धारयेत् ।
इडां च पिङ्गलां बद्ध्वा वाहयेत् पश्चिमापथम् ।
अनेनैव विधानेन सेवते पवनो लयम् ।
ततो न जायते मृत्युर्जरारोगादिकं तथा ।
उदरे पश्चिमं तानं नाभेरूद्ध्वं च कारयेत् ।
उड्डीयानो ह्यसौ बन्धो मृत्युमातङ्गकेशरी ।
महामुद्रामहाबन्धौ प्रयत्नेन करोति यः ।
षण्मासाभ्यन्तरे मृत्युं जयत्येव न संशयः ।
शक्तिचालनमेवं हि प्रत्यहं यः समाचरेत्
गुरूपदेशविधिना तस्य मृत्युभयं कुतः ।

विपरीतकरणाधिकारे—

याममात्रं तु यो'नित्यमभ्यसेत् स तु कालजित् ।

एतेषां खेचरीप्रभृतीनां स्वरूपमुत्तरत्र वक्ष्यामः ।

इत्यग्निचिद्वाजपेयिनर्रासिंहविरचिते नित्याचारप्रदीपे
कालमृत्युजयोपायाः ।

---

ख पाठः—

(1) पदमानयोगे । (2) विगतरोगः ।

# उत्पाता

त्रिविधोपातसूचितापमृत्यु शान्तिकथनार्थमुत्पाता उच्यन्ते ।

अभूतपूर्वं यत्पूर्वं [A]जायते तत्तदन्यथा ।
तदद्भुतमिति प्रोक्तं नैमित्तं स्यान्निमित्तजम् ।

केतूदयादिनिमित्तं यत्तु नैमित्तिकं शुभाशुभसूचकम् ।

वराहः—

"यः प्रकृतिविपर्यासः प्रायः संक्षेपतः स उत्पातः ।"

प्रायःशब्दात् प्रकृतिविपर्य्यासादन्यदप्यनिष्टसूचकमुत्पातः । तेन प्रकृति-विपर्य्यासमात्रमद्भुत शब्दवाच्यम् , अनिष्टसूचकमात्रं चोत्पातशब्दवाच्यम् ।

उत्पातहेतुर्मत्स्यपुराणे— (२२८ । ५)

पुरुषापराधान्नियतमपरज्यन्ति देवताः ।
ततोऽपराधाद्देवानामुपसर्गः प्रवर्त्तते । (५)

उपसर्गः— उत्पातः ।

ततोऽपराधाल्लोकानामपरज्यन्ति देवताः ।
ताः सृजन्त्यद्भुतान् भावान् दिव्यनाभसभूमिजान् ।
त एव त्रिविधा लोके उत्पाता देवनिर्मिताः ।
विचरन्ति विनाशाय रूपैः संबोधयन्ति च ।
[B]ये तेषु शान्तिं कुर्वन्ति न ते यान्ति पराभवम् ।

---

मुद्रित पाठः—

A- यत्पूर्वं जायतेन्यथा, अद्भुतसागर—४
B- ये तु न प्रतिकुर्वन्ति, अद्भुतसागर—६

ये तु न प्रतिकुर्वन्ति विनश्यन्त्येव तेऽचिरात् ।

दिव्यानि— ग्रहनक्षत्रगतानि । नाभसानि— दिग्दाहोल्कादीनि । पार्थिवानि— भूकम्पजलगृहादिगताद्भुतानि ।

## अथ मण्डलानि

दिनप्रथमयामः रात्रिप्रथमयामश्च वायुमण्डलम् । द्वितीयदिनयामः रात्रिद्वितीययामश्चाग्निमण्डलम् । तृतीयदिनयामः रात्रितृतीययाम[1]श्चेन्द्रमण्डलम् । चतुर्थदिनयामः रात्रिचतुर्थयामश्च वरुणमण्डलम् ।

उत्तराफाल्गुनी हस्ता चित्रा स्वाती तथैव च
मृगशीर्षाश्विनी पुनर्वसुश्च वायुमण्डलम् ।
पुष्या पूर्वा विशाखा च द्विजा चैवाथ कृत्तिका
मघा पूर्वा फाल्गुनी च वह्नेर्मण्डलमुच्यते ।
अनुराधोत्तराषाढ़ा ज्येष्ठाथ श्रवणान्विता
रोहिणी च धनिष्ठा [2]स्यादिन्द्रनक्षत्रमण्डलम् ।
पूर्वाषाढ़ोत्तराभाद्रपदं मूला च रेवती
अश्लेषार्द्रा [3]शतभिषा वरुणस्य भमण्डलम् ।
अनिष्टादौ वायुवह्नी तयोर्योगो भयप्रदः
जलेशेन्द्रौ तु शुभदौ तयोर्योगोऽतिशोभनः ।
वायुनेन्द्रो जलेशश्च वह्निना निष्फलौ मतौ
अग्नीन्द्रयोगे [4]कष्टेष्टे तथावायुजलेशयोः ।

---

ख पाठः—

(1) चन्द्रमण्डलम् । (2) स्याच्चन्द्र । (3) शतभिषग्वरुणस्य च मण्डलम् ।
(4) कष्टे द्वे ।

एवं चात्र यन्मण्डलेऽद्भुतं तस्य स्वरूपेण अदुष्टत्वेऽपि मण्डलदोषेण दुष्टत्वम्। [1]यच्चानिष्टकरमद्भुतं तस्य मण्डलशुभत्वे किंचिदिष्टमनिष्टफलम्। अतएव उत्पातशान्तिमभिसन्धाय (अभिधाय) पृथङ्मण्डलेष्वपि शान्तिं दर्शयति, वायव्ये वायवी शान्तिः। ऐन्द्रे ऐन्द्रीत्येवं शान्तिः। न चोत्पातशान्तिर्मण्डलशान्तिश्च विकल्पेन विधीयते। द्वयोर्भिन्ननिमित्तेन विधानात्। एकार्थत्वाज्ञानेन विकल्पासम्भवात्।

**विशेषेण च भौमेषु शान्तिः [A]कार्य्यामृता भवेत्।**

(मत्स्यपुराणे २२७। २)

**अभया चान्तरिक्षेषु सौम्या दिव्येषु पार्थिव ?**

(मत्स्यपुराणे २२७। ३)

इत्युक्त्वा मत्स्यपुराण एव वायव्यमण्डले वायवीयादिशान्तिं [B]दर्शयति निमित्तभेदेन किं च।

**भिन्नमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित्।**

**तेषु शान्तिद्वयं कार्य्यं निमित्ते सति नान्यथा॥**

इति वेलानक्षत्रमण्डलदेवताभेदेन निमित्तेन [2]शान्तिं दर्शयति। तेनोत्पातशान्तिर्मण्डलशान्तिश्च पृथगेव कार्येति पक्षः। वस्तुतस्तु "प्रायश्चित्तेषु चैकार्थ्या"दित्यधिकरणन्यायेन दोषनिर्घातार्थत्वेन कार्य्यैक्याद विकल्प एव। न च [3]निमित्तभेदः निर्घातोल्काभूमिकम्पदिग्दाहनक्षत्रग्रहवैकृतवृष्टिविकाराग्निविकारजलाशयगृहमृगादिविकृतान्यनेकान्यद्भुतान्युपक्रम्य —

---

**ख पाठः—**

(1) नानानिष्टकर। (2) शान्तिद्वयं। (3) निमित्तभेदेन।

**मुद्रितपाठः—**

A- तथा।

B- ग्रहातिरिक्ते पवने भक्ष्ये सर्वविगर्हिते।

वैकृते वातजे व्याधौ वायवी शान्तिरिष्यते॥ (मत्स्य पुराण २२७। ११)

"अन्यच्च यत् स्यात् प्रकृतेः प्रतीपं तन्मण्डलैरेव विचिन्तनीयम्"
इति विशिष्टस्य निमित्तत्वकथनात् ।

**सन्ध्ययोरुभयोश्चैव भूकम्पो जायते यदि ।**

**सन्ध्योल्कापातजाद्दोषात् शान्तिर्दिव्या चतुर्दशी ॥**

इति सन्ध्याकम्पे दोषमुक्त्वा तच्छान्तिः समुच्चीयते । वर्णविशेष-दिग्विशेषादेरङ्गविशेषणस्य पृथक् शान्तिनिमित्तत्वाभावात् । तद्यथा—

**केतोः स्वरूपेणाङ्गत्वेऽपि 'शिखया धूम्राय युक्त'**

इत्यादिदोषसूचकं विशेषणं निमित्तविशेषणं भवति । तेन मण्डलशान्तिकरणेपि दोषशान्तिर्न पृथगुत्पातशान्तिः । [2]मण्डलद्वयजे शान्तिद्वयं वैकल्पिकमेका कोटिः । ऐन्द्रवरुणमण्डलयोः सामान्येन शुभफलत्वेपि देशविशेषजातिविशेष-प्रत्यनिष्टसूचकत्वात्तैरैन्द्री वारुणी वा कर्त्तव्या शान्त्यन्तरं वा । एवं वरुण-वायुयोगे येषां दोषस्तैः शान्तिद्वयम् । वाय्वग्नियोगे सर्वैः । इन्द्राग्नियोगे येषु दोषस्तैः शान्तिद्वयम् । कुलश्रेष्ठकाशीकाश्मीरान्ध्रादिदेशस्थानामनिष्टदमैन्द्रम् । गोवर्द्धनकिरातचेदिसैन्धवादि [3]वैदेहकानां दुःखसूचकं वारुणम् । एतद्द्वयमन्येषां क्षेमसुभिक्षसुवृष्टिदम् । पटच्चर[4]भारवीनादिदेशे [5]दोषद ऐन्द्राग्निमण्डले । मगध-दशदण्डादिदेशे दोषदो वारुणवायुसंयोगः ।

**परस्परं विघातः स्यादैन्द्रवायव्ययोर्द्वयोः ।**

**वरुणाग्नेययोश्चैव वेलानक्षत्रभेदतः ॥**

मण्डलसन्देहे मुनिमतभेदादिकृते (सर्वकृते) वा निर्णयः । उत्पातानन्तरं सप्ताहाध्यन्तरे महावात्यायां वायुमण्डलनिश्चयः । सप्ताहाभ्यन्तरे चोल्कापाते दिक्षु ताम्रवर्णासु आग्नेयमण्डलनिर्णयः । उत्पातोद्ध्र्वं सप्ताहमध्ये मेघशक्रा-युधविद्युदादिदर्शने ऐन्द्रमण्डलनिर्णयः । उत्पातोद्ध्र्वं सप्ताहमध्ये यदा वृष्टिजलेषु नक्रशिशुमारादिदर्शनं चन्द्रसूर्य्ययोः प्रसादस्तदा वारुणमण्डलनिर्णयः ।

---

**ख पाठः —**

(1) तान्येव चेत् । (2) मण्डले । (3) वैदेहकानानादिमनिष्टदं ।
(4) भारवानादि । (5) दोषदः इति नास्ति ।

वराहः— ( बृहत्संहिता- ३२ । २७ )

पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् ।

सद्यः फलति वरुणो येषु न [A]पाकोद्भूतेषूक्तः ॥

येषूत्पातेषु फलपाककालो नोक्तस्तेषु मण्डलफलपाकात् कालः ।

अथाद्भुतेषु प्रथमं दिव्यानि —

तत्र प्रथममादित्योत्पाताः । उत्तराषाढामप्राप्य यदि यात्युत्तरमार्गं सूर्यस्तदा दक्षिणां पश्चिमां दिशं नाशयति । पुनर्वसुमप्राप्य यदि दक्षिणमार्गं याति तदा पूर्वामुत्तरां हन्ति । रविर्नीलवर्णो भूरिवर्णोऽन्नाभावाय, धूम्राभो-जनमरणाय, कृष्णो जगतः क्षयाय, रक्तः शस्त्रभयाय, उदये इति सर्वत्र । [A]मयूरचन्द्रनिभो द्वादशाब्दानावृष्ट्यै । निष्प्रभश्चन्द्ररश्मिर्जनमारकः, [1]निष्प्रभश्च नभसि जनस्य मारकः ।

तथादित्यमण्डले काककुरणकीलककबन्धधूमनानामृगपक्षिपताका-तोरणप्रासादादि यद्युदयेऽस्तमये तदा नृपनाशो [2]महद्भयम् । खण्डो वक्रः कृष्णो ह्रस्वो [3]भल्लूकसंस्थानः स्थालीपिठरसन्निभो नृपतिनाश[4]दुर्भिक्ष-युद्धार्थम् । द्विधाच्छिन्नस्त्रिधा वा नृपनाशाय, द्विसूर्य्ये रणम , त्रिचतुःसूर्य्ये प्रलयः । आदित्ये रथसेनादर्शनं नृपभयाय, [5]रविच्छिद्रे नृपवधः, नृपजन्म-नक्षत्रस्थरविच्छिद्रे नृपवधः, सन्ध्याकाले पाण्डररविच्छिद्रदर्शने [6]सराष्ट्र-जननाशः ।

पक्षाद विपाकः सूर्य्यस्य, सूर्य्योत्पताः पक्षे फलदाः, उत्पाताश्च स्ववर्गे विशेषेणानिष्टदाः ।

आदित्यस्य वर्गः —

---

ख पाठः —

(1) निष्प्रभश्चेत्यादि नास्ति । (2) च अधिकः । (3) उल्लूकसंस्थान इति नास्ति । (4) दुर्भिक्षार्थम् । (5) रवौ च्छिद्रे । (6) स्वराष्ट्रराजवधः ।

मुद्रित पाठः —

A- न काले ।

प्राग्देशनर्मदा[1]शोणोड्रवङ्ग—सुह्मोत्कलवाह्लिकशकयवनमगधप्राग्ज्योतिषकाम्बोजद्रविडपूर्वार्द्ध यमुनादक्षिणकूल[2]चम्फोदुम्बर - कौशाम्बिचेदि विन्ध्याटवी-कलिङ्ग-पुण्ड्र-गोलाङ्गूल-श्रीपर्वतवर्द्धमाना देशाः। तस्कर-पारदकान्तारगोपभिषक्चतुष्पादकृषिकरनृपहिंस्रपार्थिवनश्च प्राणिनः।

एषु पीडाधिक्यं भास्करोत्पाते। सूर्य्याद्भुतेषु प्रथममादित्यपूजा सर्वत्र। [3]कबन्धाभे मयूरचित्रोक्ता प्रथमा शान्तिः। त्रिरात्रोपोषितः अपामार्गाष्टोत्तरशतं हुत्वा [4]ब्राह्मणं भोजयेन्निरन्तरं [5]द्वित्रिदिनं पायस-कृशरप्रधानम्। सुवर्णरजतकांस्य[6]भूमयो दक्षिणा। प्रथमा शान्तिः।

[7]शङ्खगोक्षीरवर्णे रवौ शान्तिस्तत्रैव

अर्कसमिधामाकृष्णेनेति द्वादशसहस्रहोमः। मधुपायसदध्योदन-गुडोदनैर्दश वाष्टौ ब्राह्मणा भोज्याः। सुवर्णरजतताम्रवस्त्रधान्यगोतिलाः दक्षिणा इति द्वितीया—

रविच्छिद्रे षष्ठी शान्तिस्तत्रैव

तिलदुर्वाश्रपत्त्रयवधान्योदुम्बरसमिच्छ्रीभलैरेकैकद्रव्येणाष्टशतमष्टसहस्रं वा होमः आकृष्णेनेति। पूर्वोक्ता दक्षिणा। विप्रभोजनम्। नाट्यप्रेक्षणम् (प्रक्षेपणम्)। उदयास्तमनयोर्भानोर्भ्रमणे प्रथमा शान्तिः। [8]सूर्य्यद्वये दधि-मधुघृता[9]र्कसमिद्युतहोमः। धेनुर्दक्षिणा। इयं [10]सप्तमी शान्तिः। आकाशस्थस्यार्कस्य प्रकाशहानौ [A]"इमा रुद्राय' इति सहस्रद्वयहोमः। वृषभो

---

**ख पाठः—**

(1) शोणोत्तरवङ्गसक्तजनिवास्तिकङ्कण। (2) चम्पोदुम्बर इति नास्ति। (3) कबन्धाभे इति नास्ति। (4) ब्राह्मणान्। (5) द्वित्रिदिनमिति नास्ति। (6) भूमिगोदक्षिणा (7) सुवर्णवर्णे रवौ (8) सूर्य्योदये (9) क्तार्कसमिद्युत (10) षष्ठी शान्तिः।

**मुद्रित पाठः—**

A. इमा रुद्रायेति मन्त्रै र्जुहुयात् सर्पिषाहुतिम्।
आहुतेर्द्वे सहस्रे तु होमश्च कथितो भवेत्।
वृषभं दक्षिणां दद्यात् ततः सम्पद्यते शुभम्॥ अद्भुतसागरः— २१।

[1]दक्षिणा। अनुक्तविशेषशान्तिः सूर्य्याद्भुतेषु प्रभूतगोमहीकनकान्नदानानि। गोदोहाः। राज्ञां कोटिहोमश्च। इत्यादित्याद्भुतम्।

## अथ चन्द्राद्भुतम्

अशुभसूचकश्चन्द्र इत्यनुवृत्तौ—

खण्डः स्फुटितो [2]विवर्णः प्रभाहीनः पद्मवर्णः मध्यच्छिद्रः नीलाभः प्रजानाशकरः। इति पूर्णस्य।

प्रतिपदि प्रथमोदयकाले वर्षान्यऋतौ मेघनीहारतमोभिरावरणे महाभयम्।

**संस्थानम्—**

नौसंस्थानं नवचन्द्ररेखाकोटिद्वयसमत्वे शुभदम्। नीचं दक्षिणं शृङ्गमुन्नतं चोत्तरं तत्र लाङ्गले क्षेमम्। मध्ये मृदङ्गवत् स्थूलः [3]शुभः, दक्षिणं चोन्नतं शृङ्गं न्यूनमुत्तरं चेत्तदा दुष्टलाङ्गलं प्रजाक्षयकरम्। धनुराकृतौ [4]यवनवधः। शृङ्गस्याधोमुखत्वे दुर्भिक्षम्। तीक्ष्णयोः शृङ्गयोः परस्परसन्निकर्षो रोगादिकरः। चन्द्रे छिन्ना रेखा समन्तान्मण्डलाकारा कुण्डाख्या। दण्डाकारा ऋजुरेखा। मध्यधनुर्वक्राख्या। दक्षिणोत्तरायता रेखा चन्द्रस्य [5]युगम्। पीठच्छत्र[6]संस्थाने एकशृङ्गे त्वशृङ्गे महाभयम्। एतानि शुक्लप्रतिपदि लक्षणानि।

स्वतारागणमध्ये नक्षत्रमण्डले [7]या दीप्तिमत्तरा सा योगतारा। तामाच्छाद्य चेच्चन्द्रश्चरति तदा न शुभम्। Aयस्य जन्मनक्षत्र(स्य) सन्निहितो

---

ख पाठः —

(1) अनडुद्वा। (2) विवर्णप्रभः-नीलपद्मवर्णः। (3) शुभदः।
(4) किरातवधः। (5) युगमिति नास्ति। (6) संस्थानत्वे एकशृङ्गत्वे अशृङ्गत्वे च। (7) दीप्तिमती तार।

मुद्रित पाठः —

A- चन्द्रमा जन्मनक्षत्रं परित्यजति यस्य तु।
श्यावो रूक्षोऽपसव्यं तु तस्त विद्यादुपद्रवम्॥ विष्णुधर्म- १।१५।१२

याति तस्य शुभम् । [A]नक्षत्राणां ग्रहाणां दक्षिणे चन्द्रो याति चेन्महद् भयम् । विशेषतश्च विशाखानुराधामूलापूर्वाषाढ़ोत्तराषाढानां दक्षिणमार्गो वैश्वानरपथः ।

"वैश्वानरं पथं [B]प्राप्य समुद्रमपि शोषयेत्" (भार्गवीये)

योगताराताडने दारुणं भयम्, छादने नृपवधः। शोषयेदित्यस्यानन्तरं पुस्तकान्तरे— "आषाढकृष्णपक्षे रोहिणीचन्द्रयोगे विशेषः । रोहिण्या [1]उत्तरत ईशाने वायव्ये पश्चिमे वा चन्द्रो दूरे निकटे वा शुभदः । आग्नेय-नैर्ऋतयोर्मन्दफलः । दक्षिणे [C]रोहिणीं स्पृशन् अस्पृशन् वा गच्छन् महाभयप्रदः। रोहिणी शकटमध्ये चन्द्रप्रवेशे दुर्भिक्षमनावृष्टिः ।"

यद्रोहिणीयोगफलं तदेव,

स्वातावषाढासहिते च चन्द्रे,

आषाढशुक्ले निखिलं विचिन्त्यम्[D] ।(बृ. सं २५।१)

चन्द्ररेखाशृङ्गयोर्मङ्गलादिग्रहस्थितौ क्रमेण नृपवधदुर्भिक्ष-श्रेष्ठनृपवध [2]पापिनृपवधक्षत्रभयानि । हिरण्यकशिपुवधे —

---

ख पाठः —

(1) उत्तरतः पूर्वतः । (2) पाषण्डिनृपवध भयादीनि ।

मुद्रित पाठः —

A- समागमे ग्रहाणां तु चन्द्रमाः शस्यते ह्युदक् ।
नक्षत्राणां च राजेन्द्र दक्षिणेन न शस्यते ॥ विष्णुधर्म- १ । ८५ । ६१

B- प्राप्तः, अद्भुतसागरः - ४६

C- दूरगो निकटगोथवा शशी दक्षिणे पथि यथा तथा स्थितः ।
रोहिणीं यदि युनक्ति सर्वथा कष्टमेव जगतो विनिर्दिशेत् ॥ बृ. सं २४।२८
रोहिणीशकटमध्यसंस्थिते चन्द्रमस्यशरणीकृता जनाः ।
क्वापि यान्ति शिशुयाचिताशनाः सूर्यतप्तपिठराम्बुपायिनः ॥
बृहत्संहिता- २४ । ३०

D- योऽस्मिन् विशेषस्तमहं प्रवक्ष्ये इति चतुर्थपादः ।

**[1]"वामश्रृङ्गे स्थितः शुक्रो दक्षिणे च बृहस्पतिः"**

ग्रहैकभिन्ने चन्द्रे च तद्देशनाशः। भौमे त्रिगर्त्तादयः। बुधे मगधादयः। गुरौ गान्धारादयः। शुक्रे यवनादयः। शनौ यौधेयादयः।

चन्द्रेक्षाकीलकादि सूर्य्यवद् भयदम्। द्विचन्द्रदर्शने द्विजवृद्धिः। [2]रुक्षद्विचन्द्रदर्शने ब्रह्मवधः। त्रिचतुश्चन्द्रदर्शने प्रलयः।

**एते चन्द्रोत्पाता चन्द्रवर्गाणां भयप्रदाः**

चन्द्रवर्गाश्च पर्वतदुर्गजलकोशलस्त्रीराज्य सागरमौक्तिकशङ्खौषधिफलकुसुम-मधुलवणशालिगोधूमयवसोमपब्राह्मणाश्च। चन्द्रे रक्तसमे प्रथमा शान्तिः। चन्द्रपार्श्वे [3]प्रतिपच्चन्द्रदर्शने साधारणी शान्तिः। अन्येषु चन्द्रोत्पातेषु प्रभूतकनकान्नगोमही[4]दानादिका दिव्यशान्तिः।

## अथ राहूत्पाताः

राहोरदृश्यत्वाच्चन्द्रसूर्य्यग्रहणे अद्भुतानि तेन, रूपेण दृश्यत्वात् पर्वभेदेन ग्रहणम्। ब्राह्मसौम्येन्द्रकौवेरवारुणाग्नेययाम्यानि सप्त भवन्ति षण्मासान्तराणि पर्वाणि। ब्राह्मसौम्यवारुणानि शस्तानि। ऐन्द्रे दुर्भिक्षम्। कौवेरे ऐश्वर्य्यध्वंसः। आग्नेये अग्निशस्त्रक्षुद्भयमनावृष्टिः। याम्येऽनावृष्टि-प्राणिनाशः।

[A]अद्भुतसामरारम्भ- शकाब्दात् पूर्वेश्वरगणनम्।

---

**ख पाठः —**

( ) वामाङ्गे च। (2) शरदि द्विचन्द्र। (3) प्रतिचन्द्रदर्शने।

(4) दानानि।

**मुद्रित पाठः –**

A- अद्भुतसागरारम्भकालः —

शाके नवाष्टखेन्द्वा १०८९ ब्द आरेभेऽद्भुतसागरम्।

गौडेन्द्रकुञ्जरालानस्तम्भबाहुर्महीपतिः॥ अद्भुतसागरः- ४

[A]खनवदशोभनशकाब्दा द्विगुणः कार्य्या, याम्येऽजाद्याः सप्तभिः पर्वेशः १०६० एषां पञ्चगुणितः सप्तहृतावशिष्टः पर्वेशः ।

ब्रह्मक्षत्रविनाशाय सौम्यायनग्रहणम् । विट्शूद्रनाशाय दक्षिणायन-ग्रहणम् । आश्वयुक्कार्त्तिकभाद्रपदेषु ग्रहणं शुभम् , अन्यमासेष्वशुभम् । राहु-युक्तनक्षत्रे ग्रहणे सैनिकनृपविरोधः । उदक्प्राग्दक्षिणप्रत्यग् ब्राह्मणक्षत्र-विट्शूद्रोच्छेदायानुपूर्व्यम् । विदिक्संस्थो म्लेच्छान् । इति दिक्फलम् ।

**ग्रासविशेषाः –**

[B]ग्रसनारोहणोपघ्राणोपमर्दननिरोधपरिलेहनसव्या-पसव्यान्तमध्यतमउपप्लवाश्चेति ।

[1]एकदेशग्रासो ग्रसनं स्फीतनृपवित्तनाशाय । [2]मण्डलमध्ये ग्रहणे आरोहणं प्रजाक्षयाय । ईषद्ग्रहणमुपघ्राणं जगद्धिताय । उपमर्दनं चिर-मर्कन्दुसकलमण्डलाक्रमणं प्रजापीडायै । सर्वमण्डलधूमावरणं निरोधः शुभः । जिह्वावलेहः परितः परिलेहः शुभः । प्रदक्षिणं सव्यं शुभम् । अप्रदक्षिणमपसव्यं प्रजाक्षयाय । मण्डलान्ते ग्रहे पर्यन्तवासिनृपनाशः । मध्ये ग्रहणे मध्यदेशे मध्यदेशनृपनाशः । महातमसा वरणम् । उपप्लवः म्लेच्छसंकरक्षयकृत् ।

ग्रहणराशिस्थे भौम आनर्त्तकादेरानर्मदासु पीडा । [3]बुधे दीने बाले-स्त्रीकुमारपीड़ा । गुरौ सिन्धुतटोदग्देशविद्वन्नृपगजतुरगनाशः । शुक्र आर्यावर्त्तदशार्णकेकयानां पीडा । शनौ मरुद्भवसौराष्ट्रगोमन्तपारिपात्र-श्रितान्त्यजाना नाशः ।

---

**ख पाठः –**

(1) एकदेशग्रहणे सैनिकनृपविरोधः । उदक्प्राग्दक्षिणप्रत्यक्शो ग्रसनं नृप ।
(2) मण्डलतो ग्रहणमारोहणम् । (3) बुधेचतुर्थदिने ।

**मुद्रित पाठः –**

A- खनवदशो १०९० न शकाब्दा द्विगुणाः कार्य्या रवाबुदक्गोले ।
सशरा ५ याम्येऽजाद्याः पर्वेशाः सप्तभिः शिष्टाः ॥ अद्भुतसागरः- ५९

B- अद्भुतसागरः- ६७

पूर्वाह्णग्रहणं यज्ञविद्यानाशाय । मध्यन्दिने शूद्रचोरनाशनम् । अपराह्णे वारणप्रमदात्रेगर्तादीनां नाशनम् । ग्रस्तोदये ग्रस्तास्ते सर्वस्य क्षयः । उदितग्रहणे वैदिकक्षयः ।

मोक्षफलम्—

आग्नेये मोक्षे दक्षिणहनुभेदः अनावृष्टि श्च । ऐशान्ये मोक्षारम्भे वामहनुभेदो राजपुत्रपीडायै । दक्षिणे मोक्षे दक्षिणकुक्षिभेदो दक्षिणेश-नृपक्षयः । उत्तरे उत्तरहनुभेदोऽप्युत्तराशानृपनाशः । नैर्ऋतवायव्यमोक्षे पायुभेदो गुदरोगः ।

पूर्वस्यामेव ग्रासः पूर्वस्यां च मोक्षश्छर्दनाख्यं शुभम् । पूर्वे ग्रासः पश्चिमे च मोक्षः जरणं दुर्भिक्षदम् । मध्ये मोक्षारम्भो विदरणाख्यो दुर्भिक्षमरकाय । एकमासे ग्रहणद्वये नृपयुद्धम् । अत्यन्तं ग्रहणविलम्बे सप्तदश-मासप्रभृतिवर्षत्रयपर्यन्तविलम्बे महाघोरोपद्रवाः । निरन्तरदर्शनेऽप्येवम् । एषु राहूत्पातेषु राहुपूजापूर्विका प्रभूत[1]कनकान्नादिदानादिरूपा शान्तिः ।

अपर्वणि ग्रहणं नृपवधाय राष्ट्रक्षयाय । त्रयोदश्यां ग्रहणे विशेषेण सकलदेशेषु जनक्षयः नृपतीनां नाशः । एकस्यां त्रयोदश्यां द्वयोर्ग्रहणे ततोऽपि [2]घोरम् । अपर्वग्रहणं द्विधा, राहुकृतं त्वष्टृकृतं च । राहुयुतराशिस्थितयो-श्चापर्वग्रहणं राहुकृतम् । अन्यथा त्वष्टृकृतम् । राहुकृते नारदोक्तशान्तिः जातवेदसमन्त्रेण मध्वाज्योदुम्बरसमित्सहस्राष्टकहोमः । धेनुर्वृषश्च दक्षिणा । त्वष्टृकृतापर्वग्रहणे सामान्यशान्तिः ।

एते राहूत्पाता राहुवर्गाणां विशेषेणानिष्टदाः । राहुवर्गाश्च कृतघ्न-कुलपांशननीचशूद्रहिंस्रपरदाररतगिरिशिखरमहारण्यवासिनोऽत्यन्तम्लेच्छाः सूताश्च । अत्र राहुदर्शनात् पूर्वमन्ये ये उत्पातास्ते राहुदर्शनार्था न पृथगनिष्टदाः । तत्कालीनग्रहणान्तरसूचकाः । तदूर्ध्वं दोषावहाः इति राहुग्रहाद्भुतानि ।

---

**ख पाठः —**

(1) कनकान्नगोमहीदानम् । (2) घोरतरम् ।

## अथ भौमाद्भुतानि

द्विजादिमघान्तमुत्तरमार्गः। पूर्वफाल्गुन्यादि मूलान्तं मध्यमार्गः। पूर्वाषाढाद्यश्विनीपर्यन्तं दक्षिणमार्गः। दक्षिणमार्गगामी भयदः। मघामध्ये विशाखामध्ये च गच्छन् भौमः दुर्भिक्षकरः। रोहिणीमध्ये गच्छन् मरककरः। मघामध्ये गतागतं कुर्वन् दुर्भिक्षपाण्ड्यनृपध्वंसकरः।

अस्य पञ्चवक्राणि यस्मिन् नक्षत्रे सूर्य्यनिर्मुक्त उदयं लभते तस्मात् सप्तमाष्टमनवम[1]नक्षत्रेषु पुनर्निवृत्तिं [2]चेत् करोति तदा उष्ट्रमुखं नाम वक्रम्। तत्र प्रजाक्षयः। अग्निहोत्रिणां पाचकानां च पीडा।

उदयर्क्षाद्दशमैकादशद्वादशेषु अश्रुमुखं नाम वक्रम्। तत्र विकृतवृष्ट्या रसदोषपीडा सर्वेषाम्।

त्रयोदशचतुर्दशयोर्व्यालमुखं वक्रम्। तत्र व्यालाः सर्पादयो वर्द्धन्ते।

उदयर्क्षात् [3]पञ्चदशे षोडशे वा निवृत्तिः लोहिताननं वक्रं कुरुते शस्त्रभयम्।

सप्तदशाष्टादशयोरसिमुसलं नाम वक्रं चौरप्राबल्यकरम्।

उष्ट्रमुखस्याश्रुमुखस्यादावेव फलम्। व्यालस्य पुनरस्तपर्यन्ते। शेषयोर्वक्रनिवृत्तौ। अत्र विशेषः— फाल्गुन्योरुदित उत्तराषाढायां चेद् वक्रः रोहिण्यामस्तं याति त्रैलोक्यपीडाकरः।

**उदितः श्रवणे भौमः पुष्ये वक्रं चरेद् यदि**

**प्राजापत्योदित[A]श्चैन्द्रे नाशाय स्यान्महीक्षिताम्। (पराशरः)**

---

**ख पाठः —**

(1) नक्षत्रपर्यन्तं। (2) तत्र। (3) द्वादशे।

**मुद्रित पाठः —**

A- श्चैव, अद्भुतसागरः - १०१

श्रवणेऽभ्युदितो भौमः पुष्ये वक्रमियाद् यदि।

प्राजापत्योदितश्चन्द्रो नाशाय स्यान्महीक्षिताम्॥ विष्णुधर्म-१। ८५। ८७

चित्रायां कृत्तिकासु च वक्रत्वं महाभयदम्। एते च मङ्गल-वर्णानामतिदोषकराः। ते च अग्निशकक्षतजप्रवालधात्वाकरसुवर्णमहेन्द्र-मलयविन्ध्यसिप्रागोदावरीसिन्धुपारपाण्ड्यद्रविडोड्राश्मकमगधान्ध्रप्रभृतयः। अत्र भौमाद्भुतेषु दिव्यसामान्यशान्तिः भौमपूजापूर्विका। त्रिभिर्मासै भौमस्य फलपाकाः। इति भौमाद्भुतानि।

## अथबुधाद्भुतानि

श्रवणाधनिष्ठारोहिणीमृगशिरोत्तराणां मध्ये गच्छन् बुधः अनावृष्टि-प्रजापीडाकरः। आर्द्रादिपञ्चनक्षत्र[1]भेदने व्याधिपीडा। हस्तादिषड्भेदे गोपीडा। पूर्वाद्यृक्षत्रयभेदने क्षुतशस्त्रतस्करभयं जगतः। उत्तराफाल्गुन्युत्तर-भाद्रपदकृत्तिकाद्विजाभेदने प्राणिनां धातुक्षयः।

बुधस्य गतिचतुष्टयम्। ऋज्वी, अनुवक्रा, वक्रा, विकला। त्रिंश-दिनोदये ऋज्वी गतिः सा शुभा। चतुर्विंशतिदिनोदये [A]अनुवक्रा दुर्भिक्षकरी। द्वादशदिनोदये वक्रा शस्त्रसङ्कुलकरी। षड्दिनोदये विकला भयरोगप्रदा।

उदये सप्त गतयः पराशरोक्ताः प्राकृता, विमिश्रा, समाप्ता, तीक्ष्णा, घोरा, पापा, योगान्तिकी चेति। द्विजाकृत्तिकारोहिणीस्वातीषूदये प्राकृता शुभा। मृगशिरार्द्रश्लेषासूदये विमिश्रा [2]शुभाशुभफला। पुष्यपुनर्वसुफाल्गुनीद्वये संक्षिप्ता शुभाशुभमिश्रफला। [3]भाद्रपदाद्वये रेवत्यश्विनीज्येष्ठासु तीक्ष्णा। घोरा श्रवणादित्रयं चित्र तत्रोदये। हस्ताविशखानुराधासूदये [4]घोरा। मूलाषाढाद्वये योगान्तिकी। [5]एतास्तिस्त्री दुर्भिक्षाय।

**[B]कार्तिकेऽश्वयुजे पौषे आषाढे श्रावणे बुधः**
**दृष्टो लोकभयाय स्यान्माघवैशाखयोरपि।**

---

**ख पाठः —**

(1) भेदेनोदये ऋजुगतिः सा शुभदा। (2) शुभाशुभदा। (3) प्रोष्ठपदा। (4) पापा। (5) एताश्च तस्त्रो।

**मुद्रित पाठः —**

A- अतिवक्रा - अद्भुतसागर- १०६ । B- १०८ विष्णुधर्म १ । ८४ । ५१

अनावृष्टिं दुर्भिक्षं च करोति ।

"[A]नोत्पातपरित्यक्तः कदापि चन्द्रजो व्रजत्युदयम्" (वराहः)

**पुरस्तादुदितः स्नेहधान्यध्वंसकरः पश्चान्मूल्यह्रासकरः ।**

वक्रफलम्— वृष्टौ सत्यां निवृत्तिः । अवृष्टौ वृष्टिः । यावद्दर्शनं फलपाकः ।
बुधोत्पातेषु बुधवर्गाणां विशेषतोऽनिष्टम् । बुधवर्गाश्च सौराष्ट्रभोजवंशागङ्गोत्तर-कूलनदीसिन्धूडुमत्स्यमथुरार्द्ध चित्रकूटसिन्धुप्रभृतयः, सुवर्णरजतगन्धयुक्त कर्पूरजनपदाः । बुधोद्भूतेषु बुधपूजापूर्विका सामान्तशान्तिः ।

## बृहस्पत्यद्भूतानि

रोहिणीप्रच्छादने पीड़ा । शकटारोहणे सम्भ्रमः । संवत्सरेण उदय-चारी शुभफलः । सार्द्धोदयचारी मध्यफलः । ततोऽधिकचारे शस्यक्षयः ।
बार्हस्पत्याब्दफलम्—

**[B]संवत्सरे युगे चैव षष्टयब्देऽङ्गिरसः सुतः ।**
**यन्नक्षत्रोदयं कुर्यात् तत्सञ्ज्ञं वत्सरं विदुः ।**

सूर्येण सह वसन् यदास्तमितो भवति, तदा रविचारवशात् स्वचारवशाद् वा रविप्रकर्षात् पूर्वं पश्चाद् वा यदोदयते यत्र स्थित उदयते तन्नक्षत्रनाम्ना तदुदयदिनावधि बार्हस्पत्यवत्सरो भवति ।

तद् यथा—

कृतिकानक्षत्रे रोहिणीनक्षत्रे वा यदोदेति तदा कार्त्तिकाख्यं बार्हस्पत्यं वत्सरं भवति ।

पुनरपरास्तमयपर्यन्तं स वर्षः भयवधि समाकुलः ।

**[C]मृगशिरोभे उदिते मार्गशीर्षवर्षः दुर्भिक्षानावृष्टितिभयदः ।**

---

**मुद्रित पाठः —**

A- अद्भुतसागर - १०७ । B- २६, अद्भुतसागर- ११२

C- सौम्यरौद्रोपगेजीवे सौम्यर्षमुदाहृतम् ।
ईतयः सकजा यत्र चानावृष्टिभयं तथा ॥ विष्णुधर्म- १ । ८२ । २३

पुनर्वसुपुष्योदिते जीवे पुष्यवर्षः सर्वात्मना शुभः ।

अश्लेषामघागते जीवे माघवर्षः सुवृष्टिः क्षेमदः ।

फाल्गुनीद्वयहस्तस्थे [A]फाल्गुनवर्षः क्वचित् सुभिक्षकरः ।

चित्रास्वातीगे जीवे [B]चैत्रो वर्षो मन्दवृष्टिदः ।

विशाखानुराधागते जीवे वैशाखोऽब्दो यज्ञोत्सवसुभिक्षदः ।

ज्येष्ठामूलागते जावे ज्येष्ठो वर्षः श्रेष्ठलोकपीडादुर्भिक्षानावृष्टिकरः ।

आषाढाद्वयगे जीवे [C]आषाढवर्षः युद्धप्रदः ग्रीष्मधान्यक्षयदः ।

श्रवणाधनिष्ठागते जीवे [D]श्रावणोऽब्दः क्षेमदः ।

भाद्रपदाद्वयरेवतीषु भाद्रपदो वर्षो मध्यफलः ।

अश्विनीद्विजागते जीवे आश्विनोऽब्दः सर्वसम्पत्करः ।

**अथ बृहस्पतिचारवशात् षष्ट्यब्दप्रवृत्तिः—(विष्णुधर्म १।८२।८.२०)**

**[E]माघशुक्लसमारम्भे चन्द्राकौं वासवर्त्तगौ**

**जीवयुक्तौ यदा स्यातां षष्ट्यब्दादिस्तदा भवेत ।(८)**

**[F]प्रभवो विभवः शुक्लः प्रमोदऽथ प्रजापतिः**

**वैष्णवे तु युगे पञ्च प्रोक्ताः सम्बत्सराः शुभाः ।**

**अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च**

**अब्दा जोवयुगे पञ्च तेषामाद्याः शुभास्त्रयः । (१०)**

[1]अन्त्याब्दयो रोगो युद्धं च ।

---

**ख पाठः—**

(1) अन्त्यद्वये ।

**मुद्रित पाठः –**

A- भाग्यवर्ष, विष्णुधर्म - १ । ८२ । २६

B- त्वाष्ट्रवर्षः शुभः - विष्णुधर्म १ । ८२ । २७

C- वैश्वदेव वर्ष- विष्णुधर्मः १ । ८२ । ३० । D- वैष्णवोऽब्दः- १ । ८२ । ३०

E- विष्णुधर्म- १ । ८२ । ८ । F- विष्णुधर्म- १ । ८२ । ९

ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो [A]वृषः

शाक्रे युगे च पञ्चाब्दास्तेषामाद्यौ शुभावुभौ । (११)

अन्त्यत्रयं दुर्भिक्षरोगदम् ।

वह्निः सुभानु[B]स्तरुणो वारिदश्च तथा नृपः

आग्नेयाः पञ्च वर्षाः स्युर्द्वितीयं तेष्वशोभनम् । (१२)

द्वितीयं रोगमरककरम् ।

सर्वजित् सर्वधारी च विरोधी विकृतः खरः

त्वाष्ट्रे युगे च पञ्चाब्दा द्वितोयस्तेषु शोभनः । (१३)

शेषा भयदाः ।

नन्दनो विजयश्चैव जयः कामश्च दुर्मुखः

अहिर्बुध्न्ययुगे पञ्च येषामाद्या हितास्त्रयः । (१४)

चतुर्थः समः पञ्चमो मन्दफलः ।

हेममालो विलम्बी च विकारी शर्वरी प्लवः

पित्र्ये युगे च पञ्चाब्दाः पञ्चमोऽत्र शुभप्रदः । (१५)

शोककृत् शुभकृत् क्रोधी विश्वावसुपरावसू

वैश्वे पञ्च [C]युगे भव्या द्वितीयः पञ्चमः शुभः । (१६)

प्लवङ्गः कोलकः सौम्यः [D]समो रोधकृदेव च

सौम्येब्दाः पञ्च तेषां च प्रथमानन्तरौ शुभौ । (१७)

धावनं मथनं वीरं राक्षसं चानलस्तथा

इन्द्राग्निदैवते पञ्च सर्व एवाशुभप्रदाः । (१८)

---

मुद्रित पाठः –

A- वशः । B- तरणो । C- शुभावेषामब्दो राजन द्विपञ्चमो ।

D- सोमो ।

विशेषेण मरकादिप्रदोऽनलः ।

पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती
आश्विने तु युगे पञ्च [A]तृतीयस्तेषु शस्यते । (१९)
दुन्दुभ्यङ्गारकौ रक्तः क्रोधश्चापि क्षयस्तथा
[B]भाग्येनिष्टप्रदाः पञ्च त्रिशेषेण तु पञ्चमः । (२०)

[1]क्षययुगान्तः सर्वक्षयकरः । राष्ट्राणि शून्यानि करोति ।

**इति षष्ट्यब्दे युगानि द्वादश ।**

बृहस्पत्युत्पाता बृहस्पतिवर्गाणां विशेषेणानिष्टदाः । ते च —

माङ्गल्यधर्मद्विजदेवयज्ञधान्याकरस्थानगुणात्मजानाम् ।
सुवर्णयानासनपौष्टिकानां प्रभुर्गुरुर्मन्त्रिमहत्तराणाम् ॥

(यवनेश्वरः)

[2]त्रैगर्तसिन्धुसौवीरशतद्रुसुघ्नोदीच्यविपाशाम्बष्ठराजपुरोहितकारु—तपस्वि-सारस्वताश्च । बृहस्पतिगतोत्पातेषु बृहस्पतिपूजापूर्विका सामान्यशान्तिः । फलपाको वर्षण ।

(इति बृहस्पत्यद्भुतानि)

## अथ शुक्राद्भुतानि

कूटांगारनिभः स्निग्धो रजताभः प्रजाक्षयकरः ।

नीले कपिलवर्णे वा भयं भवति भार्गवे ।
ताम्रवर्णे तथा रुक्षे मेघेष्वम्बु न विद्यते ।

---

**ख पाठः —**

(1) क्षययुगोत्र । (2) तैरभुक्त ।

**मुद्रित पाठः —**

A- चतुर्थः (अयं पाठः न साधुः) । B- भाग्ये पञ्च शुभाः सर्वे इति विष्णुधर्मे अद्भुतसागरे च पृ- १२४ ।

भेदयेत् कृत्तिकां शुक्रो बहुतोयं निपातयेत् ।
रोहिणीं मरणं घोरं गृध्राकुलभयावहम् ।
मृगे शस्यक्षयश्चैव कलिङ्गे कोशले क्षयः ।
पुनर्वसौ विदर्भाणां मघायां दारुणं भयम् ।
भाग्ये क्षयः पुलिन्दानामार्य्यम्णो कुरुजाङ्गले ।
हस्ताचित्रे च कुरुषु स्वातौ च वणिजादिके ।
मैत्रादितिष्वनावृष्टिराषाढापञ्चके रुजः ।
धनिष्ठायां कर्मकृत्यं वारुणे सौण्डिकक्षयः ।
व्याघ्राद्भीतिः फलध्वंसः पापिध्वंसोऽन्तिमत्रये ।

मूलाश्लेषाषाडापुनर्वसूनां यदैति मध्येन भौमगते [1]वाममार्गे यावत्तावत् कुतः सलिलम् । शुक्रस्याश्विन्यादित्रये उदयेऽस्तमये वा नागवीथी । रोहण्यादित्रये गजवीथी । पुनर्वस्वादित्रये ऐरावणवीथी । एतास्तिस्रः उदग्वीथ्यः शुभाः । मघादित्रये वृषभवीथी, हस्तादित्रये गोवीथी, विशाखादित्रये जारद्गववीथी । एतास्त्रिस्रो मध्यमवीथ्यः मध्यफलाः । मूलादित्रये मृगवीथी, श्रवणादित्रये अजवीथी, पूर्वादित्रये दहनवीथी । एतास्तिस्रः कष्टफलाः रोगोद्भवशस्यध्वंसकराः ।

**अथ शुक्रस्य षण्मण्डलानि—**

[2]तन्मण्डलीयनक्षत्रं यदि शुक्र आरोहति तत्र वा यद्युदयमस्तमयं करोति तत्र वा यदि शुक्रोपरि ग्रहान्तरमारोहति तदा क्रमेण फलानि । द्विजादिनक्षत्रचतुष्टयं सर्वभूतहितं नाम आद्यमण्डलम् । तत्र शुक्रस्यारोहणे उदयास्तमये वा क्षेमं सुभिक्षम् । [3]तत्रस्थं शुक्रं यद्यपरो ग्रह आरोहति तदा मद्रादिदेशनाशः । इदं मण्डलं [4]वातमार्ग उच्यते । रुक्षवातनिर्जलमेघवज्राशनिकः ।

---

ख पाठः—

(1) वा मार्गे । (2) तत् इति नास्ति । (3) चित्रास्थं ।
(4) वायुमार्ग ।

आर्द्रादिचतुष्कं रोहिताख्यं शुक्रमण्डलम् । तत्रारोहणोदयास्तमयेषु सुवृष्टि शस्यानि । विप्राणामशुभम् । ग्रहान्तरारोहणे म्लेच्छादिनाशः ।

मघादिपर्य्यन्तं वारुणाख्यं मण्डलम् । तत्रारोहादिषु शस्यनाशः । अन्यग्रहाधिनिरूढः वनवासिसामुद्रादिनाशकः ।

स्वात्यादित्र्यक्ष विरोचनं नाम मण्डलम् । तत्रारोहादिषु ब्रह्मक्षत्र-वृद्धिः । अन्याधिरूढे शुक्रे इक्ष्वाकुकिरातक्षयः ।

[1]ज्येष्ठादिपञ्चक्षं मण्डलम् ऊर्द्ध्वदण्डाख्यम् । तत्रारोहोदयास्तमयेषु तस्कररोगादिभयम् । शुक्रोपर्य्यन्यग्रहारोहे द्राविडादिनाशः । एष वैश्वानरपथः अतीवानावृष्टिकरः ।

धनिष्ठाद्यं षण्णक्षत्रं तीक्ष्णाख्यं मण्डलम् । अत्रारोहादिषु प्रजानां धनसम्पत् । अन्याधिरूढे शुक्रे मौक्तिकादिनाशः ।

**कार्त्तिके तु यदा [A]मासे कुरुतेऽस्तमयोदयम् ।**
**तदाह्नां नवतिं पूर्णां देवो भुवि न वर्षति । (पराशरः)**
**कृष्णपक्षाष्टमीं दर्शं प्राप्य शुक्रश्चतुर्दशीम् ।**
**उदोयादस्तगो वा स्यान्महावृष्टिः प्रजायते ।**

शुक्रवर्गाणां शुक्रोत्पाता विशेषेणानिष्टदाः । ते च —

**[B]वज्रादिरत्नाकर[2]गोसुतस्त्रीविवादगन्धाम्बरभूषणानाम् ।**
**सौभाग्यसौख्यश्रुतिसञ्चयानां प्रभुर्निधीनां धनिनां च शुक्रः ।**

**(वराहसंहिता)**

चन्द्रभागावितस्ता-ऐरावती-मालवकैकेयदशार्णोशीरनाद्या देशाः । शुक्रोत्पातेषु षाण्मासिकःफलपाकः । शुक्रोत्पाते शुक्रपूजापूर्विका दिव्यसामान्यशान्तिः ।

---

**ख पाठः—**

(1) ज्येष्ठाद्यं पञ्चर्क्षमण्डलम् । (2) शोणरत्न विभाग गान्धार विभूषणानाम् ।

**मुद्रितपाठः—**

A- मासि अद्भुतसागर- १३८ । B-अद्भुतसागर - १२६ पाठभेदो नास्ति ।

## अथ शनैश्चराद्भुतानि

कृष्णः [1A]कल्मषवर्णो वा पीतको लोहितोऽपि वा ।
श्यामो वा धूम्रवर्णो वा वैश्वानरपथे स्थितः ।
तदा देशो निराधारः शून्यो भवति नित्यशः । (वृद्धगर्गः)
मांसशोणितसंकाशे सर्वेषां प्राणिनां वधः ।

नक्षत्रचारः —

[B]सौम्यत्वाष्ट्रश्रविष्ठासु स्थिते सौरे महीक्षितः ।
सर्वे पीडां समृच्छन्ति येन यान्ति यमालयम् । (विष्णुधर्मे)
रोहिणीशकटं भौमो भिनत्त्यर्कसुतोऽथवा ।
केतुर्वा जगतो ब्रूयात् प्रलयं समुपस्थितम् । ( गर्गः )

[2]अश्विन्यामश्वपालवैद्यपीडा । द्विजायां गायकवाद्यकारादीनाम् । कृत्तिकायां [3]लास्याग्न्युपजीविनाम् । कोशलादिवृषाश्च रोहिण्याम् । मृगशीर्षे याज्ययाजकार्य्यजनमध्यदेशानाम् । आर्द्रायां [4]तैलकाररजकदस्यूनाम् । पुनर्वसौ पञ्चनदसुराष्ट्रसिन्धूनाम् । पुष्ये यवन- वणिजकितवकुसुमादीनाम् । अश्लेषायां जलचरवर्गाणाम् । मघायां वैश्यशिल्पकोष्ठागाराणाम् । पूर्वफाल्गुन्यां रसविक्रयिपण्यस्त्रीमहाराष्ट्राणाम् । उत्तरायां नृपपत्नीसुततैललवणगुडादीनाम् हस्तस्थे चक्रिकचौरादीनाम् । चित्रास्थे प्रमदालेखकचित्रकचित्रभाण्डानाम् ।

---

ख पाठः —

(1) कलुष । (2) अश्विन्यां शस्यपाल । (3) अग्न्युपजीविनाम् ।
(4) - तैलिक -

मुद्रित पाठः –

A= कषायवर्णः - अद्भुतसागर १४० ।

स्वातौ सूतमागधदूतपोतप्लवादीनाम् । विशाखायां लाक्षाकुङ्कुमकुसुम्भमञ्जिष्ठानाम् । अनुराधायां समन्त्रिमित्रभेदः । ज्येष्ठायां नृपपुरोहितदेवकुलादीनाम् । मूले काशिकोशलपाञ्चालानाम् । पूर्वाषाढायां मगधाङ्गवङ्गकोशलगिरिव्रजताम्रलिप्तानाम् । उत्तरायां यवनपारियात्रोदयशवरदशार्णादीनाम् । श्रवणे विप्रभिषक्पुरोहितकलिङ्गानाम् । धनिष्ठायां मगधाधिपते र्विजयः । शतभिषजि मधुसुराभिषवमांसादिविक्रयिणाम् । पूर्वभाद्रपदे सिंहलपाण्ड्यमहेन्द्रवासिनाम् । उत्तरायां हिरण्यनिचयनदनदीयानपुष्पादीनाम् । रेवत्यां शरच्छस्यराजभृतकादीनां पीडा । शनैश्चरे चरति इति सर्वत्र सम्बन्धः ।

**त्रिनक्षत्रगतश्चारो वर्षमध्ये शनेर्यदा ।**
**समस्तानां भयं विद्याच्चित्रं वर्षति वासवः ।**

नक्षत्राणां दक्षिणमार्गेण शनिर्गच्छति चेत्तदा दुर्भिक्षं चाग्निभयं च ।

**नक्षत्रपृष्ठगः सौरी यदा प्रत्यवलम्बते ।**
**तदा भवति दुर्भिक्षमुत्तरेण तु सम्भ्रमः ॥** (वृद्धगर्गः)
**रौद्रे हस्ते तथा पुष्ये आहिर्बुध्न्ये शनैश्चरः ।**
**यदोदयं प्रपद्येत तदा नश्यन्ति पार्थिवाः ॥ (विष्णुधर्मे)**
**प्राग्द्वारेषु चरन् रविपुत्रो नक्षत्रेषु करोति [1]चेद्वक्रम् ।**
**दुर्भिक्षं कुरुते भयमुग्रं मित्राणां च विरोधमवृष्टिम् ॥**
**(वराहः)**

शनेरुत्पातास्तद्वर्गेष्वधिकानिष्टदाः । ते च आनर्त्तशूद्रतैलिकवेदस्मृतिसौकरिकदुःशीलदा[?]कुनकपशुपालपाषण्डनिर्ग्रन्थवैतण्डिकपुलिन्दतस्करमहिषोष्ट्रखरत्रपुसीस—लोह[2]काकगृध्रशृगालादयः । शनैश्चरोत्पाते शनैश्चरपूजापूर्विका दिव्यसामान्यशान्तिः । फलपाको वर्षेण । इति शनैश्चराद्भुतानि ।

---

ख पाठ —
(1) चेद्व्रजनम् । (2) कङ्क ।

## अथ केत्वद्भुतानि

तत्र केतुभेदाः —

अनेकशतसाहस्रानने कशतलक्षणान् ।
देवलस्तद्ग्रहानाह सर्वानेव पृथक्फलान् । (नारदः)
[A]केचित् केतुसहस्रं शतमेकसमन्वितं वदन्त्यपरे ।
नारदमतेनैकोऽयं त्रिस्थानभवो विविधरूपः ।
(समाससंहिता)
[B]दिव्यान्तरिक्षभौमाख्य एकः केतुः प्रकीर्त्तितः ।
शुभाशुभफलं लोके ददात्यस्तमनोदयैः । (नारदः)
यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम् ।
उदयास्तमनस्थानैः स्पर्शैराधूपनैर्वर्णैः । (बृ.सं. ११।६)
सर्वथैवोपहिंसन्ति केतवो दारुणा जगत् ।
दिक्कालाकारवर्णैश्च दृश्यमाना नभोगताः ।
अन्तरिक्षे यदा धूमो ज्वाला वा संप्रदृश्यते ।
आन्तरिक्षः स केतुः स्याद्दिव्यस्ताराश्रितः स्मृतः ।
पर्वताश्चैव वृक्षाश्च प्रासादा नगराणि च ।
अकस्माद् यत्र [1]धूम्यन्ते ध्वजवर्मायुधानि च ।

---

ख पाठः-

(1) धूप्यन्ते ।

मुद्रित पाठः –

A- बृहत् संहिता - विवृतिः ११।७

B- दिव्यान्तरिक्षगो भौम- बृहत संहिता विवृतिः ११।५

रसवर्णविपर्य्यासः शब्दस्पर्शनयोस्तथा ।
वृक्षौषधितृणे गुल्मे विकृतिर्यत्र दृश्यते ।
तत्र भौमं विजानीयाद्धूमकेतुमुपस्थितम् ।

यत्तु सूर्य्यसुतान्तर्हितदशकेतुरूपाणि तावदाह गर्गः —

[1]ते भूमिशयना बाला वनस्थाः पर्वताश्रिताः ।
कीटाः पतङ्गाः कण्टस्था वृश्चिका नकुलाः खगाः ।
[2]जले च दुष्टसत्त्वानि केतुरूपाणि तानि तु ।

यच्च इत्यत्र केतुग्रहस्य सर्पनकुलनक्रादिष्वावेश इत्यवगन्तव्यम् । अत्र नियतकाल[3]संचाराद् ग्रहान्तरवज्योतिश्चक्रे पुनः पुनः स्वस्वकाले परिवर्त्तन्ते एकोत्तरशतकेतवः । तदाह गर्गः —

नक्षत्रचक्रमाकाशे यथैव परिवर्त्तते ।
केतुचक्रं तथैवेदमाकाशे परिवर्त्तते ।

एते नियतचारोदया ग्रहा अन्ये त्वनियतचारोदयाः । आगन्तवः सहस्रं केतवः । गर्गः —

अनित्योदयचाराणामशुभानां च दर्शने ।
[4]आगन्तूनां सहस्रं स्यात् [A]केतूनां तन्निबोध मे ।

देवलोक्ता नियतचारोदया आगन्तवो नक्षत्रविशेषोदया एकोत्तरशतकेतवः । [5]कुवेरवायुवरुणसूर्य्याग्नियमसुताः षड्विधाः केतवो वसन्तादिषड्तुषु क्रमेणोदयन्ते । [6]ये तेष्वनियतचारा आगन्तवः नियता अनियताश्च सर्वेऽप्युत्पातरूपा एव । अत्र नियतचारोदया एकशतं केतवः प्रदृश्यन्ते ।

---

मुद्रित पाठः –

(1) तेन भूमिशया । (2) जलीय । (3) संसर्ग ग्रहान्तरवत् ।
(4) आगान्तुकानां साहस्रं । (5) चन्द्रसूर्य्याग्नियमसुताः ।
(6) ये नक्षत्र पराः ।

मुद्रित पाठः—

A- ग्रहाणां- अद्भुतसागर १५५

मृत्युपुत्राः षोडश ते च –

[A]दरः स्पर्शः श्रमो मोहः श्यावः सर्वान्वयस्तथा ।
शरः पाशस्तमोव्युष्टिः षोडशोऽतिप्रजृम्भकः ।
अस्थिकेतुर्वसाकेतुः शस्त्रकेतुरदर्शनः ।
एते निःश्वासजा मृत्योर्नामतः परिकीर्त्तिताः ।

आदित्यजाः –

[1]जृम्भाकेतुश्च दुष्टश्च [B]वृषः कौम्भी दृढो रविः ।
तीक्ष्णो व्यालः कपालश्च तीव्रः प्रमथनस्तथा ।
एकादशैते विख्याता द्वादशादित्यसम्भवाः ।

रुद्रक्रोधजाः –

दक्षयज्ञे च रुद्रस्य क्रोधादेकादशोत्थिताः ।
[C2]व्याधिकाराहिनक्राश्च शात्रवश्च शतोदरः ।
दम्भो भुवनकेतुश्च कलिर्वृषभगो शराः ।

---

ख पाठः —

(1) स्तम्भकेतुश्च दुष्टश्च वृक्षको मद्दतो रविः । — अायोव्यालः
(2) व्याधिःकारश्च हीनश्च शान्तिश्च अकृतोदरः ।

मुद्रित पाठः –

A- दरस्तब्धः श्रमो मोहः श्यावः सर्वोऽव्ययस्तथा ।
पराशरस्तमोवृष्टिः शोषणोऽति प्रभञ्जकः ॥ अद्भुत सा.. १६७

B- वृक्षः कौम्भी ह्रदो रविः । १६८

C- दंशस्तुण्डो व्रती क्रोध श्चलकेतुर्जलोदरः ।
व्याधः कटाहो नक्रश्च शान्तिदश्च शतोदरः ।
दम्भो भवनकेतुश्च कलिर्वृषभगो शराः । १६८
अत्र दंशादीनां पैतामहानां रौद्रत्वेन पाठः व्याकुलः असमीचीनश्च ।

पैतामहाः—

दंशस्तुण्डो व्रती क्रोध [1]श्चलकेतुर्जलोदरः ।
एते पैतामहाः सप्त शिखण्डी चेति कीर्त्तिताः ।

[2]औदालजाः—

अग्निः श्वेतः [3]कृशः स्तारी जटी क्रोधी निसूदनः ।
भस्मोद्भवनकेतुश्च गोपो मृत्युः पराभवः ।
[A]दमः प्रशमनः शोकः स्युः पञ्चदश केतवः ।

प्रजापतिहासजाः —

पिङ्गलो जटिलश्चैव [4]विश्वरूपो महोदरः ।
कः प्रजापतिहासात्तु केतवः पञ्च निःसृताः ।

मारीचकश्यपजाः —

[B]चलकेतुर्द्रुमः श्वासः [C] [5]सुधातारी सुधा यमः ।
कबन्धः स्थापनः [D]श्वस्तश्चण्डो ग्राहो जटाधरः ।
[E]रक्षः कोपः पुटो नेमिर्नामतः परिकीर्त्तिताः ।
षोडशैकश्च मारीचेः कश्यपस्य ललाटजाः ।

---

ख पाठः —

(1) शान्तिः केतुः कलोदरः । (2) ओदालकिजाः । (3) कनः ।
(4) विरूपाक्षो । (5) स्वधाचारीमुधाक्षमः ।

मुद्रित पाठः —

A- गदः प्रमथनः शोकः पञ्च वै पञ्च पञ्च च ॥ १६८ B- बलः
C- स्वधीचारी स्वधी क्षमः । D- शम्भु E- रक्षकौट पुटै रित्यादि-
रद्भुतसागर पाठः न. सङ्गतः. पृ. १६९

अग्निजाः —

श्वेतकेतुर्मोहनश्च रश्मिकेतुश्च ते त्रयः ।
अग्निपुत्राः केतवस्तु नामतः परिकीर्त्तिताः ।

अमृतजाः —

जलकेतुर्महाशङ्खः पद्मकेतुर्मणिस्तथा ।
रक्तो विसर्पणश्चैव हिमः शीतस्तथैव च
आवर्त्तकेतुरूर्मिश्च कुक्षिः कुमुद एव च ।
कोपश्च भवकेतुश्चाऽप्यमृतोत्थाश्चतुर्द्दश ।

अन्तकक्रोधजः —

अन्तकक्रोधज[1]श्चैको धूमकेतुरिति स्मृतः ।

ब्रह्मकोपजः —

अन्यः संवर्त्तको नाम ब्रह्मकोपसमुद्भवः ।
[A]ये त्वेकशतकेतूनामुदयं यान्ति केतवः ।
ते षड्विंशतिसंख्याताः फलमावेदयन्ति च ।

मृत्युपुत्र षोडशमध्ये त्रय उदयन्ते, वसाकेतुरस्थिकेतुः शस्त्रकेतुश्च कालभेदेन । तेषां प्रथमं वसाकेतुरुदेति । [2]तदुदये पूर्वं लक्षणम्— देवतार्च्चाश्चलन्ति रुदन्ति धूमायन्ते, ह्यभ्रे नभसि वृष्ट्यशनिमारुताः, शृगालादीनां महास्वनः एवं निरन्तरमुत्पाता दृश्यन्ते ।

---

ख पाठः —

(1) स्त्वेको । (2) तदुदयात् ।

मुद्रित पाठः —

A– एकदैकशतं धूर्णन्न नामतः परिकीर्त्तितः ।

तस्य स्वरूपम्—

पश्चिमायामुदेति उदगायत महाशिखरः ।
स्निग्धमूर्त्तिर्वसाकेतुः सद्यो मरकफलः सुभिक्षकृच्च ॥

वसाकेतोरुदयात्त्रिशद्वर्ष-शते गते अस्थिकेतोरुदयः अस्याप्युदयात् पूर्वं पूर्वोक्ता उत्पाताः ।

अस्य स्वरूपम्—

[1]उग्रया शिखया भीमो दक्षिणेनानताग्रया ।
अस्थिकेतुर्जनान् हन्याद् दुर्भिक्षमरकादिभिः ॥

अस्याप्युदयः पश्चिमे । अस्थिकेतोरुदयादूर्ध्वं त्रिशद्वर्षशते गते शस्त्रकेतोरुदयः । अस्याप्युदये पूर्वोक्ता उत्पाताः ।

अस्य स्वरूपम्—

रुक्षया शिखयात्यर्थं A[2]क्षतजार्द्रप्रकाशया ।
शस्त्रकेतुर्भवेत् प्राच्यां शस्त्रमृत्युकरो महान् ॥

मृत्युसुतषोडशकेतूनां त्रयो व्योम्नि दृश्याः कथिताः, शेषास्त्रयोदश भूमिगताः तेषामेवोदयकाले चरन्ति ।

रथ्याचत्वरनिष्कूट-पुरग्रामनिवासिनः ।
मृत्युजाः केतवश्चान्ये लोकान् घ्नन्ति निशाचराः ।

एतेषामुदयानन्तरममृतजस्य [3]कुमुदकेतोरुदयः ।

---

ख पाठः —

(1) रुक्षया । (2) क्षतजाभ । (3) कुमुद इति नास्ति ।

मुद्रित पाठः —

A- क्षतजार्द्र ।

## ( कुमुदकेतुः )

तेषां कर्मफलस्यान्ते कुमुदः कुमुदप्रभः ।
वारुण्यामुदितः [1]प्राच्यां शिखां कृत्वा सितप्रभाम् ।
दृश्यतेऽसौ निशामेकां ततो गच्छत्यदर्शनम् ।
सुभिक्षं दश वर्षाणि करोति सकलं जगत् ।
प्रतीच्यां ज्वरपाण्डवादिरोगैर्लोकान प्रबाधते ।
अतः कुमुदकेतोस्तु फलपाके दशाब्दिके ।

## ( कपालकेतुः )

द्वादशादित्यजः केतुः कपालाख्यः प्रदृश्यते ।
निर्घाताः पांशुवर्षाणि पूर्वरूपाणि तस्य च ।
पञ्चविंशतिवर्षाणां शतानि प्रोष्य दृश्यते ।
अमावास्यायां प्राच्यां तु [2]धूम्रताम्रशिखः स तु ।
[3]नभसोद्ध्वं विचरति मरकक्षुद्रवृष्टिदः ।
प्रजार्द्धस्य क्षयकरः शस्त्रव्याधिभयादिभिः ।
यावद्दर्शयते मासाँ [4]स्तावद्वर्षाणि बाधते ।
आदित्यजास्त्वदृश्या [5]ये दृश्यन्ते भूमिगोचराः ।
कपालकेतुकाले ते सर्पाद्याकारतां गताः ।
कीटाः पतङ्गाः कण्ठस्था [6]हिंस्राश्च नकुलाखवः ।
विषोल्वणाः प्रबाधन्ते प्रजाः सर्वा न संशयः ।

---

ख पाठः —

(1) प्राचीं । (2) धूम्रो धूमशिखः । (3) नभसोर्द्ध्व ।
(4) स्तावदद्वानि । (5) स्ते (6) हस्ताश्च नकुलाः खगाः ।

( मणिकेतुः )

कपालकेतोर्निवृत्ते फलपाके यथोदयम् ।
केतुर्मणिशिखो दृश्यः प्रतीच्याममृतोद्भवः ।
उदयात् पूर्वमेवास्य सुवृष्टिर्महती भवेत् ।
न किंचिदशुभं लोके श्रूयते दृश्यतेऽपि वा ।
अरुन्धतीनिभः [1]सौम्यस्तन्वी क्षीरनिभा शिखा ।
पूर्वाग्रा [2]सा च सुस्निग्धा यामैकं दृश्यते निशि ।
चातुर्मासानि पक्षं च सुभिक्षक्षेमकारकः ।
बहुकालोदितः क्षुद्रजन्तुभिः पीडयज्जनान् ।
चतुर्वर्षाणि षण्मासाः पाककालं परे विदुः ।

( कलिकेतुः )

मणिकेतोर्विनिवृत्ते फलपाके ततः परम् ।
रुद्रक्रोधद्भवः केतुः कलिः प्राच्यां प्रदृश्यते ।
[3]नवमासाधिकां वर्षत्रिशतीं पूर्वमेव तु ।
अदृश्यः सन्नथेदानीं मणिकेतोरनन्तरम् ।
दृश्यो वैश्वानरपथे नक्षत्राण्युपधूपयन् ।
ज्येष्ठामूलानुराधासु या वीथी तामुपाश्रितः
दक्षिणाग्रानतां कृत्वा शिखां घोरां भयङ्करीम् ।
[4]तीक्ष्णां श्यावारुणां ताम्रां त्रिभागं नभसः [5]क्रमेत् ।

---

ख पाठः —

(1) सोस्य दीपशिखानिभा शिखा। (2) चैव ।

(3) नववर्षाधिकत्रिशद्वार्षिकं । (4) तीक्ष्णाग्रां चारुणां । (5) क्रमात् ।

[1]ततो न दृश्यते चास्य फलं [2]मासत्रयोदशे ।
यावद्दिनानि दृश्योऽसौ तावद्वर्षाणि च प्रजाः ।
शस्त्राग्निरोगदुर्भिक्षमरकैर्यान्ति संक्षयम् ।
कलिकेतुर्यदोदेति पूर्वस्यां पश्चिमे तदा ।
कृत्तिकास्त्वग्निपुत्राणामेकः केतुः प्रदृश्यते ।
जगत्क्षयकरौ स्यातां दुर्भिक्षमरकादिभिः ।
शरद्धान्यादिके मूल्यं [3]कुरुतोऽष्टाढकोचितम् ।
अल्पशिष्टां प्रजां कृत्वा गच्छतोऽस्तमनं सह ।
रौद्राः शिष्टा दशान्ये ये द्वौ चाग्नेयौ नभःस्थिताः ।
अन्तर्हितास्ते निघ्नन्ति षणकार्पासमात्रकम् ।
छागान् नागान् केशरिणो रौद्रसत्त्वाँस्तथा जनान् ।

( शङ्खकेतुः )

तयोस्तु द्वादशे वर्षे पक्षे चाष्टदशे गते ।
अमृतोत्थः शङ्खकेतुरुदयं यात्यथाम्बरे ।
शिखया स्निग्धया युक्तः प्रदक्षिणनताग्रया ।
मुक्ताच्छायः स सौभिक्षं नवमासं करोति वै ।
यज्ञोत्सवपरा विप्रा वर्द्धन्तेऽनामयाः प्रजाः ।
एतैर्निमित्तैर्ज्ञातव्यः शङ्खकेतुरिहोदितः ।

---

ख पाठः —

(1) तेन । (2) मासे ।
(3) तण्डुलाष्टाढकोचितम् ।

( चलकेतुः )

शङ्खकेतोः फले पूर्णे नवमासादनन्तरम् ।
पैतामहानां सप्तानां चलकेतुः प्रदृश्यते ।
तस्योदये पूर्वरूपं राज्ञां वैरं सुदारुणम् ।
अनिष्टमशुभं रुक्षं नदन्ति मृगपक्षिणः
[1]अदृश्यः सकलं चैव शतवर्षाणि साम्प्रतम् ।
शङ्खकेतूदया[2]दूर्द्ध्वं दृश्यते व्योम्नि पश्चिमे ।
अङ्गुल्योच्छ्रितया याम्याग्रया स शिखयान्वितः
तथा यथोत्तरां याति दैर्घ्यमेति क्रमात् शिखा ।
ध्रुवं सप्त मुनीन् गत्वा निवृत्तो [3]गगनार्द्धगः ।
दक्षिणस्यामस्तमेति मासाष्टादशगं फलम्
मध्यदेशे विशेषेण दुर्भिक्षमरकादयः ।
अन्येऽपि च देशेषु दुर्भिक्षाद्यैः प्रजाक्षयः ।

( जलकेतुः )

चलकेतोरतीते च फले च नवमासिके ।
अमृतेयः परः श्रीमान् जलकेतुः प्रदृश्यते ।
पूर्वरूपं भवेदस्य सन्ध्ययोर्मृगपक्षिणाम् ।
गम्भीरस्निग्धमधुराः श्रूयन्तेऽनुदिनं स्वनाः ।
दृश्यते पश्चिमायां स पश्चिमाग्रशिखः शुभः ।

---

ख पाठः —

(1) अदृश्यः सन् पञ्चदश । (2) पूर्वं । (3) गगनार्द्धतः ।

चतुर्मासोदितश्चैष ततः फलति कर्मभिः ।
क्षेमं सुभिक्षं सर्वत्र ग्रहदौःस्थ्यं निवारयेत् ।
अमृतोत्थाः केतवोऽन्ये तारारूपास्त्रयोदश ।
जलकेतोः प्रभोः पार्श्वे लक्ष्यन्ते केतुकोविदैः ।

पराशरस्तु — ( ऊर्मिकेतुः )

जलकेतोः फलेऽतीते ततोऽन्यत्र त्रयोदशे ।
ऊर्मिकेतुः शुभः क्षेमो बालेन्द्वाभशिखो व्रजेत् ।

( आवर्त्तकेतुः )

ऊर्मिकेतोश्चतुर्दशवर्षान्ते चामृतोद्भवः ।
आवर्तकेतुरायाति सुभिक्षक्षेमकारकः ।

( शीतकेतुः )

ततोऽष्टादशवर्षान्ते शीताख्यश्चामृतोद्भवः ।
कश्चित् पञ्चनिशादृश्यः कश्चिद् दृश्यो निशा दश ।
कश्चिद्दृश्यो निशामेकां निशार्द्धमपि चापरः ।
एते स्निग्धाः सुभिक्षाय रुक्षाः कष्टामृतोद्भवाः ।

[1] Aअष्टानामिति पराशरेण वक्ष्यमाणत्वादमृतजेषु सप्तकस्य कथितत्वादष्टमो हिमकेतुः शीतकेतोरनन्तरमुदेतीत्येवं प्रतिभाति । तथा च निशार्द्ध इति चापर इति चतुर्थ उक्तः । एवममृतजानामुदय उक्तः कालभेदेन । एवमस्योदयः कथ्यते ।

---

ख पाठः —

(1) अष्टानामित्यादि कथ्यते इत्यन्तं नास्ति ।

मुद्रित पाठः —

A- "तेषामष्टानां कर्मण्यतीते भवकेतु र्दृश्यते पूर्वेणैकरात्रम्" ।

इति- पराशरः अद्भुतसागरे पृ. १८२

( भवकेतुः )

अमृतोत्थाष्टकेतूनां निवृत्ते फलदर्शने ।
प्राच्यामुदेति नवमो भवकेतुः शुभावहः ।
दक्षिणाग्रा शिखा चास्य [1]कपिलाङ्गुलिसन्निभा ।
सूक्ष्मतारो निशामेकां दृष्टोऽस्तमनुगच्छति ।
यावन्मुहूर्त्तदृश्योऽसौ तावन्मासफलप्रदः ।
स्निग्धः दुर्भिक्षदो रुक्षो दुर्भिक्षव्याधिकारकः ।

( श्वेतकेतुः )

भवकेतोः फलेऽतीते श्वेतकेतुश्च दृश्यते ।
उद्दालकसुतः पञ्चदश तेष्वेक एव सः ।
दशोत्तरं वर्षशतं प्रोष्य [2]प्राच्यामुदेत्यसौ ।

( क केतुः )

दक्षिणाशाशिखो रात्रेरर्द्धे दृश्योथ पश्चिमे ।
प्रजापत्यः कनामा च केतुस्तत्काल एव हि ।
[A]तावुभौ सप्तरात्राणि दृश्यौ वर्षान् दशैव तु ।
प्रजापीडा करः कस्तु सप्तरात्राधिकोदितः ।

---

ख पाठः —
(1) कपिला दारुसन्निभा (शूलसन्निभा)। (2) मुदेति सः।

मुद्रित पाठः —
A- तावुभौ- औद्दालकः श्वेतकेतुः, प्रजापत्यःक केतुश्चेत्यर्थः ।

दारुणः स्याद्थैतेषां शिष्टा उद्दालकात्मजाः ।
प्राजापत्याश्च चत्वारो गगनेन्तर्हितास्तथा ।
फलमूलानि गर्भस्थानण्डजान् [1]पक्षिपन्नगान् ।
एतान् घ्नन्ति विशेषेण केतवो भृशदारुणाः ।

( पद्मकेतुः )

श्वेतकेतोः फलेऽतीते दशवर्षेऽथ पश्चिमे ।
अमृतोत्थः पद्मकेतुःमृणालाभशिखाधरः ।
एकरात्रं स दृश्येत सप्तवर्षाणि सौख्यदः ।

( स्वधिकेतुः )

ये च सप्तदश प्रोक्ताः केतवः कश्यपात्मजाः ।
तेषामेकः स्वधिर्नाम पूर्वस्यामुदयं व्रजेत् ।
पूर्वरूपञ्च तस्योल्का–दिग्दाहश्चलनं भुवः ।
स्त्रीणां प्रसववैकृत्यं वाता वान्ति सुदारुणाः ।
दश पञ्च च वर्षाणि प्रोष्यामृतभवस्य तु ।
कुमुदस्य प्रचारान्ते प्राच्यां दृष्टो भयङ्करः ।
दक्षिणाशिखरश्याव रुक्षवर्णोऽम्बरस्य च ।
सत्रिभागं परिक्रम्यापसव्यं विनिवर्त्तते ।
धूपयेत्तानि राजानः क्षयं यान्ति परस्परम् ।

---

ख पाठः —

(1) मक्षिकानगान् ।

मध्यदेशं कुरुक्षेत्रं [A]शकान् घ्नन्ति द्विजानपि ।
षोडशान्तर्हिताश्चान्ये काश्यपा व्यालरूपिणः ।
सागराणां च नक्राद्या नरान् खादन्ति ते तदा ।

( आवर्त्तकेतुः )

स्वधिकेतोः फलेऽतीते प्रतीच्यामर्द्धरात्रके ।
आवर्त्तकेतोरुदयः [1]पुनस्तत्र प्रजायते ।
पूर्वेणाभिनता चास्य शिखा शङ्खोदरारुणा ।
दृष्ट एव स षण्मासान् पक्षञ्च शुभसूचकः ।
सुवृष्टिक्षेमनैरुज्ययज्ञोत्सवकरो भवेत् ।

( रश्मिकेतुः )

आवर्त्तकेतोश्चारान्ते प्रोष्य वर्षशतं ततः ।
कृत्तिकास्थो रश्मिकेतुर्वह्निपुत्रः प्रदृश्यते ।
आधूम्रया च शिखया सत्रिभागप्रजाक्षयः ।

( अग्निकेतुः )

अतिक्रान्तै स्त्रिभिर्वर्षै र्मासैः षड्भिस्तथापरैः ।

---

ख पाठः —

(1) पुनरत्र ।

मुद्रित पाठ —

A- "येचाप्यन्तर्हिताः शेषा केतवः षोडशैव तु ।
ते च भूमिगता व्याला वनपर्वतवासिनः ॥"
— वृद्धगर्गः, अद्भुत सागरः - पृ. १८७

औद्दालकोऽग्निकेतुश्च रश्मिकेतोरनन्तरम् ।
किंशुकाशोकसदृशः सौदामिन्याः समद्युतिः ।
समार्द्धं मासं ज्येष्ठासु दृष्टो गच्छत्यदर्शनम् ।
एष पञ्च च वर्षाणि मासान पञ्चैव चापरान् ।
दारुणं कुरुते [A]युद्धं न तु दुर्भिक्षतो भयम् ।

अथ गदाकेतोरुदयः —

"मार्गशीर्षममावास्यां गदाकेतुः प्रदृश्यते ।
आदित्यरौद्रसार्पाणि बार्हस्पत्यं तथैव च ।
कोष्ठागारञ्च शिखया धूमयन्नरुणाभया ।
गदानिभो गदाकेतु[B]र्हन्यादन्त्यनिवासिनः ।
गान्धारकाशीचीनांश्च शकांश्च दरदैः सह ।
यावत् पक्षानसौ दृष्टतावन्मासान् विहन्ति च ।
मासैर्वर्षाणि जानीयादिति शास्त्रस्य निश्चयः ।(वृद्धगर्गः)

( धूमकेतुसम्बर्त्तकेतू )

अथ धूमकेतु-सम्बर्त्तकेत्वोर्युगपदुदयः

ततो वर्ष [1]सहस्रान्ते दृश्येतेऽभ्युदितौ दिवि ।
[C]केतुगणस्यान्ते धूमसंवर्त्तकावुभौ ।

---

ख पाठः —

(1) शतस्यान्ते ।

मुद्रित पाठः —

A- कर्म - अद्भुतसागरः पृ. १८९ B- हन्याद्दृश्यो नभोगतः -अ.सा पृ. १९०

C- केतुमालाग्रहस्यान्ते - अद्भुतसागरः पृ. १९०

अन्तकोत्थो धूमकेतुः संवर्त्तो ब्रह्मकोपजः ।
एतयोरुदयात् पूर्वमुल्कानिर्घातभूभ्रमाः ।
स्त्रियो गर्भान् विमुञ्चन्ति भूतानां नदतां स्वनः ।
सुमहान् जायतेऽभीक्ष्णं बालानां स्त्रीजनस्य च ।
एतै निंमित्तैः सम्वर्त्तः धूमकेतोः समुद्भवः ।
धूमकेतु दक्षिणस्यामस्तकाले रवेरपि ।
प्रदोषाद्र्मुदेत्यष मुहुधूमं विमुञ्चति ।
[1]अव्यक्ततारो दावाग्निसदृशों दक्षिणानताम् ।
रुक्षां दीर्घां शिखां बिभ्रद् [2]ग्रसन्निव नभस्थलम् ।
प्राच्यां संवर्त्तकेतुश्च रात्र्यन्ते संप्रदृश्यते ।
दीप्तया शिखयात्यर्थरक्तया जगतः क्षये ।
नभस्त्रिभागमाक्रम्य तिष्ठेद् यावन्मुहूर्त्तकम् ।
तावद् वर्षाणि राजानः शस्त्रैघ्नन्ति परस्परम् ।

द्वयोः फलम्

[3]अर्घमष्टगुणं कृत्वा शरद्धान्यस्य दारुणौ ।
पेषयित्वा च षड्भागं जगतस्तौ गमिष्यतः ।
संवर्त्तकेतुरेकाकी यदा चोदेति पश्चिमे ।
धूपयेद्यानि धिष्ण्यानि यत्रोदेति तदाश्रितान् ।
देशान् हन्ति विशेषेण स च पूर्वोक्तलक्षणः ।

ख पाठः —
(1) अव्यन्ततारो दावाग्नि सदृशो । (2) ग्रसमानो भुवस्तलम् (3) मूल्य ।

धूमकेतुस्तथैकश्चेद् दिक्कालनियमो नहि ।
धूमध्वजो धूमशिखो धूम्रार्च्चिधूमतारकः ।
दृश्यते यत्र तद्राष्ट्रनृपामात्यदिशां क्षयः ।
गिरिवृक्षध्वजच्छत्ररथवर्मायुधादिषु ।
गृहोपस्करतोयेषु विनाशाय प्रदृश्यते ।

इति नियतकाल चारकेतवः । ते च कालविशेषनियत त्वात्सशिखत्व नियमाच्चागन्तुकेभ्यो विशिश्यन्ते ।

## ( आगन्तुककेतवः )

[1]तथाऽनियतकाला आगन्तवः केतवः । सामान्यतः शक्रचापनिभो द्वित्रिचतुःशिखो दक्षिणाशोदितो वा मृत्युदः ।

विप्रान् श्वेताकृति र्हन्ति क्षत्रियान् हन्तिलोहितः ।
वैश्यान् पीतोऽसितः शूद्रानन्यवर्णस्तु संकरान् ।
धूमकेतुः ... ... ...सर्वांश्चराचरान् ।
शक्त्याकारो विनाशाय सुखाय मुसलाकृतिः ।

**अथ देवलमतेन नवधागन्तुककेतवः —**

कृतिकादिभत्रयं भूमध्यम् । आग्नेयाः पञ्चदशकेतवः अत्र उदयन्ते । तदा प्रजाक्षयः । मरकम् ।

[2]आर्द्रादिभत्रयं पृथिव्याः पूर्वम् । [3]अत्रोदिताः केतवः रौद्रा [4]एव विंशतिः । तेषु दृष्टेषु दुर्भिक्षं मरकम् ।

---

**ख पाठः —**

(1) अथा । (2) आर्द्रात्रितयं । (3) तत्रोदिता । (4) एकविंशतिः ।

अश्लेषादिभत्रयं पृथिव्या आग्नेयम्। तत्रौद्दालकसुता दश केतवो दृश्यन्ते। अत्र सुभिक्षक्षेमारोग्याणि।

उत्तराफाल्गुन्यादिभत्रयं पृथिव्या दक्षिणम्। अत्रोदिताः काश्यपाश्चतुर्दशकेतवः। अनावृष्टिभयं दारुणम्।

स्वात्यादित्रयं पृथिव्या नैर्ऋतकोणः। मृत्युसंभवाश्चत्वारः केतवोऽत्र दृश्यन्ते। तत्र दुर्भिक्षानावृष्टिमरकाः।

ज्येष्ठादित्रयं पृथिव्या पश्चिमः। अत्र सोमपुत्रास्त्रय उदयन्ते। तत्र सुभिक्षयज्ञोत्सवसुवृष्टयः।

उत्तरादिभत्रयं पृथिव्ता वायुकोणः। [1]अत्र महीसुताः पञ्चविंशतिः केतव उदयन्ते। अत्र राज्ञां युद्धे वधः।

शतभिषादिभत्रयं पृथिव्या उत्तरो भागः। अत्र वारुणास्त्रयः केतवः। ऊर्मिकेतुः श्वेतकेतुर्धूमकेतुश्च। ऊर्मिकेतुदर्शने जलविप्लवः। श्वेतकेतु-दर्शने महादुर्भिक्षम्। मानुषा मानुषमांसं खादन्ति। अस्थिभिः पृथिवी श्वेतवर्णा। न माता मन्यते पुत्रम्। क्षुद्भयार्त्तं जगत्। धूमकेतुदर्शने योधाः परस्परं घ्नन्ति। [2]राजमन्त्रिजानपद वधः। देशक्षयः।

रेवत्यादिभत्रयं पृथिवीशानभागः। [3]अत्र यमपुत्रास्त्रयोदश केतवः। तदा स्थावरजंगमानां [4]चतुर्विधानां भूतानां संशयः।

एते च सर्वे केतुत्वादेव सशिखाः। विशिखत्ववचनाभावाच्च। तथा च वारुणधूमकेतुमधिकृत्य "सहन्ति शिखया देशा"निति शिखां दर्शयति। अत्र च मृत्युपुत्रास्त्रयोदश [5]इत्यादिषु त्रयोदशानां प्रत्येकं वैलक्षण्याभावेपि शास्त्रप्रामाण्या [6]द्देवतावन्मुख्यत्वात् तेषां [7]च पर्य्यायोदयः। न तु एकदा नक्षत्र गतत्वेनैव केत्वन्तरेभ्यो भेदः।

---

ख पाठः –

(1) तत्र। (2) राजमन्त्रिवधः। (3) तत्र।
(4) चतुर्विधानां संक्षयः। (5) इत्यादि। (6) देवतावत् सत्यत्वम्।
(7) तु।

**अथ गर्गमतेनावगन्तव्याः सहस्रं केतवः —**

अर्कपुत्राः पञ्चविंशतिः किरणाख्याः शुद्धस्फटिक मृणालरजतनिभाः। मुक्ताहारसुवर्णाभाः पूर्वपश्चिमदिशि दृश्याः सशिखाः। ते च नृपभयदाः।

अथ चन्द्रसुतास्त्रयः। चन्द्ररश्मिकुन्देन्दुनिभाः शिखिन उत्तरदिशि दृश्यास्त्रयः सोमपुत्राः शुभदाः।

भौमपुत्राः षष्टिः कुङ्कुमाख्याः। ते च सशिखतारा त्रयात्मकाः। एकत्र तारात्रयं शिखात्रय[1]युतमित्यर्थः।

रक्तवर्णा रक्तरश्मय उत्तराशाश्रिताः, ते च [2]कुङ्कुमाख्या राज्ञां संग्रामकारकाः।

बुधात्मजास्तस्कराख्या एकपञ्चाशत्।

**अरुन्धती-समा रूक्षा किञ्चिदव्यक्ततारकाः।**

**सपाण्डुवर्णा श्वेताभाः सूर्य्य[A]रश्मिभिरावृताः।**

(बृहत् संहिता विवृति- ११। २०)

[3]सशिखा एकशतं तस्कराख्याः। यथेष्टदिक्चराः।

बृहस्पतिसुता विकर्षाख्याः पञ्चषष्टिः। शुक्लाः स्निग्धा एकतारा-[4]रश्मिभिरावृताः शिखारहिता दक्षिण दिक्स्था विकर्षाख्याः पञ्चषष्टिः।

शुक्रसुताश्चतुरशीतिः विसर्पकानाम।

**"गोक्षीर कुसुमप्रख्या स्त्रीव्रेण वपुषान्विताः।**

**चरन्त्यन्तरवीथीषु स्निग्धा विपुलतेजसः।**

**[B]एते विसर्पकानाम अर्च्चिष्मन्तो महाप्रभाः।**

---

**ख पाठः —**

(1) युक्त। (2) कुङ्कुमाख्या इति नास्ति।

(3) सशिखा बुधपुत्राः एकपञ्चाशत्। (4) तारा प्रेक्ष्य।

**मुद्रित पाठः —**

A- सूक्ष्मा रश्मिभि।

B- एते विसर्पका नाम शुक्रपुत्राः पुरोदयाः।

अशीतिश्चतुरश्चैव लोकक्षयकराः स्मृताः॥ इति बृ. सं. वि. गर्गः ११।१७

विज्ञेया श्चतुरशीतिः शुक्रपुत्रा महाग्रहाः ।"

एतेषामुत्तरेणानयोरुदयः। पूर्वस्यामेके। एते लोकक्षयकराः ।

शनैश्चरसुताः षष्टिः कनकाख्याः। ये श्वेताः किञ्चिदाकृष्णविशिखाः शनिसुताः कनकाख्या षष्टिः अतिघोराः।

राहुसुतास्त्रयस्त्रिंशत् तामसकीलकाख्याः ।

"[1]तामसकीलकसंज्ञा राहुसुताः केतवः त्रयस्त्रिंशत् ।

ते चार्कमण्डलभासा [2]पापफलाश्चन्द्रमण्डले सौम्याः।"

ध्वांक्ष कबन्ध ग्रहण रूपा इत्यादि सूर्य्याद्भुते व्यक्तम्।

कालसुताः षण्णवतिः कबन्धाख्याः। पुण्ड्रताराः। कबन्धाकृति-संस्थानाः । भस्मकर्बुररश्मयः कालपुत्राः कबन्धाख्याः षणवतिः ग्रहाः । पूण्ड्रताराश्चिलवर्णताराः एते सशिखा एते च घोरा अशुभदर्शनाः ।

मृत्युपुत्राः पञ्चविंशतिः। रुक्षाः कृष्णवक्रशिखाः दृश्यन्ते याम्यदिक्-संस्थाः। पञ्चविंशतिःमृत्युपुत्राः प्रजानां क्षयकारकाः ।

अग्निपुत्राः पञ्चविंशतिः ।

"अग्नेय्यां दिशि दृश्यन्ते लोहिताः पञ्चविंशतिः ।

अग्निपुत्रा ग्रहा ज्ञेया लोकेऽग्निभयवेदिनः ।"

अत्र शिखानुक्तापि केतुत्वादभवितुमुचिता ।

अन्येऽग्निपुत्रा विश्वरूपसंज्ञाः। विंशत्यधिकशतसंख्याः ।

नानावर्णाग्निसंकाशा ज्वालामालाविसर्पिणः ।

सृजन्त्यग्निमिवाकाशे सर्वज्योति[3]र्विनाशनाः ।

[4]तेष्वग्निपुत्रा विज्ञेया स्त्रीत्राग्निभय-वेदिनः ।

---

ख पाठः —

(1) तामसकीलेत्यारभ्य स्त्रयस्त्रिखत् इत्यन्तं नास्ति । (2) गताः ।
(3) विनाशकाः। (4) तेह्यग्निपुत्रा विज्ञेया स्ते अग्निभयदर्शनाः ।

[1]त्रिंशत्यधिकशतं घोरं विश्वरूपेति नामतः ।

( बृहत् संहिता विवृतौ गर्गः - ११ । २३ )

वरुणपुत्राः कङ्काख्या द्वात्रिंशत् ।

नगगुल्मप्रतीकाशाश्चन्द्ररश्मिसरश्मयः ।

शुकतुण्डनिभैश्चापि रश्मिभिः किञ्चिदावृताः ।

उदये विसृजन्तीव स्निग्धत्वात् सौम्यदर्शनाः ।

[2]एते नाम्ना स्मृताः कंका द्वात्रिंशद्वारुणा ग्रहाः ।

एते कष्टफलाः ।

वायुपुत्राः सप्तसप्ततिः [3]अरुणाख्याः । श्वा ? वारुणादि तारा वातेरिता भ्रमन्तीव । ऋक्षादिस्तीर्णरश्मयः । [4]आरुणाख्या वायुजाः सप्तसप्ततिः । एते लोकविध्वंसकाः ।

प्रजापतिसुता अष्टौ गणकाख्याः ।

स्तारापुञ्जप्रतीकाशास्तारामण्डलसंस्थिताः ।

प्रजापतेरष्ट सुता गणकास्ते भयप्रदाः ।

ब्रह्मपुत्रो ब्रह्मदण्डाख्य एकः ।

एको ब्रह्मसुतः क्रूरस्त्रिवर्णस्त्रिशिखान्वितः ।

सर्वास्वाशासु दृश्येत ब्रह्मदण्डो भयावहः ।

एष युगान्तक्षयकरः । ब्रह्मपुत्रा ब्रह्म[5]सन्तानकाख्याश्चतुरधिक शतद्वयसंख्याः । चतुरस्ततारका त्र्यस्ता वा सोष्णीषा रूप्यरश्मयः ।

ते चतुरश्चैव ब्रह्मसन्तानकास्त्विमे ।

---

ख पाठः—

(1) वंश । (2) इयं घाटिका नस्ति । (3) तरुणाख्याः ।

(4) अरुणाख्या......सप्तति रिति नास्ति । (5) सन्तानाख्या ।

(विदिक्पुत्रा नव)

शुक्लैकतारा विपुला विदिक्पुत्रा नव ग्रहाः ।
विदिशासंस्थिता ह्येते दृश्यन्ते भयवेदिनः ।

[1]भूसुता द्वात्रिंशत्

दर्पणवृत्ताकारा विशिखाः किरणान्विताः ।
ऐशान्यां दृश्यन्ते द्वात्रिंशत् भूसुता [2]अम्बुतैलनिभाः ।

एते दुर्भिक्षभयदाः । एते गर्गाङ्काः १००० सहस्रं केतवः ।

अत्र यावत्संख्या एकस्य पुत्रास्तावन्त एकदैवोदया इति केचित् । [3]अन्येतु एकद्वित्रिचतुरुदयेऽपि तल्लक्षणसत्त्वात् भूसुतत्वादिनिर्णय इत्याहुः । तथाऽथर्वमुनिमतेन सप्ताधिकषट्शतकेतवः—

(भृगुपुत्राश्चतुर्दश)

एकविंशतिजातीया भृगुपुत्राश्चतुर्दश ।
ते च तारात्रय [4]विसर्पका नक्षत्रशरणाः ।

(वायुसुताः षष्टिः)

पाण्डराभिः सुदीर्घाभिः शिखाभिः शतरश्मयः ।
अन्तःसन्तानकास्त्वन्ये षष्टिर्वायोः सुता ग्रहाः ।

धूमकेतु[5]सुताः शतमेकोत्तरम्

कृष्णलोहितवर्णा ये गुण्ठिता इव रेणुना ।
मिश्रभूता धूमकेतोः सुता एकोत्तरं शतम् ।

---

ख पाठः —

(1) भूपुत्रा । (2) जम्बुतैलाभाः । (3) एतानेव ।
(4) विसर्पकराः क्षत्र शरणाः । (5)गताः ।

अनूरुपुत्राः षष्टिः

[1]अत्यलङ्कारकास्त्वन्ये प्रतप्तकनकप्रभाः ।

अनूरुपुत्रकाः षष्टिराख्यातिका मध्यचारणः ।

व्यालपुत्राः सप्तषष्टिः

ये तु नक्षत्र [2]वर्षस्वभागमुत्तरमाश्रिताः ।

एकतारा वपुष्मन्तो महाकायाः [3]प्रभान्विताः ।

व्यालपुत्राः सप्तषष्टिर्विकाराख्याः प्रकीर्त्तिताः ।

ब्रह्मराशिपुत्रास्त्रयः

एकद्विपञ्चतारा वा दृश्यन्ते सूक्ष्मरश्मयः ।

ब्रह्मराशेस्त्रयः पुत्रा उत्पन्ने पुरुषक्षये ।

प्रजापतिसुताः पञ्चषष्टिः

अणवो लोहितास्त्वन्ये प्रकाशन्ते विकेशकाः ।

कनकाः पञ्चषष्टिस्ते प्राजापत्या ग्रहाः स्मृताः ।

आदित्यादिग्रहपरिवेशस्याः सप्त ।

[4]अधर्म सम्भवाश्चतुर्दश ।

ते अधःशिखा विवर्णा [5]द्योततारकाः ।

राहुपुत्रा नव

कर्णच्छिद्रप्रतीकाशाः कृष्णास्ते तारकाकृतौ ।

[6]कनका राहुपुत्राश्च चन्द्रसूर्य्यसमाश्रयाः । (४६३)

---

ख पाठः —

(1) अत्यन्धकारकाः । (2) वर्षस्य । (3) प्रभाविताः । (4) अथ धर्म-
(5) विवर्णा घोर । (6) कीलाख्या राहु— ।

दिक्पुत्रा [1]द्वादशोत्तरशता दक्षिणस्यां चतुर्विंशतिः पन्नगाख्याः। पश्चिमायां द्वात्रिंशत् कृष्णकाः। उत्तरस्यां श्वेताः सप्तविंशतिः। पूर्वस्यां अरुणा विंशतिः। ते सर्व केवलं तारारूपा निष्प्रभाः। आग्नेये पञ्च पीत-रक्ताः। नैऋते पीतरक्तौ द्वौ। [2]वायव्ये पीतरक्तः एकः। [3]ऐशान्यां श्वेत-रक्त एकः। रुद्रक्रोधजा एकादश। भीमरूपाः पाशाङ्कुशधराः। सप्त पैतामहाः। [4]तिर्यग्भाजजराशिखखादन्तः सूक्ष्मशुक्तपटोपमाः। उद्दालकसुताः पञ्चदश। [5]उत्तरायणोदयाः। [6]श्वेतशिखा नीचैर्भ्रान्तिमण्डलाः। अमृतजाश्चतुर्दश। विरश्मयो विशिखा ह्रस्वकाया निरर्चिषः। रूप्यकुन्दनिभाः। ब्रह्मलोक-भवस्त्वैको विश्वासा। लोकानां तस्योदयः। एषां फलम्—

**सर्व एव क्षुधारोग मृत्युशस्त्राग्नितस्करैः।**
**पशुशस्योपघातैश्च हन्यु रन्यैश्च कारणैः।**
**धूपनात् स्पर्शनात् स्यादुदयादस्तस्य सम्भवात्।**
**हन्युः पञ्चविधं सर्वं केतवो नात्र संशयः।**

येतूक्तलक्षणै र्हीनाः केतवस्ते ऋतुभेदेन [7]शुभाशुभकारकाः। चैत्रवैशाखयोः कुवेरपुत्राः प्रजाशुभकराः। ज्येष्ठाषाढयोर्वायुपुत्राः वात्याभि गृहाट्टालोद्यान भङ्ग युद्धभयंकराः। श्रावणप्रोष्ठपदयो र्दारुणाः। महावृष्ट्या पृथ्वी जलपूर्णा, नद्यः पूर्णाः वहन्ति सुभिक्षश्च। आश्विन-

---

**ख पाठः —**

(1) द्वादशोत्तरशतं।

(2) अथ मृत्युनिःश्वासजाः षोडश। श्लोकः —
कुष्माण्ड वद्वियत् संस्था दिविष्ठा दक्षिणे पथि।
एकादशैव विज्ञेया द्वादशादित्य सम्भवाः॥
सूर्य्यचन्द्रनिभाः.................ग्रहाः। इत्यधिकः

(3) ऐशदन्या......एकः, नास्ति। (4) सूक्ष्मशुक्लधाराः, शिखावन्तः, तिर्यक्शिखाः। (5) उत्तराशोदया। (6) श्वेतशिखाः श्वेताख्याः।

(7) शुभाशुभफलाः।

कार्त्तिकयोः सूर्य्यपुत्राः । सूर्य्यतापेन सर्वधान्यक्षयः । गवां [1]नाशश्च । श्वापदानाञ्च विषं प्रवलं सर्वेषु । मार्गपौषयोरग्निपुत्राः । तत्राग्निर्ग्रामनगरवनानि सर्वत्र दहति सहायम् । माघफाल्गुनयो र्यमपुत्राः । दुर्भिक्षभयं छर्दिज्वराक्षिरोगातिसारादयश्च ।

## सर्वकेतुसामान्यदोषाः

[2]यतस्तिष्ठति नक्षत्रे प्रवासं यत्र गच्छति ।
धूपयेद्वा स्पृशेद्वापि अन्यान् देशांस्तदाश्रितान् ।

अश्लेषनक्षत्रेषु केतुप्रचारे प्रलयः । सोमधूपने समुद्रा अपि शुष्यन्ति नदीषु का कथा । मङ्गलधूपने ग्रामनगराणि दह्यन्ते । रक्तवर्णपशुपक्षिफलपुष्पसप्तधातुरक्तमणिवस्त्राणां क्षयः । अग्न्युपजीविजनानां क्षयः । बुधधूपने श्रेष्ठपुरुषवणिक्राजपुत्र-राजकन्याद्या मेधाविशूरगर्भस्था नश्यन्ति । गुरुधूपने ब्राह्मणप्राज्ञ चातुराश्रमशब्दोपजीविमद्रकेकयशाल्वौशीनरकौशलकुरुपाञ्चाल मत्स्यचेदीनां नाशः । शुक्रधूपने क्षात्त्रोद्युक्तनृपक्षत्रिययोधमुख्यपल्वलसर्पाणां क्षयः । शनिधूपने म्लेच्छगणकृष्णवर्णपशुपक्षि-कृष्णपुष्पफलवृक्षकङ्कगृध्र कपोतोल्लूकचिल्लकानां क्षयः ।

यदा प्रधूपयेत् केतुः सप्तर्षीन् ध्रुवमेव वा ।
तदा लोकाः क्षयं यान्ति सलिलं चापि शुष्यते ।
यस्मिन् देशे शिरस्तस्य स देशः पीड्यते भृशम् ।
यां दिशं धूपयेत् केतु [3]र्न तत्राभिमुखं व्रजेत् ।
यस्यां दिशि प्रतिष्ठेत हन्ति तां स विशेषतः ।
उल्काभि स्ताडितशिखः शिखाशुभः शिवतरोऽतिकृष्णोऽयम् ।

---

ख पाठः—

(1) नाशः । (2) यत्रोत्तिष्ठति । (3) न तत्राभिमुखो ।

अनुक्तपाककालकेतुषु ।

त्रिपक्षात् पुरतः कर्म पच्यतेऽस्य शुभाशुभम् ।
यावन्त्यहानि दृश्येत तावन्मासान्न फलं वदेत् ।

यावन्मासांस्तु दृश्येत तावन्मासास्तु वैकृतम् ।

नारदः —

अकस्माद्दृश्यते केतुरुदयेऽस्तमयेऽपि वा ।
ततश्चान्तःपुरे राज्ञो ज्वरः पित्तोद्भवो भवेत् ।
इन्द्रनीलमणेश्चैव हेमरत्नसमन्वितः ।
केतुः कृत्वा प्रदातव्यो ब्राह्मणाय तपस्विने ।

मयूरचित्रे, एतस्मिन्नेव निमित्ते ।

दधिमधु घृताक्तानां पुष्पाणामयुतं ततः ।
जुहुयादिन्द्रनीलस्य केतुं दद्याद् द्विजातये ।
भूषितं हेमरत्नाद्यैः ततः संपद्यते शुभम् ।

भार्गवीये—

उत्थानं चैव केतूनां विनाशायेति निश्चितम् ।
तस्मादाथर्वणैर्मन्त्रैः शमनं कारयेद् बुधः ।
होमैर्जपैश्च विविधैर्दानैश्च बहुरूपकैः ।
तस्य [1]क्षेत्रशिरोदेश[2]मेव व्रजेत् ?
धनवान् सर्वमुत्सृज्य मृत्यो मुच्यते वा न वा ।
दत्वा वा पृथिवीं सर्वां राजा शान्तिं प्रयच्छति ।

अनुक्तविशेषशान्तिषु केतूत्पातेषु दिव्यसामान्य शान्तिः ।

इति केतूत्पाताः ।

---

ख पाठः —
(1) यत्र । (2) स व्रजेत् ।

## अगस्त्यसप्तर्षि ध्रुवाद्भुतानि

अगस्त्यो नीलोऽतिवृष्टिदः। कपिलो वृष्टिहरः। धूम्रो लोकक्षयाय। [1]माञ्जिष्ठः शस्त्रभयाय। वैश्वानरार्चिःप्रतिमो रणे विविधभयैश्च किञ्चित् शेषयते प्रजाः।

इन्यादुल्का यदागस्त्यं केतुर्वाप्युपधूपयेत्।
दुर्भिक्षं जनमारश्च तदा जगति जायते।

सप्तर्षयश्च

पूर्वे स्थितो मरीचिरपरे स्थितो वसिष्ठोऽस्मात्।
तस्याङ्गिरास्ततोऽत्रिः तस्यासन्नः पुलस्त्यश्च।
पुलहःक्रतुरित्येते सन्त्यासन्ना अनुक्रमेण सप्त।
वसिस्ठसन्निधावरुन्धती एकैकस्मिन्मृक्षे शतं चरति वर्षाणाम्"
"[A]उल्कयाभिहता रुक्षा स्फुरणा रजसा हताः।
ऋषयः सर्वलोकानां विनाशाय सम्भूताम्।"

भीष्मपर्वणि कुरुपाण्डवक्षयनिमित्तम्।

"[B]अरुन्धत्या वसिष्ठः पृष्ठतः कृतः।" अरुणरुक्षा श्यामवर्णा ऋषयो भयाय। ध्रुवः अरुणरुक्षः। श्याववर्णे ध्रुवे त्रैलोक्यं पीड्यते। ध्रुवः प्रज्वलितः क्षयाय। अगस्त्याद्भुतेषु अगस्त्यादि पूजापूर्विका सामान्यशान्तिः। फलपाको वर्षेण।

---

ख पाठः —

(1) माञ्जिष्ठः शस्त्रभयाय इति नास्ति।

मुद्रित पाठः –

A- विष्णुधर्म – १।८५।५९

B- "या चैषा विश्रुता राजं स्त्रैलोक्ये साधुसम्मता।
अरुन्धती तयाप्येष वसिष्ठः पृष्ठतः कृतः॥" महाभारत, भीष्म- २।३१

## ग्रहयुद्धम्

ग्रहाणामुपरि उपरि दूरेस्थितानामपि दृष्टि यथावतारे युद्धादिद्वारेण फलसूचकत्वम् । तत्र सूर्य्येण ग्रहान्तरे युक्तेऽस्तमनम् । चन्द्रेण योगः समागमः । ताराग्रहाणां परस्परयोगो युद्धम् । चतुर्द्धा [A]युद्धम् । सकलबिम्बाच्छादनम् । किञ्चिद्बिम्बाच्छादनम् । अंशुयुक्तयोः किरणसंसर्गोऽशुमर्दः । अंशुयुक्तरश्मिमण्डलयो र्दक्षिणोत्तरस्थिति रपसव्यम् । अपसव्ये [1]विग्रहः । संग्रामो रश्मिसंकुले । किञ्चिद्बिम्बस्पर्शेऽमात्यवधः । सर्वबिम्बच्छादने जनक्षयः । विवर्णः परुषः सूक्ष्मो विरूपो विकृतो निष्प्रभो दक्षिणस्थो यः सः पराजितः उक्तः । विपरीतलक्षणो जयी । शुक्रस्तु दक्षिणस्थो जयी अन्ये उदक्स्थाः । सूर्य्ये पराजिते नृपतिधार्मिकादिक्षयः । सोमे पराजिते दुर्भिक्षानावृष्टिनृपनाशाः । कुजघाते ग्रामदुर्भिक्षं धान्यगजादिक्षयः । बृहस्पति पराजये ब्राह्मणदीक्षितचातुराश्रमपीडा । त्रैलोक्यं क्षयमुपयाति जीवघाते । शुक्रघाते वङ्गादिमुख्यराजवधः । [A]शनिघाते वङ्गाङ्गकलिङ्गमगधविदर्भवीभत्सद्राबिडनिषादादि क्षयः । राहुघाते [B]विकृतजनबन्धनपाल-तस्करादि क्षयः । केतुघाते श्रेष्ठनृपघातोद्भृक्तनृप साधुजन पार्वतादि क्षयः ।

## ग्रहयोगाद्भुतानि

एकर्क्षे पञ्चताराग्रहाः सूर्य्यानुगताः (१)कोपः । कोपः दुर्भिक्षकृत् ।

एकवर्क्षगास्त्रयश्चन्द्रसंयुक्ताः (२)शृङ्गाटकः, नृपपर्यायिनाशकः ।

---

**ख पाठः —**

(1) ग्रहः ।

**मुद्रित पाठः —**

A- सौरपीडायामपि गोरण्डसेनापति प्रधानपश्च श्वस्फीतजनपदास्त्राग्न्युपजीविनो बहुस्त्रीकास्तथा शकमहिषदरदपारदाश्राश्विनैः सहोपतापमुपयन्ति । इति पराशरः, अद्भुतसागर- २१२

B- निकृष्ट - २ । ३

विना सोमेन दृश्याश्चत्वारो (३)व्यूहः पुरनाशकः। एकर्क्षान्तरिताः पञ्चचे(४)न्माला अभिषिक्तनाशिका। उदयेऽस्तमये ग्रहत्रयं चेद्दृश्यते सा (५)तुला, शस्याम्बुनाशकारिणी। सा एवाकृति वशात् (६)धनुः कुनृपनाशाय। Aसप्तसु कृत्तिकादिषु शुक्रेणसह बुधग्रहदर्शनेऽनावृष्टिः। भृगुः पूर्वाषाढायां तत् सप्तमे जीवः पश्चिमायां तदाप्यनावृष्टिः। पूर्यसन्ध्यायामयं योग इति पराशरः।

निहन्ति शुक्रः क्षितिजेऽग्रतःस्थितेऽग्निशस्त्रक्षुदवृष्टिभिः प्रजाः।

बुधोस्तमनोदयथोः पूर्व[B]मवस्थितः शुक्रस्य सुवृष्टिदः।

बृहस्पतौ पुरःस्थिते शुक्रो द्विजगोसुरालयनाशकः।

शुक्रस्य पुरःस्थे शनौ म्लेच्छशूद्रक्षयः।

जीवबुधारसूर्यपुत्राः [1]शुक्राग्रे चेत्तदा विवादा महावात्या च।

शनैश्चरः कृत्तिकासु विशाखायां बृहस्पतिः

तदा प्रजाना मनयो घोरः पुरभेदोऽब्दमेकम्।

एकेन यदि वा द्वाभ्यां सहितो गुरुः

शनैश्चरो वा दृश्येत दुर्भिक्षं महदापतेत्।

---

ख पाठः —

(1) शुक्रे।

मुद्रित पाठ —

A- पञ्च एकर्क्षगा (७)ध्वजः पुरविनाशाय। उदयास्तमध्यान्तरेभ्योऽन्यर्क्षगाः(८)चक्रं चक्रविनाशाय

B- पुरः।

[1]Aपूर्वस्याग्रतोप्येकनक्षत्रे ताराग्रहत्रयदर्शनेऽनावृष्टिदुर्भिक्षम् । शृङ्गाटकवन्मध्ये ग्रहत्रयदर्शने मध्यदेशक्षयः । तदा प्रतीच्यां लम्बमानास्त्रय-स्ताराग्रहा दृश्यन्ते एकर्क्षमण्डलगतास्तदा त्रिगर्त्तादिक्षयः । सूर्येऽस्तगे यस्यां दिशि पञ्चताराग्रहदर्शनं तद्देशक्षयः । मध्ये ताराग्रहत्रयदर्शने दारुणं भयम् ।

वृश्चिकस्थे भानौ केन्द्रगैर्बलिभिः शुभैरीक्षिते धान्यवृद्धिः । गुरु-शशिनोः कुम्भसिंहस्थयोरष्टमेऽर्के ग्रीष्मधान्यवृद्धिः, सिंहघटस्थितयोर्वा । वृश्चिकस्थसूर्य्याद्द्वितीयगे शुक्रे तत्र शस्यवृद्धिः । गुरुदृष्टे विशेषतः । शुभद्वय-मध्यस्थालिगत सूर्य्यात् सप्तमे गुरुशशिस्थितौ शस्यवृद्धिः । वृश्चिकस्थसूर्य्या ल्लाभचतुर्थद्वितीयगैः शुक्रचन्द्रशशिपुत्रैः परा शस्यवृद्धिः ।

**कुम्भे गुरुर्गवि शशी सूर्य्येऽलिमुखे कुजार्कजौ मकरे ।**
**शस्यनिष्पत्तिर्महती पश्चात् परचक्ररोगभयम् ।**
**वृश्चिकाद्यस्थितः सूर्यः पापमध्यगतो यदा ।**
**शस्यहा सप्तमे पापे जातं जातं विपद्यते ।**

अलिगात् सूर्य्यात् समगौ पापौ केन्द्रस्थौ शस्यघ्नौ । सौम्यदृष्टौ न सर्वत्र पीडकौ ।

**य एव योगा निर्द्दिष्टा वृश्चिकस्थे दिवाकरे ।**
**वृषेऽपि ते शारदानां चिन्तनीया यथार्थतः ।**

---

ख पाठः —

(1) पूर्वस्यां रात्रौ एकनक्षत्रे ।

मुद्रित पाठः —

A- पुरस्तादेकनक्षत्रे दृश्येरंश्चेत्त्रयो ग्रहाः ।
अवर्षं दुर्भिक्षभयं गोमनुष्य भयं भवेत् । इति पराशरः अद्भुत सा. २२५
पूर्वस्यां दिशि दृश्यन्ते सर्वे ताराग्रहा यदि ।
प्राच्यानां तु तदा राज्ञां भवेत् पीडा सुदारुणा । विष्णुधर्म-१ । ८५ । ८४

तथा—

**यस्य राशौ ग्रहाः पञ्च सप्त वापि सुराधिपाः ।**

**ग्रहणं रविचन्द्रयो र्ग्रहैर्वाष्टम संस्थितैः ।**

तस्य मृत्युभयमित्यर्थः । अत्र यस्य राशौ ग्रहणं वेति सम्बन्धः । ग्रहैर्वाष्टमस्थितैरितिसम्बन्धः । अत्र ग्रहशान्तिर्ग्रहपूजापूर्विका । जपहोमादि रूपा वा शान्तिः ।

## रव्यादि-वर्षाधिपफलम्

दिवाकराब्दः अवृष्टियुद्धरोगसंकुलः । सोमाब्दः शुभः । भौमाब्दः अनावृष्टिक्षुद्भयसर्पाग्निभयदः । बुधाब्दो ब्रह्मक्षत्र वृद्धयै । गुर्वाब्दो यज्ञोत्सवादिशुभकरः । सिताब्दः सुभिक्षक्षेमकन्दर्पवृद्धिदः । शन्यब्दो दुर्भिक्षमरकरोगवातभयदः ।

एवमेषां मासफलं ऋतुफलं दिवसफलंञ्च ।

## नक्षत्राद्भुतानि

**कृत्तिकादित्रिनक्षत्रै र्भवर्गै र्नवभिः क्षितिः ।**

**कल्पिता मध्यदेशादौ प्रागादिक्रमयोगतः ।**

**"कृत्तिकादित्रयं मध्यं तत्पीडा मध्यदेशतः ।**

**रौद्रादिपीडिताः पूर्वा सर्पादिः पूर्वदक्षिणाम् ।**

**आर्यम्णादि स्तथा याम्यां स्वात्यादि र्दक्षिणापराम् ।**

**ज्येष्ठादिः पश्चिमामाशां वैश्वानरपरोत्तराम् ।**

**[A]शतभिषाद्याः सौम्याश्च रेवत्याद्यं शिवाश्रिताम् ।"**

**( गर्गः )**

---

मुद्रित पाठः —

A- वारुण्यादि स्तथा सौम्यां पूर्वादिः पूर्वउत्तराम् । अद्भुतसागर-२५२

"नक्षत्राणां पीडनञ्च जायते बहुधा यथा ।
शन्यर्कयोश्च चारेण वक्रेणाङ्गारकस्य च ।
उपरागेण राहोस्तु केतोश्चाधूमनोदयात् ।
जीवशुक्रबुधानाञ्च चोदयास्तमयादपि ।
संछादनेन शशिनोऽप्यसम्यग् योगतस्तथा ।
दिव्यान्तरिक्षभौमानि उत्पातानामिहेक्षणे ।(विष्णुधर्म)

तत्तज्जनपदे पीडा क्रमेण—

पञ्चालमागधकलिङ्गावन्त्यानर्त्त-सिन्धुसौवीरमहेन्द्रेशनृपतीनां नाशः ।

मध्मदेशः

धर्मारण्य कुरुक्षेत्रनीपशकमत्स्य पाञ्चाल विदेह हस्तिनागङ्गायमुनान्तर पारियात्रादयः ।

पूर्वदेशाः

काशीकोशलमिथिलामगधोत्कलगौडोड्रसुह्म ताम्रलिप्तवर्द्धमानादयः ।

आग्नेयदेशाः

अङ्ग वङ्ग कलिङ्ग दशार्णकिष्किन्धाचेदि दक्षिणमत्स्यान्ध्र विदर्भादयः ।

दक्षिणदेशाः

महेन्द्र-मलय-दर्दुर-मालवावन्ति-ताम्रपर्णीलङ्का-काञ्चि-महाराष्ट्रकर्णाट-गोनर्दचित्रकूटादयः ।

नैर्ऋतदेशाः

सिन्धु सौवीर शूद्राभीररैवतानर्त्तयवन-सौराष्ट्रस्त्रिमुखादयः । महाराष्ट्रद्राविडावप्येके ।

पश्चिमदेशाः

अस्तगिरि महेन्द्र मलय हैहय पञ्चनदादयः ।

वायव्यदेशाः

माण्डव्य तुषार नृसिंहदीर्घकेशग्रीवमद्रैक नेत्रादयः ।

उत्तरदेशाः

हिमालय-पौरवयौधेयपिङ्गलचिपिटनासिक त्रिगर्त्तादयः ।

ईशानदेशाः

काश्मीर—किरात—खशलोल—काम्बोज-ब्रह्मपुरगान्धर्वदासेरक-जटाधरादयः ।

तथा मेषवृषमिथुनादि, भमध्ये । मिथुनकर्कटौ पूर्वे । आग्नेये कर्कटसिंहौ । सिंहकन्यातुला दक्षिणे । नैरृते तुलावृश्चिकौ । पश्चिमे वृश्चिक धनुषी । वायव्ये धनुर्मक कुम्भाः । उत्तरे कुम्भमीनौ । ईशाने मीन मेषौ ।

"यस्य यस्य कुले यो वै ग्रहस्तद्धानितो भयम् ।
तद्देशस्य मुनिश्रेष्ठ तथोत्कर्षं सुखागमः ।

## नाडीनक्षत्राङ्गानि

जन्माद्यं कर्म ततो दशमं सांघातिकं च षोड़शभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् । (वराहः)
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्क्षः स्यात् ।
नवनक्षत्रो नृपतिः स्वजाति-देशाभिषेकर्क्षैः ।
जन्मर्क्षस्य क्रूरग्रहादिपीडायां रोगधनक्षयकलहाः ।
कर्मर्क्षपीडायां कर्मणामसिद्धिः मित्रद्रव्यहानिः ।
सांघातिके भेदश्च समुदायिके मित्रभृत्यधनक्षयः ।
वैनाशिके कायविपदः मानसे मनोदुःखम् ।
राज्ञाभिषेक नक्षत्रपीडायां राज्यभ्रंशः देश र्क्षेदेशपीड़ा ।

जातनक्षत्रे वधः । युगपत् सर्वेषु पीडितेषु ध्रुवं वधः ।

## शान्तिमाह [A]पराशरः

श्वेतवृषमूत्रपुरीष-श्वेतगोपयोयुक्तसकुशोदककुम्भेन स्नानं जन्मर्क्षे । कर्मर्क्षे गौरसर्षप प्रियङ्गु शतपुष्पा शतावरीभिः स्नानम् । व्याहृतिभिः घृतहोमः, अन्नभूमिदानं वा दशरात्रं मांसक्षारक्षौद्रसर्षपवर्जनम् ।

सांघातिके प्रियङ्गु वल्यसितसर्षपमसूरपुष्पशतावरीचन्दनैः स्नानम् ।

समुदाये-सर्वगन्धैः सर्षपाक्षतैस्त्र्यहं स्नानम् । कुसुमै द्विजपूजनम् । काञ्चनरजत दानम् ।

वैनाशिके वृषशृङ्गोद्धृतमृत्तिका विल्वोत्पलसोमवल्पुष्प म्भसा स्नानम् । मानसेऽश्वत्थ शुक्लचन्दन-शिरीष-गजमदैः स्नानम् । जलोद्भवैः पुष्पैः सोमपूजनम् ।

अभिषेकर्क्षे सर्वरत्नोदकैः स्नानम् । देशर्क्षे नदीकूलद्वयसंगमसरस्तटाश्वत्थस्थान गोष्ठ गिरिमूर्द्ध शक्रस्थान वल्मीक गजस्थान वनगजशृङ्गोद्धृतमृद्भिः स्नानम् ।

जातनक्षत्रे सर्वबीजोदकैः स्नानम् । यवगोधूम मुद्गशालिषष्टिकतुवरीतिल माषनीवार श्यामाककङ्गु मुनि सर्वबीजानि । इदमापः प्रवहत इति सर्वस्नानेषु मन्त्रः ।

नक्षत्रनिमित्तं एकं स्नानम् । तदनु पीडाकरग्रहनिमित्तं तादृशं द्वितीयं स्नानम् । तस्य च ग्रहस्य पूजा ।

एकदा षण्नक्षत्रपीडायां उदुम्बरबिल्वफलशतावरीप्रियङ्गुभिरथर्वशिरसा जप्तेन स्नानम् ।

रात्रावनभ्रे नक्षत्राणामदर्शने दिवा च नक्षत्रदर्शने नृपराष्ट्रक्षयः । दिवा बृहस्पतिदर्शने नृपवधो देशोत्सादश्च । [B]दिवाशुक्रदर्शने परचक्रम् । अर्द्ध दिवसे सचन्द्रशुक्रदर्शने नृपपुरभेदः । शनिभौमयो [1]र्दिवादर्शने पवनाग्निभयम् । अत्र दिव्यसामान्यशान्तिः ।

---

**ख पाठः—**

(1) दर्शनेनाग्निभयम् ।

**मुद्रित पाठः –**

A· अद्भुतसागरोद्धृतपराशरवचने शब्दादिभेदो दृश्यते- अद्भुतसागर-२७१

B· ग्रहः सर्वं यदा शुक्रो दृश्यते तु महाग्रहः ।
तदा चागन्तुभिर्ग्रामा वध्यन्ते नगराणि च ॥ इति पराशरः अद्भुत.-२७३

मयूरचित्रे—

दिव्यं रक्षति नैवेति केचिदेवं व्यवस्थिताः ।
भूरिहोमान्नगोभूमिदानात् कोट्याश्च होमतः ।
गोदोहाच्च शमं याति दिव्योत्पातो मनीषिणः ।

गोदोहो रुद्रायतने भूमौ ।

भार्गवीये—

दिव्याद्भु तेषु कर्त्तव्यः कोटिहोमः समाहितैः ।
गोसहस्रश्च दातव्यं गुरवे दक्षिणाविधौ ।

मार्कण्डेयपुराणे (५५-६५.६६ तथा ६६.७२) –

"तस्माद् विज्ञाय [A]देशर्क्षग्रहपीडां तथाऽऽत्मनः ।
कुर्वीत शान्तिं मेधावी लोकवादांश्च सत्तम । (६५)
आकाशाद् देवतानां च [B]देव्यादीनां च सौहृदात् ।
[C]पृथिव्यां पतिता लोके लोकवादा इति [D]स्मृताः ।
तां तथैव बुधः कुर्य्याल्लोकवादान न हापयेत् ।
लोकवादांश्च शान्तीश्च ग्रहपीडासु कारयेत् । (६६)
[E]भूदोहान्नववादांश्च शस्त्रं [F]चैत्याभिवन्दनम् ।
जपं होमं तथा दानं स्नानं क्रोधादि-वर्जनम् । (७०)
अद्रोहं सर्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः ।
वर्जयेद[G]शतीं वाचमतिवादांस्तथैव च । (७१)

---

मुद्रित पाठः —

A- देशर्क्षं । B- दैत्यादीनां । C- पृथ्व्यां पतन्ति तेलोके ।
D- श्रुताः । E- अद्रोहानुपवासांश्च । F- देवादि ।
G- असतीं ।

**ग्रहपूजां च कुर्वीत सर्वपीड़ासु मानवः ।**

लोकवादा भूदोहादयः लोके ग्रहादिपीडासु एतदभिधानात् ।

इति अग्निचिद् वाजपेयिनरसिंह विरचिते नित्याचारप्रदीपे

दिव्याद्भुतानि ।

## अथ आन्तरिक्षाणि

Aप्रतिसूर्य्यः सूर्य्यस्योपरि नित्यं वधकृत् ।

अधस्तात् जनक्षयाय । सर्वतस्त्रिभुवन पीडाकरः । सन्ध्यायां बहवः प्रतिसूर्य्या नृपवध-कुमारवध-मरक-दस्यु-शस्य-क्षयरोगरणपाषण्डिपीडाकराः क्रमाद्दिक्षु । प्रतिसूर्य्ये पीते व्याधिभयम् । ताम्रे रणः ।

सन्ध्यायां दीप्ताग्निवर्णे प्रतिसूर्य्ये सूर्य्यमावृण्वति सराष्ट्रराजक्षयः । सन्ध्यासु प्रतिसूर्य्यमालादर्शने घोरवैर रोगदुर्भिक्षाणि । अत्रान्तरिक्षसामान्य-शान्तिः । अनुक्त पाककालनाभसेषु षाण्मासिकः पाकः ।

## परिवेशाद्भुतम्

करा रवीन्द्वो मरुता विमिश्राः स्युर्मण्डलाकार तया परिवेशाः ।

**रक्ते पीते सिते ताम्रे कृष्णे च हरितेऽरुणे ।**

**क्षुच्छस्त्रव्याध्यवर्षाग्नि मृत्युशस्त्रानिलालयाः ।**

( भार्गवीये )

[1]धूम्रवर्णोऽग्निवर्णो वाऽग्निभयाय । त्रीणि चेन्मण्डलानि स्युरन्त-र्लोहितं मध्ये पीतं, बहिः श्वेतं, बाह्यस्य राज्ञो जयाय । आभ्यन्तरस्य वधाय । विपर्यये विपरीतम् । (वराहः)

---

ख पाठः —

(1) धूम ।

मुद्रित पाठः –

A- प्रतिसूर्य्यः—परिधिः इति नार्थभेदः ।

यश्च सकलनभोनुसारिशकटधनुः शृङ्गाटावस्थितः वहलो द्वित्रि-खण्डो वा त्रिसन्ध्यमभ्युच्छ्रितो घोरफलः ।

"उदयास्तमने भानोश्चन्द्रस्य च यदा भवेत् ।
परिवेशस्तदा राजा क्षिप्र[A]मेव विनश्यति ।(विष्णुधर्म,पु.)
दीप्तमृगपक्षिदृष्ट उल्काभिहतः क्षयं राज्ञः ।

दिवा सूर्य्ये परिवेशो रात्रौ चन्द्रे चेदेकस्मिन्नहोरात्रे राजवधः । सकलाहनि सूर्य्यस्य सकलरात्रौ चन्द्रस्य परिवेशे दुर्भिक्षमरकनृपवधाः । रक्ते परिवेशे नृपवधः । द्वाभ्यां मण्डलाभ्यां परिवेशः सेनापतिवधाय । त्रिभिर्युद्धम् । अधिकैः परचक्रम् ।

रविचन्द्रपरिवेशमध्ये भौमे स्थितेऽग्न्युत्पातः । बुधे मन्त्रिपुरोहितवृद्धिः, सुवृष्टिः । जीवे पुरोहितामात्यपीडा । भार्गवे राज्ञः शस्त्रेण वधः । शनौ क्षुद्रधान्यक्षयः । राहौ व्याधिनृपभयश्च । केतौ दुर्भिक्षाग्निभय-वृष्टिभय नृपवधाः ।

रविचन्द्रपरिवेशमध्यस्थे ग्रहद्वये घोरयुद्धम् । ग्रहत्रये दुर्भिक्षम् । ग्रहचतुष्टये नृपनाशः । ग्रहपञ्चके प्रलय इव जनक्षयः । पृथक् ताराग्रहनक्षत्राणां परिवेशकेतूदयः । केतूदयाभावे नृपनाशः ।

तिथिभेदे प्रतिपदि ब्राह्मणानां पीडा । द्वितीयायां क्षत्रियाणाम् । तृतीयायां विशाम् । चतुर्थ्यां शूद्राणाम् । पञ्चम्यां ग्रामस्य । षष्ठ्यां पुरस्य । सप्तम्यां कोषस्य । अष्टम्यां युवराजस्य । [B]नवम्यादिषु नृपस्य । पुररोधो द्वादश्याम् । सैन्यक्षोभस्त्रयोदश्याम् । राज्यस्य च चतुर्दश्याम् । पञ्चदश्यामपि नृपस्य । शुक्लादिरूपे परिवेशे ब्राह्मणादीनां पीडा । शक्रधनुर्निभे । गायत्र्या षोडशी शान्तिः ।

---

मुद्रित पाठः —

A- क्षिप्रं वधमवाप्नुयात्, विष्णुधर्म- १ । ८५ । २८

B- नवम्यां च एकादश्यां च पार्थिवान् । भार्गवीये अद्भुतसागर- २९५

**मयूरचित्रे—**

श्रीश्च त इति पुष्पोपहारादिभिः श्रीपूजनम्। पद्मानां सहस्रहोमः। घृताक्तोदुम्बर[1]समिधा पञ्चसहस्रहोमः। श्रीश्च त इति मन्त्रेण तेनैवाष्टोत्तर-शतपायस होमः। दधिक्षीरगुडोदनै र्ब्राह्मणभोजमम्। रत्नसुवर्णरजतानि दक्षिणा। परिविष्ठग्रहनक्षत्रदेवतापूजापूर्विका नाभससामान्यशान्तिः। अन्यत्र परिवेशाद्भुते वृष्टिविकारशान्तिर्वा वक्ष्यमाणा। [A]सप्ताहात् फलपाकः त्रिरात्रा[B]देके।

इति परिवेशाद्भुतानि।

## अथेन्द्रधनुरद्भुतानि

यात्राकाले पृष्ठतः पार्श्वे वा शक्रधनुर्जयाय। [2]अविच्छिन्नब्रह्मराशौ सद्योवृष्टिः। पाटलपीतनीलैः शस्त्राभदुर्भिक्षम्। अनावृष्टिकाले पूर्वस्यां शक्र-धनुषि वृष्टिः। वृष्टिकाले प्राच्यां धनुषि निवृत्तिः। प्रतीच्यां धनुषि सदैव वर्षाय। विदिक्षु तत्स्वामिनाशाय। ईशाने श्वेतचापदर्शनं दुर्भिक्षाय। जले धनुर्दर्शनमवृष्ट्यै। भुवि शस्यवधः। तरुस्थिते व्याधिः। वल्मीके शस्त्रभयम्। धनुषा सूर्य्यस्य स्पर्शे नृपविरोधः। भूमिसूर्य्योभयस्पर्शे पुरोहितवधः। संध्ययोः सूर्य्याचन्द्रमसोः स्पर्शे शुभम्। शत्रुभिराक्रान्ते पुरे परिवेशयुक्त सूर्य्याछादनं चेद्धनुस्तदा शत्रुभिः पुरं त्यक्त्वा गम्यते। अत्र नाभससामान्य शान्तिः।

चन्द्रसूर्य्यस्पर्शे च तयोः पूजा।

### अथ रात्राविन्द्रधनुः

**रात्रौ श्वेतधनुर्विप्रान् रक्तं हन्ति नृपानपि।**
**वैश्यान् पीतं तथा कृष्णं शूद्राणां नाशनं स्मृतम्। (औशनसे)**

---

ख पाठः —

(1) समिधां। (2) अवच्छन्ने।

मुद्रित पाठः —

A- वराहमते। B- गर्गमते।

उक्त चतुष्टयान्यवर्णं तु प्राच्यादिषु विप्रादिनाशकम्। यस्यां दिशि धनुस्तत्र परचक्रागमः। निशि तद्वर्णत्रिरेकधनुर्दर्शनं प्राच्यां माण्डलिकनृपवधाय। दक्षिणस्यां सेनापतिवधाय। प्रतीच्यां प्रधाननाशाय। उदीच्यां मन्त्रिविनाशाय। निशि सपरिवेशं चक्राच्छादके धनुषि परचक्रेण च पुरक्षयः। व्यभ्रे नभसि दिवा रात्रौ वा धनुर्मरकदुर्भिक्षकरः।

अत्र शान्तिराथर्वणाद्भुते-

इन्द्रायुधसवर्णानि वासांस्याभरणानि च।
दद्याद् गां च सुवर्णं च तथा तच्छमयेद् भयम्।

मयूरचित्रे-

[1]औदुम्बर्याः सहस्राणि अष्टौ तु जुहुयाद् बुधः।
मध्वक्तानि घृताक्तानि जातवेदसमन्त्रतः।
विप्राय दक्षिणां दद्याद् धेनुञ्च वृषभं तथा।
एकरात्रोषितो भूत्वा ततः संपद्यते शुभम्।

सद्यः फलमिन्द्रधनुषः।

## रश्मिदण्डाद्भुतानि

रविकिरणजलदमरुतां संघातो दण्डवत् स्थितो दण्डः।
(वराहसंहिता)

[A]दण्डा धनुर्भिः कालरूपसमानफलाः।
द्वौ नीलौ रक्तौ वा परचक्राय।

---

ख पाठः—

(1) औदुम्बर्या।

मुद्रित पाठः —

A- अथ दण्डा धनुर्भिः समानरूपफलाः। इति पराशरः, अद्भुत सा.-३०३

रक्तः परुषो विच्छिन्नो राजमृत्यवे। अस्तमितमात्रे दर्शनममात्य वधाय। शान्तिर्वा नाभससामान्यविहिता। फलपाकश्च।

## गन्धर्वनगराद्भुतानि

अनेकवर्णाकृति, गगने दृश्यते पुरं पताकाध्वजशोभितं तद्गन्धर्वनगरम्। तद्दर्शने रणेन प्रजाक्षयः। सितरक्तपीतकृष्णं विप्रादिवर्णक्षयकरं क्रमेण। संन्ध्यायां महाभयदम्। सूर्य्योदयात् पूर्वं परचक्राय। सूर्य्यसहितायां दिशि गन्धर्वपुरदर्शन वृक्षाग्रेषु महाभयदम्। प्राच्याद्यष्टदिक्षु पुरदर्शने क्रमेण फलानि। दुर्भिक्षम्, अग्निपीडा, युवराजवधः, चौरभयम्, नृपवधः, सैन्यक्षयः, पुरोहितनाशः, वृष्टिः।

सततं दृश्यमानं राज्ञो राष्ट्रभयावहम। अत्र नाभससामान्यशान्तिः। फलपाको मासत्रयेण।

## निर्घाताद्भुतानि

**यदान्तरिक्षे बलवान् पन्नगः पवनाहतः।**
**पतत्यधस्ततः शब्दः स निर्घातोऽनिलोत्थितः। (गर्गः)**

**क्रमादष्टदिक्षु तस्य फलम्—**

राजमरणम्। रोगः। मरकः। कोषक्षयः। अतिवात्या। पुरोहितवधः। व्याधिः। अग्निभयञ्च। अतिभीमो निर्घातो राजमृत्यवे। अनभ्रे च निर्घातो राजमृत्यवे। सूर्य्योदयादि पूर्वाह्णे सराजकराजगणवधः। मध्याह्ने अनलभयं प्रजानाशः। अपराह्णेऽनावृष्टिदुर्भिक्षदम्। राज्ञस्तदनुजीविनां च प्रदोषे बधः। मध्यरात्रेऽनावृष्टिः। अपररात्रे लोहजीविपीडा। संन्ध्ययोर्ब्राह्मणानाम्। प्रतिपदष्टमीचतुर्दशीषु मृदुस्तदन्यतिथिषु घोरः।

**वैजवापः—**

**निर्घातस्य प्रपतने शान्तिं कुर्वीत वैष्णवीम्।**
**विष्णुं संपूजयेत् सम्यग् ब्राह्मणांश्चापि भोजयेत्।**

[अभिमर्सैः पाकः । (पराशरः)]

## संध्याद्भुतानि

**शिशिरादिषु वर्णाः शोणपीत[A] शीतबिन्दुपद्मरुधिरनिभाः ।**
**प्रकृतिभावाः संध्यायाः स्वर्त्तौ शस्ता विकृतिरन्या ।**

(वराहसंहिता)

आषाढपौर्णमी वैदुर्य्यमरकतमधुहेमप्रभा, संध्यासु वृष्ट्ये । परिमण्डलायां रक्तायां भयम् । संध्यायां प्रचण्डमृगपक्षिशब्दे देशक्षय: । त्र्यहं चेत् श्यावा रक्ता गौरी वा पशुक्षयः । कपिलायां वात: । सर्वरागे पद्मरागे वा युद्धम् । रजस्तमोयुक्ता सराष्ट्रनृपनाशिनी । अत्र नाभससामान्यशान्ति: । सप्ताहात् पाकः ।

## दिग्दाहाद्भुतानि

**यदास्तमित आदित्ये वह्निज्वाला प्रदृश्यते ।**
**दिशां दाहं तु तं विद्याद् भार्गवस्य वचो यथा ।**

(बार्हस्पत्य)

स च पीतो राजक्षयाय, अग्निवर्णो देशक्षयाय । अरुणः शस्यक्षयकृत् । श्वेतरक्तपीतकृष्णा क्रमेण विप्रादिनाशकाः । मेचकश्यावाद्याः क्षुदभयशस्त्राग्निभयदाः । दिग्दाह दीप्त्या छायादर्शनेऽवश्यं नृपमृत्युः । पूर्वाद्यष्टदिक्षु दिग्दाहे क्रमात् फलानि । नृपमरणम् । कुमारमरणम् । उग्रवैश्यक्षयः । प्रमदाक्षयः । शूद्रचौरवंशजीवि क्षयः । विप्रपीडा । पाषाण्डिवणिजां पीडा । तत्तद्दिग्वासिनां विशेषण । एकदा सर्वदिग्दाहः सर्वक्षयाय । विदिक्षु दाहो मरकाय । सकलगगनव्यापिदिग्दाहः प्रलयाय । मेघसंच्छन्नायां दिवा रात्रौ वा दिग्दाहो नृपवधाम । अत्र नाभससामान्यशान्तिः ।

---

मुद्रित पाठः —

A- सितचित्रपद्म, अद्भुतसागर- ३३१

व्यभ्रे नभसि विमले सूर्य्ये यदि छाया न दृश्यते। यदि च छाया सूर्य्याभिमुखी। मध्याह्नेऽतीतेऽपि यदि छाया न विपरिवर्त्तते तदा मरकभयम्। अत्र प्रजापत्या शान्तिः। अतितीक्ष्णकलहे वक्ष्यमाणा कार्य्या। षण्मासात् पाकः। अनिमित्तं घोरतरतमसावरणं नृपश्रेष्ठ[1]प्रभुनाशाय। रजसा धूमैर्वा दिशामावरणे [2]महद् भयम्। रक्तरेणुभिरावरणं प्रभुनाशाय।

**अकाले च कुज्झटिका हन्ति राष्ट्रं सराजकम्।**

अत्रापि नाभससामान्यशान्तिः। तमोनीहारयोः षाण्मासिकः पाकः। धूमनीहारयोर्मासिकः।

## अथोल्काद्भुतानि

**स्वरूपम्—**

**दिविभुक्तफलानां पततां रूपाणि यानि तान्युल्काः।**

(वराहः)

अन्ये तु लोकपालानां शस्त्राण्येवं [3]शुभलाभाय। अथ भेदाः पञ्चधा उक्ताः।

**"ताराधिष्ण्या स्तथोल्काश्च विद्युतोऽशनयस्तथा।"**

(बार्हस्पत्ये)

ते च क्रमाद् बलीयांसः।

### तारोल्कालक्षणम्

हस्तमात्रा श्वेतताम्र मृणालतन्तुरूपा तिर्य्यक् चोर्द्धमायाति।

### धिष्ण्योल्कालक्षणम्

**धिष्ण्या सिता द्विहस्ता धनूंषि दश याति कृशदेहा।**
**ज्वलिताङ्गारनिकाशा जिह्मगा साऽल्पपुच्छा च।**

---

ख पाठः —

(1) प्रभुत्व। (2) महाभयम्। (3) शुभाशुभफलाय।

विद्युत्संज्ञकोल्कालक्षणम्

विद्युच्चटच्चटशब्दा ज्वलामालाकुला पतति ।

कुटिलविशाला पतति त्रासकरी वनजावेषु ।

अशनिनामकोल्कालक्षणम्

अशनिः प्राणिषु पतति दारयति धरातलं बृहच्छब्दा ।

(वटकर्णिका)

प्रासादगृहतरुषु तथा चक्राकारा ज्वलन्ती च ।

तथोल्कानामकोल्कालक्षणम्

उल्का शिरसि विशाला निपतन्ती वर्द्धते प्रतनुपुच्छा ।

(बृहत्संहिता)

पुरुष प्रमाण दीर्घा स्फाटिकाङ्गारवर्षिणी ।

भासयन्ती नभः पीता धूम्रा वाप्यथवारुणा ।

एतस्या बहवो भेदाः ।

छत्र ध्वज [A]रथतारा भ्रमन्ती निपतेद् यदि ।

महोल्का सप्तरात्रेण सामात्यं हन्ति पार्थिवम् ।

(गर्गः)

महीधरनिभास्तास्तु घ्नन्ति देशं सराजकम् ।

(मयूरचित्रम)

पद्मशङ्खेन्दुवज्राहिमत्स्यध्वजनिभाः शुभाः ।

श्रीवृक्षस्वस्तिकावर्त्तहंसद्विरदवत्तथा ।

इन्द्रचापनिभा राष्ट्रं मन्त्रिणश्चक्रसंनिभाः ।

(बार्हस्पत्ये)

---

मुद्रित पाठः —

A- छत्रध्वजझषाकारा- अद्भुतसागर-३२६

नभोलीना च वृष्टिवातप्रतिकूला प्रजा हन्ति ।

नभोमध्यगता गतागत कर्त्तार्त्री च । बर्हिपिच्छाभा प्रजाक्षयाय । यस्याः खे नुरागश्चिरं तिष्टति दण्डाकृतिर्नृपवधाय । महेन्द्रचापनिभा तन्तुवृत्तेव या सा चैवम् । वंशगुलमनिभा राष्ट्रघ्नी । [1]असिपट्टिससन्निभा राष्ट्रनृपघ्नी । रथकूबरसंस्थाना च । लङ्गलनिभा कर्षघ्नी । श्वमयूररक्षः-प्रकीर्णकेशा नृपनाशाय । वराहप्रेतमार्जारसिंहशार्दूलसदृशी चैवम् एवं विधापि मध्यशीर्णा मध्यफला ।

**क्ष्वेडिता स्फोटितोत्कृष्टा गीतवादित्रनिःस्वना ।**

**उल्कापातस्य समये राजराष्ट्रभयावहा ।**

अग्निवर्णा सनिर्घातोल्का महायुद्धाय । सनिर्घाताशन्यो विद्युतश्च भयदाः । उल्का ज्वजन्ती तालमात्रसधूमवर्णा सव्यापसव्यं कृतनादा कुनृप-दस्युघ्नी । पूर्वरात्रे सूर्य्यपथेन चेदुल्का याति पश्चिमाभिमुखी । मध्ये च शीर्णा तदा दुर्भिक्षम् । महोल्का स्तनयित्नुमती चेत् परचक्रम् । निरन्तर-मनेकोल्कापतने नृपवधः । अधोमुखी नृपघ्नी । विप्रानूर्ध्वमुखा । तिर्य्यङ्मुखी राजपत्नीघ्नी । श्रेष्ठिनः प्रतिलोमगाः ।

शावा रूक्षा विध्वस्ता शस्यक्षयाय । चन्द्रमण्डलवर्णाग्न्यर्चिः प्रभा वा युवराजनाशाय । शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी । श्वेता प्रागदेशे रक्ता मध्यं पीता दक्षिणोत्तरे कृष्णा पश्चिमं हन्यात् । शुक्लादिचतुर्वर्णा उदगादिषु विप्रान् हन्यात् । अन्यवर्णा यद्दिशि दृश्यते वर्णद्वयं पीडयति । महती ज्वलन्ती सूर्य्य तिर्य्यगभिद्रवेच्चे न्नृपवधः ।

चन्द्राभिमुखी चोल्का द्विजपीडायै । उल्कापसव्यकरणं दिवाकरेन्द्वो गौरितरघ्नी । आदित्यमण्डलाच्चन्द्रान्निर्गता विस्फुलिङ्गिनी उल्का दुर्भिक्ष-मरक नृपनाश विधायिनी । उल्कया ग्रहनक्षत्रे धूपिते देशसंक्षयः । सूर्य्यमभिहत्य याम्यदिशं गच्छेद् यदि राज्ञो वधः । यदि प्राचीं गच्छेद्भूमिं वा तदा नृपवधः ।

---

**ख पाठः –**

(1) असिपट्ट ।

उदयेऽस्तमये सूर्य्यमुल्काशनिविद्युतो यदा हन्युः नृपवधः । अन्यरूपेण तद्देशाक्रमणञ्च । उल्कया यदि शशी ग्रस्त एव हन्यते नृपवधः । यस्य जन्मनि स्थितो हन्यते तस्य नाशः । उल्कयाङ्गारके हते सेनानीवधोऽग्निभयम् । बुधे हते कुमार वधः । गुरौ द्विजपीडा । भृगावुल्काहते राजवधः । शनावुल्काहते बलमुख्यनाशः ।

भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम् । उग्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु । राज्ञो जन्मर्क्षेऽभिहते तस्य नाशः । चित्रास्वात्यरुन्धती-मृगव्याधागस्त्य—शिशुमारसप्तर्षि—ध्रुवाणामुल्काभिघाते दुर्भिक्षमरकादि । तोरणध्वजगेहेषूल्काशनिविद्युत्पाते स्वामिवधः । देवार्च्चाराजराष्ट्रभयम् । चैत्यतरौ सत्पीडा ।

गोष्ठे स्वामिनाम् । खले कर्षकाणाम् । वराहे वा मृगे [1]वानरे वा पीते पिशाचाद्यैर्देशनाशः । दिवोल्का राजमृत्यवे । महती चेत्तदान्यराजा भवति । तत्रामृता शान्तिः ।

मध्याह्ने चेदुल्का ज्वालान्विता ससैन्यं नृपं हन्ति । धूमाकुला व्यूहं च । पूर्वसंन्ध्यायां ज्वलन्त्युल्का चेन्नगर राजवधः । पश्चिमसंन्ध्यासु [2]यज्वनाम् । उदयेऽस्तमये वज्रपातो राज्ञो वधाय ।

## सन्ध्योल्काशान्तिः

दधिमधुघृतयुक्तसिद्धान्नपञ्चसहस्रहोमः जातवेदमन्त्रेण । अग्निदैवत्यं चरुं वा कृत्वा पञ्चसहस्रहोमः । द्वयोर्विकल्पः । धेनु सुवर्णं धान्यञ्च दक्षिणा ।

प्रासादगृहक्षेत्रग्रामतोरण गोतोरणं नृपद्वारशान्तिग्रहदेवगृहराजमार्ग-चतुष्पथेषु निर्घाताशनिविद्युत्पतने महाभयम् । वनतदध्यक्षनाशः । विद्युति प्रथमा शान्तिः । अशन्युल्कयो द्वितीया शान्तिः । मयूरचित्रोक्ता । अथवा सप्तमी शान्तिः । आचार्य्यस्य त्रिरात्रोपोषणम् । अपामार्गस्य समिधां सहस्रहोमः । ऐन्द्रेण मन्त्रेण । रक्ताशोकवर्णं गोक्षीरेण पायसं कृत्वा शत-ब्राह्मणभोजनम् । घृतेनैन्द्रमन्त्रेण शतहोमः । सुवर्णरजतकांस्यानि दक्षिणा ।

---

**ख पाठः —**

(1) वानरे इति नास्ति । (2) जगज्जीवनाम् ।

नारदः —

"गृहे वज्रोल्काशनिपाते धनपुत्रस्वामिनाशः। तत्र इमा रुद्रायेति मन्त्रेण तिलायुतहोमः। सकाञ्चनतिलपात्रं दक्षिणा। धेनुर्द्वपश्च।"

एवं देवकुले वज्रपाते ग्रामोत्पादः स्वामिमरणम्। आग्नेयमण्डलेऽशनेः पतनं महाभयदम्। चतुर्थी शान्तिः। ताराधिष्ण्ययोः फलम्। चिरान्मृत्युः। तासामपि च भूयिष्ठं दर्शनं दोषकारकम्।

तराफलपादलरीफलार्द्धं दात्री स्मृता धिष्ण्या।
तिस्रः संम्पूर्ण फला विद्युदश्चोल्काशनिश्चैव।

धिष्ण्योक्ते पक्षफले त्रिगुणम्। चैवाशनिः षडहमन्ये।

अत्र शकुन्त विशेषशान्तिषु पञ्चविधोल्कापातेषु नाभससामान्य शान्तिः।

## विद्युदद्भुतानि

पूर्वे विद्युत् सूर्य्यकान्ता दक्षिणे शतहृदा।
पश्चिमे तडित, उत्तरे सौदामिनी शेषा दिग्देवताख्या।

Aसूर्य्यकान्ता नीलमेघस्थाऽनावृष्टये। शतद्रदा शस्त्रजघोरभयदा। सर्वदिक्षु विद्युद्दर्शने सप्तरात्रव्यापिनी वृष्टिः। सर्वा वाताय कपिलाः। आतपाय लोहिताः। सोमान्निष्कम्य सूर्यं विशन्त्योऽनावृष्ट्ये।

आषाढ़शुक्ल चतुर्थ्यां वा पञ्चम्याम्
विद्युस्फुरणवाताभ्यां शुभाशुभज्ञानम्।

---

मुद्रित पाठः —

A- सूर्य्यकान्ता तु कृष्णा कृष्णमेघस्था अवर्षाय। पराशरः अद्भुत सा.-३५०
B- निवृत्तिः शस्यसम्पत्तिः प्रधानैशानगोचरे। अद्भुतसागर- ३५२

प्राच्यां विद्युत्पवनाभ्यां सुभिक्षमारोग्यम्। आग्नेय्यामग्निभयम्। याम्यायां व्याधिमरकभयम्। नैऋत्यामातपः। प्रतीच्यां मध्यमशस्यसम्पत्। वायव्यां पतङ्गदंशमशकाः। उदीच्यां जलभयम्। [B]ईशाने निवृत्तशस्यसम्पत्।

"शुभायां स्पन्दमानायामशुभा [A]स्यन्दते यदि।"

(भार्गवीये)

महाशस्योत्पत्तिः। अत्र नाभससामान्यशान्तिः। षाण्मासिकः पाकः।

## वाताद्भुतानि

प्रचण्डशर्करावर्षः खरस्पर्शश्च दारुणः।

प्रतिलोमस्तथातीतः वायुर्भयनिवेदिनः।

[B]पूर्वो वातो मेदकारकः। पश्चिमो यवनाशनः। दक्षिणः संप्लवकरः। नैऋतो वायव्यश्च महावर्षाय, नानावातसंघातश्च। सर्ववातेषु [C]दशरात्रपर्य्यन्तेषु महावृष्टिः। राजमृत्युः। पक्षतारेषु महाभयम्।

**आषाढ पौर्णम्यां वातवशेन वर्षशुभाशुभज्ञानम्—**

---

मुद्रित पाठः —

A- सम्पद्यते महाशस्यं महांश्च स्यादुपद्रवः। इत्युत्तरार्द्धम्, अद्भुत.- ३५२

B- तत्र पूर्वो मेघानां संजननः। पश्चिमो विनाशनोऽन्यत्र नभोनभस्ययोः। नित्यं वर्षायोत्तरः। दक्षिणोऽभूसंप्लवकरो मन्दवर्षाणि यच्छत्यपवान्यवातजं वर्षम्। नैऋतो वायव्यश्चाभ्रवान् महावर्षाय। ऐशान्यो मृदुरपिवर्षाय। नानावातसंपातो महावर्षाय। सर्वेषां चान्यवातकृतानामभ्राणामुपसृष्टवर्षाणां तत्प्रतिलोमो विनाशाय। अनुपसृष्टवर्षाणां तु महावर्षाय। पूर्वश्चेन्महाशब्दो नीचर्बलाहकानामाकर्षी महावर्षायैव स्यात्।

—अद्भुतसागरे- पृ. ३५५

C- सर्वेष्वेवातिमात्रेष्वनवरतेषु शीघ्रेषु सप्तरात्रपरेषु भयं महावर्षं वा विद्यात्। इति पराशरः, अद्भुतसागर- ३५६

पूर्वऐशान्यउत्तरश्च वात आषाढ्यां सुरभिरनुकूलस्पर्शवान् वृष्टिकरः शस्यकरोऽतिवृष्टिकरश्च क्रमेण। आग्नेययाम्य-नैर्ऋतवायव्या वाता मध्य-शस्यवृष्टिकराः। षाण्मासिकः फलपाकः।

मात्स्ये—

वातविकारेषु सक्थुभि र्वायुपूजनम्। आवायो (शु. य. ७। ७) इति पञ्चर्चस्य ब्राह्मणत्रयेण जपः। परमान्नै र्ब्राह्मणत्रयभोजनम्। सुवर्णं दक्षिणा।

इति वायवी शान्तिः।

## आषाढोत्पातानि

आषाढे स्वातिगने चन्द्रे ^A^स्निग्धस्वन घनविद्युन्मालावद्भिर्मेघे सुभिक्षम्। वातोल्कानिर्घातकम्पे दुर्भिक्षम्।

आषाढे रोहिणी गते चन्द्रे उष्ट्रकाकप्रेतशाखामृग निभा, ऋक्षवात क्षिप्तमेघा न वृष्ट्ये न शुभाः। ध्वजातपत्रपर्वतरूपा धरा जयाय।

पूर्वे मेघाः शस्याय। आग्नेयेऽग्निकोपाय। याम्ये शस्यक्षयः। प्रतीच्यां सुवृष्टिः। वायव्यां वातः। सौम्ये वृष्टिः। ऐशे शस्यवृष्टिः।

दिक्षु मेघवत् वायोरपि फलम्।

आषाढपौर्णम्यां मेघस्तनितवायुषु, चतुर्मासेषु शोभना वृष्टिः।

**आषाढशुक्ले कलयेच्चतुर्थीं पञ्चमीं तिथिम्।**

सविद्युत्स्तनयित्नुमेघाः प्राच्यां सुवृष्टिदाः। आग्नेय्यां शस्यक्षयः। याम्येऽनावृष्टि-व्याधिमृत्युदाः। नैर्ऋते ईतयः। वारुणे मध्यमं शस्यम्। ^B^वायव्यां स्वल्पबीजवपनम्। सौम्ये मेघाः सुभिक्षाय। ईशाने मेघाः सुवृष्ट्ये।

---

मुद्रित पाठः—

A घनस्निग्धस्तनयित्नु विद्युन्मण्डलनिरम्भोदैर्नभसोवच्छादनं सुभिक्षक्षेमाय।
अद्भुतसागर- ३५७

B- वायव्यां प्रथमं वर्षं यत्र वर्षति वासवः।
तत्रातिवृष्टि र्भवति स्वल्पं बीजानि वापयेत्। इति भार्गवीये अद्भु त. ३६०

प्रशस्तभव्याकारा मेघाः सुभिक्षाय। शस्त्रादिभयंकररूपा भयाय। [1]अभ्रवृक्षः कपिलः कृष्णो वा नृपवधाय। संध्याकृतिश्चेत् पीतलोहित-माञ्जिष्ठो नृपहा। भानुछादी वृष्टिदः। स्तनयित्नुविद्युन्मांश्च। बालतरुणरूपे युवराजवधः। अभ्रपरिघस्त्रिवर्णोऽर्कमावृत्य तिष्ठन् पुनर्भयाय। कपिलो वाताय। रक्तो रणाय। पीतोऽन्नक्षयाय। शुक्लो राजवधाय। नीललोहित-पर्यन्तः कृष्णग्रीवः सविद्युत् सुवृष्टिदः। सर्वे च परिघा सन्ध्यायां दोषदाः।

[A]अभ्रवृक्षा रक्ताः परुषा नैर्ऋतीं दिशं प्रपद्यमाना राजवधाय। पताकाध्वजसन्निभघने राजवधः। प्रथमा शान्तिः। प्रसादगिरिचक्रनिभेषु प्रजाक्षयः। द्वितीयाशान्तिः। शृगालोष्ट्रादिकाकनानापक्षिमृगाकारा घना महाभयाय। शूलदण्डखड्गनिभेषु च महद्भयम्। प्रथमाशान्तिः। अन्येष्वभ्रोत्पातेषु नाभससामान्यशान्तिः। अभ्रपरिघ वृक्ष शुचीनां सद्यःफलम्। अन्येषु षाण्मासिकं फलम्।

## (मेघगर्भाद्भुतानि)

मार्गशीर्ष शुक्लप्रतिपदमारभ्य वैशाखमासपर्यन्तं गर्भकालः। पूर्वाषाढामुत्तराषाढां वा गते चन्द्रे गर्भलक्षणम्। यन्नक्षत्रगते चद्रे गर्भस्तत्रैव नक्षत्रे सार्द्धषण्मासे पञ्चनवत्युत्तरदिनशते तत्रैव नक्षत्रे चन्द्रे वृष्टिः।

तत्र मार्गशीर्षगर्भा ज्येष्ठवृष्ट्यै। पौषगर्भा आषाढे। माघेन श्रावणे। फाल्गुनेन भाद्रपदे। चैत्रेणाश्विने। वैशाखेन कार्त्तिकवृष्टिः। शुक्लपक्षे गर्भ कृष्णपक्षे वृष्टिः। कृष्णगर्भे शुक्ले वृष्टिः। एवं दिवारात्र्योर्विपर्ययः।

मेघवायुविद्युत्स्तनयित्नुवर्षाणि गर्भशब्दवाच्यानि। एतानि यदा चन्द्रसूर्य्यनक्षत्रान्तरिक्षगतवृष्टिलिङ्गवशेन प्रशस्तानि दृश्यन्ते तदा शुभो गर्भः।

---

ख पाठः —

(1) अभ्रे।

मुद्रित पाठः —

A- अथान्तः सूक्ष्मा रक्ताः परुषाः नैर्ऋत्यां दिशिप्रपद्यमाना राजवधाय।

पराशरः, अद्भुतसागर- पृ. ३६२

विपरीतेऽशुभः । पञ्चरूपगर्भदर्शने शतयोजनव्यापि वर्षम् । [1]एकैकहान्या र्द्ध हानिः । एकरूपे गर्भे पञ्चयोजने वृष्टिः ।

मार्गे शीतं गर्भस्य पोषकम् । पौषे हिमम् । माघे बहलजलदाः । वायुः प्रबलः कलुषावकशशाङ्कः । फाल्गुने रुक्षश्चण्डो वायुः खिन्नः स्निग्धः । चैत्रे कपिलस्ताम्रो रविः । पवनो वृष्टिरेभि युक्तो गर्भः शुभः । स्तनितत डिद्वृष्टिपवनतमालनीलोत्पलाभमेघयुक्तो गर्भः शुभः । वैशाखे पवनसलिल विद्युद्गजितान्वितो बहुतोयो गर्भः ।

गर्भकाले बहुतोयकरणे प्रसवकालेऽल्पं वर्षति । गर्भोपघातलिङ्गा– न्युल्काशनिपांशुपातदिग्दाहाः । [2]क्षितिकम्पकबुरकीलक केतुग्रहयुद्धनिर्घाताः । अन्यैरप्युत्पाते गर्भक्षतिः । शतभिषाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः । क्रूरग्रहसंयुक्ते करकाऽशनिमत्स्यवर्षदा गर्भाः । शशिनि रवौ संयुते सिते भूरिवृष्टिकराः । गर्भसमये अतिवृष्टि[3]र्गर्भभवाय ।

**ज्येष्ठमासे अष्टमाद्याश्चत्वारो वायुधारणा दिवसाः ।**
**मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च ।**

यदि स्युरेकरूपाः शुभाः सान्तरा न शुभाय ।

**सविद्युदस्य पृष्ठदाः सपांशूक्तरमरुताः ।**
**सार्कचन्द्रप्रतिच्छन्ना धारणाः शुभधारणाः ।**

ज्येष्ठकृष्णद्वादश्यां वृष्टौ श्रावणमासेऽनावृष्टिः । त्रयोदश्यां भाद्रपदे । चतुर्दश्यामाश्विने । दर्शे च वृष्टौ कार्त्तिकेऽनावृष्टिः । तथा ज्येष्ठशुक्लस्वातौ श्रावणेऽनावृष्टिः । विशाखायां [4]भाद्रे । अनुराधायामाश्विने । ज्येष्ठायां कार्त्तिके । एतन्नक्षत्रचतुष्टये ज्येष्ठशुक्ले वृष्ट्यभावे सौभिक्षम् । अत्र नाभससामान्यशान्तिः ।

---

ख पाठः —

(1) एकैकहान्यार्द्धार्द्ध हानिः । (2) त्रिदिशखबुरनीलक ।
(3) गर्भाभावाय । (4) भाद्रपदे ।

चतुर्विंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते ।
भाण्डे वर्षाम्बुसम्पूर्णे ज्ञेयमाढ़कवर्षणम् ।
आढकाश्चतुरो द्रोणानपां विद्यात् प्रमाणतः ।
धनुः प्रमाणं मेदिन्यां ज्ञेयं द्रोणाभिवर्षणम् ।

ज्येष्ठायामतीतायां पूर्वाषाढादौ वृष्टौ [1]श्रावणौ पुनः । पूर्वाषाढादिषु वक्ष्यमाण परिमाणा वृष्टिरित्यर्थः । पूर्वाषाढाहस्तासौम्यचित्राधनिष्ठा षोडशद्रोणाः । शतभिषगैन्द्र स्वातिषु चत्वारः । कृत्तिकासु दश । श्रवणामघानुराधाभरणीमूलेषु चतुर्द्दश । फाल्गुन्यां पञ्चकृतिः पुनर्वसौ विंशतिद्रोणा । ऐन्द्राग्न्याख्या विश्वे च विंशतिः सार्पे । दशाधिकाः । आहिर्बुध्न्यार्यम्णप्राजापत्येषु पञ्चकृतिः । पञ्चदश पुष्ये । वाजिभे द्वादश ।

रौद्रेष्टादश कथिता द्रोणा निरुपद्रवेष्वेतेषु ।
क्रूरग्रहपीडोत्पातदूषितेषु न दृष्टिविध्यादि भयञ्च ।

ज्येष्ठायामतीतायां आषाढादिषु प्रवर्षणम् ।

यावद्देशे यत्सूचिता प्रसववृष्टिरपि तावद्देशे ।
तत् समन्तात् दशयोजने वृष्टिरित्यन्ये ।

अत्र सामान्यनाभसशान्तिः ।

## अनावृष्ट्याद्यद्भुतानि

अतिवर्षणमवर्षणं दुर्भिक्षाय । अकालवृष्टी रोगाय । सप्ताहं संतताकालवृष्टौ नृपवधः । अनभ्रवृष्टौ च ।

बिल्वोदुम्बरतालाभाः कपित्थाम्रशिर समाः ।
गदामुसलसंकाशाः करका घ्नन्ति भूनृपौ ।

---

ख पाठः —

(1) श्रावणे ।

रक्तवृष्टौ परचक्रम्। पांशुशैलवसा[1]तैलवृष्टौ मण्डलिनां वधः। अङ्गार पांशुवर्षे नगरनाशः। मज्जास्थिस्नेहमांसवृष्टौ मरकम्। वालुकाधान्य वृष्टौ महाभयम्। फलपुष्प-शमीधान्यहिरण्यवृष्टौ च। लोमोपलाऽऽसवक्षार दधिमधुघृततैलमत्स्यभेकपक्षिप्रवर्षणं दुर्भिक्षाय। विकृतजन्तुकेशवर्षणे ईतयः।

अत्र शान्ति र्मत्स्यपुराणे—

**सूर्य्येन्दुपर्जन्यसमीरणानां योगास्तु कार्य्या विधिवन्नरेन्द्र।**

**धनानि गोकाञ्चनदक्षिणाश्च देया द्विजानामघनाशहेतोः।**

एतेषां स्व स्व मन्त्रैः पूजापूर्वकं होमः शतव्यवस्थया सहस्रव्यवस्थया वा।

## कबन्धाद्भुतानि

गदापर्वणि (शल्य-५८। ५७) वीरवधनिमित्तम्।

**बहुपादै र्बहुभुजैः कबन्धैर्घोरदर्शनैः।**

**नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप।**

अत्र नाभससामान्य शान्तिः।

भार्गवीये भौमोत्पाते दानानि कथयित्वा—

**गोभूमिकाञ्चनाश्वानां रत्नानां धान्यवाससाम्।**

**रथानां वारणानाञ्च प्रदानं कामतः परम्।**

**तुष्येयुर्येन वा विप्राः सम्भवो यस्य यस्य हि।**

**तत्तत् सर्वमुपादेयमेषदानविधिः स्मृतः।**

**एष एव विधिः प्रोक्तो वियत्यप्यद्भुताश्रये।**

**विशेषेण तु गायत्र्या दशलक्षं तु होमयेत्।**

**होमं समाहितमनाः कुर्य्याच्च घृतकम्बलम्।**

---

**ख पाठः —**

(1) तैललवण।

धेनुद्वादशकं देयं शतनिष्कसमायुतम् ।
गुरवे दीयमानं तच्छमयेदम्बराद्भुतम् ।

इति अग्निचिद्वाजपेयिनरसिंह विरचिते नित्याचारप्रदीपे नाभसाद्भुतानि ।

## भौमेषु प्रथमं भूकम्पाद्भुतानि

भूकम्पकारणम्—

शेषस्य घूर्णनं भूमेश्चलने कारणं मतम् ।

अन्यत्र—

पूर्वां सहस्रनयनो दक्षिणां हव्यवाहनः ।
आपः पश्चादुदीचीं च प्राकम्पयत मारुतः ।
भूभारखिन्नदिग्गजनिःश्वासभवं वदन्त्यन्ये ।
जलचरजलसत्त्वकृतं प्रजाद्दष्टसमुद्भवं चान्ये ।

चलकम्पानिलाग्निशक्रवरुण-कृतत्वसंभवादत्र अनिलादिमण्डलकृतं शुभाशुभफलमत्र ज्ञेयम् । वायुमण्डलकम्पनिर्णयो महावायुवहनं दिक्षु विदिक्षु च । तत्र फलम्—

राजपुत्रसहस्राणां भूमिः पिबति शोणितम् ।
मासं विंशतिरात्रं वा देवस्तत्र न वर्षति ।
मासं विंशतिरात्रं वा युद्धं तत्र निरन्तरम् ।

फलपाको वायोर्मासद्वयेन ।

अत्र मयूरचित्रोक्ता त्रयोदशी शान्तिः—

पूजयेत्तत्र वायुं वै चरुं कुर्यात्तथाशनम् ।
[A]आवायो भूषेत्यनेन मन्त्रेणाष्टोत्तरं तथा ।

---

मुद्रित पाठः —

A- शु. यजुः - ७ । ७

सहस्राणि पञ्च चैव जुहुयात्समिधः शुचिः ।
औदुम्बरीः घृतेनाक्ता वांच्छन् शान्तिमनुत्तमाम् ।
पायसं मधुसंयुक्तं दधिक्षीरगुडोदनम् ।
ब्राह्मणान् भोजयेच्चैव हुतान्ते भूरि दक्षिणाम् ।
सुवर्णं रजतं कांस्यं गृहं दासीसमन्वितम् ।
अनडवाहं च धेनुं च ब्राह्मणेभ्यो निवेदयेत् ।

चरुश्चात्र भोजनमात्रार्थम् । हिरण्यादिकमेव भूरि दक्षिणा ।

आग्नेयमण्डलकम्पस्य च भूदक्षिणभागे मण्डलसन्देहे प्रकम्पितायां भूमौ चेदुल्कापात-दिग्दाह-ताम्रसूर्य्य-ताम्रचन्द्रदीप्तमृगपक्षिदर्शने तदाग्नेय-निर्णयः ।

दुर्भिक्षमरकरोगा अपि शुष्यन्ति सागराः ।
गूढगर्भाः स्त्रियश्च स्युर्वह्निदाहश्च सर्वतः ।
ईतिर्भवति शस्यानां न च वर्षति वासवः ।
हिरण्यादिकमुत्सृज्य कर्त्तव्यो धान्यसंग्रहः ।

त्रिभिः पक्षैः फलपाकः ।

मयूरचित्रे द्वादशी शान्तिः —

तत्राग्नेयं चरुं कृत्वा पूजामग्नेस्तथैव च ।
Aवैश्वानरो न ऊतये मन्त्रेण जुहुयादपि ।
अष्टोत्तरसहस्रं हि बिल्वस्य समिधां शुचिः ।
पायसं मधुसंयुक्तं प्राशयित्वा द्विजोत्तमम् ।
सुवर्णं रजतं दद्याद्धोमान्ते भूरि दक्षिणाम् ।

अत्र चरोराग्नेयत्वं होमसम्बन्धकृतमपि चरुणापि होमः ।

---

मुद्रित पाठः —

A- शुक्लयजुः - १८ । ७२

अष्टोत्तर [1]सहस्र' तथाऽनुसङ्गन्यायेन चरावपि सम्बध्यते। समित्सु च। अपिशब्दान्मन्त्रः पूजायामपि। प्रथमं पूजा। ततो होमः।

ऐन्द्रकम्पः पूर्वभूभागे। वेलानक्षत्रभेदेन मण्डलसंदेहे निर्णयः।

महामेघः समायाति विद्युदिन्द्रधनुस्तथा।
सप्ताहाभ्यन्तरे यस्य स कम्प ऐन्द्र उच्यते।
ऐन्द्रः प्रशस्तकम्पोऽयं सुभिक्ष-क्षेम-यज्ञकृत्।
जातिश्रेष्ठ कुलश्रेष्ठं हन्ति रोगाः प्रजासु च।
काशायुगन्धराणाञ्च काश्मीरद्राविडात्मनाम्।
राजानो नाशमायान्ति सप्तरात्राद्प्युच्यते।
ऐन्द्री शान्तिरथर्वोक्ता भौमसामान्यगा तथा।

ऐन्द्रकम्पे ऐन्द्रैर्मन्त्रैर्होमो जपश्च। अयुतसंख्या। आज्यं द्रव्यम्।

भूपश्चिमे कम्पो वारुणः। वेलानक्षत्रमण्डलयोगाच्च। संदेहे च। सप्ताहाभ्यन्तरे वर्षयुक्तमेघागमनम्। नक्रशिशुमार-कूर्माकारमेघैरादित्य-ग्रसनमिव तदा वारुणमण्डलनिर्णयः।

क्षेमं सुभिक्षमारोग्यं सुवृष्टिं चात्र निर्दिशेत्।
पर्वताग्रेषु बीजानां प्ररोहोऽन्यत्र नश्यति।
फलं मूलं जवापुष्पं जलसत्वं च वर्द्धते।
नदनद्याश्रिता देशा गोनर्दकुक्कुरान्ध्रकाः।
सिंहलाद्या जलाजीवा नश्यन्ति च विदेहकाः।
अत्रापि भौमसामान्यशान्ति र्वारुणी मता।

---

ख पाठः —

(1) सहस्रसंख्यानुसङ्गन्यायेन।

सद्योस्य पाकः। वेलानक्षत्रभेदेन मण्डलद्वय जलकम्पेषु माहेन्द्र वारुणौ शस्तौ। अत्रापि केषाञ्चित् वारुणे पीड़ा केषाञ्चिदैन्द्रे पीडा। ताभ्यां स्वस्वशान्तिः कर्त्तव्या। सर्वेषां रोगादिपीडानिवृत्तये राज्ञा शान्तिद्वयं कार्यम्। वाय्वाग्नेययोगस्य दुर्भिक्षमरकक्ष्वेडवधादिघोरफलत्वादत्र शान्तिद्वयम्। ऐन्द्राग्नेयसंयोगे। तद्रिक्तनृपान् नीचपाटच्चराभीरान् नाशयति। अत्राप्येतैः शान्तिद्वयं कार्य्यम्। वारिचन्द्रमण्डलसंयोगे। प्राक्पथापह्लवयोगे मगधादिक्षयः। अत्रापि शान्तिद्वयम्। वारुणाग्नेयसंयोगे भूकम्पे। सरित्सरःसमुद्राश्रिता गोनर्दादयश्च तथा। क्षत्रियगणा नाशमायान्ति तैः शान्तिद्वयं कार्य्यम्। अतएवाग्निवारुणकम्पः निष्फलः। इन्द्रवायुकम्पश्चेति।

येषां येषां विशेषेण दोष इत्युक्तः। तदन्येषां निष्फल इत्यवगन्तव्यम्। अत्र च सवृक्षवनपर्वतभूकम्पो निर्घातश्च सहितश्च महाभयायेति तत्र विशेषेण शान्तिः। संध्ययोरुभयोर्भूकम्पे दिव्या चतुर्दशी शान्तिः। त्रिचतुःसप्तरात्र पक्षमासत्रिपक्षान्तरपतिता भूकम्पाः श्रेष्ठनृपवधाय।

अत्रापवादः—

स्निग्धस्वनाः प्रदक्षिणा वर्षजलपाताश्च शुभाः कम्पाः। पर्वसु सर्व एव शस्यन्ते। एवंविधे कम्पे शान्ति र्न कार्य्या। अन्यत्र तु शमयन्त्या सप्ताहात् कम्पादिकृतं निमित्तं नश्वरमेव। गर्ब्भवर्षणोपवासव्रतदीक्षाजपहवनानि। वर्षणस्य जपादिभिः समुच्चयस्य पराशरेण कथनाद्वृष्ट्यनन्तरमपि शान्तिः कार्या।

## जलाशयोत्पाताः

समुद्रस्य वेलालङ्घनं, अत्यर्थमूर्मिभिः क्षोभः भैरवस्वरश्च श्रेष्ठवधाय। जलाशयस्य चक्रवद्भ्रमणे, निमित्तं विना वृद्धौ हानौ वा नृपवधः। नगरादपसर्पणं तत्र वा प्रवेशः शोषणम्। प्रतिस्रोतस्तया वहनम्। वैवर्ण्यम्। कालुष्यम्। तप्तत्वम्। फेनिलत्वम्। जन्तुसंकुलत्वम्। क्षीरस्नेहसुरारक्तवाहित्वं वा परचक्रागमाय। बहुतोयेऽपि सर्वात्मनाशोषणं कूपस्य पूयरक्तगन्धत्वम्। षण्मासे राजवधाय। जलाशये लोष्टस्याप्लवो महाभयाय।

नदीस्रोतसि नीलोत्पलपद्मोत्पत्तिर्जनक्षयाय । नद्या कर्दमबहुकाष्ठतृणबहुशस्य-वहने तद्राष्ट्रस्य नाशं शस्यविदो विदुः । कूपपुष्करिणीह्लदादीनां जलोद्गारे घटोत्थाने वा दुर्भिक्षं मरकम् । ग्रामस्योत्सादनम् ।

अत्र शान्तिः वष्णुधर्मोत्तरमत्स्यपुराणयोः —

दिव्यमम्भःपयःसर्पिर्मधुनात्यर्थसेचनम् ।
जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत् ।

(मत्स्य पुराण- २३३ । ६)

मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विजभोजनार्थम् ।
गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुम्भाः सकलाघशान्त्यै ।

(मत्स्य पुराण- २३३ । ६)

दिव्यमम्भः वर्षाम्भः । पयः सर्पिश्चावसेचनम् । सेचनसाधनम् । तत्र मधुना सहावसेचनसाधनम् । कूपे वर्षाम्बुप्रभृति सिञ्चेदित्यर्थः ।

वारुणमन्त्राः । वरुणप्रकाशकमन्त्रत्रयम् । जले होमः । उत्पाताश्रय-जलाशयो होमाधिकरणाग्निस्थानीयः । अप्स्वेव 'अप्स्ववभृथेन चरन्ती'तिवत्सा-ङ्गप्रधानस्य जलमधिकरणमिति आघारादिकमपि जले इति केचित् । वस्तुत आघारादीनामिहाश्रवणात् प्रधानमात्रस्य एव जलमधिकरणम् । आघाराद्यङ्गानां तु सहैवाग्निना इहातिदेशः । अवभृथे तु अप्स्ववभृथेन चरन्तीति वरुणशब्देन साङ्गस्यैव फलसम्बन्धः । तेनाघारादिकं भूरादिकं चाग्नौ । आज्यसंस्कारस्थापितेऽग्नौ । परिस्तरणपर्युक्षणादिकं जलेऽपि । होमसंख्या शतं सहस्रमयुतं वा फलगुरुलाघवमवेक्ष्य । होमद्रव्यमाज्यम् । गावः उदकुम्भाश्च दक्षिणाः । जापकहोतृब्राह्मणेभ्यो देयाः ।

मयूरचित्रे वाय्यादिवृद्धौ वरुणस्येति मन्त्रेणापामार्गसमिद्धोमः । वृषो दक्षिणा । जलाद्भुते मासत्रये पाकः । शोषणस्रोतोऽन्यत्वे वर्षाद्धीत् । लोष्टस्याप्सुतरणं त्रिभिर्मासैः । मासफलमिति नादेयम् । अनुक्तेषु संवत्सरम् ।

## अग्न्यद्भुतानि

अनग्निज्वलनमिन्धनवतोऽप्यग्नेरज्वलनम् । जलज्वालनम् । अत्यार्द्रेन्धन—ज्वलनम् । प्रासादतोरणद्वारनृपवेश्मसुरालयवाहनायुध—ज्वलनं नृपवधाय । पुरवाहनयानपशुपक्षिपुरुषेषु विनाग्निं विस्फुलिङ्गदर्शनं महते रणाय । प्रासाद चैत्यतोरणाट्टालयगृह रथध्वजशयनासन यानकेशप्रावरणेषु विनाग्निं विस्फुलिङ्गदर्शनं च द्रव्यस्वामिवधाय । तत्र शान्तिमाह—

वृद्धगर्गः—

**समिद्भिः क्षीरवृक्षोत्थैः सर्षपैश्च घृतेन च ।**
**होतव्योऽग्निः स्वकैर्मन्त्रैः सुवर्णं चात्र दक्षिणा ।**

आग्नेयमन्त्रत्रयेण प्रतिद्रव्यमष्टोत्तर^A^शतसंख्यो होमः । यथाशक्ति सुवर्णं दक्षिणा । ^A^मत्स्यपुराणे तु अस्यामेव शान्तौ—

**सुवर्णं गोत्रयं वस्त्रत्रयं भूमिश्च दक्षिणा ।**

दोषगौरवमवेक्ष्य सा बोद्धव्या । दोषाल्पत्वे सुवर्णमात्रं गर्गोक्तं दक्षिणा ।

नारदस्तु—

**गृहदाह स्वदेहदाह स्वकेशदाह नवबस्त्रदाहादावप्यग्निना ।**
**षड्भिर्मासैः पुत्रदारमरणं स्वस्य च मरणम् ।**

तत्र शान्तिः । इषेत्वेति मन्त्रेण तिलधान्ययवानां घृतमधुयुक्तानां सहस्राहुतिहोमः । पूर्वं यजमानस्य क्षौरम् । शान्त्यनन्तरं मासं ब्रह्मचर्यम् । यात्रोद्वाहवर्जनम् ।

हिरण्यनाशे देवकुलदाहे नववस्त्रदाहे "मयूरचित्रे शान्तिः ।" चरुं कृत्वा । आग्नेयमन्त्रैश्चरुहोमः । "अग्निर्मूर्द्धा" मूर्द्धानं दिव इति द्वाभ्यां

---

**मुद्रित पाठः—**

A- दद्यात् सुवर्णं तु तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च ।
एवं कृते पापमुपैति नाशं यदग्निवैकृत्यभवं द्विजेन्द्र । मत्स्य-१३०।५०

चरोराहुतिद्वयम् । गायत्र्या चाज्याहुतिद्वयम् । तत्र स्विष्टकृदादि । कनक-रजतताम्राणां यथाशक्ति दक्षिणा । अनग्निज्वलने सद्यः फलम् । अग्निजाः सप्तरात्रेण ।

## देववर्गाद्यद्भुतानि

देवताभिज्वलनरोदनहसनापक्रमणवेपनपतनोद्वीक्षणस्वेदयुद्धधूम-स्नेहदधिपयः-शोणिताद्यनिमित्तवृत्त प्रवर्त्तन धावन भंगाश्रुनिपातारटनोत्थानोपवेशनशस्त्रप्रहरणध्वज विक्षेपा—वाङ्मुखावस्थानाग्निधूमवमननिमीलनोन्मीलनस्थानत्यागस्थानान्तरगमनाट्टहासकरणनर्त्तनेषु राजमरणं राष्ट्रलयो वा ।

एतच्च लिङ्गप्रतिमाशालग्रामचित्रादिसर्वदेवताविषयम् । एषां मांसशोणितगन्धे महद् भयम् । गायने अंगचेष्टायां षोडशमासे नृपमरणम् । तत्तद्ब्रह्ममुनि धर्मसोमप्रतिमाद्भुतं विप्रेषु पीडाकरम् । गुरुभृगुशनैश्चरोत्थं पुरोधसाम् । [1]शुक्रधनदवरुणयमोत्थं रविसोमोत्थं [2]प्रथितं नृपनाशाय । व्यासार्चाद्भुतं मन्त्रिणि, विनायकोत्थं सेनापतौ । यक्षगन्धर्वोत्थम् अमात्येषु । स्कन्दविशाखयो माण्डलिकेषु ।

**पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम् ।**

(मत्स्य, विष्णुधर्म पुराण)

[A]विष्णुवाय्वोः प्रजानाम् । विश्वकर्मणो वाहने ।

**देवप्रेष्ये नृपप्रेष्या देवस्त्रीषु नृपस्त्रियः ।**

(विष्णुधर्म- २ । १३५ । ९)

**[B]पीड्यन्तेऽर्च्चाविकारेषु वास्तुस्वामी च वास्तुनि ।**

---

**ख पाठः —**

(1) शक्र । (2) प्रथित ।

**मुद्रित पाठः —**

A- विष्णुपुराणे नास्ति ।

B- वास्तुदेवेषु विज्ञेयं गृहिणामेव नान्यथा । (विष्णुधर्म- १३५ । ९)

कुमारीणां कुमारीषु कुमाराणां कुमारणम् ।

देवार्चानामकस्मात् पूजात्यागे नृपमरणम् ।

तदभावे नृपस्य । प्रासादस्य वातवज्राहते पतने पुरमुख्यवधः । देवयात्रासूत्पातोऽक्षकेतुयुगभङ्गो देशक्षयाय । असति सम्बन्धिनि नृपभयाय । [A]देवोत्सवेषु देवार्चापतनं देशक्षयाय । देवकुले कङ्कगृध्रत्रासे ग्रामोत्सादः स्वामिमरणम् ।

शान्तिर्मत्स्यपुराणे— (२२६ । १०)

[B]देवतानां तु गत्वा वै स्थानमासाद्य भूषयेत् ।
पूजयेच्च महाभाग गन्धमाल्यार्घसम्पदा । (१०)
मधुपर्केण विधिवदुपतिष्ठेदनन्तरम् ।
[C]तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ।
पुरोधा जुहुयाद् वह्नौ सप्तरात्रमतन्द्रितः । (११)
विप्राश्च पूज्या मधुरान्नपानैः ।
[D]सदक्षिणैः सप्तदिनं नरेन्द्र ।
प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः ।
सकाञ्चनैः शान्तिमुपैति पापम् ।

पूजां कृत्वा पृथङ्मधुपर्कं दद्यादित्यर्थः । (१२)

तल्लिङ्गमन्त्रः यत् प्रतिमायाम् अद्भुतं तत् प्रकाशको मन्त्रः । होमश्चाष्टोत्तरशतमनुदिनम् । गीतनृत्योत्सवाश्चाधिका वराहोक्ताः । संवत्सरेण फलपाकः । मासत्रयेणेति वराहः ।

---

मुद्रित पाठः —

A- देवयात्रासु चोत्पातान् दृष्ट्वा देशभयं वदेत् । (मत्स्यपुराण- २२९ । ५)

B- देवताच्चान्तु । C- तल्लिङ्गे इति घाटिका नास्ति । D- सदक्षिणां ।

### शक्रध्वजोत्पाताः

"इन्द्रध्वजोपकरणं यत् किञ्चिद्द्विजसोत्तम ।
विनाशे तस्य विज्ञेया पीडा नगरवासिनाम् ।

(विष्णुधर्मे)

शिरोभङ्गे तु राजानं मध्यभङ्गे च मन्त्रिणः ।
निर्घातोल्का महीकम्पा दीप्ताश्च मृगपक्षिणः ।

(आथर्वणाद्भुतम्)

उच्छ्रीयमाणाः शीघ्राश्च वायवश्चेन्महाभयम् ।

(गर्गः)

धूमेऽग्निभयम् । गृध्रपाते नृपमृत्युः । क्रव्यादलये राजवधो देशनाशश्च । अन्येषामप्युत्पातानामिन्द्रध्वजविषये तीव्रफलत्वम् ।

इन्द्रध्वजनिपाते तु प्रायश्चित्तमिदं स्मृतम् ।
इन्द्रयागं पुनः कुर्यात्सौवर्णेनेन्द्रकेतुना ।
राज्यं दत्त्वा तु गुरवे बन्धनानि प्रमोचयेत् ।
सप्ताहं पूजयित्वा तु ध्वजं दद्याद् द्विजोतये ।

(विष्णुधर्मपुराणे)

दिने दिने ब्राह्मणभोजनम् । हिरण्यवत्सोरजतयुक्तगोत्रय दानम् ।

### वृक्षलताफलपुष्पशस्यव्यञ्जनाद्भुतानि

वृक्षस्याकस्मात् शाखाभङ्गे युद्धम् । हसने देशभयम् । रुदिते व्याधयः । स्थानान्तरगमने देशभङ्गः । वृक्षेषु जल्पत्सु स्वामिनः कुलक्षयः । पतितवृक्षोत्थाने व्याधिः । शुष्कविरोहणे वीर्य्यान्नक्षयः । अनृतौ पुष्पिते राष्ट्रभेदः । बाले पुष्पिते बालवधः । अनृतौ फलपुष्पोद्गमे वर्षान्ते नृपवधः ।

अन्यवृक्षे अन्यदीयफलपुष्पाविर्भावो यदि परचक्रागमः । वृक्षात्-क्षीरस्रावे सर्वद्रव्यनाशः । मद्यस्रावे वाहननाशः । शोणिते संग्रामः ।

मधुनि रोगः। स्नेहे दुर्भिक्षम्। सलिलेऽनावृष्टिः। तैले मुख्यवधः। एतत् पूजितवृक्षेषु सर्वं राजगामिफलम्।

अकस्मादुन्मीलने नृपवधः। तथा धूमोज्वाला च। अकस्मात् शुक्लरक्तकृष्णवस्त्रावृते वृक्षे विप्रादिवधः क्रमेण। चित्रैः खगपशुव्याधिनीलैः शस्यक्षयः। एते दशमासात् परतः पाकाः। वृक्षवद् गुल्मवल्लीलतासु च। एतेषु दोषेषु एते फलपाकाः।

**शान्तिर्मत्स्यपुराणे— (२३१। १३. १५)**

**आछादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत्।**
**वृक्षोपरि तथा छत्रं कुर्य्यात्पापप्रशान्तये॥ (१३)**
**शिवमभ्यर्च्चयेदेवं पशुं चास्मै निवेदयेत्।**
[A]मूले रुद्रेभ्य इति वा षट् होमान् कृत्वा रुद्रं जपेत्ततः। (१४)
**मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांस्तु भुवं च दद्यात्।**
**गीतेन नृत्येन तथार्च्चये[B]च्च देवं हरं पाप विनाश हेतोः। (१५)**

पशुनिवेदनं तदुद्दिश्य पशुच्छेदनं भूदानं दक्षिणा।

**अश्वत्थे पुष्पिते क्षत्रं ब्राह्मणाश्च उदुम्बरे।**
**प्लक्षे वैश्यास्तु पीडयन्ते न्यग्रोधे दस्यवस्तथा।**

वंशमाणकवचाइक्षुशृङ्गवेराणां पुष्पोद्गमे विनापुष्पं पुष्पावृतत्व दर्शने स्वामिवधः। राज्ञश्च वधो दुर्भिक्षम्।

**अत्रशान्तिर्मयूरचित्रे—**

**महाव्याहृतिभितरौदुम्बरसमिधायुहोमः।**

---

**मुद्रित पाठः —**

A- रुद्रेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः।
मूलेभ्य इति षण्मासान् हुत्वा रुद्रीं जपेत्तथा॥ विष्णुधर्म- २। १३७।१४

B- येत्तु।

ब्राह्मणभोजनम्। गौर्दक्षिणा।

कदली गृहे चेत् प्ररोहेत् स देशोऽरण्यं स्यात्।

**अत्र शान्तिस्तत्रैव—**

इमा रुद्रायेति मन्त्रेण औदुम्बरसमिधामष्टाधिकसहस्रं होमः। हेम सहित वृक्षदानम्। दक्षिणा गौः। ब्राह्मणभोजनम्।

अथवात्र मयूरचित्रोक्ता ऐन्द्री शान्तिः। गृह्योक्तविधिना इन्द्राय स्वाहा इन्द्र इदं शमयतु स्वाहा। यत्रेन्द्र (माध्य. २०।२६) इति द्वे आहुती हुत्वा सर्पिषा पुनः सावित्र्या तिस्रः। दक्षिणा धेनुः। काञ्चनं वस्त्रं धान्यं रत्नञ्च।

अत्र वृक्षाणां फलकुसुमसमृद्ध्या द्रव्यनिष्पत्ति-शस्यवृद्धिज्ञानम्। शालेन पुष्पितेन कलमशालीनां वृद्धिः। रक्ताशोकेन रक्तशालीनाम्। न्यग्रोधे त्रिजवानाम्। तिन्दुकवृद्ध्या पुष्पितानाम्। अश्वत्थेन सर्वशस्यानाम्। जम्बुभिस्तिलमाषाः। शिरीषवृद्धया कंगुः। मधूकै र्गोधूमाः। सप्तपर्णेन यवाः। अतिमुक्तेन कार्पासाः। कुन्देन सर्षपाः। बदरीभिः कुलत्थाः। चिरिबिल्वेन मुद्गाः।

तिलकेन शङ्खमौक्तिकरजतानि। हस्तिपर्णैः करिणः। अश्वकर्णेन वाजिनः। पाटलीभिर्गावः। कदलीभिरजाविकाः। चम्पकैः कनकम्। [1]कुरुबकैर्वज्रम्। नन्द्यावर्त्तैः वैडूर्य्यम्। रक्तोत्पलेन राज्ञः शुभम्। नीलोत्पलेन मन्त्रिणः। पद्मैर्विप्राः। कुन्दैः पुरोहिताः। सौगन्धकैः सेनापतिः। अर्कैः सुवर्णवृद्धिः। आम्रैः क्षेमम्। भल्लातकै र्भयम्। पीलुभिरारोग्यम्। खदिर शमीभ्यां दुर्भिक्षम। अर्जुनैः सुवृष्टिः। पिचुमर्दनागकुसुमैः सुभिक्षम्। निचुलेन वृष्टिभयम्। कुटजेन व्याधिभमम्। दूर्वाकुशकुसुमाभ्यामिक्षुः। कोविदारेण वह्निः। श्यामलतया बन्धक्षयः।

**पुष्पे पुष्पं भवेद्यत्र पत्रे पत्रं फले फलम्।**
**परचक्रागमस्तत्र तत्र जानपदं भयम्।**

---

**ख पाठः —**

(1) बन्धुजीवेन विद्रुमाः।

यवव्रीहिष्वेककाण्डे द्वित्रि[1]शिखरप्रादुर्भावे स्वामिनाशः । यमलं कुसुमफलं, वृक्षे चैकस्मिन् नानाकुसुमोत्पत्तिः, परचक्रागमाय । तिलेष्व तैलत्वेऽन्नस्य वैरस्ये महद्भयम् ।

तथा शान्तिः —

विकृतकुसुमफलं ग्रामात् पुरात् बहिः कार्य्यम् । चरुं कृत्वा सोम-दैवतमन्त्रेणाष्टोत्तरसहस्रहोमः ।

क्षेत्रस्य विकृतशस्यदोषदुष्टस्य विप्राय दानम् । फलमध्यगतबीजस्य प्ररोहे, वृक्षगुल्मलतानामन्यत्तु पुष्पफलदर्शनं मरकाय । पूर्वा शान्तिः ।

मयूरचित्रे—

धान्येषु सर्षप फलने दुर्भिक्षम् । इमा रुद्रायेत्यौदुम्बराष्टसहस्रहोमः । गौर्दक्षिणा । धान्यानां स्फुटने विनाग्नि लाजाजनने तोयं विनाऽ-ङ्कुरोत्पत्तौ च पुरोत्सादनम् । तत्रोपवासपूर्वकं दधिमधुघृताक्तौदुम्बरसमिद-युतहोमः । सप्तधान्यं दक्षिणा । शून्यधान्ये दग्धधान्येवाङ्कुरोत्पत्तौ तिलमुद्ग-माषमसूरकलयादिषु च स्विन्नेष्वङ्कुरोत्पादे शुष्ककाष्ठप्ररोहे च तण्डुलेष्वङ्कुरो पादे तत्र षड्भिर्मासैः प्रभुनाशः । तत्र दधिमधुघृताक्तधान्यायुतहोमः । वस्त्रयुग्मं काञ्चनं [2]धेनुश्च दक्षिणा । सिद्धान्ने व्यञ्जने च रुधिरदर्शने राजाऽ-मात्यनाश । दधि च तक्रं चेज्जायते नृपनाशाय ।

सिद्धान्ने व्यञ्जने वा कृमिजनने दुर्भिक्षम् । यस्य साध्यमानस्यापि न तथा रसो दौर्गन्ध्यं वा [3]प्रभुनाशाय । मध्वाज्यदधिदुग्धेषु भक्ष्ये पाने विलेपनम् । यत्र वाहनशस्त्रभवनायुध-दर्पण-भोजनपात्र मणिमुक्ताफलशय्या-सनेषु काकोल्लूकवककपोत दर्शनेऽन्येषां शृगालादीनामागमे अकस्माद्वसास्थि-मज्जारक्तकेशदर्शने तथा घृतदधिमध्वादिषु पद्माकृति स्वस्तिकाकृतिदर्शने च मरणम् । तत्र शान्तिः । यत्र यस्मिन् द्रव्येऽद्भु[4]तदर्शनं तद्द्रव्यं ब्राह्मणाय दातव्यम् गौस्तदा दातव्या इति वृक्षलतागुल्मान्नव्यञ्जनाद्भुतानि ।

---

ख पाठः —

(1) शिरः । (2) धेनुः इत्यधिकः । (3) प्रभुवधाय । (4) मुत्पन्न ।

## अथगृहाद्भुतानि

**प्रसादतोरणाट्टानां द्वारप्राकारवेश्मनाम् ।**
**[A]अकस्माद्बलिनां भङ्गो विज्ञेयो राजमृत्यवे ।**

(मत्स्यपुराण- २३७ । १)

स्वामिवधाय च । गृहस्योर्ध्ववंशभङ्गे स्वामिवधः । द्वारे स्वयमुद्घाटिते उन्मादः । स्वयं पिहिते कुलनाशः । स्तम्बवशयोरकस्मात् कम्पे दंपत्योर्मृत्युः । गृहं कटकटायते स्थूणा च कम्पते यदि गृहिणीनाशः । अकस्मात् गृहभूमि-स्फुटनकम्पनयोः प्रभुनाशः, गृहोत्सादो धननाशश्च । [1B]कोकारावेऽप्येवम् ।

अत्र शान्तिर्मत्स्यपुराणे—

इन्द्रःशच्यासहपूज्यः । अन्येभ्योऽपि देवेभ्योऽन्नव्यञ्जनाभ्यां बलिः । इन्द्राय शतं सहस्रं वा तन्त्रेण होमः । गोत्रयकाञ्चनवस्त्रप्रदानम् । भोजनञ्च ।

अकस्माद् गृहात् कर्करुपतने गृहे वल्मीकोद्गमे मधुमक्षिकाभिर्मधुकरणे गृहे छत्रिकासंजनने देशनाशः प्रभुनाशः ।

तथा—

**गोधा-नकुल-वनपशु-सर्पाणां गृहे प्रवेशे च महद्भयं मरकश्च ।**

तथा—

शृगालवराहव्याघ्रशार्दूल[2]गोरूपाणां गृहोपरि पतने द्वारे, लोह कीलके, गोयुग्मस्य योजितस्य गृहमध्ये प्रवेशे क्रव्यादपक्षिणां गृहोपरिपतने गोवत्सस्य व गृहारोहणे गृहोत्सादनं गृहपतिनाशः ।

---

**ख पाठः—**

(1) कोक्वारावेष्वेवम् । (2) गोमहिषाणां ।

**मुद्रित पाठः —**

A- निर्निमित्तं तु पतनं दृढानाम् ।

B- अकस्माद् गृहमध्ये तु कोका रावं विमुञ्चति ।

मासाभ्यन्तरसात्रेण गर्भस्योत्सादनं ;तु तत् ॥ इति मयूर. अद्भुत. ८३२

अत्र शान्तिर्नारोदोक्ता—

महाव्यहृतिभिर्होमो धान्यायुत होमः। धेनुर्दक्षिणा।

उलूकगृध्रभासानां गृहोपरि निवेशने गृहनाशधननाशपत्नीनाश-पुत्रभ्रातृनाश-प्रभुनाशाः। षड्भिर्मासैः। पर्य्यङ्कयानासनसन्निविष्टः कपोतो गृहं वा प्रविष्टः उलूकोप्येवं गृहपतिमृत्युदः।

**मत्स्यपुराणे च शान्तिः—(२३६। १३)**

**मृगपक्षिविकारेषु कुर्य्याद्धोमं सदक्षिणम्।**

**देवाः कपोत इति [A]च जप्तव्यं पञ्चभिर्द्विजैः।**

**[B]सुदेवा इति चैकेन देया गावश्च दक्षिणाः।**

**जपेत् शकुनसूक्तं वा मनो वेदशिरांसि च।**

देवा कपोता (ऋग्.- १०। १६५। १) इति मन्त्रेण आज्येन सहस्र-मयुतं वा होमः। पञ्च ब्राह्मणान् भोजकत्वेन वृत्वा देवा कपोता इति तैर्जपः। एकेन ब्राह्मणेन सुदेवा इति जपः कारयितव्यः। जपे मन्त्रविकल्पः। "शाकुनसूक्तस्य, मनुसूक्त—वेदशिरसांञ्च जपो वा. गोत्रयस्य दक्षिणात्वम्। जपे होमे सुवर्णम्। इयं शान्तिर्मृगपक्षिविकारसामान्योक्ताप्यत्रापि कर्त्तव्या। इयञ्च शान्तिः गृहदानपूर्विका गृहं दत्त्वा। यदि गृहान्तरं नास्ति मूल्यं दत्त्वा पुनर्ग्राह्यम्। यद्यपि सामान्यशास्त्रं विशेषशास्त्राद् दुर्बलम् तथा च कपोतोलूकपतनादिषु मयूरचित्रोक्ता विशेषशान्तिरेव। भूमेरिमे भौमा इति सर्वनामार्थे तद्धितप्रत्ययेन विशेषाकारेणात्र शास्त्रप्रवृत्तेः। सर्वनाम्नो बुद्धिस्थ-वाचकत्वात्।

---

**मुद्रित पाठः—**

A- वा इति मत्स्यपुराण पाठः। (देवाः कपोतः - ऋक् १०। १६५। १)

B- अयं श्लोको नास्ति। तत् स्थाने—

गावश्च देया विधिवद् द्विजानां सकाञ्चना वस्त्रयुगोत्तरीयाः।

एव कृते शान्तिमुपैति पापं मृगै र्द्विजैर्वा विनिवेदितं यत्। २३६। १४

**आमिक्षा देवतायुक्तां वदत्येवैष तद्धितः ।**
**आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ।**

इति न्यायात् । तेन गोभूम्यादिदानम् । यथाशक्ति यथादोषं सर्वभौमाद्भूतेषु विशेषशान्तिरूपमेवेति तदेव कार्य्यम् । प्रातिस्विक संदिग्धार्थशान्त्यन्तरं न कार्य्यम् । निःसन्दिग्धार्थ-विशेषशान्त्यन्तरमपि यत्रास्ति तदपि समान-कल्पनामेव :

गृहस्योपरि रात्रौ यद्युलूकः शब्दायते सुतमृत्युः । सप्तरात्रञ्चेद् गृहस्थनाशः । द्विगुणे नृपनाशः । त्र्यहे चौरभयम् ।

दिवा यस्य गृहे जम्बुकः प्रविशति तस्य मृत्युः । ग्राममध्ये शब्देन ग्रामध्वंसः । अत्युच्चशब्देन या शिवा, नृणां रोमाञ्चं वाजिनां शकृन्मूत्रं जनयति तद्देशक्षयाय ।

मध्याह्ने श्मशाने वा शिवा रौति निशार्द्धे गृहद्वारि वा तस्यैव बलिरन्नं देयो, अन्यथा भयम् ।

गृहे प्रविष्टः शृगालादिश्चेत् प्रसूयते तस्य पुत्रपत्नीगृहतद्धननाशो मरणञ्च ।

गृहद्वारेण सर्पप्रवेशे प्रभुपत्नीमरणम् । अत्रापि गोभूमिहिरण्यादि-दानरूपा भौमसामान्यशान्तिः ।

गृहे प्राङ्गणे वा रक्तधारा दर्शने नृपवधः । इमा रुद्रायेति आम्रपत्र सहस्रहोमः । गौर्दक्षिणा ।

ग्राम्यपशुपक्षिणामरण्यगमनेऽरण्यपशुपक्षिणां ग्रामप्रवेशे ग्रामो-त्सादः । दिवाचरा रात्रौ रात्रिचरा दिवा यदि तदाप्येवम् ।

रात्रावपि गृहद्वारि शिवारटनं प्रभुनाशाय । एकरुते पुरुषनाशः । द्विवाररुते प्रियश्रवणम् । त्रिरुते प्रियपर्य्यटनम् । त्रिचतुर्वारे धनम् । पञ्चवारे प्रियम् । षड्वारे प्रधानभेदः । सप्तमे वाहनक्षयः । अष्टमादिशिवारुतं निष्फलम् ।

तथा—

गा इति शब्दनेऽग्निभयम् । [1]चटनेति शब्दने मरणम् । भे भे इति भयम् । भो भो इति बन्धुमृत्युः ।

मृगाणां ग्राममध्ये धावने बालान् दन्तैर्गृहीत्वा ग्रामप्रवेशे, शशकस्य च ग्रामप्रवेशे, मांसास्थीन्यादाय ग्रामप्रवेशे, बहूनां मृगपक्षिणां संध्ययोरपि शिवाशब्दकरणे, प्रदोषे कुक्कुटरटने, हेमन्ते कोकिलध्वनौ, शुकशारिकावर्जं पशुपक्षिणां मनुष्यवागुच्चारणे च ग्रामोत्सादः प्रभुमरणम् ।

काकमूषिकमार्जार पतङ्ग सर्पाणां बाहुल्ये दुर्भिक्षम् ।

**सर्वे दुर्भिक्षकर्त्तारः सजातिपिशिताशनाः ।**
**सर्पमूषिकमार्जारपृथुरोमविवर्जिताः ॥**

प्राकार-गृहद्वार-गृहेषु काककोकिलकंकगृध्रकौशिकानां नीडकरणं मरकाय ।

पशुपक्षिसरिसृपाणां [2]परजातिमैथुनं महते भयाय । गवां रक्त-दोहनं गवामश्रुमुखत्वं प्रभुनाशाय ।

धेन्वा दुह्यमानायाः कृमिपाते च महाव्याहृतिभिरष्टोत्तरसहस्रोदुम्बर-समिद्धोमो गौर्दक्षिणा ।

मार्जारस्यातिशयगर्जनयुद्धे भीषणाभीक्ष्णशब्दने भयम् । महिष्याः शुक्लवत्से गोमहिष्योः स्वयं स्तन्यपाने च महद्भयम् । अत्र मृगपक्षिविकार शान्तिः । भौमसामान्यशान्तिर्वा ।

इति [3]गृहाद्भुतानि ।

## हस्त्यद्भुतानि

गजस्य ग्रामे मैथुने देशक्षयः । ग्राहेण गजस्य जलप्रवेशे नृपवधः । हस्तिना मश्रुप्रवर्त्तनमार्त्तनादः पराजयाय ।

---

**ख पाठः —**

(1) टे टे इति । (2) परजातियोनि मैथुनं । (3) गृह्यद्भुतानि ।

सप्तवर्षे नागस्य मदे नृपवधः। अष्टवर्षमदे कोषपुरक्षयः। दशवर्षमदे नृपवधः। एकादशवर्षस्य मदे पञ्च वर्षाण्यनावृष्टिः। हस्तिन्या मदे पुरराष्ट्र-नृपक्षयः।

मूले सरुधिरदन्तभङ्गे नृपक्षयः। हस्तिदन्ते श्यावबहुपुष्पदर्शने मरकम्। लोहितबहुपुष्पदर्शने नृपवधः।

कृष्णपक्षे हस्तिमरणे ब्राह्मणानां महद् भयम्। शुक्लपक्षे शूद्राणाम्। वामपार्श्वपातेन मृतेऽप्येवम्। वह्निपतिते मृते महद् भयम्। दारुणवेलासु मृते च।

तथा राजहस्तिनि मृते राष्ट्रपीडा। अत्र विष्णुधर्मोक्ता शान्तिः मृगपक्षिविकारोक्ता।

## अश्वाद्भुतानि

हयस्य काककपोतैः क्रीडनं प्रभुभयाय।

दुर्मना ध्यानशीलः साश्रुनेत्रो भयावहः। उत्तिष्ठन् निषीदन् त्रस्तः सन् सन्ध्यायां नृपवधः। शुष्केन्धनं काष्ठं वा खादन्तो यत्र [1]हेमन्ते सूर्यं वा वीक्षन्ते तदाऽग्निभयम्।

**यदा बालेषु पुच्छे वा जघने वापि वाजिनाम्।**
**अग्निर्भवति धूमो वा तदा [2]विद्यान्महाभयम्।**

(शालिहोत्रः)

ग्रीष्मशरदतिरिक्ते हयानां ज्वलनं भयदम्। अश्वदेहेऽ[2]श्ववर्ण-विलक्षणवर्णाः संस्थानाः पुष्पमित्युच्यते। श्वशृगालव्यालवायसाकृतीनि विवर्णानि रूक्षाणि यदि पुष्पाणि राष्ट्रध्वंस-नृपकोषध्वंसकराणि। अश्व-स्योर्ध्वमधश्च मध्यदन्तचतुष्टयपार्श्वस्थौ दन्तौ च दंष्ट्रा। दंष्ट्रात्रयभङ्गे नृपवधः। चतुष्टयभङ्गे सामात्य सराष्ट्रनृपवधः। जरसा रोगेण वा भङ्गे न दोषः। रौद्रवेलाग्रहणादिषु महान् दोषः।

---

**ख पाठः—**

(1) ईहते। (2) स्ववर्णविलक्षण।

हयास्तु द्विखुरा ये च शृङ्गिणः स्तनिनोऽपि च ।
त्रिकर्णाः पञ्चचरणाः [A]सम्मुष्काः सद्विजास्तथा ।
राज्ञस्तत्र भयं विद्यात्स च देशो विनश्यति ।
तस्मादेवंविधानश्वान् स्वराष्ट्राद् विप्रवासयेत् ।
यस्यावर्त्तः स्वककुदि स चाश्वः स्वामिनाशनः ।
कुलक्षयकरस्तस्य राजराष्ट्रवधाय च ।
धूमकेतुरयं वाजी दुर्भिक्षमरकाय च ।
अनावृष्टिकरस्तं च दृष्ट्वा सूर्य्यनिरीक्षणात् ।
स्पृष्ट्वा स्नानेन शुद्धः स्याद् राष्ट्रात्तस्माद् विवासयेत् ।
(शालिहोत्रः)

अत्र मृगपक्षिविकारशान्तिः । भौमसामान्य शान्तिर्वा ।

## श्वाद्भुतम्

बहवः श्वानः प्रासादगृहादिषु उच्चैरटन्तः स्वामिनो मृत्युं सूचयन्ति । सूर्य्याभिमुखो वानरजम्बुकस्वरूपं दृष्ट्वा मृत्युः । यस्य गृहमारुह्य खनति तस्य पुरुषक्षयः । शुष्कास्थिवक्त्रो यस्य गृहं प्रविशति तस्य मृत्युः । शृङ्खलां रज्जुं वा आदाय यस्याग्र उपतिष्ठते तस्य बन्धनम् । अस्थि गृहीत्वा यस्याग्रे भवेत्तस्य मृत्युः । निशि शुनां संघशः क्रन्दनं पुरनाशाय । ग्राममध्ये बहूनां रटतां धावनं प्रभुनाशाय । काष्ठोन्मुखास्थिशृङ्गास्याः श्वानो मरणाय । अत्र मृगपक्षिविकारशान्तिः भौमसामान्यशान्ति र्वा ।

---

मुद्रित पाठः –

A- सपुष्पाः । अद्भुतसार- पृ. ६४० । पाठे क्वचित् क्वचित् भेदोस्ति ।

## खञ्जनाद्भुतम्

खञ्जरीटश्चतुर्द्धा—

Aकण्ठवक्षः शिरांसि यस्य कृष्णानि स समन्तभद्रः। Bशिरउरसी यस्य कृष्णे स प्रभद्रः। कण्ठोरसी यस्य कृष्णे सोऽनुभद्रः। कण्ठे यस्य कृष्णा रेखा सोऽम्बरभद्रः।

चतुर्विधस्य खञ्जनस्य उदपान नदीतीरपुष्पफल वृक्षाग्रतोरणगोपुराट्टालिका शयनासनगृहपद्मोत्पल देवगृह-गोमयकरीषदुर्वासु दर्शनं शुभम्।

हस्त्यश्वकृष्णसर्पपद्मगोवृषच्छत्रेषु प्रशस्तभक्षणकाले दर्शनं वर्षमध्ये नृपत्वदम्।

शुष्ककाष्ठतुषाङ्गारभग्नगृहकुड्यादिषु रोगाद्यनर्थाः। महिषोष्ट्रखर-श्मशानास्थि[1]गृहकोणग-परप्राकार-भस्मकेशस्थो दृष्टः द्रष्टुर्मृत्यवे। मृतस्य च दर्शने मृत्युः। इदं च फलं प्रथमे दर्शने। वर्षाभ्यन्तरे द्वितीयादिदर्शने तस्मिन्नेव दिने स्वल्पफलम्। खञ्जनस्य कीर्त्तनं शुभम्। दर्शनं मङ्गलदं यात्रासु।

अत्र शान्तिः। सप्तरात्रं मांसस्त्रीवर्जनं भूशयनम्। अहोरात्रमुपोष्य सर्वबीज सर्वगन्ध रत्नोदकैः स्नानम्। गायत्रीजपव्याहृतिहोमौ। खञ्जनस्य दर्शनम्। देवद्विजपूजनम् च। शुभफलेप्सुना खञ्जनायार्घो देयः।

---

**ख पाठः —**

(¹) गृहकोषखपर।

**मुद्रित पाठः —**

A य: कन्धरोरः शिरसां समन्ताद् बिभर्त्ति कार्ष्ण्यं स समन्तभद्रः।
कृष्णेन युक्तः शिरसोरसा तु भवेत् प्रभद्रः सितकन्धरास्यः
कण्ठोरसी यस्य तु खञ्जनस्य कृष्णे भवेतां स मतोऽनुभद्रः।
कृष्णा भवेत् कण्ठगतैव रेखा यस्य त्वसावम्बरभद्रनामा
मध्यादमीषां शुभकार्य्यसिद्ध्यै यो यो भवेत् पूर्वतरः स मुख्यः।
इति वसन्तराजः — अद्भुतसागर ६२

B- अद्भुतसागरे पराशरः - ६७१

ग्रामचटकतुल्यो नीलः। पाण्डरगण्डयुग्मः पक्षी। ततो लघ्वी धूम्रवर्णा। पाण्डरगण्डयुग्मनारी [1]Aसापोदकी सा वामगा अमृतयुदा। केशास्थिवक्त्रा च दृष्टा मृत्यवे। उद्ध्वनिना च। सुप्ता स्थाननाशाय। अत्र मृगपक्षिविकारशान्तिः।

कृष्णपेचिका यदि भूरि कोटरगते वृक्षे शुष्के मोटितशाखे शब्दं कुरुते आकाशे वा शब्दं कुरुते तदा तत्र स्वामिनाशः। भृङ्गाणां भूमौ निवासे कोकिलानाञ्च भूमौ निवासे महद् भयम्।

काको यस्याग्रे· आममांसं छर्दयेत्तस्य धनलाभः। मृत्तिकाक्षेपे भूलब्धिः। रत्नार्पणे राज्यम्। यद्द्रव्यमुपनयेत्तद्द्रव्यलाभः। यद्रत्नं हरेत्तस्य हानिः। पीतद्रव्येण कनकहानिलाभौ। कार्पासिकसितेन रूप्यस्य। उपानच्छत्रयानाङ्गासनशय्यावकुट्टने मृत्युं तत् स्वामिनो विद्यात्, पूजा स्यात्तत्पूजने। शर[2]तालपत्रं मांसकुट्टनं कुलनाशनम्।

क्रुद्धोऽधिरूढः [3]काकान्तरं पक्षं धून्वन् चण्डस्वरो मृत्युदः। रुधिरानुलिप्तो द्वारि रटनं सुतमृत्यवे। निशि संघशः सशब्दं [4]चरन्तो नृपराष्ट्रक्षयकराः। दिवापि निष्कारणं संघशो रुदन्तो देशक्षयदाः।

प्रासादाट्टालिकाध्वजछत्रेषु नीडकरणं प्रभुनाशाय।

**एकाण्डता च काकानां यदि वापि निरण्डता।**

**निम्नेषु नीडकरणं देशनाशकरं स्मृतम्।**

एकशावताया मनपत्यतायाश्च दुर्भिक्षम्।

**काको मैथुनशक्तश्च श्वेतश्च यदि दृश्यते।**

**राजा वा म्रियते तत्र [B]सर्वदेशो विनश्यति॥**

(मत्स्यपुराण- २३६। ११)

---

ख पाठः —

(1) सातपोदकी। (2) पत्रमसी। (3) रूढः कान्तारं। (4) चरणे।

मुद्रित पाठः —

A- पोतकी — अद्भुतसागरः - ६७९ B- स च देशो।

दृष्ट्वा तत्क्षणं स्नानम्। वस्त्रान्नदानम्। अहःशेषं संयमेनावस्थानम्। प्रातःAशान्तिः। एकविंशतिदिनं [1]ब्रह्मचर्य्यम्। अकाकवधः काकबलिश्च। अत्र [2]मृगपक्षिविहिता शान्तिः। अन्नाद्य-गो-भूमि-हिरण्यदानं वा।

## पिपीलिकाद्भुतानि

विनिर्गताः प्राग् गृहमध्यभूमेः कुर्वन्ति शून्यं भवनं [B]घृतेच्यः।
अग्नेर्विभागे स्वजनागमाय भवन्ति वृद्ध्यै दिशि दक्षिणस्याम्॥
पयोधरो वर्षति यातुधान्यां योषिद्धनाप्तिर्दिशि पश्चिमायाम्।
विहाय गेहं गृहिणी प्रयाति विनिर्गताभिर्दिशि मारुतस्य॥
कुर्वन्ति ताः सम्पदमुत्तरस्यां देशस्य भङ्गं ककुभीशवत्याम्।
ब्रह्मप्रदेशे दिनसप्तकेन लाभं पृथिव्या [C]उद्योगसिद्धिम्॥

(वसन्तराजः)

अरुणोदये रक्तपिपीलिकादर्शनं भयाय। तोयपूर्णभाण्ड भक्तभाण्ड-निकटनिर्गता शुभाः। [3]धान्यमध्यगा धान्यवृद्धये।

महानसस्था गृहदाहाय। घृतभाण्डे चौरभयम्। जलघटमूलात् निर्गतास्वनावृष्टिः। यस्य [4]शय्यास्थाने निर्गतास्तस्य मृत्युः। देहल्या-

---

**ख पाठः —**

(1) ब्रह्मयज्ञम्। (2) मृगपक्षिविकारविहिता शान्तिः।
(3) काञ्चकघटनिकट निर्गताः शुभाः इत्यधिकः। (4) शय्यासनस्थाने।

**मुद्रित पाठः —**

A- स्नात्वा प्रभाते विदधीत शान्तिं दद्यात् स्वशक्त्या द्रविणं गुरुभ्यः।
हविष्यभोजी न भजेच्च नारीं दानानि सप्तत्रिगुणानि यावत्।
अकाकघातव्रतमाददीत बलिं च दद्याद् बलिभोजनेभ्यः।

इत्यादि वसन्तराजः — अद्भुतसागरः - पृ. ६९९

B- घृतेड्यः — अद्भुतसागर - ६७० C- उपयोग।

मनर्थः। गृहोपरि बहिःश्च [1]चौरभयम्। नृपगृह देवगृह रथ्या चत्वर केदार चैत्य द्यूतसभासु चेद् देशभङ्गः। ग्रामे पिपीलिका यत्र नगरे वातिमात्रं दृश्यते तस्योत्सादनम्।

अत्र शान्तिः। आग्नेयी। अनग्निज्वलनोक्ता। यद्वाऽऽग्नेयेन मन्त्रत्रयेणौदुम्बरसमिधां मधुसर्पि[2]र्युतानामष्टसहस्रहोमः। तिलाहुतिश्च। कृष्णा धेनुस्तिलप्रस्थो दक्षिणा। दासीदासयुक्तस्य उत्पातयुक्तगृहस्य च दानम्।

भेकानामकालस्वने महद्भयम्। भौमसामान्यशान्तिर्वा।

## वातजोपस्कराद्भुतानि

अनाहतानां मृदङ्गादीनां वाद्यश्रवणे मृदङ्गाद्यभावे तद्वाद्य श्रवणे देशोत्सादः। आसन शयन यान दर्वीमुसल सलिलभाण्डानामकस्मात् सर्पणे आकाशगमने स्वामिनाशः। कांजिकस्य शब्दने तत्सर्पणे वा पत्नीनाशः। तोयभाण्डविकारे पुत्रनाशः।

**शान्तिर्मयूरचित्रे-**

अश्वत्थसमिदष्टोत्तरसहस्रहोमो रुद्रगायत्र्या। गौर्दक्षिणा। [3]क्रमात् प्राच्यादि फलम्। ब्राह्मणभोजनम्। "तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदया"दिति रुद्रगायत्री।

## वस्त्रोपानदासनशयनाद्भुतानि

[4]वस्त्रे मूषककीटभक्षणे वह्निदाहेऽकस्मान्मसीकर्दमाञ्जनरुधिर-गोमयैरुपरोग(ध)फलम्। प्राग्वंशं प्रत्यक्वंशं त्रिगुणं वस्त्रं नवधा विभजेत्। क्रमात् प्राच्यादि फलम्। अर्थहानिरर्थागमो धनक्षयः स्त्रीनाशः पुत्रपीडा दुहितृमृत्युः।

व्याधिः। व्यसनम्। अध्वगमनम्। दशामूले भार्य्यानाशः। मध्याग्रयोरर्थनाम्। दशान्ते स्त्रीणाम्। अथवाऽकृत्वापि त्रिगुणम्। प्राग्वंशं

ख पाठः —

(1) मृत्युश्च इत्यधिकः। (2) युक्तानाम्। (3) नास्ति।

(4) वस्त्रेषु मूषिककीटगोभक्षणेषु।

वस्त्रं प्रसार्य्य चिन्तनम्। मध्ये मृत्युः। प्राच्यां कुटुम्बक्षयः। आग्नेये नारीणाम्। दक्षिणे सुहृदां [1]पुत्राणाञ्च। नैऋ‍ते पशूनाम्। पश्चिमे प्रेष्याणाम्। वायव्ये ज्ञातीनाम्। उत्तरे स्त्रीणाम्। ईशाने सर्वसम्पदाम्। कुम्भादर्शरुतकहलगृह तोरण छत्र मेखलास्रक्यूपवेदिपद्म शङ्ख श्रीवत्स-स्वस्तिकमत्स्य नन्दावर्त्ताकारैश्छिदैः शुभम्। कबन्ध श्येन केदार सर्प सूची-पाशमुद्गराकारै र्मरणम्।

**नवे वस्त्रे फलं चिन्त्यं न जीर्णे धौतरञ्जिते।**

**दग्धांशे पीडिते दग्धदोषो नष्टो नवेष्वपि।**

**वस्त्रस्य कोणेषु वसन्ति देवा नरास्तु पाशान्तदशान्तमध्ये।**

**शेषास्त्रयश्चात्र पिशाचभागा स्तथैव शय्यासनपादुकासु।**

**ऋग्राक्षसांशेष्वथ वापि मृत्युः पुंजन्म तेजश्च मनुष्यभागे।**

**भागेऽमराणामपि भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम्।**

**लिप्ते मसीगोमयकर्दमाद्यै श्छिन्ने प्रदग्धे स्फुटिते च विद्यात्।**

**पूर्ण नवेऽल्पाल्पतरं च भुक्ते पापं शुभं वाधिकमुत्तरीये।**

त्रिगुणीकृतपूर्वाग्रघृतवस्त्रेण वा चिन्त्यम्। मध्ये मृत्युः। आग्नेये अग्निभयम्। याम्ये बन्धुनाशः। वायव्ये रोगः। सौम्ये धनहानिः। [2]शेषे शुभम्। उपानहो मध्यप्रदेशे [3]मूषिकाभक्षणे प्रभुवधः। अनामिकायां तन्मातुः। कनिष्ठायां तु पितुः। अङ्गुष्ठाङ्गुलिग्रीवास्थले भक्षणे शिरश्छेदः। सकलोपानद्भक्षणे मरणनिगडायासाः। नवे संपूर्णफलम्। अर्द्धभुक्तेऽर्द्धफलम्। जीर्णे न किञ्चित्। गुरुवृद्धब्राह्मणपूजामङ्गलालम्भनं च कृत्वा भक्षितो-पानत्त्यागः।

## शस्त्राद्भुतम्

शस्त्रे धूमज्वला राजवधाय। अन्ये शस्त्रोत्पाताः [4]रणाय। गोमूत्र पङ्क मेदःसदृशगन्धः भयाय दुःखाय।

---

ख पाठः —

(1) सपुत्राणां च। (2) शेषेषु। (3) मूषिक। (4) मरणाय।

## खट्वाद्यद्भुतम्

खट्वादिषु पद्मदीयाङ्कुशाकाराणि चिह्नानि शुभाय। काको-लूकादि[1]समानानि भयाय। [2]खट्वादावेकाङ्गुल[3]प्रवेशेन पुत्रनाशः। पञ्चाङ्गुले बन्धनम्। एकादशे मृत्युः। षोडशे च। एकविंशे धनधान्यहानिः। पञ्चविंशे मृत्युः। अत्र भौमसामान्यशान्तिः।

## (दिव्यस्त्रीपुरुषादिदर्शनाद्भुतम्)

दिव्यस्त्रीपुरुष विद्याधर किंपुरुषगन्धर्वाणां दर्शने राष्ट्रक्षयः। रक्षो-भूतपिशाचैकं च। पथि रोदनं मार्गरोधनं च मरकाय। अशरीरवाक्श्रवणं च मरकाय। अत्र भौमसामान्य शान्तिः।

## मानुषाद्भुतानि

उह्यमानः शवोऽकस्माद् भूमौ पतति चेत्तदा।
यत्कुलेऽसौ शवस्तेषां विनाशो भवति ध्रुवम्॥
(गर्गः)

इमा रुद्रेति चाज्येन सहस्रद्वयहोमतः।
वृषभं दक्षिणां दद्यात्ततः संपद्यते शुभम्॥
मृतः श्मशानं नीतो यः प्रत्युज्जीवति मानवः।
स देशः क्षीयते तत्र शान्तिरेषा प्रकीर्त्तिता॥

क्षीरवृक्षसमिधामष्टोत्तरशतहोमः।

सावित्र्यक्षराष्टसहस्र होमश्च। कपिलागौस्तिलाः कांस्यं दक्षिणा। मृतस्य व्याहरणे भयम्। अत्र भौमसामान्यशान्तिः।

---

ख पाठः —

(1) समानभयाय। (2) खट्वाङ्गादा। (3) व्रणेन।

## (पुष्करशान्तिः)

तथा—

[1]भग्नपादे च नक्षत्रे भौमार्कार्कियुते दिने
भद्रातिथिसमायुक्ते मरणे स्यात्त्रिपुष्करम् ।

एकपुष्करे रोगः । द्वित्रिपुष्करे गृहेऽपरस्य मृत्युः । तस्य शान्तिः —

ब्रह्मक्षत्रिययोर्दर्भैः पिष्टैर्वैश्यस्य चाकृतिः ।
शूद्रस्य गोमयैः कृत्वा शवस्योपरि विन्यसेत् ।
दधिमध्वाज्यसंयुक्तं शवधर्मेण दाहयेत् ।

तत्राचार्य्यब्रह्मवरणम् । आचार्य्यस्य लोहमययमपूजनम् । रजतचन्द्रपूजनं च ।

यमदैवतमन्त्रेण समिदाज्यचरुं ततः ।

समिधः —

वैकंकतोदुम्बराश्वत्थैः प्रत्येकाष्टोत्तरं शतम् ।
एकैकं द्वित्रिसंयुक्तं कृत्वा दर्भेण वेष्टयेत् ।

एकपुष्करे वैकंकता एका सामत् । एको दर्भग्रन्थिः । [2]एवमुदुम्बरस्य तथाश्वत्थस्य ।

द्विपुष्करे वककतसमिद्वय, कुशग्रन्थि स्थानद्वये बद्ध्वा शतं होमः । एवमुदुम्बराश्वत्थयोः ।

त्रिपुष्करे वैकङ्कत समित्त्रयम् । स्थानत्रये कुशेन बन्धनीयम् । ततः शतं होमः । एवं मुदुम्बराश्वत्थयोः । [3]आज्यस्याष्टशतम् । [4]यमेन दत्त (शु. य. २९ । १३) मिति मन्त्रः । पयसा सोमं राजानमिति मन्त्रेणाष्टशतं होमः । मूर्द्धान (शु. य. ७ । २४) मिति पूर्णाहुतिः । गोधान्यकनकं दक्षिणा ।

---

ख पाठः —

(1) पुनर्वसूत्तराषाढा कृत्तिकोत्तरफाल्गुनी इति अधिकः ।

(2) एवं शतम् अधिकः । (3) ततः इति अधिकः ।

(4) तैरप्यष्टशतम् चरोरप्यष्टशतमित्यधिकः ।

ब्रह्मचर्य्यम् । ब्रह्मणे पूर्णपात्रवरान्यतरदक्षिणेति केचित् । पायसेन ब्राह्मणा भोजनीयाः । शान्तिकरणमच्छिद्रावधारणम्[1] । इति वराहसंहितानुसारेण पुष्करशान्तिः ।

## (स्त्रीकलहादौ शान्तिः)

तथा पूज्यावमाननमपूज्यपूजनं स्वस्वनित्यनैमित्तिककर्मानाचरणं, देवोत्सवनिवर्त्तनं, शान्तिमङ्गलहोमेषु नास्तिक्यं, स्त्रीणामभीक्ष्णकलहः, स्त्रीणां [2]पुरुषवदुद्वर्त्तनम्, अश्लीलभाषणप्राचुर्य्यं, सन्ततामङ्गलवचनं, ब्राह्मणानामतीव पीड़ा, यत्र [3]ब्राह्मणाः शस्त्रपाणयः [4]पूज्यन्ते तत्र देशस्य नाशो नृपवधो वा ।

अत्र शान्तिर्मात्स्ये (२३७। १५. १६) —

एतेष्वभ्यर्च्चयेच्छक्रं सपत्नीकं द्विजोत्तम ।
भोज्यानि चैव कार्य्याणि [A]ब्राह्मणान्नाशयेत्सदा ॥(१५)
गावश्च देया द्विजपुङ्गवेभ्यो भुवस्तथा काञ्चनमम्बराणि ।
होमश्चकार्य्यो [B]द्विजपूजनञ्च एवंकृते शान्तिमुपैति पापम् ॥(१६)

मणिरजतकनकप्रवालवैडुर्य्यनाशे सामान्यशान्तिः ।

## अङ्गस्फुरणपीडकाद्भुतानि

अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् ।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥ (२)

---

ख पाठः —

(1) रुद्रजपः । (2) पुरुषवदवर्त्तनम् । (3) 'वा' इति अधिकः ।
(4) युध्यन्ते तस्य ।

मुद्रित पाठः —

A- सुराणां वलयस्तथा । B- ऽमरपूजनञ्च ।

[A]स्त्रीणां वामे शस्तमप्रशस्तं दक्षिणतः । [B]भूलाभः शिरसि । स्थानलाभो ललाटे । भ्रूनासामध्यतो बन्धुनाशः । अक्षिण भृत्याप्तिः । दृगन्तमध्ययो र्धनाप्तिः । उत्कण्ठा चापि दृगादौ । जयो दृशोऽधःस्फुरणे [1]कर्णे स्पन्दे प्रियश्रुतिः । गण्डयोस्त्रीः सम्पत् । [2]घ्राणे सौगन्ध्यममदौ । अधरोष्ठयोः प्रियाङ्गजौ । कण्ठे गले च भोगवृद्धिः । बाह्वोरिष्टागमः । करयोर्धनाप्तिः । [3]पृष्ठे पराजयः । उरसि जयः । पार्श्वयो र्मोदः । [4]तानि फलानि दक्षिणे शस्तानि । वामे त्वशुभानि बहुदोषाणि । स्त्रीणां विपर्य्ययः ।

---

**ख पाठः –**

(1) कर्णस्पन्दने । (2) घ्राणयोः सौगन्ध्यमदौ ।

(3) उत्कण्ठा चापिदृशोः । इति अधिकः । (4) स्तने विजयलाभः । कट्यां बलमोदौ । नाभौ स्थानहानिः । हृदये क्लेशः । अपाङ्गे वाहनलाभः । शिश्ने स्त्रीलभः…लाभः । वस्तौ युवतिः । ऊर्वोः पृष्ठे दोषः । पुरतः महायुद्धम् । स्वहाय…स्फुरणे सन्धिः । जंघायां देशनाशः । पादोपरि चलद्धनस्थान प्तिः । चरणतले यात्रासु धनाप्तिः । एतानि इति अधिकः ।

**मुद्रित पाठः —**

A- विपर्ययेण विहिता सर्वस्त्रीणां फलागमः । मत्स्यपुराण- २४० । १२

B- अद्भुतसागरे— वसन्तराजः – पृ. ४९१

स्याद् भूमिलाभः स्फुरितेन मूर्द्धिन स्थानप्रवृद्धिश्च ललाटदेशे ।
भ्रूप्राणमध्ये प्रियसङ्गमाय नासाक्षिमध्ये च सहायलाभः ॥
दृगन्तमध्ये स्फुरणेर्थसम्पदुत्कण्ठता स्यात् स्फुरिते दृगादौ ।
जयो दृशोधःस्फुरणे रणे स्यात् प्रियश्रुतिः स्यात् स्फुरिते च कर्णे ॥
योषित्समृद्धिः स्फुरिते च गण्डे घ्राणेन सौगन्ध्यमुदौ भवेताम् ।
भोज्येष्टसङ्गावधरोष्ठयोश्च स्कन्धे गले भोगविवृद्धिलाभो ॥
स्पन्दे भुजस्य प्रियसङ्गमाय स्पन्दः करस्य द्रविणाप्तिहेतुः ।
स्पन्दस्तु पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानवानाम् ॥

## पीडकाः

शीतरक्तपीतकृष्णा द्विजातीनां क्रमाद्भेदेन शुभाशुभसूचकाः।
सुव्यक्तः स्निग्धोत्र फलाय।

शिरसि धनागमः। केशान्ते सौभाग्यम्। ललाटे धनसञ्चयः। भ्रुवोर्दौर्भाग्यम्। [A]नेत्रप्रान्तयोः शोकः। नेत्रयोरिष्टदर्शनम्। शङ्खदेशे प्रव्रज्या। गण्डयोः सुतनाशः। नासावंशे वस्त्रम्। अग्रे सुगन्धिलाभः। चिबुकोष्ठाधरेष्वन्नम्। हन्वोर्धनम्। गले पानमाभरणञ्च। शिरःसन्धौ ग्रीवायां चोपघातं शस्त्रेण। कर्णयोस्तु भूषणमानन्द-श्रुतिः। पार्श्वयोः शोकः। स्कन्धयो भैक्षचर्य्या। कक्षयोरर्थक्षयः। स्तनयोः पुत्रप्राप्तिः। पृष्ठे दुःखशमनम्। [B]बाह्वोरिष्टक्षयः। प्रबाह्वोराभरणम्। पाणौ धनाप्तिः। सौभाग्यमङ्गुलिषु। शोकमुदरे। अन्नपानं नाभौ। चौरभयं मध्यउदरे। अन्नं वस्तौ। सौभाग्यं वृषणे। पुत्राप्तिर्मेढ्रे।

---

मुद्रित पाठः —

भवेच्च पार्श्वस्फुरणे प्रमोदः स्तनप्रदेशे विषयस्य लाभः।
कट्यां भवेतां तु बलप्रमोदौ स्थानस्य हानिः स्फुरितेन नाशः॥
वृद्धिस्तथान्त्रस्फुरणे धनस्य दुःखं धनान्तं हृदयस्य चान्तः।
स्फिक्पार्श्वकम्पे वरवाहनाप्ति र्वराङ्गकम्पे वरयोषिदाप्तिः॥
गुह्यप्रदेशे तनयस्य जन्म वस्तिप्रदेशे युवतिप्रवृद्धिः।
दोषं प्रजल्पन्ति तथोरुपृष्ठे उरोः पुरः स्यात् सुसहायलाभः॥
स्याज्जानुसन्धिस्फुरिते च सन्धि जंघाप्रकम्पेऽपि च लाभनाशः।
स्थानाप्तिरूद्ध्र्वं चरणप्रकम्पे यात्रा सलाभापि तलप्रकम्पे॥

A- नेत्रपुटयोः। पराशरः— अद्भुतसागर - ४९०

B- अरिविनाशो बाह्वोः। पराशरः — अद्भुतसागर - ४९०

स्त्रीलाभो गुदे। सौभाग्यं मानोऽङ्गना चोर्वोः। जान्वोररिभिः पीडा। शस्त्रेण घातः जंघायाम्। गुल्फयोरध्वक्लेशः। पार्ष्णितलयोरगम्या-गमनम्। नियमनमङ्गुलिषु। अङ्गुष्ठे ज्ञातिपूजा। (वराहः)

(पिप्लुफलम्)

तिलकलाञ्छनं पिप्लुनाम पीटकवद् दक्षिणे शुभं वामे त्वशुभम्। स्त्रीणां विपर्ययः। अत्र कथनं शुभफलस्याशुभस्य च। अशुभे ब्राह्मणाय काञ्चनदानम्।

(पल्लिपतनादिफलम्)

पल्ल्याः प्रपाते च फलं सरटस्याधिरोहणे।
शीर्षे राजश्रियोऽवाप्तिर्भाले त्वैश्वर्यमेव च॥
कर्णयोर्भूषणावाप्ति र्नेत्रयोर्बन्धुदर्शनम्।
नासिकायां तु सौगन्ध्यं वक्त्रे मृष्टान्नभोजनम्॥
कण्ठे चैव श्रियोवाप्ति र्भुजयो र्विभवो भवेत्।
धनलाभो बाहुमूले करयोर्धनवृद्धयः॥
पल्याः प्ररोहणे चैव पातने सरटस्य च।
व्यायामश्च फलस्यास्य तद्वदेव प्रजायते॥
पल्याः प्ररोहणं रात्रौ सरटस्य प्रपातनम्।
निधनार्थाय भवति व्याधिपीडा विपर्यये॥
पतनानन्तरं चैव रोहणं यदि जायते।
जायते फलमुत्कृष्टं रोहणेऽल्पफलं भवेत्॥
आरोहणे चोर्द्ध्ववक्त्रे अधोवक्त्रे च पातनम्।
भवेदिष्टतमं तस्य तत्फलं जायते ध्रुवम्॥

स्पृष्टमात्रे तयोः पूर्वं सचेलं स्नानमाचरेत् ।
पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम् ॥
पल्लीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत् ।
पूजयेद् गन्धपुष्पाद्यैस्तदग्रे पूर्णकुम्भके ॥
पञ्चगव्यं पञ्चरत्नं पञ्चामृतसपल्लवम् ।
पञ्चवृक्ष[1]कषायञ्च निक्षिप्यावाहयेत्ततः ॥
पूजयेद् गन्धपुष्पाद्यैः लोकपालांस्ततः क्रमात् ॥

ततश्च—

मृत्युञ्जयेन मन्त्रेण समिद्भिः क्षीरशाखिनाम् ।
तिलैर्व्याहृतिभि र्होममष्टोत्तरसहस्रकम् ॥

## पल्लीरुतफलम्

सूर्य्योदये पल्लीरुते प्राच्याद्यष्टदिक्षु—राजभयं, मृत्युवार्त्ता । शुभमर्थसिद्धिः । आचार्य्यागमः । चौरवार्त्ता । धनागमः । वाञ्छितार्थसिद्धिः ।

**प्रथमयामे—**

प्राच्यादिदिक्षु, अग्निभयम् । मृष्टान्नलाभः । बन्धनागमः । विप्रागमः । शान्तिः । [2]मृत्युः । मित्रागमः । स्वजनागमः । ब्रह्मस्थाने दूतागमः ।

**द्वितीययामे—**

प्राच्यादिदिक्षु, दूतागमः । अग्निभयम् । [3]पुण्यं शान्तिः । द्विजागमः । अर्थहानिः । नृपागमः । अग्निभयम् । वृद्धिः । ब्रह्मस्थाने कलिः ।

**तृतीययामे—**

प्राच्यादिदिक्षु, धनागमः । [4]योगागमः । रक्षा । रौद्रपुरुषागमः । विद्युदागमः । अर्थागमः । रक्षा । ब्रह्मस्थानेऽर्थलाभः ।

---

**ख पाठः—**

(1) कषायांश्च । (2) भृत्यागमः । (3) पुण्यप्राप्तिः । (4) नास्ति ।

**चतुर्थयामे—**

प्राच्यादिषु, धनागमः। सुखम्। परदारागमः। विशेषवार्त्ता। कुमारिकागमः। दूतागमः। प्रियागमः। कन्यालाभः।

**सन्ध्यायां—**

प्राच्यादिदिक्षु सर्वत्रशुभम्।

**रात्रिप्रथमप्रहरे—**

नैर्ऋते कलहः। प्रतीच्यामग्निभयम्। उत्तरे कलिः। शेषे शुभम्।

**रात्रिद्वितीयप्रहरे—**

आग्नेयेऽग्निभयम्। दक्षिणे स्वजनविरोधः। नैर्ऋते रुधिरपातः। शेषे शुभम्।

**तृतीययामे—**

नैर्ऋते मृत्युः। उत्तरे चौरभीतिः। ऐशान्ये भयम्। ब्रह्मप्रदेशे उल्कापाताय। शेषे शुभम्।

**चतुर्थयामे—**

प्राच्यामर्थहानिः। दक्षिणे कलहः। नैर्ऋते व्याधिः। प्रतीच्यां मृत्युः। ऐशान्ये [1]रुद्रभयम्। शेषे शुभम्।

[2]तत्र गोदानादिका शान्तिः।

## प्रसवाद्भुतानि

मानुषाणां त्रिचतुःप्रसूतौ न्यूनाधिककालप्रसूतौ हीनाधिकाङ्गप्रसूतौ सञ्जातश्मश्रुस्थूलस्तनप्रसूतौ बालानां गर्भकाले सपलितसदशन चतुरक्षद्विशीर्षजनने पशुपक्षिसरीसृपजनने देशोत्सादः, कुलनाशः, नृपवधश्च।

खरवृषोष्ट्राश्वसूकरगर्दभराक्षसजनने त्रिवर्षपर्य्यन्तं दुर्भिक्षमरकानावृष्टि राजवधाः।

---

**ख पाठः —**

(1) रौद्रभयम्। (2) अत्र किमिच्छक।

स्त्रीणामब्दद्वयं गर्भधारणं कुलदेशनाशाय।

अमानुषस्त्रीणां मानुषजनने परस्परं विजातीयं गौरश्वं बड़वा महिषी शृगालं कुक्कुरं शुकं वायसं द्विशीर्षं द्विपुच्छं त्रिशृङ्गं अशृङ्गं सशृङ्गं व्याहरन्तं वा यदि जनयेत् नृपवधः। जङ्गमात् स्थावरजनने स्थावरात् जङ्गमजनने वा परचक्रागमः।

**"बडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते।**

**[A]विजातिं विकृतं वापि षण्मासे म्रियते नृपः॥"**

जातमात्राणां हसननृत्यगायनेषु षण्मासे नृपवधः। अशीर्ष-बहुशीर्ष-त्रिशृङ्गैकशृङ्गत्रिचतुर्भुजदीर्घकर्णमनुजश्वापदव्यालमार्जारमृगमुख-मनुष्यजनने घोरः संग्रामः।

**भानौ सिंहागते चैव यस्य गौः संप्रसूयते।**

**मरणं तस्य निर्दिष्टं षड्भिर्मासै र्न संशयः॥**

तथा गर्भस्याष्टमे स्त्रीप्रसवे उत्पातः।

तथा—

**गवा प्रसूयते भाद्रे हस्तिन्या कर्कटेऽपि च।**

तदा महद्भयम्।

अत्र—

**फलं न दुष्टगर्भाणां मातृगर्भविवासनात्।**

**विकृतः प्रसवैः सार्द्धं स्त्रियं देशाद् बहिर्नयेत्॥**

इति वचनात् परराज्ये स्त्रियं गर्भं च नीत्वा पश्चात् शान्तिः।

**यत्र गर्भविपर्यासो मानुषीणां गवामपि।**

**अद्भुतानि प्रसूयन्ते तत्र देशस्य विप्लवः॥**

(मयूरचित्रे)

---

मुद्रित पाठः —

A- बिजातं विकृतं वापि षड्भिर्मासैर्म्रियेत वै। विष्णुधर्म - २।१४१।१

अत्रापि द्विविधा शान्तिः कार्य्या पञ्चदशी बुधैः ।

पञ्चदशी शान्ति र्यथा मात्स्ये - २३४ । ४

निर्वासयेत्तां नृपतिः स्वराष्ट्रात् स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।

[A]किमिच्छकै र्ब्राह्मणतर्पणैश्च लोके ततः शान्तिमुपैति पापम् ।

किमिच्छकै रिति ब्राह्मणानाहूय यस्य यस्मिन् द्रव्ये दारिद्र्यं ये वा यदिच्छन्ति विभवानुसारेण तस्मै तद्देयम् । संकल्पः, पूजनम् । ब्राह्मण-भोजनञ्च । सिंहप्रसूता गौर्ब्राह्मणाय देया ।

दन्तजन्माद्भुतानि

उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।

दन्तैर्वा सह जन्म स्याद् यस्य भार्गवसत्तम ॥ (१११)

मातरं पितरं वाथ खादेदात्मानमेव च ।(२।५२।११२)

अत्र शान्ति विष्णुधर्मोत्तरे (२ । ५२ । ११३) —

'[B]गजपृष्ठगतं नौस्थं काञ्चने वा वरासने ॥"

बालक सर्वगन्ध-सर्वौषधिबीजपुष्पफल-पञ्चगव्य-पञ्चरत्न-सप्त-मृत्तिकाभिः स्नापयेत् । स्थालीपाकं प्राशयित्वा धातृदैवतमन्त्रेण धात्रे स्वाहेति वा शतं सहस्रं वा होमः। होमानन्तरं सप्तदिनपर्य्यन्तं ब्राह्मण-भोजनमेकैकं कर्त्तव्यम् । अष्टमेहनि होमसम्बन्धिनोराचार्य्यब्रह्मणोः सप्तदिन-भुक्तवतां च विप्राणां दक्षिणा देया । तथा बालानां अष्टमे षष्ठे दशमे वा दन्तजन्मनि मातापित्रोर्मृत्युः । [1]बालस्य च पीडा ।

---

ख पाठः —

(1) बालकस्य ।

मुद्रित पाठः —

A- कस्येच्छकै र्ब्राह्मणतर्पणं च ।

B- गजपृष्ठगतं बालं नौस्थं वा स्थापयेद् द्विज ।

तदभावे तु धर्मज्ञ काञ्चने तु वरासने ॥ ११३

दधिमधुघृताक्तानामश्वत्थसमिधां ततः ।
जुहुयादष्टशतं प्राज्ञः सावित्र्या चैव मन्त्रवित् ॥
धेनुं च दक्षिणां दद्यात्ततः सम्पद्यते शुभम् ।

अथवा गोभूमिहिरण्याद्यात्मिका भौमसामान्य शान्तिः ।

इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे
भौमाद्भुतानि ।

## अथ [1]सामान्यशान्तयः

भार्गवीये—

सावित्र्या लक्ष[2]होमे तु भौमे दृष्टे विशारदाः ।
दद्युर्दयञ्च दानानां विप्रेभ्यो यस्य यत् प्रियम् ॥
गोभूमिकाञ्चनाश्वानां रत्नानां धान्यवाससाम् ।
रथानां वारणानाञ्च प्रदानात् कामतः परम् ॥
तुष्येयुर्येन वा विप्राः संभवो यस्य यस्य हि ।
तत्तत्सर्वमुपादेयमेष दानविधिः स्मृतः ॥
दद्याच्च गुरवे ग्रामं धेनुं वासोयुगं तथा ।
अलंकारैश्च संपूज्य प्रीणयेत् प्रीतमानसः ॥
अनेन विधिना भौममुत्पातं शमयेद् गुरुः ।

गुरुश्चात्र राज्ञः पुरोहितः । अन्येषां शान्तिकर्मोपदेष्टा । ग्रामदानं राज्ञो घोरोत्पाते । गो भूम्यादीनां —— लघुगुरुफलापेक्षया विकल्पः । समुच्चयोऽपि क्वचित् । भौमशब्दस्य सर्वनामार्थे तद्धितोपात्तेः सर्वनाम्नो [3]बुद्धिस्थवाचकत्वाद् विशेषरूपेणैवास्य विधायकत्वमिति विशेषशान्तिभिः सहास्य समविकल्पत्वम् । क्वचिच्च विशेषशान्तिविधायकस्य संदिग्धार्थत्वेन

---

ख पाठः —

(1) भौम । (2) होमश्च । (3) बुद्धिस्थविशेषवाचकत्वात् ।

दुर्बलत्वेन सामान्यशान्तिरेव बाधिका। गुणाधिकरणे वाजिभ्य इत्यस्य चतुर्थी पञ्चमी सन्देहाद्वैश्वदेवीति बुद्धिः ।तस्य निःसन्दिग्धदेवतापरत्वाद् बलवत्त्वम्। बलाबलाधिकरणे चोक्तं संदिग्धमसन्दिग्धेन बाध्यत इति । विशेषशान्तिषु च। प्रसवाद्भुताधिकारोक्त–नारदोक्तेतिकर्त्तव्यता सर्वत्र सम्बध्यते। न च सन्निधानान्नारदोक्तप्रसवाद्भुतशान्तिमात्रे तस्याः सम्बन्ध इति वाच्यम्। सन्निधिं बाधित्वा वाक्येन सर्वशान्त्यर्थत्वावगमात्।

"आत्मशुद्धिं ततः कृत्वा सर्वहोमं समाचरेत्।"

इति सर्वशब्दस्य प्रकृतहोमेनान्वयात्। तथा विश्वजितः सर्वपृष्ठो भवतीति-सर्वशब्दोऽतिदेशप्राप्तिसन्निहित बृहद्रथन्तरद्वयेऽसम्भववृत्तिः। षाडहिक पृष्ठ्य षटकपर इति सप्तमे स्थितम्। सा चैवम्।

स्नानं कृत्वा शुचिर्भूत्वा जपित्वा मन्त्रमेव च।
येन मन्त्रेण होतव्यं तन्मन्त्रञ्च तथा जपेत्॥
[1]शतावर्त्तेन मन्त्रेण पत्रं वा श्रीफलस्य च।
जुहुयात् स शिवार्थं तु एवं रक्षाकृता भवेत्॥
अष्टोत्तरशतं चैव गायत्र्या जपमुत्तमम्।
आत्मशुद्धिं ततः कृत्वा सर्वहोमं समाचरेत्॥
ससुवर्णेन हस्तेन शुद्धात्मा संशितव्रतः।
परञ्च तारयेद् विप्र आत्मानञ्च विधानवित्॥
शान्तिकञ्च जपेद् विप्र इदं विष्णुर्विचक्रमे।
सहस्रशीर्षेति मन्त्रं जपेत् पौष्टिकशान्तये॥
शान्त्यर्थञ्च समुत्पाद्या एता ओषधयः क्रमात्।
श्यामाकञ्च शमीञ्चैव वल्मीकस्य च मृत्तिकाम्॥

---

ख पाठः –

(1) शतावर्त्तन।

श्वेतसर्षपसंयुक्तां दूर्वामुत्पादयेत् द्विजः ।

अश्वत्थत्वक्समायुक्तं वटं वै वेतसं तथा ॥

श्यामलतां सुवर्णञ्च प्रियङ्गुं चार्कमेव च ।

कुम्भं चोदकसंयुक्तं सर्वैरेतैः समन्वितम् ।

ऐशान्यां दिशि शान्त्यर्थं स्थापयेत सुसमाहितः ।

चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ॥

एता वै तिथयः पुण्याः शुभान्यद्भुतशान्तये ।

अयमर्थः —

होमारम्भात् पूर्वं स्नात्वा गायत्र्याष्टोत्तरशतं जपित्वा येन होतव्यं तस्याप्यष्टोत्तरशतजपः । जपित्वा मन्त्रं तमेव चेत्यस्यैव गायत्र्या जप उत्तम इति विवरणम् । ततः शान्तिहोमस्य । ततो शान्तिमन्त्रस्य धनमन्त्रेण बिल्वपत्राष्टोत्तरशतहोमः । एतावत् पूर्वं कृत्वा चतुर्थ्यष्टमी द्वादशी चतुर्दश्य-यतरतिथौ होमारम्भः । होमकाले च कश्चिद् विप्र 'इदं विष्णुः' 'सहस्रशीर्ष'ेति जपेत् । एवं जापकवरणं कर्त्तव्यम् । होमात् प्राक् पूजानन्तरं ऐशान्यां श्यामाकादियुक्तकलशस्थापनम् । होमकाले [1]नियतं ससुवर्णत्वम् । सहस्रस्य इति सकलोत्पातशान्तिहोमसाधारणविधिः । अथवा छन्दोगपरिशिष्ट विधिर्वा सर्वाद्भुतेषु कर्त्तव्यः ।

छन्दोगपरिशिष्टे —

अथातो रजस्वलाभिगमने गोश्वाभार्यायमलजनने काक-कङ्कगृध्रश्येनकपोतानां गृहप्रवेशने मानुषोपरि विश्रामणे वा एतेषा-मेव क्रियमाणे गृहद्वारावरोहणेऽन्येष्वद्भुतेषु कल्पदृष्टेन विधिना अग्निमुपसमाधाय प्रायश्चित्ताज्या हुतीर्जुहोति । अद्भुताग्नयेस्वाहा,

ख पाठः —

(1) नियमेन ।

सोमाय रुद्राय वायवे विष्णवे मृत्यवे विश्वेभ्यो देवेभ्य. स्थालीपाका-वृतान्यत् । पश्चात् पायसेन ब्राह्मणान् भोजयित्वा गौर्वरं दत्वा शान्तिर्भवति । यस्तेषामन्यतमापन्नः प्रायश्चित्तं न कुर्य्याद् गृह-पतिमरणं सर्वस्वनाशो वा भवति कर्मापवर्गे वामदेव्यं शान्तिः ।

कल्पदृष्टेन विधिनेति । कल्पः स्वगृह्यम् । ज्यायान् देवकल्प विधि-प्राप्तेः कल्पग्रहणम् । शाखान्तरीयाणामपि स्वस्वकल्पसूत्रानुसारेणाधिकार-प्राप्त्यर्थम् । स्थालीपाकेनेति । आज्याहुतिहोमानन्तरं ताभ्य एव देवताभ्यः पायसचरोः सप्ताहुतिहोमः । गौर्वरमिति । अलुक् समासः । गोरूपवरो दक्षिणा ।

वसिष्ठकल्पे—

दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शने<br>
गृहमध्येऽग्निमाधाय श्रपयेत् पायसं चरुम् ।<br>
तेनैव जुहुयादग्नौ मन्त्रेणानेन संयुतः ॥<br>
तिलोदकं वा जुहुयात् शुद्धोदनमथापि वा ।<br>
अष्टोत्तरशतं मन्त्री जुहुयाद् गोघृतेन वा ॥<br>
पलाशखदिराश्वत्थबिल्वन्यग्रोधसम्भवैः ।<br>
अपामार्गसमिद्भिर्वा जुहुयादथ वा तिलैः ॥<br>
आगामिनां फलानां तु विज्ञानार्थं हि देवताः ।<br>
निमित्तान् दर्शयन्त्यग्रे भूतानां हितकाम्यया ।<br>
तस्मात्फलानि विज्ञाय स्वप्नोत्पातादिभिर्बुधः ।<br>
एवं शान्तिं प्रकुर्वीत त्रयीसारेण यत्नवः ॥

मत्स्यपुराणोक्त—

अयुतहोमो भौमेषु । लक्षहोमो नाभसेषु । कोटिहोमश्च दिव्येषु ।

तथा ब्रह्मपुराणोक्तं नवग्रहदानम् । त्रिविधोत्पातनाशनम् । तच्च पूर्वमेवोक्तम् ।

मन्त्रराजाधिकारे प्रपञ्चसारे (२५ । २१. २२) –

[1]दूर्वात्रिकैरष्टसहस्रसंख्यैः, राराध्यमन्त्रो जुहुयाद्यथाप्सु ।

शान्तिं प्रयान्त्येव तदोपसर्गा, आपो हि शान्ता इति च श्रुतिः स्यात् । (२१)

उत्पाते सति महति ह्युपद्रवाणाम् ।

होमोयं भवति च शान्तिदो नराणाम् ॥ (२२)

नृसिंहाभिषेककर्मापि त्रिविधोत्पातनाशनम् ।

देवीमहात्म्याधिकारे मार्कण्डेयपुराणे (८९ । ७)–

तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ।

तेनाद्भुतगुरुलाघवमवेक्ष्य देवीमाहात्म्यस्यावृत्तिः शतादिका ।

मयूरचित्रे साधारणी शान्तिः –

तत्र तत्र च या प्रोक्ता शान्तिः साधारणीति च ।

इदानीं वक्ष्यते सैव लोकानां हितकाम्यया ॥

व्याधिवृष्टिरिपुप्राप्तिदुर्भिक्षमरकादिषु ।

राजपीडा सुराप्येषु शान्तिः सुरगुरूदिता ॥

औदुम्बरीणां समिधां जुहुयात्तु शतं शतम् ।

मधुक्षीरघृताक्तानामेतैर्मन्त्रगणैस्तथा ।

हुत्वा शतसहस्रं तु ततः शान्तिः कृता भवेत् ॥

भूमिकम्पदिग्दाह केतुसूर्य्यसुच्छिद्र विपरीतस्रोतस्त्वादीन् कांश्चिदुत्-

पातानुक्त्वा ।

---

ख पाठः –

(1) दूर्वातिले ।

देवीपुराणे—

[A]सूर्यस्याभ्यर्च्चनं कार्य्यं शिवस्याशुभनाशनम् ।
लक्षहोमं महाहोमं कोटिहोमं पुरोदितम् ।
गोभूहिरण्यवस्त्रान्नतिलदानं शुभावहम् । (५५ । १६)
पायसं दधि क्षीराज्यं देयं नैवेद्यमुत्तमम् ॥(५५ । १७)

तथा—

गोदोहं रुद्रभवने महास्नानं शुभावहम् ।

नृसिंहपुराणे (३४ । ५३)—

दुःस्वप्नदर्शने घोरे ग्रहपीडासु चात्मनः ।
[B]हसन्तीं प्रतिमां दृष्ट्वा चलन्तीञ्च विशेषतः ॥
प्रस्वेदयुक्तां प्रतिमां दृष्ट्वा च नृपनन्दन ।
तथा महाज्वरग्रस्ते धारां देवस्य मूर्द्धनि ॥
सुतरां नरसिंहस्य कुर्य्याद्वा कारयेद् द्विजैः ।
होमं च भोजनं चैव तस्य दोषः प्रशाम्यति ॥ (५३)

---

मुद्रित पाठः —

A- भूमिकम्पो दिशांदाहो ग्रहयुद्धं च जायते ।
गगने दृश्यते केतुरादित्यश्चैव कम्पते ॥ ११
आदित्याज्जायते छिद्रं कृष्णवर्णो हि जायते ।
विपरीतं नदीश्चैव रुधिरं च प्रवाहयेत् ॥ १२
शिला वा प्लवते यत्र रविर्मध्ये यदा क्वचित् ।
गगनात् श्रूयते दिव्यं निर्घातश्चैव जायते ॥ १३
× × × × × × × ×
गृहे गृहे भवेच्छान्ति र्मातॄणां पूजनं बलिः ।
दानं रुद्रं जपेन्नित्यं भास्करेज्या ग्रहार्चनम् ॥ देवीपुराण - ५५ । १५

B- हसन्तीमित्यारभ्य द्विजैरित्यन्तं, मुद्रितपुराणे नास्ति ।

सर्वोत्पातेषु मृतवत्साभिषेकविधिना वाभिषेकः कार्य्यः ।

सचैवं मत्स्यपुराणे ।

## (मृतवत्साभिषेकविधिः)

मृतवत्सायाः सुते जाते सप्तमे मासि अन्यदापि शुक्लसप्तम्यां चन्द्रताराानुकूले, स्वस्तिवाचनम् । सङ्कल्पः । जन्मकालस्य तिथिवारनक्षत्रदेवतापूजनम् । आचार्य्यब्रह्मवरणम् । अग्निमुपसमाधाय रक्तशालितण्डुलैर्गोपयसि चरुः । चरोः सूर्य्यमन्त्राभ्यां सूर्य्यचन्द्रयोराहुतिद्वयहोमः । सूर्य्यदैवतसप्तर्चस्य जपः । सप्तर्चेन सप्तघृताहुतिहोमः । रुद्रसूक्तजपः । रुद्रसूक्तेन प्रत्यृचं घृताहुतिहोमः । रुद्रसूक्तेनैव प्रत्यृचमर्कसमिद्धोमः । व्याहृतिभिर्यवकृष्णतिलाष्टशतहोमः । आज्यादष्टशतहोमः । स्विष्टकृदादि प्राजापत्यन्तम् ।

कोणेषु तीर्थतोयपूर्णास्त्रिजलदध्यक्षत—सर्वौषधिपञ्चरत्न—पञ्चदलगजाश्वरथवल्मीकप्रदेशह्रदगोकुलसंगममृत्तिकायुक्त वस्त्रवेष्टितकुम्भ—चतुष्टयस्थापनम् ।

मध्यकुम्भस्य सौरसप्तर्चेनाभिमन्त्रणम् । सौरसप्तर्चेन मध्यकुम्भजलस्याग्नेयादिचतुःकुम्भेषु विभज्य पूरणम् । पुनश्चतुर्णां कुम्भानां सौरसप्तर्चेन प्रत्येकमभिमन्त्रणम् । सप्तनारीणां वस्त्रमाल्यैः पूजनम् । ताभिः सहाचार्य्य आग्नेयादिकुम्भैरनेन मन्त्रेण बालकसहितां मृतवत्सामभिषिंचेत् ।

**दीर्घायुरस्तु बालोऽयं जीवपुत्रा च भाविनी ।**
**आदित्यचन्द्रमाःसार्द्धं ग्रहनक्षत्रमण्डलैः ॥**
**शक्रः सलोकपालोऽयं ब्रह्मविष्णुमहेश्वराः ।**
**एते चान्ये च देवौघा सदा पान्तु कुमारकम् ।**
**मात्राशनिर्मा हुतभुङ् मात्र बालग्रहाः क्वचित् ।**
**पीडां कुर्वन्तु बालस्य मातुश्च जनकस्य च ॥**

अयं मन्त्रश्चतुर्षु कुम्भेष्वावर्त्तनीयः । पतिपुत्रयुक्ता स्त्रीसप्तकं पूजयेत् । मृतवत्सा शुक्लमाल्याम्बरधरा आचार्य्यञ्च । तिलपात्रोपरिस्थितकाञ्चनधर्मराजप्रतिमां गुरवे दक्षिणां

दद्यात् । ब्रह्मणे च यथाशक्ति । वस्त्रकाञ्चनाद्यैः संपूज्य घृतपायसेन ब्राह्मणत्रयभोजनम् । गुरवे घृतपायसप्रधानं भोज्यम् ।

गुरुश्च भुक्त्वा वदेत्—

**दीर्घायुरस्तु बालोऽयं यावद् वर्षशतं समम् ।**
**यत्किञ्चिदस्य दुरितं तत् क्षिप्तं बड़वानले ॥**
**ब्रह्मा रुद्रो वसुः स्कन्दो विष्णुर्देवो हुताशनः ।**
**रक्षन्तु सर्वदुष्टेभ्यो वरदाः सन्तु सर्वदा ।**

गुरुं पूजयित्वा कपिलादानम् । पुत्रसहिता रविशङ्करौ प्रणम्य । 'आदित्याय नमोऽस्तुते' इति मन्त्रेण हुतशेषचरुं प्राश्नीयात् । उत्पातेषु च यस्य उत्पातफलं सोऽभिषिच्यते । मन्त्रश्च ऊहनीयः ।

'दीर्घायुरस्तु बाल' इत्यत्र बालपदस्थाने मर्त्त्योऽयमिति मर्त्त्यपदं कुमार-पदस्थाने सदा पान्तु च मानवमिति चोह्यम् ।

## (विनायकशान्तिः)

विनायकोपसर्गे वैनायकी शान्तिः ।

ते च—

**स्वप्ने वगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ।**
(याज्ञ — १ । २७२)
**काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥**
**अन्त्यजै गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते । (१ । २७३)**
**व्रजन्तश्च तथात्मानं मन्यतेऽनुगतं परैः ॥**
**विमना विफलारम्भः संसीदत्यनिमित्ततः । (१ । २७४)**
**तथान्तरिक्षे प्राच्छन्नं जनं स्वं चापि मन्यते ।**
**अद्भिः पश्यति गोर्वापि कर्दमे वापि सीदति ॥**
**तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।**

**कुमारी न च भर्त्तारमपत्यं गर्भसंयुता ॥**

**(याज्ञ — १ । २७५)**

**आचार्य्यत्वं श्रोत्रियश्च न शिष्योध्ययनं तथा ।**

**वणिग् लाभं न चाप्नोति कृषिं चैव कृषीवलः ॥**

**(याज्ञ — १ । २७६)**

शान्तिः। शुक्लपक्षचतुर्दश्यां गुरोर्वारे प्रारम्भः। स्वस्तिवाचनम्। संकल्पः। आचार्य्यवरणम्। ह्रदजलपूरितैकवर्णकलश चतुष्टय स्थापनम्। तत्र अश्वस्थान-गजस्थान-वल्मीकनदीसंगम- ह्रदसम्बन्धिमृत्तिकाप्रक्षेपः। रोचनागन्धगुग्गुलुप्रक्षेपश्च। सर्वौषधिसर्वगन्धहिरण्यव्रीहियवप्रक्षेपो वैकल्पिकः। यजमानस्य साज्यगौरसर्षपकल्केन उद्वर्त्तनम्। शिरसि सर्वगन्धविलेपनम्।

मुरामांसी वचाकुष्ट [1]शैलज हरिद्राद्वयचम्पकमुस्तकानि सर्वौषधिः। कुंकुमागुरु कर्पूर कस्तूरीजातिफलानि सर्वगन्धः।

कलशमध्ये रक्ते आनुडुहे चर्मणि भद्रासनस्थापनम्। भद्रासने यजमानस्योपवेशनम्। ब्राह्मणैः स्वस्तिवाचनम्। प्रतिकुम्भं सहस्राक्षेण मन्त्रेणाचार्यः स्नापयेत्।

**सहस्राक्षं शतधारमृषिभिः पावनं कृतम्।**

**तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते।**

**(याज्ञ — १ । २८१)**

**भगं ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः।**

**भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो [2]विदुः ॥**

**(याज्ञ — १ । २८२)**

**यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि।**

---

**ख पाठः —**

(1) शैलेय। (2) ददुः।

**ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा ॥**

(याज्ञ — १ । २८३)

स्नानान्तरं यजमानस्याहतवस्त्रपरिधानम् । आचार्य्यस्याग्निस्थापनम् । आघाराद्याज्यभागान्तमग्नौ कर्म । वामहस्तेन केशान् धृत्वा यजमानशिरसि सार्षपतैलेनौदुम्बरस्रुवेण होमः। मित्राय स्वाहा । संमिताय स्वाहा । शालाय स्वाहा । कटंकटाय स्वाहा । कुष्माण्डाय स्वाहा । राजपुत्राय स्वाहा । भूरादि प्राजापत्यान्तमग्नौ । चतुष्पथे बलिः । मन्त्रादिना अद्भिः षट् षट् बलयः । बलिद्रव्याणि शूर्पे कुशानास्तीर्य्य स्थाप्यानि ।

**कृताकृतांस्तण्डूलांश्च पललौदनमेव च ।**

**मत्स्यान् पक्वांस्तथै[A]वान्यान्मांसमेतावदेव तु ॥**

(याज्ञ — १ । २८७)

**पुष्पं चित्रं सुगन्धञ्च सुरांञ्च त्रिविधामपि ।**

**मूलकं पूरिकापूपांस्तथैवेण्डरिकास्रजः ॥**

(याज्ञ — १ । २८८)

**दध्यन्नं पायसञ्चैव गुडपिष्टं समोदकं ।**

(याज्ञ — १ ।२८९)

तथाम्बिकोपस्थानम् । दूर्वासर्षपपुष्पैः पूर्णाञ्जलिनार्घदानम् ।

**रूपं देहि यशो देहि भगं [B]भगवन् देहि मे ।**

याज्ञ — १ । २९१

शुक्लाम्बरधरो गन्धमाल्यगन्धधरो ब्राह्मणान् भोजयित्वा गुरवे वस्त्रयुग्मं दक्षिणां ब्रह्मणे च किञ्चिद्दद्यात् ।

इति विनायकशान्तिः[C] ।

---

**मुद्रित पाठः —**

A- वामान् । B- भवति ।

C- देवीपुराणे ६९ अध्याये गणयागो वर्त्तते ।

## अथ ग्रहपूजा

सर्वभयेषूत्पातादिषु कर्त्तव्या। ताम्रनिर्मिता सूर्य्यमूर्त्तिर्मधुकुम्भे स्थाप्या। रौप्येण सोमो घृतकुम्भे। ताम्रजो भौमो दधिकुम्भे। सौवर्णो बुधः क्षीरकुम्भस्थः। सौवर्णो गुरुः क्षीरकुम्भस्थः। रूप्यजः शुक्रः सर्पिःकुम्भे। लोहजः शनिः तैलकुम्भे। त्रपुमयो राहुः तैलकुम्भे। सीसमयः केतुः तैलकुम्भे। एवं स्थापयित्वा स्वस्वमन्त्रैः स्वस्ववर्णगन्धपुष्पाद्यैः पूजयित्वा विसर्जनम्।

अथवा—

चित्रपटे स्वर्णेन लिखित्वा पूजनीयाः। पूजामात्रादेव दोषशान्तिः।

## (मातृशान्तिः)

अथवा—

ब्राह्म्यादिमातरः सुवर्णेन रूप्येण ताम्रेण वा घटयित्वा नानोपहारैः पूज्याः।

पूजितास्ता ग्रहदैवोत्पातादिदोषं शमयन्ति।

## (शिवस्य कुम्भाभिषेकः)

अथवा गणेशवृषसहितं शिवलिङ्गं कारयित्वा तस्यायुतकुम्भाभिषेकः सर्वशान्त्यर्थः। हेमरजतताम्रकुम्भानां पूर्वं पूर्वं महाफलम्। अत्रायुतकुम्भाभिषेकपर्यन्तं कर्त्ता क्षीराहारः स्यात्। त्र्यम्बकमन्त्रेणाभिषेकः। दोषाल्पत्वे शतं सहस्रं वा कुम्भाः। "शिवोऽभिषेकसंतुष्ट" इति सामान्यशास्त्रात्।

इति देवीपुराणोक्ता विविधा शान्तिः।

## अविरुद्धाद्भुतानि

(बृहत्संहिता ४५। ८३, ८४)—

वज्राशनिमहीकम्पसंध्यानिर्घातनिःस्वनाः।
परिवेशरजोधूमरक्तार्कास्तमनोदयाः॥ (८३)

द्रुमेभ्योऽन्नरसस्नेह [A]मधुपुष्पफलोद्गमाः ।
गोपयि[B]मृगवृद्धिश्च [C]शिवानि मधुमाधवे ॥ (८४)
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनस्फोटं धूमरेण्वनिलाहतम् ॥ (८५)
रक्तपद्मारुणां सन्ध्यां नभः क्षुब्धार्णवोपमम् ।
सरितां चाम्बुसंशोषं दृष्ट्वा [D]ग्रीष्मं शुभं वदेत् ॥(८६)
शक्रायुधपरीवेशविद्युत्शुष्कविरोहणम् ।
कम्पोद्वर्त्तनवैकृत्यं हसनं दरणं क्षितेः ॥ (८७)
[E1]नद्युदपान सरितां वृद्ध्युत्तरणसंप्लवाः ।
सरणं चाद्रिगेहानां वर्षासु [F]शुभमिक्ष्यते ॥ (८८)
दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनं च दिवाम्बरे ॥ (८९)
गीतवादित्रनिर्घोषो वनपर्वतसानुषु ।
शस्यवृद्धि [G]रसोत्पत्तिः शरत्काले शुभाः स्मृताः ॥(९०)
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥ (९१)

---

ख पाठः—

(1) नद्युदपान ।

मुद्रित पाठः —

A- बहुपुष्प । B- मदवृद्धि । C- शिवाय । D- ग्रीष्मे ।

E- सरोनद्युदपानानां वृद्ध्यूर्द्ध तरणप्लवाः । F- न भयावहम् ।

G- रपां हानिरपायाः शरदि स्मृताः ।

दिशो धूमान्धकाराश्च सनभोवनपर्वताः ।
उच्चैः सूर्य्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥(६२)

हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ।
कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥ (६३)

चित्रगर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥ (६४)

Aतथा—

वृक्षेभ्यो रसनिःस्यन्दः पक्षिणां सततं रवः ।
घोररात्रो मृगाणाञ्च वाते गन्धस्य विक्रियाः ॥

सुरभित्वञ्च पवने वसन्ते नैव दूषणम् ।
ग्रीष्मे ग्रहर्क्षनैर्मल्यं शोषणं सरितामपि ॥

रूक्षनीचानिलत्वञ्च संन्ध्ययोरभिरक्तता ।
प्रधूमनञ्च चैत्यानां दिशां चापि न दूषणम् ॥

वर्षासु चित्रेन्द्रधनुर्दण्डश्च परिशीलता ।
प्रतिसूर्य्योप्यशन्युल्कानिर्घाता दहनं दिशाम् ॥

गन्धर्वनगरं कीटदंशा समशका मुहुः ।
जलाशयेषु सत्त्वानां वैकृत्यं भुजगेषु च ॥

ननाशीर्षत्वमम्भःसु गाधागाधविपर्ययः ।
निशीन्द्रचापः स्रोतःसु प्रतिस्रोतस्त्वमेव च ॥

प्राकाराट्टतरूणाञ्च दृढानां पतनं तथा ।
क्षितेर्विवरणञ्चैवानुप्तबीजप्ररोहणम् ॥

---

मुद्रित पाठः —

A- विष्णुधर्मोत्तरे २। १३४ अध्याये अयं विषयोस्ति नतु एते श्लोकाः ।

उन्मज्जनञ्च कूपादौ वर्षासु न विरुध्यते ।
शरदि सर्वताराणां दिवा दृष्टिरदूषणम् ॥
हेमन्ते शिशिरे चापि तमोनीहारदर्शनम् ।
रजोभिराशावरणं नभसश्चाप्रसादनम् ॥
विकृतानाञ्च भूतानां दर्शनं वचनानि च ।
आरण्यानां मृगाणाञ्च ग्रामेष्वपि च दर्शनम् ॥
पक्षिणां परुषा वाचः प्रभामान्द्यं विभावसोः ।
एतान्यृतुस्वभावेन शान्तिरत्र न विद्यते ॥

अत्र च —

[A]अद्भुतेषु च सर्वेषु यदि वृष्टिः शिवा भवेत् ।
सप्ताहाभ्यन्तरे जातमद्भुतं निष्फलं भवेत् ॥

इति वचनाद् वृष्टौ सत्यां दोषाभावात् शान्तिरत्र न कार्य्या। इति केचित्। अन्ये तु। ये वृष्टिनिमित्तत्वेन श्रूयन्ते तेषु वृष्टौ सत्यां दोषाभावो न सर्वेषामित्याहुः ।

तथा मयूरचित्रे—

परिवेशः शक्रधनुर्भूकम्पः प्रतिसूर्य्यकः ।
वर्षासु सर्वदा ते स्युरन्यर्त्तौ तु भयावहाः ॥

इति वस्तुतो बार्हस्पत्ये सर्वानुत्पाताननुक्रम्य ।

उत्पाताः सर्व एवैते कदाचिद्राजमृत्यवे ।
ज्ञेया [B]राज्यविनाशाय राष्ट्रो[C]रागमनाय च ॥

---

ख पाठः —

A- अद्भुते च समुत्पन्ने — विष्णुधर्म - २ । १३४ । ११

B- देश । C- रागमवाचकाः — अद्भुतसागर - ७९१

**कीलाम्बुधिपरीवेशग्रहाणामुदयाय च ।**

सर्वेषां वृष्ट्यर्थत्वमस्ति । तथा च [1]वृष्ट्यर्थमुपक्षीणानां दानानि दोषान्तरसूचकत्वम् । ग्रहणसूचकानामिवेति । वृष्टौ सत्यां शान्तिकरणम- [2]प्रमाणकत्वम् ।

तथा—

**दिव्यान्तरिक्षक्षितिज उत्पातः समुपस्थितः ।**
**सप्ताहाभ्यन्तरे [3]वृष्टाविवाल्प श्चोपशाम्यति ॥**

इति वचनात् वृष्टौ सत्यामिवेति [4]देशशब्दोपलक्षितशान्तिसमुच्चयेऽल्प दोषशान्तिरिति प्रतीतेः । तद्यथा च शब्दवैयर्थ्यापत्तेः ।

**पराशरेण च —**

**शमयन्त्या सप्ताहात् भूकम्पादिकृतं निमित्तमाश्वेव ।**
**अभिवर्षणोपवासव्रतदीक्षाजप्यहवनानि ।**

इति वृष्टेरुपवासादिभिः समुच्चयकथनात् वृष्टौ सत्यां दोषशमनं भवति । तेन शान्त्यभावत्वमल्पशान्त्यापि दोषनिर्हरणम् । वृष्ट्यभावे महाशान्तिरिति प्रागूवृष्टावपि शान्ति-समाचारः ।

इति अग्निचिद्वाजपेयिनरसिंह-विरचिते नित्याचारप्रदीपे
समाप्तान्यद्भुतानि ।

**समाप्तं मध्यमयामद्वयकृत्यम् ।**



---

**ख पाठः —**

(1) वृष्ट्यर्थमुपक्षीणानां न । (2) मप्रमाणकम् ।
(3) वृष्टाविनाल्प । (4) संज्ञाशब्दोपलक्षित ।

(रात्रिचतुर्थप्रहरकृत्यम्)

# हठयोगः

प्रकृतमनुसरामः। **रात्रेश्चतुर्थप्रहरे योगाभ्यासः कार्यः।** अत्र हठयोगं विना नैव राजयोगः प्रसिद्ध्यतीति प्रथमं हठयोगो निरूप्यते। हठो नाम बलादेव पवनचित्तयोर्निरोधः। **हठप्रदीपिकादत्तात्रेय-** मतनुसारेण लिख्यते।

**मेदःश्लेष्माधिकः पूर्वं षट्कर्माणि समभ्यसेत्।**
**धौति र्वस्तिर्नेतिश्चैव ताटकं नौलिकं तथा।**
**कपालभातिश्चैतानि षट्कर्माणि प्रचक्षते॥**
**चतुरङ्गुलिविस्तारं सिक्तं वस्त्रं शनैर्ग्रसेत्।**
**ततः प्रत्याहरेत्तस्मात् क्षालनं धौतकर्म तत्॥**

तत्र कफरोगक्षय आनुसङ्गिकः।

**नाभिदघ्नजले [1]पायुगलस्तलकृतासनः।**
**आधारकुञ्चनं कुर्य्यात्क्षालनं बस्तिकर्म तत्।**

एतद् बस्तिकर्मण एव भेदो [2]गजकरणी, उदरगतपदार्थमुद्वमति। पवनमपानं कण्ठजाले कृत्वा चेत्तदा गजकरणी।

**गुल्म[3]प्रदोदरा वातपित्तकफोद्भवा नश्यन्ति बस्तिकर्मणा।**
**सूत्रं बितस्तिमात्रञ्च नासानाले प्रवेशयेत्॥**
**मुखेन निर्गमे चैषा नतिः सिद्ध्यै निगद्यते।**
**निरीक्ष्येन्न निश्चलदृशा सूक्ष्मं लक्ष्यं समाहितः**

---

ख पाठः —

(1) दस्तनालोत्कटासनः। (2) करणी। (3) वहो।

अश्रुसंपातपर्य्यन्त माचार्य्यैस्त्राटकं स्मृतम् ।
अनन्यावर्त्तयोगेन तुल्यं सव्यापसव्यतः ॥
नतांशो भ्रामयेदेषा लोली योगिभिरुच्यते ।
भस्त्रेव लोहकारस्य रेचपूरौ ससंभ्रमौ ॥
कपाल[1]भाति विख्याता कफदोषप्रशोधिनी ।
षट्कर्मनिर्गतस्थौल्यः प्राणायामं सुखं चरेत् ॥

अथ वायोः षोडशाधिकाराः ।

अङ्गुष्ठे तेजोध्याने दृष्टिस्थैर्य्यम् । पार्ष्णिना[2]मूलं संपीडयेदग्निदीपनम् । गुदस्याकुञ्चनेनापानधारणं तृतीयम् । मेढ्रमूले पार्ष्णिदानेन लिङ्गसंकोचे चित्तपवनयोः सुषुम्णाप्रवेशे वीर्य्यस्तम्भः । नाभिस्थाने [3]उड्डयाणबन्धे मलमूत्र[4]कृतजागरणम् । नाभौ प्रणवध्याने नादोदयः । हृदि प्राणनिरोधे हृत्कमलविकाशः । कण्ठमूलस्य चिबुकेन पीडने ईलापिङ्गलयो र्वायुस्थैर्य्यम् । घण्टिकास्थाने जिह्वाग्रन्यासे सुधास्रवेण तृप्तिः । चालन दोहनाभ्यां जिह्वां दीर्घां कृत्वा जिह्वां तालुमूलस्थाने यदन्तरं तत्र जिह्वां प्रवेश्य जिह्वाधो रसास्वादेऽमृतस्यन्दः कविता च फलम् । दन्तेषु राजदन्ताग्रे जिह्वाग्रघट्टने षण्मासे ज्योतिदर्शनम । घ्राणमूले दृष्टिस्थैर्य्य बाहुस्थैर्य्यम् । ललाटे मनसा वाय्वारोपे सर्वसिद्धिः । ललाटोद्ध्र्वं व्योमाकारदर्शने ज्योतिर्दर्शनम् । नेत्रं षोडशाधारं तस्योद्ध्र्वपवनेऽपाङ्गे ज्योतिःपुञ्जदर्शनम् ।

अथ हठगोग मुख्यसाधनानि –

करणं विपरीताख्यं शक्तिसञ्चालनं तथा ।
महामुद्रा महाबन्धो बन्धो जालन्धराभिधः ॥

---

ख पाठः —
(1) भाती वि । (2) मूलसंपीडने । (3) उड्डीयानबन्धे । (4) कृति ।

खेचरी शाम्भवी मुद्रा योनिमुद्रा शिवप्रिया ।
तथा पश्चिमतानाख्यं पीठं मत्स्येन्द्रसंज्ञितम् ॥
मयूरश्च तथा पीठं नादाभिव्यक्तिसंयमः ।
प्राणायामश्च विज्ञेयो योगाङ्गानीह षोडश ॥
अधःशिराश्चोद्र्ध्वपादः क्षणं स्यात्प्रथमे दिने । (३।८१)
क्षणाच्च किञ्चिदधिकमभ्यसेच्च दिने दिने ॥
वलिश्च पलितं चैव षण्मासोद्र्ध्वं न दृश्यते ।
याममात्रं तु यो नित्यमभ्यसेत् स तु कालजित् ॥
(हठयोग दीपिका — ३ । ८२)

अल्पाहारं दहेदग्निस्तस्माद् बह्वशनो भवेत् ।

विपरीतकरणम् —

आधारकमले सुप्तां चालयेत् कुण्डलीं दृढम् ।
अपानवायुमाकृष्य बलादाकुञ्च्य बुद्धिमान् ॥
विहाय निद्रां भुजगी स्वयमूद्र्ध्वं भवेत् किल ।
अणिमादि भवेदग्निवृद्धिर्व्याधिश्च नश्यति ॥

शक्तिचालनम्—

महामुद्रोच्यते योनिं गुदमेढ्रान्तरालगाम् ।
वामेन पार्ष्णिनापीडय चिबुकं हृदये न्यसेत् ॥
दक्षं प्रसारितं पादं कराभ्यां धारयेद् दृढम् ।
संनिरुद्धे-न्द्रियग्रामो वायुनापूर्य्य चोदरम् ॥
धारयित्वा कियत्कालं शनैरेव विरेचयेत् ।
वामाङ्गे च समभ्यस्य दक्षिणाङ्गेऽभ्यसेत् पुनः ॥
यावत्संख्या भवेत्तुल्या ततो मुद्रां विसर्जयेत् ॥

एतत् पापहरं नाड़ीगन्धनं बिन्दुमारणम् ।
कुण्डलीतापनाद्वायोः सुषुम्णायां प्रवेशकी ॥
गोप्यैषा मन्दभाग्योऽपि सिद्धिं प्राप्नोति [1]वै तथा ।
विषं भुक्तं व्रजेज्जीर्णं घट्टनं चन्द्रसूर्ययोः ॥
अग्निवृद्धिररोगत्वं जरामृत्युविनाशनम् ।

इति महामुद्रा ।

महामुद्रास्थितो योगी दक्षं पादं प्रसारितम् ॥
वामोरूपरि विन्यस्य गुदाकुञ्चनतो नयेत् ।
अपानमूर्द्ध्वं समाने योजयित्वा विचक्षणः ॥
पूरयित्वा मुखे वायुं कुर्यात् प्राणमधोमुखम् ।
हृदयं न्यस्तचिबुकं कुटी कृत्य च बन्धयेत् ॥
शनैर्विरेचयेत् पश्चान् महाबन्धोयमुच्यते ।
सव्याङ्गे च समभ्यस्य दक्षिणाङ्गे समभ्यसेत ॥
योगिनोऽन्ये गुदाधस्तात्पार्ष्णिन्यासमिहाब्रुवन् ।
सुषुम्णान्तर्विशेद्वायुस्तस्मात्सिद्धिरदूरतः ॥
अनेन वपुषः पुष्टिः साधयेदखिलेप्सितम् ।

इति महाबन्धः ।

महाबन्धस्थितो योगी वायुनापूर्य्य चोदरम् ॥
वायुना गतिमावृत्य निभृतं कण्ठमुद्रया ।
समहस्तयुगोभूमौ स्फिचौ संचालयेच्छनैः ॥

---

ख पाठः —

(1) चैतया ।

महावेधोऽयमाख्यातः सुषुम्णाग्रन्थिभेदकः ।
महामुद्रामहाबन्धौ निष्फलौ वेधवर्जितौ ॥
तस्माद्[1] वेगात् प्रयत्नेन [2]न करोति त्रयं क्रमात् ।
एतत्त्रयं महागुह्यं जरामृत्युविनाशनम ॥
अष्टधा क्रियते चैतद् यामे यामे दिने दिने ।
सम्यक्शिक्षावता चत्र स्वल्पं प्रथमसाधने ॥
वह्निसेवा तथा स्त्री च वर्जनीया पुरैव तु ।

इति महावेधः

पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद् गुदम् ।
अपानमूर्द्ध्वमाकृष्य मूलबन्धोयमुच्यते ।
वारं वारं यथा चोद्ध्र्वं समायाति समीरणः ।
गुदं पार्ष्ण्या तु संपीड्य बलादाकुञ्चयेत्तथा ।
प्राणापानौ मूलबन्धादेकीभूतौ च सिद्धये ।
तयोरैक्यात् शकृन्मूत्रजयो वार्द्धक्यनाशनम् ।
अपाने [3]चोद्ध्र्वतो वह्नेर्दीप्त्यै कुण्डलिनी ततः ।
ऋजुतां याति पवनः सुषुम्णाभ्यन्तरे विशेत् ।
मूलबन्धे सुसिद्धे तु योनिमुद्रापि सिद्ध्यति ।

इति मूलबन्धः

उदरे पश्चिमं तानं नाभेरूद्ध्र्वं च कारयेत् ।
उड्डीयाणो ह्यसौ बन्धो मृत्युमातङ्गकेशरी ।

---

ख पाठः —

(1) योगात् । (2) करोति त्रितयं । (3) चोद्ध्र्वगे ।

नाभेरुद्र्ध्वमधस्तात्तु तानं कुर्यात् प्रयत्नतः ।
षण्मासाभ्यसने मृत्युं जयत्येव न संशयः ।
इति वज्रासने पादौ कराभ्यां धारयेद् दृढम् ।
गुल्फदेशे [1]समाप्ते च गुल्फं तत्र प्रपीडयेत् ।
पश्चिमं तानमुदरे कारयेद् हृदये गले ।
शनैः शनैर्यथाप्राणं [2]तुन्दसन्धि न गच्छति ।

इति उड्डीयाणबन्धः

कण्ठमाकुंच्य हृदये स्थापयेच्चिबुकं शनैः ।
बन्धो जालंधराख्योऽयममृताव्ययकारकः ।
बध्नाति हि शिराजालानधोगामि च भोजनम् ।
जालन्धरे स्थिते बन्धे कण्ठसंकोचलक्षणे ।
न पीयूषं [3]तपत्यग्नौ न च [4]वायौ प्रबाधति ।
मूलस्थानं समाकुञ्च्य उड्याणाख्यं [5]तु कारयेत् ।
[6]इडां च पिङ्गलां चैव वाहयेत् पश्चिमापथम् ।
एवं लीनेऽनिले व्याधिजरामृत्युनिवारणम् ।
जालन्धरोड्डुयाणकमूलबन्धैरुन्निद्रितायामुरगाङ्गनायाम् ।
प्राणाभिधानः प्रविशेत्सुषुम्णा-माकण्ठदेशं विहरेत् समीरः ।
अपानमूदूर्ध्वमाकृष्य प्राणं कण्ठादधो नयेत् ।
अभ्यासक्रमयोगेन वृद्धोऽपि तरुणो भवेत् ।

इति जालन्धरबन्धः

---

ख पाठः –
(1) समीपे च । (2) तदवत्सन्धि । (3) पतत्यग्नौ । (4) वायुः ।
(5) च । (6) इलां ।

लम्बिकोद्ध्र्वे स्थिते [1]गर्त्ते रसनां विपरीतगाम् ।
संयोजयेत् प्रयत्नेन मुद्रैषा खेचरी मता ।
भ्रूमध्यान्तर्गता दृष्टिः खेचर्यामिति केचन ।
खेदने गलने दाहे कृते जिह्वा च वर्त्तते ।
[2]भ्रूमध्यात्तु तदा मुद्रां खेचरीं कर्त्तुमर्हति ।
निरन्तरकृताभ्यासात् पीयूषं प्रत्यहं पिबेत् ।
न रोगो मरणं चास्य न निद्रा न क्षुधा तृषा ।
न बिन्दुः क्षरते तस्य कामिन्याश्लेषितस्य च ।
यावद् बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ।
यस्यैषा खेचरी सिद्धा युगं तस्य क्षणायते ।

इति खेचरीमुद्रा ।

अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा तु शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ।

इति शाम्भवीमुद्रा ।

अथ योनिमुद्रा—

पञ्चरात्रानुसारेण हठशास्त्रानुवर्त्तनात् ।
योनिमुद्रां प्रवक्ष्यामि सर्वतन्त्रेषु गोपिता ।
आदौ पूरकयोगेन स्वाधारे स्थापयेन्मनः ।
गुदाकुञ्चन योगेनापानमूर्द्ध्वं ततो नयेत् ।
गुदमेढ्रान्तरालस्थां योनिं गाढं निपीड़येत् ।
वामपार्ष्णिप्रदानेन हूंकारेणैव साधकः ।

---

ख पाठः —

(1) पत्रे । (2) भ्रूमध्यान्तर्गतां ।

कुम्भकेन ततः प्राणवायुमन्तः प्रवेशयेत् ।
अपानवायुमाधारपद्ममूले निवेशयेत् ।
वायुप्रवेशादुद्बुद्धे [1]... ... ..... ।
जठराग्निविवृद्धिश्च लक्षणं जायते ध्रुवम् ।
तत् पद्मान्तःस्थिता योनि स्त्रिकोणाकारकारणम् ।
जठराग्निमयं कामं योनिमध्ये विचिन्तयेत् ।
भ्रमन्तमूद्ध्वज्वलनं दीप्तिमन्तं समन्ततः ।
बन्धूककुसुमप्रख्यं चन्द्रकोटिसुशीतलम् ।
कामोऽयं बिन्दुरेवेति केषाञ्चिन्मतमीदृशम् ।
तस्योद्ध्वेऽग्निशिखाकारा चिद्रूपा परमा कला ।
सुषुम्णातः सुचित्राख्यं नाडीमध्यं गता सदा ।
जगदुत्पादिका ब्रह्मरूपा चिच्छक्तिरेव या ।
जीवात्मना सदाभिन्ना हंसेनैतां विचिन्तयेत् ।
हुंकारेणोत्थितां ध्यात्वा तां शक्तिं स्वात्मना सह ।
गच्छन्तीं चिन्तयेद् भूयो भित्वा [2]लिङ्गत्रयीं क्रमात् ।
स्वयम्भूलिङ्गमाधारे हृदि बाणाधिधं स्थितम् ।
इतराख्यं भ्रूवोर्मध्ये सुषुम्णाग्रन्थिवस्थितम् ।
चिन्तामार्गेण [3]तद् भूत्वा षट्चक्राण्यपि च व्रजेत् ।
सहस्राराम्बुजोद्ध्वस्थं विसर्गाख्यं हरेः पदम् ।
अकुलं यत् समाख्यातमानन्दामृतवर्षि च ।

---

ख पाठः –

(1) पाठो नष्टः । (2) त्रयं । (3) तद्भित्वा ।

[1]सहस्रारस्थितेचन्द्रे विसर्गाख्यपरात्मनः ।
परानन्दाख्यममृतं द्रुतं रक्तं सुशीतलम् ।
कोटि[2]सूर्य्यनिभं वा वाग्रूपेण स्रवतेऽनिशम् ।
तत् पिबन्ति च चिच्छक्ति र्जीवेनैकीकृता च सा ।
पुनरेव कुलं गच्छेद् योनिमध्य [3]कृतासनः ।
ततोऽकुलं विसर्गाख्यं पुनः [4]पीत्वामृतं पिबेत् ।
गमनागमने [5]काले मात्रयास्याश्च मीयते ।
[6]तद्घातो लक्षणं तस्या स्तस्य लक्ष्म निगद्यते ।
क्रमेण नीतः प्राणोऽन्तं यदा स्पृशति कुम्भकात् ।
एवमभ्यासशीलस्य कतिचिद् [7]दिवसाद्भवेत् ।
जरामरणदुःखौघहेतुसंसारविच्युतिः ।
छिन्नरुद्धाश्च ये मन्त्राः कीलताः स्तम्भितास्तु ये ।
अन्येऽप्येवं दुष्टमन्त्रा रिपुपक्षस्थिताश्च ये ।
[8]बोधिता मार्गेणानेन ते सिद्ध्यन्त्यचिरेण तु ।
दीक्षायुक्तस्य मन्त्रेषु चाधिकारोऽनया ध्रुवम् ।
योनिमुद्रां सकृत्कृत्वा महापातकसंक्षयः ।
अतिपापोपपापेषु सुतरां निष्कृतिर्भवेत् ।
संवित्तिं लभतेभ्यासादभ्यासान् मोक्षमाप्नुयात् ।

---

ख पाठः —

(1) सहस्रारस्थचन्द्रेहि विसर्गाख्या परात्मनः ।

(2) कोटिसूर्य्यनिभां ध्यात्वा । (3) शतं ततः । (4) गत्वा ।

(5) कालो । (6) उदघातो । (7) दिवसे भ । (8) बोधितानेन मार्गेण ।

[1]मन्त्राणां सिद्धिरभ्यासादभ्यासाद् वायुसाधनम् ।
अपमृत्युजयोऽभ्यासादभ्यासात् कालवञ्चनम् ।
वाक्सिद्धः कामचारत्वं भवेदभ्यासतो ध्रुवम् ।
तद् विष्णोः पदमाप्नोति योगिभिर्या विमुच्यते ।

इति योनिमुद्रा ।

प्रासार्य्य पादौ भूविदण्डरूपौ दोर्भ्यां तदग्र-द्वितयं गृहीत्वा ।
जानूपरि न्यस्तललाटदेशो वसेदिदं पश्चिमतानमाहुः ।
इति पश्चिमतानमासनं [2]पवनं पश्चिमवाहिनं करोति ।
उदयं जठरानिलस्य कुर्य्यादुदरे कार्श्यमरोगितां च पुंसाम् ।

इति पश्चिमतानम् ।

सव्येन पादेन निपीड्य कुक्षिं
वामोरुमूलाय च दत्तपादः ।
जान्वोर्बहिर्वेष्टितदक्षदोष्णा
प्रगृह्य तिष्ठेत् परिवर्त्तिताङ्गः ॥
मत्स्येन्द्रपीठं जठर[3]प्रसिद्ध
प्लीहादिरुङ्मण्डलखण्डनास्तु ।
अभ्यासतः कुण्डलिनी प्रबोधं
दण्डस्थिरत्वं च ददाति पुंसाम् ॥

इति मत्स्येन्द्रपीठम् ।

---

ख पाठः —

(1) अभ्यासाज्जायतेसिद्धिरभ्यासान्मोक्षमाप्नुयात् ।

(2) मानससंयमनं पश्चिमवाहिनं । ( ) प्रवृद्धः ।

अवष्टभ्य धरां सम्यक् तलाभ्यां करयोर्द्वयोः ।
हस्तयोः कूर्परौ चापि स्थापयेत् पार्श्वयोर्द्वयोः ।
समुन्नतशिरःपादो दण्डवद् व्योम्नि संस्थितः ।
मयूरासनमेतद्धि सर्वपापविनाशनम् ।
हरति सकलरोगानाशु गुल्मोदरादीन्
जनयति जठराग्निं जारयेत् कालकूटम् ।

इति मयूरासनम् ।

मूलबन्धस्थितो योगी गुदस्याकुञ्चनेन तु ।
अपानमूर्द्ध्वमाकृष्य मुखछिद्राणि पीडयेत् ।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्याञ्च चक्षुषी ।
नासिकेऽनामिकाभ्याञ्च ऋजुकायशिरोधरः ।
आकुञ्च्य चित्तपवनौ ब्रह्मरन्ध्रान्तमुन्नयेत् ।
स्फुटमुत्पाद्यते नादो बीणावेणुस्वनोपमः ।

इति नादसंयमः ।

अथासनादृतो [1]योगी वशी हितमितासनः ।
गुरूपदिष्टमार्गेण प्राणायामानुपक्रमेत् ।
यावद्वायुः स्थितो देहे तावज्जीवितमुच्यते ।
मरणं तस्य निष्क्रान्तिस्ततो वायुं विबन्धयेत् ।
नाड़ीशुद्धिं पुरस्कृत्य प्राणायामानुपक्रमेत् ।
तया सुषुम्णा पार्श्वस्था मालाः शोषं प्रयान्ति वै ।

---

ख पाठः —

(1) योगवशो ।

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति भूयः सूर्य्येण पूरयेत् ।
येन त्यजेच्च तेनैव पूरयेदविरोधतः[1] ।
प्रातर्मध्यन्दिने सायं मध्यरात्रे च कुम्भकान् ।
शनैरशीतिपर्य्यन्तं चतुर्वारान् समभ्यसेत् ।
कनिष्ठः स्वेदजनको मध्यमः कम्पयेत्तनुम् ।
उत्तिष्ठत्युत्तमे योगी बद्धपद्मासनो मुहुः ।
जलेन श्रमजातेन गात्रमर्द्दनमाचरेत् ।
दृढता लघुता वापि तेन गात्रस्य जायते ।
वायुदीप्तानलक्षुब्धा सुषुम्णान्तर्विशेत्ततः ।
वायुना वह्निना सार्द्धं ब्रह्मग्रन्थिं विभिद्य सा ।
विष्णुग्रन्थिं ततो गत्वा रुद्रग्रन्थौ च तिष्ठति ।
ततस्तु कुम्भकै र्गात्रं पूरयित्वा पुनः पुनः ।
विद्यन्ते ग्रन्थयो वंशे सप्त लोहशलाकया ।
तथैव पृष्ठवंशे सा ग्रन्थिभेदस्तु वायुना ।
पिपीलिका [2]स्पर्शभिन्नकण्ठस्तत्र प्रवर्त्तते ।
रुद्रग्रन्थिं ततो भित्वा ततो याति शिवात्मकम् ।
प्राणायामेन योगीन्द्र त्रैलोक्येश्वरतां व्रजेत् ।

---

ख पाठः —

(1) प्राणं सूर्य्येणापकृष्य पूरयेदुदरं शनैः ।
विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत् ॥
— पूरयेदविरोधतः इत्यनन्तरमधिकः पाठः ।

(2) स्पर्शनिभाकण्डुस्तत्र ।

अथञ्च कुम्भकोष्टविधिः —

सूर्य्यभेदो जयाख्यौ च यथा सीत्कारशीतले ।
हस्तिका भ्रमरी मूर्च्छा केवलाश्चाष्टकुम्भकाः ।
वज्रासनगतो योगी बहिःस्थं पवनं शनैः ।
दक्षनाड्या समाकृष्य कुम्भकञ्च समाचरेत् ।
आकेशादानखाग्राच्च [1]तथा वायुः प्रसर्पति ।
रेचयेद् वामया सूर्य्यः भेदोऽयं वातरोगहा । (१)
मुखं संयम्य नाडोभ्यामाकृष्य पवनं शनैः ।
[2]यथा लसन्ति कण्ठात्तु हृदयावधि सस्वरम् ।
[3]पूर्वं विकुम्भयेत् प्राणं रेचयेदिलया ततः ।
गच्छता तिष्ठता कार्य्यमूर्जयाख्यं तु कुम्भकम् ।
श्रेष्ठदोषहरं चैतज्जठराग्निविवर्धनम् । (२)
शीत्कारश्च सदावक्त्रे घ्राणे कृत्वा विजृम्भिकाम् ।
रसनातालुमूलेन ततः प्राणान् सदा पिबेत् ।
द्वितीयः [4]कामदेवस्य देवं शीत्कारकुम्भकात् ।
न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते । (३)
जिह्वया वायुमाकृष्य पूर्ववत् कुम्भकादनु ।
शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदानलं सुधीः ।
शीतलः कुम्भको नाम जारयेत् कुम्भकं विषम् ।

---

ख पाठः —

(1) यथा । (2) यथालपति । ( ) पूर्ववत् कुम्भयेत् ।

(4) कामदेवः स्यादेवं ।

गुल्मप्लीहाक्षुधातृष्णा-ज्वरपित्तविनाशनः ।
सम्यक् पद्मासनं बद्ध्वा समग्रीवोदरं सुधीः ।
मुखं संयम्य यत्नेन प्राणं प्राणेन रेचयेत् ।
यथा गलति हृत्कण्ठे कपोले श्वसनं ततः ।
वेगेन पूरयेत् किञ्चिद्धृत्पद्मावधि मारुतम् ।
पुनर्विरेचयेद्वायुं पूरयेच्च पुनः पुनः ।
यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते ।
यथा श्रमो भवेद्देहे तथा यत्नेन पूरयेत् ।
यथोदरं भवेत् पूर्णं पवनेन तथा लघु ।
धारयेन्नासिकामध्यं तर्जनीञ्च विना दृढम् ।
कुम्भयित्वेलया रेचे द्भस्त्राख्योऽयं च कुम्भकः
वातपित्तश्लेश्महरः शरीराग्निविवर्द्धनः (५)
वेगं योगं पूरकं काशनादं
[1]योगो घोषं पूरकं मन्दमन्दम् ।
योगीन्द्राणामेवमभ्यासयोगा-
च्चित्ते जाता काचिदानन्दवल्ली ।
भ्रमरीसंज्ञकश्चायं कुम्भकः षष्ठ उच्यते ।
चित्तस्थैर्य्यकरो नित्यमुन्नहाभावसाधकः ।
पूरकान्ते गाढतरं बद्ध्वा जालन्धरं शनैः ।
रेचयेन्मूर्च्छनाख्योऽयं मनोमूर्च्छासुखप्रदः ।

---

ख पाठः –
(1) घोषापूरकं ।

रेचकं पूरकं मुक्त्वा मुखं यद्वायुधारणम् ।
सर्वैः केवलकुम्भः स्याद्राजयोगप्रदः परः । (८)
मनसो यो स्थिरीभावः सैवावस्था मनोन्मनी ।
तत्सिद्धयेऽत्रकल्पन्ते विचित्राः कुम्भिका इमे । (९)

## योगिनो नित्यचर्य्या

लवणं सर्षपं चाम्लं उष्णं रुक्षं च तीक्ष्णकम् ।
माषं दधि कुलत्थं च लशुनं शाकमेव च ।
पिण्याक[1] तिक्तसौवीर-हिङ्गु-तैलानि वर्जयेत् ।
अतीव भोजनं त्याज्यं स्त्रीसमागमनं बहु ।
वर्जयेद् दुर्जनप्रीतिं वह्निं त्रिपथसेवनम् ।
प्रातःस्नानोपवासादि कायक्लेशविधिं तथा ।
क्षीरं घृतञ्च मिष्टान्नं लघ्वाहारश्च शस्यते ।
यवपिष्टकगोधूम-शाल्यन्ननवनीतकम् ।
पञ्चशाकं सक्रक्कोलं कर्पूरं सेन्दुपुष्पकम् ।
सुण्ठीपटोलमुद्गादि गव्यं पथ्यं तु योगिनः ।
अभ्यासकाले प्रथमं शस्तं क्षीरान्नभोजनम् ।
ततोऽभ्यासे स्थिरीभूते न तादृङ् नियमग्रहः ।
पवनस्य व्यतिक्रान्तौ रोगोत्पत्तौ चिकित्सनम् ।
ऋजुकायः स्थिरमनाः पूरयेद्वायुनोदरम् ।

---

ख पाठः —

(1) तिक ।

काकीचञ्चुप्रकृष्टेनाथाङ्गुष्ठौ [1]श्रोत्रियो न्यसेत् ।
तर्जनीभ्यां तथा नेत्रे मध्यमाभ्यां च नासिके ।
अन्याभिर्मुखमापीड्य ब्रह्मण्येव मनो नयेत् ।
एवमभ्यसतो वायुं सुषुम्णान्तर्विशेत् स्वयम् ।
ज्वरदाहोदरव्याधिगुल्मा यान्ति परिक्षयम् ।
दन्तैर्दन्तान् भृशं पीड्य मन्दं मन्दं समीरणम् ।
यः पिबेद्वातरोगार्त्तो जीवेद्दीर्घं तु निर्जरः ।
अस्पृशन् राजदन्तांस्तु मूले जिह्वां विधाय तु ।
काकचञ्च्वा पिबेद्वायुं दीर्घं जीवेदनामयः ।
द्वादशाङ्गुलवस्त्रेण रसनां बन्धयेद् दृढम् ।
मुहूर्त्तद्वयपर्य्यन्तं हस्ताभ्यां चालयेदमुम् ।
सर्वरोगाः क्षयं यान्ति कुण्डली च विबुध्यते ।
तालुमूले स्थापयित्वा जिह्वां वायोस्तु पानतः ।
नश्यन्ति रोगास्तु तथा नासाग्रे वायुधारणात् ।
तथा विद्रुमसंकाशं ज्योतिःस्थाने स्थिरं रजः ।
शशिस्थाने भवेद् बिन्दुस्तयोरैक्यं सुदुर्लभम् ।
वायुना शक्तिचलनात् प्रेरितं च यदा रजः ।
बिन्दुनैकत्वमायाति देहसिद्धिस्तदा भवेत् ।

इति हठयोगफलम् ।

---

ख पाठः —

(1) श्रोत्रद्वयेन्यत्से।

### योगारम्भावस्था

ब्रह्मग्रन्थेर्भेदादानन्दः शून्यसम्भवः ।
विचित्रकुहरे देहेऽनाहतः श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धस्ततो भवेत् ।

अथ घटावस्था

यदा भवेद् घटावस्था पवनाभ्यसनः[1] पुरा ।
तदा संसारजलधिं तीर्त्वा ब्रह्म भवेत्स्वयम् ।
अपानप्राणयोरैक्यादैक्यं तद्बिन्दुनादयोः ।
महावाक्यात्तदा जीवब्रह्मणोरेकता स्थिरा ।
मिलित्वैवं घटे यस्मात्तस्माद्वै घट उच्यते ॥
दण्डापूरं यदा वायुर्योगिनो निश्चलो भवेत् ।
स्वसामर्थ्यं तदा गुप्त्वा तिष्ठेद् बातुलवत्सुधीः ।
ततः परिचयावस्था योगिनोऽभ्यासतो भवेत् ।
यदा वायुश्चन्द्रसूर्यं त्यक्त्वा तिष्ठति निश्चलम् ।
वायौ परिचिते वायुः सुषुम्णा व्योम्नि संचरेत् ।
त्रिकूटं कर्मणा ज्ञात्वा वायुव्यूहं समाचरेत् ।

### अथ निष्पत्त्यवस्था

निष्पत्तौ वैणवः शब्दो वंशिकाध्वनिवद्भवेत् ।
एकीभूतं तदा चित्तं राजयोगाभिधानकम् ।

---

मुद्रित पाठः —

(1) भ्यासतः ।

लयामृतत्रयं सौख्यं राजयोगस्तदाप्यते ।
समाधिसम्पन्नतया जीवन्मुक्तस्तदोच्यते ।
गृहीत्वा चेतनां वायुः क्रियाशक्तिं च वेगवान् ।
सर्वचक्राणि निर्भिद्य [1]ज्ञानशक्तौ न लीयते ।
मूलाधारे त्रिधावर्त्तं ब्रह्मचक्रं [2]भगोपमम् ।
तत्कल्पेऽग्निनिभे ध्यायेदधः शक्तिमभीष्टदाम् ।
स्वाधिष्ठानं ततश्चक्रं तत्र चातुर्दलाम्बुजम् ।
तदेवोड्डीयनं ध्यायेत् पश्चिमाभिमुखं शिवम् ।
पञ्चवर्णं नाभिचक्रं [3]सर्पाकारां तडिन्निभाम् ।
तत्र कुण्डलिनीं ध्यायेदधःशक्तिं सुसिद्धिदाम् ।
अधोमुखाब्जपत्राब्जयुतं हृच्चक्रमिष्टदम् ।
तन्मध्यकर्णिकां ध्यायेज्ज्योतिर्लिङ्गाकृतिं विमाम् ।
पञ्चमं कण्ठचक्रञ्च तत्राङ्गुलचतुर्थके ।
इलापिङ्गलयोर्मध्ये सुषुम्णां चिन्तयेत् स्थिताम् ।
षष्ठञ्च [4]घण्टिकालिङ्गमूलं तद्राजदन्तकम् ।
ध्यायेत्तु दशनद्वारं तत्र शून्यं [5]सुसिद्धयेत् ।
भ्रूचक्रं सप्तमं त्वेकनालकन्दं सुवाक्छदम् ।
ध्यायेद् दीपशिखाकारं तन्मध्ये ज्ञानलोचनम् ।
ब्रह्मरन्ध्रेऽष्टमं चक्रं निर्वाणाख्यं सुसूक्ष्मकम् ।
तत्र जालन्धरं ध्यायेद् धूम्रं मोक्षप्रदं ततः ।

---

ख पाठः —

(1) ज्ञानशक्तो । (2) सुगोपनम् । (3) सर्पाकारं ।
(4) घटिका । (5) सुसिद्धये ।

आकाशबीजं [1]नवममूर्द्ध्वं च ब्रह्मरन्ध्रतः ।
[2]अष्टारं तत् तस्य मध्ये सुषुम्णां संस्मरेद् बुधः ।

इति अग्निचिद् वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे हठयोगनिर्णयः ।

# राजयोगः

हठयोगेन संयमितचित्तस्य राजयोगाधिकारः । स च पतञ्जलिना स्वरूपप्रधानसाधनफलैश्चतुर्भिः पादै निंरूपितः । तत्र प्रथमपादे स्वरूपं प्रमाणञ्च निरूपितम् । द्वितीयपादे बहिरङ्गसाधनं निरूपितम् । तृतीये चतुरङ्गसाधनम् । चतुर्थे च फलम् ।

तत्र "[A]अथयोगानुशासनमिति" चतुर्विधमनुशासनं प्रतिज्ञातम् । "[B]योगश्चित्तवृत्तिनिरोधः" इत्यादिना "[C]विरामप्रत्ययाभ्यास[3]पूर्वकः [4]संस्कारशेषोऽन्य" इत्यन्तेन योगस्वरूपं निरूपितम् । "[D]भवप्रत्ययो विदेहप्रकृतिलयाना"मित्यारभ्य "[E]तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधि"रित्यन्तेनापादसमाप्ते र्योगस्य दृष्टकारणसामग्रीकथनद्वारेण तत्स्वरूप-सिद्धौ प्रमाणं दर्शितम् ।

द्वितीये च पादे क्रियायोगपूर्वकं यमनियमासनप्राणायाम प्रत्याहारा-त्मकाङ्गपञ्चकं बहिरङ्गं निरूपितम् ।

तृतीये च धारणाध्यानसमाधिरित्यङ्गत्रयमन्तरङ्गमानुषङ्गिक-योगर्द्धिफलकथनद्वारेण सप्रपञ्चं प्रतिपादितं "[F]देशबन्धश्चित्तस्य धारणे" त्यादिना । ततश्चतुर्थपादे पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूप-

---

ख पाठः —

(1) प्रथम । (2) अष्टाक्षरं । (3) पूर्वक । (4) संस्कारशेषो न ।

मुद्रित पाठः —

A- पातञ्जल - १ । १ B- पातञ्जल - १ । २ C- पातञ्जल- १ । १८
D- पातञ्जल - १ । १९ E- पातञ्जल - १ । ५१ F- पातञ्जल- ३ । १

निष्ठावानित्यादिस्वरूपेण योगफलं कैवल्यं निरूपितम्। तत्रैतत्संक्षेपेण व्याख्यायते —

[A]"अथ योगानुशासन"मिति

यद्यपि अथशब्दोऽधिकारार्थत्वेन व्याख्यातस्तथापि "श्रोतव्योमन्तव्योनिदिध्यासितव्य" इत्यादिश्रुत्या श्रवणमननानन्तरं निदिध्यासनेऽधिकारप्रतिपादनाद् विक्षिप्तचित्तस्य निदिध्यासना[1]समर्थत्वेन चित्तस्थैर्य्याय योगाभ्यासस्यावश्य[2]मपेक्ष्यमाणत्वेन "शान्तो दान्त उपरतस्तितिक्षुः [B]श्रद्धावित्तोभूत्वाऽऽत्मन्येवात्मानं पश्यती"तिश्रुत्या उपरतपदेन चित्तसमाधानरूपयोगस्य सामर्थ्यसिद्धनिदिध्यासनद्वारा साक्षात्कार[3]हेतुप्रतिपादनाच्छ्रवणमननानन्तर्य्यमेवाथशब्दार्थः। एवञ्च 'शमदमादिसाधनं वैराग्यं" "नित्यानित्यवस्तुज्ञानं मुमुक्षा" च श्रवणात् पूर्वमेवापेक्षितमिति श्रवणानन्तर्य्यमर्थसिद्धमिति नेहाथशब्देन तदानन्तर्य्यमुच्यते, नापि वेदतदङ्गाध्ययनानन्तर्य्यं श्रवणमननपूर्वकत्वादेव। एवञ्च[4]श्रुत्यध्ययनविधे "[C]अथातोधर्मजिज्ञासा" इत्यादिना कर्ममीमांसेतिकर्त्तव्यतोक्ता। श्रवणविधेश्च "[D]अथातो ब्रह्मजिज्ञासा" इति व्यासेन ब्रह्ममीमांसोक्ता। गौतमेन च मननविधेस्तथा। निदिध्यासनविधेरितिकर्त्तव्यतात्वेन योगशास्त्रं [5]पतञ्जलिनोक्तम्। तेनात्र निदिध्यासनाधिकारिण एवाधीतवेदास्त्रैवर्णिका अधिकारिणः यदा तु—

**"ब्राह्मणक्षत्रियविशां स्त्रीशूद्रस्य च पावनम्।**
**शान्तये कर्मणामन्यद् योगान्नास्ति विमुक्तये॥"**

---

**ख पाठ —**

(1) समर्थेन। (2) मपेक्षणीयत्वेन। (3) हेतुत्व।
(4) यथाश्रुत्य। (5) पाणिपतञ्जलि।

**मुद्रित पाठः —**

A- पातञ्जल - १।१ B- समाहितो — बृहदा - ४।४।२३
C- मीमांसादर्शन - १।१।१ D- वेदान्तदर्शन - १।१।१

इत्यादि ब्रह्मपुराणादिवाक्येभ्यो जनकादिक्षत्रिय A तुलाधारादिवैश्यविदुरादिशूद्राणां च स्मृतिपुराणभारतादिभ्यः श्रवणमनन निदिध्यासनादिसम्भव इति तदा भवत्येव तेषामधिकारः। धर्मव्याधादेश्च B जन्मान्तरीय श्रवणादानन्तर्यम्। एवञ्च मुक्त्यधि[1]कारिणामधिकार इति गृहस्थानामप्यधिकारः स्फुटः।

गृहस्थधर्माधिकारे याज्ञवल्क्यः —

> C[2]इज्यापरं दमोऽहिंसा दानस्वाध्यायकर्मणाम्।
> अयन्तु परमो धर्मो यद् योगेनात्मदर्शनम्।

तथा मनुः (१२।९२) —

> यथोक्तान्यपिकर्माणि [3]परिहाय द्विजोत्तमः।
> D आत्मज्ञाने च सक्तः स्याद् वेदाभ्यासेन [4]यत्नतः।
> "अपि [5]वर्णावकृष्टस्तु नारी वा धर्मचारिणी।
> तावप्येतेन मार्गेण गच्छतां परमां गतिं।"

---

**ख पाठः –**

(1) कारिणामत्राधिकार। (2) इज्याचारदयाहिंसा। (3) परिहाप्य।
(4) यत्नवान्। (5) धर्मा।

**मुद्रित पाठः –**

A- तुलाधारचरितं महाभारते शान्तिपर्वणि — २६१ अध्यायतः २६५ अध्यायपर्यन्त मस्ति।

B- अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मजः।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः॥
इति धर्मव्याध वचनात् तस्य पूर्वजन्मन्यध्ययनं सिद्धम्।
महाभारत (वनपर्व) — २१५।२२

C- १ - ४ इज्याचारदमा

D- आत्मज्ञाने शमे च स्याद् वेदाभ्यासे च यत्नवान्।

मिति व्यासवचनेन स्त्रीणामधिकारोक्तैः । रथकारस्याधान इव [1]विद्याप्रयुक्ताविरत्यधिकारः । "अध्यात्मयोगाधिगतमन्यदेवं ज्ञात्वा" इति श्रुतेः । "प्राप्तस्य योगाग्निमयं शरीरं"मित्यादि श्रुतेश्च ।

**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ।**

(भगवद् गीता - ५ । ६)

**मूर्ध्न्याधायात्मनः प्राण मास्थितो योगधारणाम् ।(८।१२)**

**प्राणापानौ समौकृत्वा नासाभ्यन्तरचारिणौ । (५।२७)**

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे । (४।२९)**

इत्यादि भगवद् वाक्याच्च योगस्य मोक्षसाधनत्वं सुव्यक्तमिति ।

**"[A]एतेन योगः प्रत्युक्त" (२ । १ । ३)**

इति व्याससूत्रम् ।

सांख्यं यथा [2]नाव्यक्तात्मक-प्रधानस्य जगदुत्पादकत्वे प्रमाणम् । तथा योगः पातञ्जलशास्त्र[3]मपि तत्र न प्रमाणमिति तत्र व्याख्यातत्वान्न-योगस्य मोक्षानुपयोग[4]परत्वम् इति प्रथमसूत्रार्थः ।

## अथ योगस्वरूपम्

योगश्चित्तवृत्तिनिरोध (१ । २) इति पतञ्जलिः । सत्त्वप्रधानं प्रकृति-परिणामात्मकं वस्तु चित्तम् । तस्येन्द्रियलिङ्गादिसम्बन्धेषु तदद्वारेण गत्वा [5]तस्य [5]सम्बन्धस्तदाकारपरिणामो भवति । चितस्वभावश्चात्मा चित्तप्रतिविम्बिते चित्ते विषयाकारपरिणते तदाकार एव लक्ष्यते । यथा

---

ख पाठः -

(1) प्रयुक्तो भवत्यधिकार । (2) यदव्यक्तात्मक । (3) शास्त्रमिति ।
(4) परम । (5) तत्संबद्धस्तदाकार ।

मुद्रित पाठः —

A- वेदान्तदर्शन - २ । १ । ३

जलतरङ्गेषु चलत्सु चन्द्रश्चलन्निव लक्ष्यते। एवञ्च घटाकारश्चित्तवृत्ति-सम्बन्धादात्मा घटं जानामीति व्यवहरति। यदा तु वक्ष्यमाणयोगोपायवशाच्चित्तस्य विषयाकाराः परिणामाः स्वकारणे चित्ते संस्कारमात्ररूपेणावस्थानात्मकं लयं भजन्ते, तदा योग इत्युच्यते।

तथाहि—

"प्रमाण-विपर्य्यय-विकल्पनिद्रास्मृतय"(१।६)श्चितस्य वृत्तयः पञ्च। [A]प्रत्यक्षानुमानशब्दाः प्रमाणानि १।७)। विपर्य्ययो मिथ्याज्ञानमतद्रूप-प्रतिष्ठम्(१।८), संशयस्वप्नउत्प्रेक्षादिकं विपर्य्ययान्तर्गतम्।" "शब्द-ज्ञानानुपाती वस्तुशून्यो विकल्पः(१।९)।" शून्यं नास्तीत्यादि ज्ञानं यथा-शून्यविषये, "अभाव प्रत्ययावलम्बना[B]बुद्धिर्निद्रा(१।१०)।" सुखमहमस्वाप्सं न किञ्चिदवेदिषम्, इत्यज्ञानसुखयोः पश्चात्परामर्शादज्ञानसुखविषया सुषुप्तौ वृत्तिः। "अनुभूतविषया संप्रमोषः स्मृतिः(१।११)। प्रमाणानुभूतस्य वस्तुनः संस्कारेण बुद्ध्यावरोहोऽसंप्रमोक्षः। तत्र एतासा रजस्तमःसत्व प्रेरितचित्तावस्थागतत्वेन पञ्चधा भेदः।"

तत्र रजसस्तूद्रेकाद् बहिर्मुखतया विषयेषु प्रसक्तं क्षिप्तं चित्तमुच्यते। तमसा विवेकहीनं क्रोधादिद्वारा परहिंसादिपरं मूढमुच्यते। साधनेष्वेव प्रसक्तं विक्षिप्तम्। एतच्चित्तावस्थानं योगाङ्गम्। सत्वोत्कर्षात्तु चित्तस्य यदेकाग्रत्वं बहिर्मुखपरिणामत्यागेनान्तर्मुखपरिणामः तदेकाग्रं नाम योगाङ्गम्। तदनन्तरन्तु यत्सर्वासां वृत्तीनां संस्काराणां च [1]प्रलयस्तदवस्थं चित्तं निरुद्धमुच्यते। तदेव योगहेतुः। तत्र च क्षिप्तमूढचित्तावस्थानादिद-मुत्थानमुच्यते! विक्षिप्तावस्था समाधिप्रारम्भ उच्यते। एकाग्रता निरुद्धे

---

**ख पाठः —**

(1) प्रविलय।

**मुद्रित पाठः —**

A- तत्र प्रत्यक्षानुमानागमाः प्रमाणानि — पातञ्जल - १।७

B- वृत्तिर्निद्रा — पातञ्जल - १।१०

समाधिपर्य्यन्तं भूमिरुच्यते। व्युत्थानजनिताः संस्काराः समाधिप्रारम्भ जन्यसंस्कारैर्हन्यन्ते। समाधि प्रारम्भजैकाग्रताजन्यसंस्कारैः। एकाग्रजन्या निरोधजैसंस्कारैर्हन्यते। [1]निरोधजाश्चस्वयं हन्यन्ते। तदेव सूचितम्। "तदाद्रष्टुः[2]स्वरूपे वस्थानम् (१।३)।" तदा योगदशायां द्रष्टुः पुरुषस्य स्वरूपे चिन्मात्ररूपेऽवस्था। न तु विषयाकारचित्तवृत्तौ पुरुषात्म चित्संक्रमः। संसारदशायां तस्यस्वरूपमाह "[A]वृत्तिसारूप्यमितरत्रे"ति। चतुर्थे "[B]द्रष्टु-[3]दृश्याद विरक्तं चित्तं सर्वार्थमिति (४।२३) [C]अभ्यासवैराग्याभ्यां तन्निरोध (१।१२) इति चाभ्यासवैराग्य हेतुकं प्रतिहननं निरोध [4]पदार्थः।

तदुक्तं भगवता (भगवद गीता - ६।३५) —

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेनैव कौन्तेय वैराग्येण च गृह्यते।**

इति तत्र वैराग्येण [5]विषये दोषं दृष्ट्वा विषयवैमुख्यमभ्यासेन सुखजनक शान्तिप्रवाहदृष्ट्या [6]दृढस्थैर्य्यं क्रियते। [7]तत्र संप्रज्ञातासंप्रज्ञातभेदेन द्विविधः समाधिर्योगपदार्थः। योगाङ्गे च समाधिपरिगणनं तत्वान्तर विषयसमाधिपरम्। यद्यपि सप्रज्ञातस्य [8]सावलम्बनत्वेन सर्ववृत्तिनिरोधा-भाव स्तथापि योगलक्षणे सर्वशब्दाग्रहणात्संप्रज्ञातोपि योग इति भाष्यात्। संप्रज्ञातेऽपि राजसतामस क्लेशमय वृत्तिनिरोधाद्योषलक्षणर्णामिति वाचस्पति मिश्राः। वस्तुतो योगलक्षणप्रविष्टवृत्तिव्याख्यानसूत्रे "[D]वृत्तयः पञ्चतय्यः

---

**ख पाठः—**

(1) निरोध। (2) स्वरूपमेवावस्थानम्। (3) दृशोपरक्तं।
(4) पदार्थ इत्यर्थः। (5) विषयदोषदृष्ट्या। (6) चित्त।
(7) अत्र। (8) स.लम्बनत्वेन।

**मुद्रित पाठः —**

A- पातञ्जल दर्शन १।४
B- द्रष्टृ दृग्योपरक्त चित्तं सर्वार्थम् — पातञ्जल - ४।२३
C- पातञ्जल - १।१२ D- पातञ्जल दर्शनम् ५

क्लिष्टाऽक्लिष्टा" (१।५) इति अक्लिष्टसात्त्विकवृत्तिनिरोधस्यापि योगान्त-र्भावादसंप्रज्ञाते च तदभावादसंप्रज्ञातस्य संयोगत्वं गौणमिति प्रतिभाति। [1]पग्गिगणनं मुख्ययोगाङ्गत्वे।

यत्तु –

"आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥"

(६।७।३१)

इति विष्णुपुराणे। तदपि गौणरूपा परयोग परमेव।

"एवमत्यन्तवैशिष्ट्ययुक्तधर्मोपलक्षणः।
यस्य योगः स वै योगी मुमुक्षुरभिधीयते।"

(विष्णु पुराण – ६।७।३२)

इत्यनेनसंप्रज्ञाताख्यनिर्बीजसमाधिरूपस्य मुमुक्षुयोगस्य लक्षणाकथनात्। अत्यन्तवैशिष्ट्ययुक्तधर्मपदस्य ब्रह्मणि मनःप्रलयरूपात्यन्तविशिष्टयोग परत्वात्। संप्रज्ञाताऽसंप्रज्ञातस्वरूपं वक्ष्यते। निर्विकल्पकनिर्बीजापरपर्य्याया संप्रज्ञाताख्यसमाधेः सर्वसंस्कारनिरोधकत्वा[2]त् पूर्वमुत्पन्नमेव ब्रह्मज्ञानं संस्कार हेतुबन्धनरूपाविद्यानिवर्त्तकत्वेन कैवल्याख्यमुक्तिहेतुरिति वक्ष्यते।

इति योगस्वरूपम्।

संप्रति वृत्तिनिरोधे प्रमाणं वक्तुं कारणमेव प्रमाणयति। "श्रद्धा वीर्य्य-स्मृति-समाधि--प्रज्ञापूर्वक इतरेषामिमि (१।२०)। दृष्टद्वारेण योग-संपादकानि। योगसिद्धौ प्रमाणमिति, ते च पञ्चदशधा भिद्यन्ते, इत्यापाद-समाप्तेर्दर्शयति। यो विषये चेतसः प्रसादोऽभिलाषाख्यः, श्रद्धा। तदेव वीर्य्यपदेनोक्तम्। ततः पश्चादभाविषु योगद्वारेषु स्मृतिः। तत् स्मरणाच्चेतसः समाधिविक्षेपराहित्येनावधारणसामर्थ्यम्। ततश्च प्रज्ञाभाव्यस्य विवेक

---

**ख पाठः –**

(1) परिगणनमुख्य (2) त्वादूदर्ध्वमु

इति यावत् । एतेषां पूर्वपूर्वस्योत्तरोत्तरद्वारा [1]राजयोगहेतुत्वं मृदुमध्याति-मात्रत्वात्ततोपि विशेषः। उपायानां मृदुत्वम् अल्पत्वं मध्यत्वं प्रसिद्धम् । अतिमात्रत्वं बहुत्वं च योगस्य चिरमध्यशीघ्रप्रसिद्धौ हेतुः । अतएवोक्तं —

"[A]तीव्रसंवेगानामासन्नः समाधिः ।" (१ । २१)

तीव्रसंवेगा उपायप्रचुराः । ईश्वरस्य "क्लेशकर्मविपाका: (१ । २४) । तै-रपरामृष्टनिरतिशयसर्वज्ञस्य भावनं दृष्टद्वारैव समाधिसिद्धौ हेतुः । ईश्वरस्य हि यादृशं रूपं पुरुषस्य जीवस्य तादृशं चिन्मात्रमेव रूपमिति तत्रसमाधि-साम्यात् पुरुषे समाधिं प्रसूते । तदेतदुक्तम् [B]'ईश्वरप्रणिधानाद्वा (१ । २३) ।' ततः प्रत्यक्चेतनाधिगमोन्तरायाभावश्चेति । प्रत्यक्चेतनो जीव: ।

"व्याधिस्त्यानसंशयप्रमादालस्याविरति[C]विभ्रान्तिदर्शनालब्ध-भूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेन्तरायाः ।(१।३०)

स्त्यानं चित्तस्य कर्मण्यश्रद्धा । प्रमादोऽननुष्ठानशीलता । आलस्यं कायचित्तयोर्गुरुत्वम् । अविरतिः चित्तस्य विषयसंप्रयोगादनुपरमः । अलब्धभूमिकत्वं कुतश्चिन्निमित्तात् समाधिभूमेरलाभः। अनवस्थितत्वं समाधे-रास्थिरत्वम् । एते योगविक्षेपा: ।

'दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ।' (१।३१)

अङ्गमेजयत्वं सर्वाङ्गकम्पनम् । तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः। एकस्मि-स्तत्त्वे चिदात्मनि चित्तादौ वा पुनः पुनश्चित्तदानं विक्षेपनिवर्त्तकम् ।

"मैत्री करुणा मुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां [D]भावनात् चित्तप्रसादनम् (१ । ३३) ।"

---

**ख पाठः** –

(1) योगहेतुत्व ।

**मुद्रित पाठः** —

A- पातञ्जल - १ । २१ B- पातञ्जल - १ । २३ C- भ्रान्तिदर्शना ।

D- भावनातश्चित्त— पातञ्जल - १ । ३३

सुखिनि मैत्री। दुःखिनि दया। पुण्यकर्त्तरि मुदिता। पापकर्त्तरि [1]उपेक्षा।

**"प्रच्छर्द्दन[2]विधारणाभ्यां वा प्राणस्य।" (१। ३४)**

प्राणस्य वायोः प्रच्छर्द्दनं रेचकः। धारणं पूरककुम्भकौ। ताभ्यां चित्तवृत्ति-निरोधो भवति।

**"विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी।" (१। ३५)**

विषया रूपरसगन्धस्पर्शास्तद्वती प्रवृत्तिः मनःस्थितिकरी। नासाग्रे चित्तधारणे गन्धज्ञानम्। एवमन्यत्र। एतद्विषये चित्तैकाग्रताकरणं चित्तस्थैर्य्यम्।

**"विशोका वा ज्योतिष्मती।" (१। ३६)**

प्रवृत्तिर्ज्योतिहेतुरित्येकः। सात्त्विकस्य चित्तस्य सुखमयस्य भावनारूपा प्रवृत्तिः। प्रकाशतात्मकज्योतिर्विषयत्वात्। ज्योतिष्मती सुखविषयत्वाच्च विशोका स्थैर्य्यहेतुः।

**"वीतरागविषयं वा चित्तम्" (१। ३७)**

वीतरागं यच्चित्तं योगिनः परिहृतक्लेशं तद्भावनं तच्चित्तस्थैर्य्यहेतुः।

**"[A]स्वप्ननिद्रालम्भनं वा ज्ञानम्।" (१। ३८)**

भाव्यमानं चित्तस्थैर्य्यकरमित्यर्थः।

**"यथाभिमतध्यानाद्वा।" (१। ३९)**

यथाभिप्रेतं चन्द्रबिम्बादि बाह्यं नाभिचक्राद्यान्तरं वा भाव्यमानं समाधि-हेतुः। एभिरुपायैः कस्यचिद् व्यस्तैः कस्यचित् संप्रज्ञातसमाधिर्भवति।

---

**ख पाठः—**

(1) चोपेक्षा। (2) प्रधारणा।

**मुद्रित पाठः—**

A- स्वप्ननिद्राज्ञानालम्बनं वा - पातञ्जल - १।३८

तत् सूत्रेणाह—

**"क्षीणवृत्तेरभिजातस्येवमणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ।" (१ । ४१)**

एवं व्युत्थानवृत्तिनिरोधे व्युत्क्रमेण [1]ग्राह्यग्रहणग्रहीतृषु तत्रस्थत्वं [2]तदेकाग्रता, तदञ्जनत्वं [3]तन्मयत्व तयोः समापत्तिर्भवति । ग्राह्यं द्विविधम् । स्थूलं महाभूतादि । सूक्ष्मं तन्मात्रेत्यादि । तत्र स्थूले समाधिः । शब्दार्थज्ञानानां संकीर्णानां [4]भेदेन समाधिः सविचारः । [5]सूक्ष्म एव विषये शब्दज्ञानयोरनुल्लेखे वस्तुमात्रभावे समाधिर्निर्विचारः । एतावद्द्वयं ग्राह्यसमापत्तिः । यदा चित्तमेव रजस्तमोलेखानुविद्धं सुखमयं भाव्यते तदा सानन्दसमाधिः ग्रहणसमापत्तिश्चोच्यते । अत्र समाधौ कृतार्थंमन्याः स्थूलसूक्ष्मदेहाभिमानमात्रात्यागाद् विदेहा उच्यन्ते । ततः पर रजस्तमोहीनचित्तमात्रस्य शुद्धसत्त्वस्य भावनम् । तत्र ग्राह्यस्य सत्त्वस्य गुणाभावश्चित्तशक्तेरुद्रेक इति सत्तामात्रशेषः समाधिः स स्थित इत्युच्यते । नात्राहंकारावस्थाप्राधान्यं चेतसः प्रकृतौ लयात् । अतएवास्यां समाधौ सक्ताः प्रकृतिलया उच्यन्ते । पुरुषप्राधान्यभावने त्वयं समाधिर्ग्रहीतृसमापत्तिरुच्यते । सत्त्वांशसम्भवाच्च संप्रज्ञात एव । एवमेते संप्रज्ञातभेदाः । अतः परमसंप्रज्ञातः केवलपुरुषमात्रावलम्बनः । एवं कथितैः पञ्चदशकारणैः सर्ववृत्तिनिरोधासनयोगसम्भवात् कारणा [6]देव क्रियायोगः । तपःकृच्छ्रचान्द्रायणादीनि मोक्षार्थं विहितानि व्रतोपवासादीनि च । स्वाध्यायो वेदस्य संहिता

---

**ख पाठः –**

(1) ग्राह्यग्रहीतृषु । (2) तदेकाग्रेण । (3) तन्मयत्वं इति नास्ति ।

(4) भावनसवितर्का समाधिः ।

(5) स्थूल एव विषये × × × विषय एव भाव्यमाने समाधिर्निर्वितर्का ।
एवं सूक्ष्मे तन्मत्रेन्द्रियादौ शब्दार्थज्ञानमभेदेन समाधिः सविचारा इ. अ.

(6) देवयोगे प्रमाणमित्युक्तं बुद्धियोगस्वरूपं कारण प्रथमपादे । द्वितीय योगसाधनार्थिपूद्वारेण योगापवादकारकाणि यमादीनामपि नियमादृष्टकथनात् । तत्र तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः इत्यधिकः ।

जपपारायणादिस्तन्मन्त्रजपो वा। ईश्वरप्रणिधानं तत्र भक्तिः। [1]तन्मन्त्र-राजाष्टाक्षरादिजपः पुरश्चर्य्यादिः। तत्र च फलशून्यानां कर्मणां समर्पणम्। तदेवोक्तं प्रथमपादे प्रसङ्गेन—

**"क्लेशकर्मविपाकाशयैरपरामृष्टपुरुषविशेष ईश्वरः।"(१।२४)**

तत्र निरतिशयं सर्वज्ञबीजम्(१।२५)। पूर्वेषामपि गुरुः कालेनानवच्छेदात्(१।२६)

**"तस्य वाचकः प्रणवः।" (१।२७)**

**"तज्जपस्तदर्थभावनम्।" (१।२८)**

इति सूत्रैः। तत् समाधिमात्रस्य दृष्टद्वारा योगसाधनस्य च [2]भव्यत्वादन्ते वक्ष्यमाणादृष्टद्वारा योगसाधनभगवद्भक्तिप्रदर्शनार्थमेत्र प्रणवजपादेः प्रसङ्गेन तत्र कीर्त्तनम। प्रणवपदं चान्येषां मोक्षहेतुमन्त्राणामुपलक्षणम्।

**"शक्तिनिष्ठो भवेच्छैवः शैवो विष्णुं प्रपूजयेत्।**
**वैष्णवो नारसिंहः स्यात् सा काष्ठा सा परा गतिः।**
**यत्त्वया विहितं देव नरसिंहात्मकं वपुः।**
**एतद्देवार्च्चयिष्यन्ति परापरविदो जनाः।"**

इति हरिवंशे।

**"य एतं नारसिंहमानुष्टुभं नित्यमधीते संसारं तरति।**
**आनुष्ठुभेन तुरीयं जानीयादित्यादि श्रुतेः।"**

(नृसिंह तापिनी - १।२ अध्याये)

नरसिंहविषयभक्तिविशेषाः सत्त्वशुद्ध्युत्कर्षाधायकत्वेन विशेषतः कर्त्तव्याः। भक्तेश्च मोक्षहेतुत्वं भगवतैव तत्र तत्रोक्तम्।

**(भगवद् गीता (१२।६,७)—**

**ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः।**

---

**ख पाठः —**

(1) तत् प्रणवमन्त्रराजा-। (2) वक्तव्यत्वात् तत्रत्या वक्ष्यमाणा।

अनन्येनैव योगेन मां ध्यायन्त उपासते । (६)
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् । (७)
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
(१८ । ५५)

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ।
(१४ । २६)

भक्त्या त्वनन्यया शक्यस्त्वहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ।
(११ । ५४)

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
( ८ । २२)

इत्यादीनि बहूनि स्मृतिपुराणवाक्यानि चास्मत्कृते भक्तिप्रदीपेऽनुसन्धेयानि इति । प्रकाराश्च कायिकवाचिकमानसभेदभिन्नास्तत्रैवावगन्तव्याः । तस्य च क्रियायोगस्य मोक्षहेतुयोगहेतुत्वे द्वारमाह पतञ्जलिः —

"समाधिभावनार्थः क्लेशतनूकरणार्थश्च ।(२ । २)

समाधेर्भावनं पुनः पुनश्चेतसि निवेशनम् । तन्मोक्षहेतुत्वे [1]द्वारम् । वक्ष्यमाणक्लेशतनूकरणम् । तनूकरणं विरलकार्य्यप्रादुर्भावः ।

"अविद्याऽस्मिता रागद्वेषाभिनिवेशाः क्लेशाः ।" (२।३)

"अनित्याशुचि दुःखानात्मख्यातिरविद्या ।" (२।५)

यथासंख्येन अनित्ये [2]पटादौ नित्यख्यातिरित्यादि । अनात्मन्यात्मख्याति [3]मुख्याविद्या । तामेवाधिकृत्याविद्याक्षेत्रमितरेषामित्युच्यते उत्तरसूत्रार्थ-

---

ख पाठः —

(1) तत्रापि तद्द्वारम् । (2) घटादौ । (3) विद्याभावो वाधिकृत्या ।

तात्पर्यात् । [1]अस्मदादीनां देहाभिमान एव क्षेत्रं प्रसवस्थानम् । 'दृक्-दर्शनशक्त्यो रेकात्मतेवास्मिता(२।६)'। दृक्शक्तिः पुरुषे। दर्शनशक्तिश्चित्तं तयो-रत्यन्तभिन्नयोरहमित्येकभ्रमोऽस्मिताऽहंकारः। यथाप्रकृति[2]विस्तृतः कर्त्तृत्व भोक्तृत्वरहितोऽपि कर्त्ताहं भोक्ताहमित्यभिमन्यते । 'सुखानुशयी रागः (२।७)'। सुखस्पृहा रागाख्यः क्लेशः। एवं "दुःखानुशयी द्वेषः।" (२।८) "स्वरस-वाही विदुषोपि तथा रूढोऽभिनिवेशः।" (२।९) तथारूढः पूर्वजन्माद्यनुभूत मरणदुःखवासनाबलात् मम मरणं माभूदिति मरणभयरूपः पञ्चमक्लेशो-भिनिवेशः।

ननुक्रियायोगस्य कथं क्लेशतनूकरणार्थत्वम्। [3]संस्कारासत्त्वे तदा न स्यादशक्यत्वादशक्याहष्टद्वारा ध्यानसम्पादकत्वेन स्थूलक्लेश नाशकत्वेन तनुकरणार्थत्वम्। संस्कारसत्त्वेऽपि क्रियायोगस्य सूक्ष्मसंस्काररूपक्लेशा-[4]नन्तरत्वे साक्षात्काररूप प्रतिलोम परिणामात्मक प्रतिप्रसवहेयत्वान्नेदानीं तत्परिक्षय इति सूत्राभ्यामाह।

**"ते प्रतिप्रसवहेयाः सूक्ष्माः।" (२।१०)**

**"ध्यानहेया स्तद्वृत्तय" (२।११) इति च।**

अत्र च सर्वक्लेशमूलभूतस्याविद्यारूपक्लेशस्य तत्त्वज्ञानमेव परं निवर्त्तकम। तच्च तत्त्वज्ञानं यद्यपि तुल्यौपनिषदं पुरुषं [5]गच्छामीतिश्रुत्या वाक्यजन्यमेवा-ज्ञाननिवर्त्तकं प्रमाणान्तरस्य तथाभूतात्मज्ञानजनकस्या[6]न्वीक्ष्यमाणस्याप्य-लाभात्। [7]तद्वा"[A]आत्मा वा अरे द्रष्टव्य" इत्यनुद्य "श्रोतव्योमन्तव्यो निदिध्तासितव्य" इति साधनविधानात श्रवणमनननिदिध्यासनसाध्यम्।

---

**ख पाठः—**

(1) अस्मितादीनां देहाभिमान एव। (2) वस्तुतः।

(3) क्लेशमूलसंस्कारः। (4) क्लेशानन्ततत्त्व। (5) पृच्छामीति।

(6) स्योद्वीक्ष्यमाणस्याप्यलाभात्। (7) तच्चात्मा वारे।

**मुद्रित पाठः —**

A- बृहदा — आत्मा वा अरे - २।४।५

[1]विक्षिप्तचित्तस्य निदिध्यासनासम्भवे सर्ववृत्तिरोधात्मकस्य योगस्य तत्साधनत्वाद् योगस्य [2]च योगाङ्ग [3]यमाद्यनुष्ठानसाध्यत्वाद् योगाङ्गानुष्ठानेन दृष्टादृष्टद्वारेण सत्त्वशुद्धौ योगेन निदिध्यासनसिद्धौ तत्त्वज्ञानादज्ञाननाशात् कैवल्यं भविष्यतीति सर्वक्लेशानां तदैव क्षयो भविष्यतीति संप्रति तद्व्युत्थितचित्तयोगप्रवृत्तये क्रियायोगानुष्ठानं क्लेशतनूकरणद्वारोपयुज्यत इति प्रसङ्गाद्दर्शयति ।

'[A]योगाङ्गानुष्ठाना[4]दशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।'(२।२८)

तत्पूर्वसूत्राणि तु संस्कारस्याविद्यादिक्लेशमूलत्वदर्शनद्वारा निवर्त्यत्वं तन्निवर्तकश्च ज्ञानमिति [5]ज्ञानमेव कैवल्यमिति दर्शयितुम् ।

तानि च —

"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।" (२।१२)

कर्माशयोऽदृष्टम् । तदविद्यादिक्लेशजन्यम् । तस्यफलमाह ।

"सति मूले तद्विपाको जात्यायुर्भोगाः ।" (२।१३)

अदृष्टस्य विपाकाः फलानि । जातिर्ब्राह्मणत्वादिरायु र्भोगश्च ।

"ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।" (२।१४)

ह्लादः सुखम्, परितापो दुःखम् । [6]सुखाङ्गेन संसारस्योपादेयतेत्याशङ्क्याह ।

"परिणामतापसंस्कारदुःखै र्गुणवृत्ति[B]निरोधाच्च
दुःखमेव सर्वं विवेकिनः ।" (२ । १५)

सुखमपि दुःखपक्षनिक्षिप्तमित्यर्थः ।

---

ख पाठः —

(1) विक्षिप्तस्य चित्तस्य च । (2) च इति नास्ति । (3) क्षमा ।

(4) दशुद्धि । (5) ज्ञानादेव । (6) सुखांशेन ।

मुद्रित पाठः —

A- पातञ्जल । B- विरोधाच्च

ननु दुःखस्योत्पन्नस्य स्वत एव क्षयान्नाशार्थं यत्नो व्यर्थ इत्याशङ्क्याह दुःखहेतोः पुरुषस्य चित्तदेहादिभिरविवेकस्याज्ञानाक्षयेनागत—दुःखस्य कारणाभावादनुत्पाद इति दर्शयति सूत्रैः ।

**"हेयं दुःखमनागतम् ।" (२ । १६)**

द्रष्टृदृश्ययोः संयोगो हेयहेतुः (२ । १७) । संयोगो भोग्यभोक्तृत्वरूपः । दृश्य-स्वरूपमाह ।

**"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।" (२ । १८)**

प्रकाशः सहकार्य्यम् । क्रियाप्रवृत्तिः रजसः । स्थितिस्तमसः । एतन्मय एव महदादिजडवर्गो दृश्यः ।

**"विशेषाविशेषलिङ्ग[1]मात्रालिङ्गानि गुणपर्वाणि ।" (२।१९)**

विशेषाः स्थूलवर्गाः । अविशेषास्तन्मात्रेन्द्रियादि सूक्ष्माः । लिङ्गमात्रं बुद्धिः । अलिङ्गं प्रकृतिः । एतानि दृश्यानीत्यर्थः । दृश्यमुक्तम् । द्रष्टारमाह ।

**"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।" (२।२०)**

न तु ज्ञानाश्रयः । [2]वृत्तिप्रतिबिम्बितः ।

**"तदर्थ एव दृश्यस्यात्मा ।" (२।२१)**

तयोः संयोगं व्याचष्टे ।

**"स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ।" (२।२३)**

स्वस्य दृश्यस्वामिनः पुंसः स्वरूपमेव भोग्यभोक्तृस्वभावत्वात् संयोगः । स चाविद्याकृत इत्याह ।

**"तस्य हेतुरविद्या ।" (२।२४)**

संयोगाभावः कैवल्यम् । संयोगहेत्वविद्यानाशादेवेत्याह ।

---

**ख पाठः—**

(1) मात्रापर्वाणि । (2) प्रत्ययानुदृश्यः प्रवृत्तिप्रतिलम्बितः ।

"तदभावात संयोगा^A भावः तादृशः कैवल्यम् ।" (२।२५)

कथमविद्यानाश इत्यत्राह ।

"विवेकख्यातिरविप्लवा हानोपायः ।" (२।२६)

अविप्लवादृष्टभूमित्वाद् विच्छेदरहिता ।

"तस्य सप्तविधा प्रान्तभूमिः प्रज्ञा ।" (२।२७)

कार्य्यविमुक्तिरूपा चतुर्विधा । ज्ञातं मया ज्ञेयम् । क्षीणा मे क्लेशाः । अधिगतमायाया हानम् । प्राप्ता विवेकख्यातिः । तस्यां दशायाम् अदृश्येव प्रज्ञायते ।

चित्तविमुक्तिस्त्रिधा । चरितार्था मे बुद्धिः । गुणाहृताधिकारा गिरिशिखरच्युता इव ग्रावाणो न पुनः प्ररोहं यास्यन्ति । स्वकारणे लयादेषां मूलाभावात् कुतः पुनः प्ररोहः । स्वात्मीभूतश्च मे समाधिः । तस्मिन् सति स्वरूपप्रतिष्ठोऽहमिति । एवं सप्तप्रकारा प्रज्ञा मुक्तस्य भवतीत्युक्तम् ।

योगाङ्गान्याह —

"यमनियमासनप्राणायामप्रत्याहार धारणा-
ध्यान^B समाधयो योगाङ्गानि ।" (२।२९)

"अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहाः यमाः ।" (२।३०)

प्राणवियोगफलो व्यापारो हिंसा । तदभावोऽहिंसा । सत्यं वाङ्मनसयोर्यथार्थत्वम् । स्तेयं परस्वापहारः तदभावोऽस्तेयम् । ब्रह्मचर्य्यमुपस्थसंयमः । गृहस्थव्यतिरेकेण । अपरिग्रहो भोगसाधनानामस्वीकरणम् ।

^C याज्ञवल्क्यः —

"अहिंसासत्यमस्तेयं ब्रह्मचर्य्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ।

---

मुद्रित पाठः —

A- भावो हानं तद् दृशेः कैवल्यम् — पातञ्जलदर्शनम् ।

B- समाधयोऽष्टावङ्गानि — पातञ्जलदर्शनम् ।

C- ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ — याज्ञ - ३ । ३१२]

आर्जवं कुटिलताराहित्यम् । क्षमा शक्तस्यापि परदोषसहिष्णुता । शौचं द्विधा ।

**मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् ।**

**गारुडपुराणे—**

**"आनृशंस्यमनालस्यं वैराग्यं चाप्यचापलम् ।"**

ज्ञानञ्च यममध्ये गणितम् । आनृशंस्यमक्रूरत्वम् ।

**"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ।"(१।१५)**

दृष्टं विषयसुखम् । आनुश्रविकं श्रूयमाणस्वर्गादिसुखम् । तद्विमुखस्य । एते च जातिदेशसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् । अहिंसादयो, जात्याद्यवच्छिन्ना महाव्रतमुच्यते । ब्राह्मणं न हनिष्यामि इत्येवंरूपेणाहिंसा जात्यवच्छिन्ना । एवं तीर्थे न हनिष्यामीत्येवं देशावच्छेदः । एवं प्रकाररूप-व्यतिरेकेण विधिं विना न हनिष्यामीत्येवं सर्वहिंसाप्रतियोगित्वेनाहिंसाया महाव्रतं योगाङ्गम् । एवं सत्यादिषु बोध्यम् ।

**अथ नियमाः**

**"शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः ।"(२।३२)**

शौचं यमेषूक्तम् । तत्राशौचपरित्यागः । इह शौचानुष्ठानमिति भेदः । आन्तर-शौच [1]मौनादिभिश्चित्तशुद्धिः । सन्तोषः प्राणहेतोरधिकस्यानुपादित्सा । तपः कृच्छ्रचान्द्रायणादीनि ।

**तथा च (भगवद्गीता— १७ । १४. १५)—**

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**

**ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ (१४)**

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**

---

**ख पाठः —**

(1) मैत्र्यादीभि ।

[A]स्वाध्यायाध्ययनं चैव वाङ्मयं तप उच्यते ॥ (१५)
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ (१७।१६)

इत्युक्तलक्षणम् । स्वाध्यायः योगशास्त्राभ्यासः तन्मन्त्रजपो वा । ईश्वर-प्रणिधानं यथोक्तरूपम् ।

[B]याज्ञवल्क्यः —

"तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीमतिश्च तपो व्रतम् ॥"

एते तु नियमाः प्रोक्ताः । सिद्धान्तश्रवणं वेदान्तश्रवणम् । स्त्री-शूद्रयोः पुराणश्रवणम् । लज्जा कुत्सितकर्मणि । गारुडे असंगताहारनियम-निर्ममत्वयमादमा अधिकत्वेनोक्ताः ।

"वितर्कबाधने प्रतिपक्षभावनम् ।" (२ । ३३)

वितर्का हिंसादयः । तेषां बाधकत्वप्रसङ्गे तत्प्रतिपक्षस्य भावनं कर्त्तव्यम् । अहिंसया वितर्कोऽहिंसा । तन्मूलं क्रोधः । तत्र क्षमानुसन्धानम् । अनृतस्य लोभादिमूलस्य सन्तोषः प्रतिपक्षः । एवमस्तेयस्य तथाऽपरिग्रहस्य । [1]वितर्कः कामः । तस्य प्रतिपक्षो विचारः । सूत्रकारेण तु सामान्याभिप्रायेण हिंसादयो दुःखज्ञानफला इति भावनं प्रतिपक्षभावनमित्युक्तम् । क्रोधादेर्दुःखा-ज्ञानजनकत्वात् । अहिंसादीनामानुषङ्गिकं फलम् ।

"अहिंसासिद्धौ तत्संनिधौ वैरत्यागः ।" (२ । ३५)

अहिनकुलादीनामपि ।

---

**ख पाठः –**

(1) ब्रह्मचर्य्यस्य वितर्कः ।

**मुद्रित पाठः —**

A- स्वाध्यायाभ्यसनं । B- नास्ति ।

सत्ये फलम्—

"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ।" (२ । ३६)

सत्यप्रतिष्ठो योगः । यागमकुर्वन्तमपि यद् वदति यागफलं तवास्त्विति स लभते ।

[A]"अस्तेये सर्वरत्नोपस्थानम् ।" (२ । ३७)

"ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः । (२ । ३८)

"अपरिग्रहस्थैर्य्ये [B]जन्मान्तरकथा सम्बोधः ।" (२ ३९)

पूर्वजन्मज्ञानमित्यर्थः ।

"शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ।" (२ । ४०)

अशुचिरयं देह इति मत्वा निर्ममः परसंगमं च त्यजेत् ।

"सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजया-

त्मदर्शन योग्यत्वानि च ।" (२ । ४१)

शौचात् सर्वशुद्धिः । तस्मादात्मनः प्रीतिः । तस्मादेकाग्रत्वं चित्तस्थैर्य्यम् । तत इन्द्रियजयस्तत आत्मज्ञानमिति क्रमेण शौचफलानि ।

"सन्तोषादनुत्तमसुखलाभः ।" (२ । ४२)

अनुत्तममान्तरसुखम् ।

"कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ।" (२ । ४३)

"स्वाध्यायादिष्टदेवतासंप्रयोगः ।" (२ । ४४)

देवतां पश्यतीत्यर्थः ।

"समाधिसिद्धिरीश्वरप्रणिधानात् ।" (२ । ४५)

[1]अन्तरहान्या समाधिसौकर्य्यम् ।

---

**ख पाठः –**

(1) अन्तराहान्या ।

**मुद्रित पाठः –**

A- अस्तेयप्रतिष्ठायां । B- जन्मकथंतासंबोधः ।

## आसनम्

"स्थिरसुखमासनम् ।" (२ । ४६)

आस्यते अनेनेति आसनम । पद्मस्वस्तिकादि । तद यदा स्थिरं निष्कम्प सुखमनुद्वेजनीयं च भवति तदा योगाङ्गमिति भोजव्याख्या । वाचस्पतिः यथासुखं [1]चेतिभाष्यात् [A]येन संस्थानेन स्थितस्य स्थितिसुखं सिद्ध्यति तदेवासनमेवेति । विद्यारण्यश्रीपादास्तु पद्मासनादिमध्ये यदस्य स्थैर्यसुखकर तदेव तेनाश्रयणीयमित्याहुः । तदुपाय[2]माह ।

" प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ।" (२ । ४७)

प्रयत्नशैथिल्यं लोकव्यवहारार्थं यत्नत्यागः । अनन्तसमापत्तिः शेषोऽहमितिध्यानम् । तत्राद्दृष्टद्वारा उभाभ्यामासन स्थिरसुखम् ।

आसनभेदाः —

**योगी याज्ञवल्क्यः —**

**उरुस्थोत्तानचरणः सव्येन्यस्योत्तरं करम् ।**
**उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा । (१६८)**
**निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तान्न संस्पृशन् ।**
**तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः । (१६९)**
**[B]सन्निरुद्धे न्द्रियग्रामः [C]पद्मासनमिदं स्मृतम् ।**

---

**ख पाठः —**

(1) वेति । (2) माहुः ।

**मुद्रित पाठः —**

A- येन संस्थानेनावस्थितस्य स्थैर्यं सुखं च सिद्ध्यति तदासनं स्थिरसुखम् ।
— तत्ववैशारदा - २ । ४६

B- संनिरुद्ध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।

C- पद्मासनमित्यदि पाठो नास्ति ।

अङ्गुष्ठौ च न बध्नीयात्पादाभ्यां व्युत्क्रमेण तु ।
ऊर्वोरुपरि पादौ च पद्मासनमिदं मतम् ।

यत्तु दत्तात्रेयः–

ऊरुस्थौ पादावुत्तानावूर्वोर्मध्ये तथा करौ ।
नासाग्रे लोचने दन्तमूले जिह्वाञ्च विन्यसेत् ।
चिबुकं वक्षसि स्थाप्य पवनं च शनैः शनैः ।
पूरयेदुदरे पश्चाद् गत्या शक्त्या च रेचयेत् ।
इदं पद्मासनं नाम सर्वव्याधिविनाशनम् ।

इति हठयोगविषयम् ।

जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत् प्रचक्षते ।

धर्मपुत्रिकायाम् –

स्थातव्यौ भूतले पादावासनस्थेन पाणिना ।
दक्षिणं वामभागे तु वामपादं तु दक्षिणे ।
अन्योन्याभिमुखं कृत्वा मृगशीर्षकरद्वयम् ।
योगसंसिद्धिहेतुस्तु मृगस्वस्तिक उच्यते ।

याज्ञवल्क्यः –

दक्षिणेतरगुल्फेन सावनीं पीडयेच्छिराम् ।
अधस्ताद्दण्डयोः सूक्ष्मं सव्योपरि च [1]दक्षिणम् ।
जङ्घोर्वोरन्तरं पार्ष्णिं निच्छिद्रं बन्धयेद् दृढम् ।

---

ख पाठः –

(1) दक्षिणे ।

ऋजुकायश्च संपश्येद् गुल्फं दक्षिणमूर्ध्वगम् ।
एतत् सिद्धासनं नाम सर्वसिद्धिप्रदायकम् ।
योनिस्थानेऽङ्घ्रिमूलं स्यान्मेढ्रे पादमथापरम् ।
भ्रूमध्यदृक् समस्तिष्ठेत् सिद्धासनमिदं स्मृतम् ।
मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरञ्च विन्यस्य सिद्धासनमिदं स्मृतम् ।
एतन्मुक्तासनं केचित् पद्मासनन्तथापरे ।
गुप्तासनं वदन्त्येके प्राहुर्वज्रासनं परे ।

याज्ञवल्क्यः –

[A]गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोर्न्यसेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बध्यात्सुनिश्चलम् ।
चित्रासनं भवेदेतत्सर्वव्याधिविषापहम् ।
गुल्फौ तु योगपट्टेन बध्नीयात्पृष्ठयोगतः ।
आकुञ्च्य जानुनी सम्यक् पादं कृत्वा च दक्षिणम् ।
बाहुतो वामजंघायां वामं सव्यादधो बहिः ।
किञ्चिद् विनिर्गतं कृत्वा संतिष्ठेदास्य वै कटिम् ।
पर्य्यंकमिति विख्यातमासनं योगसिद्धिदम् ।

वसिष्ठः –

गुदं निबध्य गुल्फाभ्यां व्युतक्रमेण महामतिः ।
कूर्मासनं भवेदेतदितियोगविदो विदुः ।

---

मुद्रित पाठः –

A- याज्ञवल्क्ये नास्ति ।

याज्ञवल्क्यः —

सव्ये दक्षिणगुल्फन्तु पृष्ठपार्श्वे निवेशयेत् ।
दक्षिणेन तथा सव्यं गोमुखं गोमुखं यथा ।
एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितम् ।
इतरस्मिंस्तथा चोरुं वीरासनमिदं स्मृतम् ।

आग्नेयपुराणे —

तद्वत्पादद्वयं कृत्वा सुतन्वान्योन्यसंस्थितम् ।
चन्द्रार्द्धमेकं कथितं द्विगुणे चरणद्वये ।
तलपादेन वामेन जानुना दक्षिणेन तु ।
स्थित्वा हस्तपुटं कार्य्यमर्द्धचन्द्रासनं विदुः ।
भुवि स्थित्वा तु जानुभ्यां तावन्मात्रेण योगिना ।
हृदि हस्तपुटं कार्य्यं ज्ञेयमञ्जलिनासनम् ।
आसनस्थेन पादौ द्वौ विन्यस्य भूतले समौ ।
जानुद्वये हस्ततलं कृत्वा पीठासनं भवेत् ।
एवमेवासनाभावे भुवि स्थित्वा प्रयोजयेत् ।
बाहुजङ्घासु संश्लिष्टं स्थिरासनमुदीरितम् ।
पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ।
धनुराकर्षणं कुर्य्याद्धनुरासनमीरितम् ।
योगिनस्त्वेतदभ्यासान्मतिशुद्धिः प्रजायते ।
जान्वोरन्तरे हस्तौ संस्थाप्य चरणे भुवि ।
द्विगुणीकृत्य तौ चोद्र्ध्वं कुक्कुटासनमीरितम् ।
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धरम् ।

शेते कूर्मवदुत्तानं भवेदुत्तानकूर्मकम् ।
तत्तज्जातीयजन्तूनामुपवेशे यथाकृतिः ।
तथानुकरणाज्ज्ञेयं कुञ्जराद्यासनं बुधैः ।
उत्तानशववद्भूमौ शयनं तु शवासनम् ।
शवासनं श्रमहरं चित्तविश्रान्तिकारकम् ।

आसनसिद्धिफलमाह

फणी —

"ततो द्वन्द्वानभि^घात ।" (२ । ४८)

शीतोष्णादि द्वन्द्वम् ।

अथ प्राणायामः

ततः प्रथमं नाडीशुद्धिः ।

वासिष्ठे —

वृथा क्लेशो भवेत्तस्य नाडीशुद्धिमकुर्वतः ।

ईश्वरप्रोक्ते –

देहो मेरुस्तस्य शृङ्गे कलाषोडशवान् विधुः ।
अधोमुखः सुधावर्षी उल्कायां वामे तनोः सदा
मेरुमूलेस्थितः सूर्य्यकलाद्वादशसंयुतः ।
दक्षिणे पथि देहस्य इदं हन्त्यमृतं ग्रसन्न ।
सार्द्धलक्षत्रयं नाड्यः सन्ति देहान्तरे नृ.णाम् ।

---

मुद्रित पाठः —

A- घातश्च ।

प्रधानभूता नाड्यस्तु तासु सन्ति चतुर्दश ।
तासु तिस्रस्तु मुख्याः स्युः पिङ्गलेलासुषुम्णिकाः ।
तस्मिन्नेव सुषुम्णैव मुख्या सा योगिवल्लभा ।
पृष्ठवंशस्य मध्ये सा सोमसूर्य्याग्निरूपिणी ।
ब्रह्मरन्ध्रं च तत्रैव पद्मतन्तुनिभा च सा ।
गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्राच्च द्व्यङ्गुलादधः ।
देहमध्यं तयोर्मध्यं मनुष्याणामितीरितम् ।
देहमध्ये शिखिस्थानं तप्तजम्बुनदप्रभम् ।
त्रिकोणं तस्य मध्येऽग्निशिखा तन्वी तदूर्ध्वतः ।
कन्दस्थानं [1]नवाङ्गुष्ठे चतुरङ्गुलसम्मतम् ।
अण्डाकृतिवदाकारं पूरितं तत्त्वगादिभिः ।
यन्मध्ये नाभिरित्युक्तं नाभौ चक्रसमुद्भवः ।
द्वादशारयुतं तच्च तत्र देहः प्रतिष्ठितः ।
चक्रेऽस्मिंश्चरति प्राणो जीवः प्राणे व्यवस्थितः ।
तस्योर्द्ध्वं कुण्डलीस्थानं नाभेस्तिर्य्यगधः स्थितः ।
मुखेनैव च सा वेष्टा सुषुम्णामुखमास्थिता ।
सा योगकाले पानेन प्रबोधं याति वह्निना ।
स्फुरति हृदयाकाशे [2]नानारूपा महोज्वला ।
वायुर्वायुसखेनैव ततो याति सुषुम्णया ।
कन्दस्य मध्यगा पृष्ठवंशास्थना सह मूर्द्धगा ।

---

ख पाठः —

(1) तदाङ्गुष्ठे ।　　(2) रूप ।

सुषुम्णा मुक्तिमार्गेति श्रुतिस्मृतिवचोबलात् ।

शतं चैका च हृदयस्य नाड्य-,

स्तासां मूर्द्धानमभिनिःसृतैका ।

तयोर्द्ध्वमायन्नमृतत्वमेति,

विश्वान्यङ्गान्युत्क्रमेण भवति ।

इडा तस्याः स्थिता सव्ये दक्षिणे पिङ्गला स्थिता ।

इडायां चन्द्रमा नित्यं पिङ्गलायां रविः स्थितः ।

सरस्वती कुहूश्चैव सुषुम्णापार्श्वयोः स्थिते ।

गान्धारा हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः ।

पूषा यशस्विनी चैव पिङ्गला पृष्ठपूर्वयोः ।

कुहोश्च हस्तिजिह्वाया मध्ये बिम्बोदरी स्थिता ।

यशस्विन्याः कुहोर्मध्ये चारणा च प्रतिष्ठिता ।

पूषायाश्च सरस्वत्याः स्थिता मध्ये यशस्विनी ।

गान्धारायाः सरस्वत्याः स्थिता मध्ये च शङ्खिनी ।

अलम्बुषा च या नाडी कन्दमध्यादधः स्थिता ।

एतास्वन्याः समुत्पन्ना नाड्योऽनन्ताश्च तास्वपि ।

यथाश्वत्थदले तद्वदासु प्राणादयो दश ।

प्राणोऽपानः समानाख्य उदानो व्यान एव च ।

नागः कूर्मः कृकलको देवदत्तो धनञ्जयः ।

आद्याः पञ्च तु मुख्याः स्युः प्राणापानौ तु तेष्वपि ।

तयोर्मुख्यस्तथा प्राणस्त्रिंशत् सर्वाङ्गुलात्मकः ।

बहिर्द्वादश पर्वाणि देहेऽष्टादश संख्यकम् ।

याज्ञवल्क्यः —

आस्यनासिकयोर्मध्ये हृन्मध्ये नाडिमध्यमे ।
प्राणालयमिति प्राहुः पादाङ्गुष्ठेऽपि केचन ।
व्यानः श्रोत्राक्षिमध्ये च कृकट्यां गुल्फयोरपि ।
प्राणे गते स्फिगे देशे तिष्ठत्यत्र न संशयः ।
अपानं विलयं केचिद् गुदमेढ्रोरुजानुषु ।
उदरे दक्षिणे कट्यां जंघे नाभौ वदन्ति ह ।
उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ।
समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ।
भुक्तं सर्वरसं ज्ञाने व्यापयन् वह्निना सह ।
प्राणादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।
यद्भुक्तमन्नपानादि प्राणास्तदुदरे स्थिताः ।
पृथक् पृथक् करोत्येतदपानं च व्रजेत्ततः ।
तत्र वह्निं दीपयति दीप्तो वह्निस्तु वायुना ।
अत्युष्णमुदकं कुर्यादन्नाद्यं चापि पाचयेत् ।
स्वेदमूत्रे जलं स्यातां रूपं वीर्य्यं रसो भवेत् ।
अन्नं पुरीषं प्राणश्च समानेन सहापृथक् ।
सर्वासु नाड़ीषु ततो व्यापयन् चरते पुनः ।
नवच्छिद्रै मलोत्सर्गं वायवः कुर्वते सदा ।

---

ख पाठः —

(1) हि ।

निःश्वासोच्छ्वासकाशाश्च प्राणकर्मेति कीर्त्तिताः ।
विण्मुत्रादिविसर्गोऽपि कर्मापानस्य कीर्त्यते ।
व्यानस्य चेष्टाहानाद्यु-दानस्योन्नयनं तनोः ।
शोषणादि समानस्य नागस्योद्गारकर्म च ।
निमीलनादि कूर्मस्य युतं कृकलकस्य च ।
धनञ्जयस्य शोभादि देवदत्तस्य जृम्भणम् ।
एवं ज्ञात्वा च नाडीनां वायूनां चैव संस्थितिम् ।
तपोवने मठं कृत्वा यथोक्तासनसंस्थितः ।
मन्त्राहिततनुर्धीरः सितभस्मधरः सदा ।
विनायकं स्वेष्टदेवं गुरुं नत्वा कृतासनः ।
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।
नासाग्रदृक् समासीनः सव्ये न्यस्योतरं करम् ।
नासाग्रे चन्द्रविम्बस्थं वं बीजं चेतसा दृशा ।
ध्यायन्नापूरयेद्वायुमिडया रविमात्रकम् ।
नासाग्रे स्थितकोणाग्निबिम्बे 'र' मिति चिन्तयेत् ।
ततो विरेचयेद् वायुं मलं पिङ्गलया पुनः ।
पुनः पिङ्गलयापूर्य्य पूरयेदिलया शनैः ।
[1]रेचकं पूरकं चापि भवेद् द्वादशमात्रकम् ।
षटकृत्व आचरेदेवं त्रिषु कालेषु यत्नतः ।
त्रिचतुर्वत्सरान्ते च नाडीशुद्धिर्भवेद् ध्रुवम् ।

---

ख पाठः —

(1) रेचनं पूरणं ।

वसिष्ठमते —

रेचकपूरकाभ्यां नाडीशुद्धिः। "दत्तात्रेय मते" तु रेचकपूरकसहित-कुम्भकेनैव नाडीशुद्धिः।

कुर्वीत रेचपूराभ्यां कुम्भकं प्रतिवासरम्।
प्रातः प्रातः प्रकुर्वीत शक्त्या विंशतिकुम्भकान्।
मध्याह्ने च तथा सायमर्द्धरात्रे च कुम्भकान्।
विंशतिं विंशतिं कुर्य्या-दशीतिं प्रतिवासरम्।
एवं मासत्रयं कुर्य्या-न्नाडीशुद्धिस्ततो भवेत्।
यदा तु नाडीशुद्धिः स्यात्कदाचित्किन्तु योगिनः।
शरीरलघुता कार्श्य-मग्निवृद्धिः सुरूपता।

[1]अत्र प्राणायामः

"[A]तस्मिम् श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः।"

इति पतञ्जलिः। (२।४९)

अत्र भाष्यम्। [B]सत्यासने [2]बाह्यवायोरानयनं [3]श्वासः। कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः। तयोर्गतिविच्छेदः उभयाभाव इति। अत्र वाचस्पतिः। रेचकपूरक[C]कुम्भकेष्वपि श्वासप्रश्वासतोर्गतिविच्छेदः। पूरके श्वासगतिसत्त्वेपि प्रश्वासगत्यभावादुभयाभावः। एवं रेचके श्वासगति-सत्त्वेऽपि प्रश्वासगत्यभावादुभयाभावः। कुम्भकेद्वयोरप्यभाव इति। [4]यदा श्वासानन्तरं पूरकेऽतद्धारणादस्ति धारणक्षमेण गतिविच्छेदः। एवं रेचके बहिर्धारण अग्रगतिविच्छेद इति सामान्यलक्षणम्।

---

ख पाठः –

(1) ततः। (2) बाह्यस्य। ( ) निःश्वासः। (4) यद्वा।

मुद्रित पाठः –

A- तस्मिन् सति। B- सत्यासनजये वाह्यस्यवायोराचमन।

C- कुम्भकेष्वस्ति।

विशेषलक्षणमाह —

"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ।" (२ । ५०)

"बाह्याभ्यन्तर विषयापेक्षी चतुर्थः ।" (२ । ५१)

अत्र वृत्तिशब्दः प्रत्येकमभिसबध्यते। यत्र श्वासपूर्वको गत्यभावः सोऽभ्यन्तरवृत्तिरूपः पूरकः। यत्र प्रश्वासपूर्वको गत्यभावः स [1]बाह्याभ्यन्तर-रूपो रेचकः तृतीयः स्तम्भवृत्तिरूपः। यथा तप्तोपले निहितं जलं सर्वतः परिशुष्य संकोचमेति, एवं प्राणः प्रयत्नान्निरुद्धः शरीरे सूक्ष्मेऽवतिष्ठते। तयोरप्येते देशकालसंख्याभिः [2]परिदृष्टाः। देशो द्विविधः। आन्तरो बाह्यश्च। आपादऽतलमस्तकं पिपीलिकातुल्यस्पर्शनानुमित आन्तरः। वितस्तिहस्तादि-मितो निर्वातदेशे तूलक्रियया वानुमितः बाह्यः। तेन द्विविधेन देशेन परिदृष्टः। क्षणानामियत्तावधारणेन परिदृष्टः कालपरिदृष्टः। संख्याभिः [3]परिदृष्टः। एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः। [4]तदा निगृहीतस्य एतावद्द्वितीय उद्घातः। [5]एवंमृदुः। एवंमध्यः। एवं तीव्र इति संख्या परिदृष्ट इति भाष्यम्। [6]अत्र व्याख्यानं स्वजानुमण्डलं पाणिना द्विः परिमार्ज्य छोटिकावच्छिन्नः। कालो मात्राभिः परिमित प्रथम उद्घातो मन्दः। स एव द्विगुणीभूतो द्वितीयो मध्यमः। स एव त्रिगुणीभूतस्तृतीयस्तीव्रः। सोयं संख्यापरिदृष्टः। स खल्वयं प्रत्यहमभ्यस्तो दिवसमासपक्षादिक्रमेण देशकालप्रचयव्यापितया दीर्घः। परमसमाधिसम [7]शमनीयतया सूक्ष्मः। नतु अन्यत्रेति दीर्घसूक्ष्माः।

## चतुर्थमाह

"बाह्याभ्यन्तरविषयापेक्षी चतुर्थः ।" (२ । ५१)

---

ख पाठः —

(1) बाह्यवृत्तिरूपो। (2) परिवृष्याः। (3) प्रदृष्टः।

(4) तद्वन्निगृहीतस्य। (5) एवं तृतीयः इति अधिकः।

(6) तत्र। (7) गमनीय।

बाह्यविषयो द्वादशान्तादिभिः । आभ्यन्तरविषयो हृदयनाभिचक्रादिभिः । तौ द्वौ विषयावाक्षिप्य पर्य्यालोच्य स्तम्भरूपो गतिविच्छेदः, स चतुर्थः । षट्चक्रध्यानादिपूर्वकसुषुम्णामध्यगतः वायुसञ्चालनादिरूप इत्यर्थः ।

विष्णुपुराणे (६ । ७ । ४०, ४१) —

प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च । (४०)
परस्परेणाभिभवं प्राणापानौ [A]यदानिलौ ।
कुरुतस्तद्द्विधानेन [B]कुरुतः संयमं तयोः । (४१)

योगी याज्ञवल्क्यः —

गायत्रीं शिरसा सार्द्धं जपेद् व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ।
भूर्भुवः स्वर्महर्जन स्तपः सत्यं तथैव च ।
सत्योंकारसमायुक्तं तत्सवितुर्वरेण्यम् ।
आपो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत् ।
एष मन्त्रप्रयोगस्तु प्राणायामनिरोधने ।
त्रिरावर्त्तनयोगोऽयं प्राणायामस्तु शब्दितः ।
त्रिविधं केचिदिच्छन्ति तथा तन्नवधा परे ।
मृदुमध्याधिमात्रत्वादेकैकं त्रिविधं भवेत् ।

अयमर्थः —

त्रिरावर्त्तनयोगेन पूरकादिरेकैकः प्राणायामः । पूरकादित्रयं हि प्रत्येकं प्राणायाम शब्दवाच्यम्, नतु प्राणायामावयव रूपम् । समानाधिकरण्य प्रसिद्धिभ्यां त्रिविधं केचिदिच्छन्ति इति रेचकपूरककुम्भक रूपेण त्रैविध्यम् ।

---

मुद्रित पाठः —

A- यथानिलौ ।   B- तृतीयः संयमात्तयोः ।

नवधापक्षस्य विवरणम्

मृदुमध्याधिविमात्रत्वा(१।२२)'दिति। पूरकादीनां प्रत्येकं त्रैविध्यान्नवविधत्वम्। एवञ्च त्रिरावृत्तमन्त्रेण पूरको मृदुः। षडावृत्तेन मध्यः। नवावृत्तेनातिमात्रः। एवं कुम्भकरेचकौ। अस्मिंश्च पूरककुम्भकरेचकानां न मात्राकालतारतम्यम्। किन्तु पूरको द्वादशमात्रश्चेद्रेचककुम्भकावपि द्वादशमात्रौ। एवं पूरकस्य चतुर्विंशतिमात्रत्वे षट्त्रिंशन्मात्रत्वे वा तयोरपि तावन्मात्रत्वम्। तद्दर्शयति स एव—

पूरकः कुम्भको रेचकः प्राणायामस्त्रिलक्षणः।
(४४) कनीयोमध्यमोत्तमा स्त्रितयं प्रोच्यते [1]तज्ज्ञैः।
द्वादशमात्राः कनीयान् मध्यमश्चतुर्विंशतिः।
उत्तमः षट्त्रिंशन्मात्राभेदैः प्रकीर्त्तित स्तथा।
एवं मात्राप्रयोगेण प्राणायामत्रयस्य तु।
ग्रहणं धारणोत्सर्गं यथासंख्येन कारयेत्।

एवं रूपमात्राप्रयोगेण द्वादश चतुर्विंशति षट्त्रिंशत् [2]मात्राभिर्यथासंख्येन कारयेत्। [3]एवं धारणं कुम्भकं मृदुमध्यातिमात्रं चतुर्विंशति षट्त्रिंशन्मात्राभिर्यथा संख्यं कारयेत्। उत्सर्गं रेचकमपि त्रिविधं त्रिंविशमात्राभिर्यथा संख्यं कारयेदिति सम्बन्धः। यदि च पूरके द्वादश मात्राः कुम्भके चतुर्विंशतिमात्राः रेचके द्वात्रिंशन्मात्रा यथासंख्येन कर्त्तव्या इत्यर्थः स्यात्तदा वक्ष्यमाणवचनविरोधः स्यात्।

---

ख पाठः—

(1) बुधैः।

(2) मात्राप्रयोगेण मृदुमध्यातिमात्रप्राणायामत्रयस्य ग्रहणं धारणमुत्सर्गं च यथासंख्येन कारयेत्।

(3) ग्रहणं पूरणम्। मृदु × × × × मात्राभि र्यथासंख्येन कारयेत्।
एवं धारणं कुम्भकं —

स्मृतिदृष्टं भवेदेतत् सिद्धान्तेष्वन्यथा भवेत् ।
मात्राप्रमाणयोगेन प्रणायामो निरोधनात् ।

अयमर्थः दशप्रणवगायत्रीप्रयोगपरिच्छिन्नः प्राणायामः स्मृतिदृष्टः । सिद्धान्तेषु "पञ्चरात्र सनत्कुमारादि मतेषु" अन्यथा भवेत् । अन्यथात्वमेवाह मात्राप्रमाणयोगेनेति । यावती मात्रा पूरके ततो द्विगुणा रेचके । ततोपि द्विगुणा कुम्भके इत्येवं रूपेणेत्यर्थः । यदि स्मार्त्तप्राणायामेपि पूरकादीनां मात्रासंख्यातारतम्यं तदा पञ्चरात्रादौ किं नाम मात्रायोगेनान्यथात्वम् । मृदुमध्यादिकृतविशेषस्तु द्वयोस्तुल्यः । तथा च सिद्धान्तप्राणायामे तत्रैवोक्तम्—

ॐकारेणैव कर्त्तव्यः प्राणायामो यथोदितः ।
मात्रायोगप्रमाणेन प्रणवं चापि चिन्तयेत् ।
मृदुमध्यातिमात्रत्वात्त्रिविधः सोऽपि कीर्त्यते ।

तेन पूरकादि मात्रातारतम्यमेव [1]तदित्रके विशेषः ।

तथा च पञ्चरात्रे —

शनैः शोषणमात्राभिः प्रणवाकारचिन्तवान् ।
पूरकं स्यात् कुम्भकस्तु चतुःषष्ट्या च मात्रया ।
उकारमात्रासंयोगाद्रेको द्वात्रिंशता पुनः ।
मकारचिन्तनादेषः प्राणायामः प्रकीर्त्तितः ।

मात्राप्रमाणमाह

योगी याज्ञवल्क्यः —

अङ्गुलिमोक्षत्रितयं जानुनोपरिमार्जनम् ।
तालत्रयमपि [2]ज्ञात्वा मात्रासंज्ञां प्रशंसति ।

---

ख पाठः —

(1) तान्त्रिके ।          (2) तद्वत् ।

दत्तात्रेयः –

अङ्गुली मोक्षत्रितये[1] जान्वोस्त्रिपरिमार्जनम् ।
करोति छोटिकामेकां मात्रा संख्यायते तथा ।

तथा—

द्वादशच्छोट्यः कनीयान् द्विगुणो मध्यमः स्मृतः ।
त्रिगुणोत्तममात्रः स्यान्मात्राभेदः प्रकीर्त्तितः ।

मार्कण्डेये –

"निमेषोन्मेषणं मात्रा द्विर्वा लघ्वक्षरं तथा ।"

नन्दिपुराणे –

"त्वरितं लघुभिर्दन्तैर्मात्रा द्वादशभिः स्मृता ।"

एतासां मात्राणां क्रमेणाधममध्यमोत्तमस्वीकारः ।

याज्ञवल्क्यः –

गोदोहं वत्सपानं वा इषुक्षेपमथापि वा ।
घण्टायास्तनितं वापि ह्रतमात्रासूदाहृता ।

तथा—

पूर्वोक्तस्य च मन्त्रस्य यथासंख्यं प्रयोजयेत् ।
मात्रायोग यथा योगं कृतान्येवं भवन्ति ह ।

पूर्वोक्त दशप्रणवयुक्तगायत्रीमन्त्रस्य मृदुमध्यातिमात्रेषु यथासंख्यं त्रिषट्नववारमानसजपेन मात्रा ज्ञातव्या इत्यर्थः ।

## पूरकः

बाह्यस्थितं वामपुटेन वायुमाकृष्य तेनैव शनैः समन्तात् ।
नाडीश्च सर्वाः परिपूरयेद् यः स पूरको नाम महानिरोधः ।

---

ख पाठः –

(1) "त्रितये" इत्यतः परं लिखितोऽङ्गं इति क पुस्तकपाठः अशुद्ध इव प्रतिभाति । तत्र "अङ्ग" इत्यंशः ख पुस्तके नास्ति ।

देवलः –

"निःश्वस्याध्मानं पूरणम् ।"

वायुसंहितायाम् –

नासिकापुटमङ्गुल्यापीड्यैकमपरेण तु ।

बाह्येन मरुता देहं दृतिवत् परिपूरयेत् ।

रेचकः

निष्क्रम्य नासाविवरादशेषं प्राणं बहिःशून्यमिवानिलेन ।

[1]निरुध्य संतिष्ठति चोर्ध्वबाहुः स रेचको नाम महानिरोधः ।

स्कान्दे —

नासिकापुटमङ्गुल्या पूरयित्वा परेण तु ।

उदराद्रेचयेद्वायुं रेचनाद्रेचकः स्मृतः ।

कुम्भकः

योगी याज्ञवल्क्यः —

न रेचको नैव च पूरयोगो नासाग्रवर्त्ती स्थिर एव वायुः ।

सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञाः ।

नासाग्रवर्त्ती स्थिर एवेति । कुम्भककाले पूरणे रेचकव्यापाराभावात् । नासामुखरोधेऽपि देहच्छिद्रेण नासामध्ये वायुस्तिष्ठति ।

तथा च गीतायाम् (५ । २७) —

प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।

---

ख पाठः –

(1) निरस्य ।

"प्राणापानगतीरुद्ध्वा प्राणायामपरायणाः ।" (४।२९)

इति वचनादपानस्याकुञ्चनं कार्य्यम् ।

कुम्भकाधिकारे देवलः –

"स पुनरेको द्वित्रिभिरुद्घातैर्मृदुर्मन्दस्तीव्रो भवति ।"

उद्घातलक्षणन्तु

[1]प्राणेनोत्सृज्यमाणेन अपानः पीड्यते यदा ।
गत्वा चोर्द्ध्वं [2]निवर्त्तेत एतदुद्घातलक्षणम् ।

कुम्भकस्य सप्त भेदानाह देवलः —

रेचितस्य बहिःस्तम्भो वायो रेचितकुम्भकः ।
पूरितस्योदरे रोधो ज्ञेयः पूरितकुम्भकः ।
कायस्यान्तर्बहिर्व्याप्तिर्या सा स्याच्छान्तकुम्भकः ।

रेचन पूरण वर्जं शरीरस्यान्तर्बहिर्मनसा वायोर्धारणा व्याप्तिरित्यर्थः ।

"स्थानयोरन्तरे रोधः प्रत्याहाराख्य कुम्भकः ।"

पादतल—गुह्यनाभिहृदुरःकण्ठघण्टिकाभ्रूमध्यललाटब्रह्मरन्ध्राणि स्थानानि । एतत्स्थानानां द्वयोर्द्वयोर्मध्ये वायोर्धारणं प्रत्याहाराख्यकुम्भकः ।

आपूर्य्य यः क्रमादूर्द्ध्वमूर्द्ध्वरोधो हृदादिषु ।
उत्तरः कुम्भकः स स्यादधोधो मूर्द्धतोधरः ।
रेचनात्पूरणे त्यक्त्वा मनसा मरुतो धृतिः ।
या नाभ्यादिप्रदेशेषु समः कुम्भः प्रकीर्त्तितः ।

नाभ्यादिकतिपयदेशधारणं समः सर्वशरीरे मनसो धारणं च शान्त इत्यर्थः ।

---

ख पाठः –

(1) प्राणेनोत्सार्य्यमाणेन । (2) निवर्त्तते ।

वायुसंहितायाम्—

अगर्भाद् गर्भसंयुक्तः प्राणायामः शताधिकः।

जपध्यानं विनाऽगर्भः सगर्भस्तु समन्वयात्।

मनसैव प्रसंख्यानं प्राणायामविधौ सदा।

इति नन्दीपुराणान्मानसो जपः। मन्त्रश्चात्र 'मनुयाज्ञवल्क्यसंवर्त्ताद्युक्ते गायत्री-जपः।' सप्तव्याहृतिशिरांसि दशप्रणवयोगेन पञ्चरात्रादिसिद्धान्तानुसारेण प्रणवः। [1]स्त्रीशूद्राणां प्रणववर्जिताष्टक्षरेणैव पञ्चाक्षरेण वा प्राणायामः।

"शिवमन्त्रं वैष्णवं च प्रणवेन विना बुधैः।"

रिति याज्ञवल्क्यात्।

सगर्भः प्राणायामस्त्रिविधः। सधूमकः सज्वालः प्रशान्त इति। अकारोकारमकाराणां पूरकादिषु ध्यानात् सधूमकः। प्रणवमात्रया सह तदेव ध्यानात्सज्ज्वालः। मन्त्रमात्रमानसजपेन प्रशान्तः।

नाभिमध्ये स्थितं ध्यायेत् कं रक्तं पूरकेन तु।

नीलोत्पलाभं हृत्पद्मे कुम्भकेन जनार्द्दनम्।

ललाटस्थं शिवं शान्तं रेचकेनाभिचिन्तयेत्।

याज्ञवल्क्येन तु—

पूरके नाभौ विष्णोर्ध्यानम्। कुम्भके हृदि ब्रह्मध्यानमुक्तम्।

वासिष्ठयोगे—

[A]प्रस्वेदं जनयेद् यस्तु प्राणायामः स[2]मन्दकः।

---

ख पाठः—

(1) स्त्रीशूद्रादीनां। (2) सकम्पकः (सकम्पकः)।

मुद्रित पाठः—

A- प्रस्वेदं जनयेद यस्तु प्राणायामो हि सोधमः।

मध्यमः कम्पनात् प्रोक्त उत्थानं चोत्तमे भवेत्॥

— इति तत्ववैशारदीपाठः - २।५१

कम्पयुक्तो मध्यमः स्यात् सहोत्थानस्तथोत्तमः ।
देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहः ।
उत्तमोत्तमलक्षणञ्च लिङ्गे -
आनन्दो जायते यत्र निद्रापूर्णस्तथैव च ।
तदोत्तमोत्तमः प्रोक्तः प्राणायामः सुशोभनः ।
"बाह्याभ्यन्तर विषयापेक्षी चतुर्थः ।" (२ । ५१)

इति पतञ्जलि सूचितस्य प्राणायामस्य प्रकार उच्यते ।

मूलाधारमधिष्ठानमणिपूरमनाहतम् ।
विशुद्धमाज्ञापद्मं च षट्चक्रं मुनयो विदुः ।
मूलाधाराद् विशुद्धान्तं पञ्चकं कालमध्यमम् ।
भ्रूमध्यान्तः [1]स्थिताज्ञाख्यं सहस्रारं तनोर्बहिः ।
ब्रह्मरन्ध्रे सुषुम्णाग्रे क्रमादेषां निरूपणम् ।
गुदात्तु द्व्यङ्गुलादूर्ध्वं कंकालस्य च मध्यतः ।
आधारचक्रं मरुतां सुवर्णाभं परे विदुः ।
वादिसान्तचतुर्वर्णयुक्तपत्रचतुष्टयम् ।
द्विरस्तो यत्र सिद्धोस्ति डाकिनी यत्र देवता ।
चतुष्कोणमिदं पद्मं त्रिकोणं मध्यमं सितम् ।
तत्र कुण्डलिनीत्येके पावकोऽस्तीति चापरे ।
स्वयं लिङ्गं च तत्रास्ति [2]बहुरूपं विमुक्तिदम् ।
स्वाधिष्ठानाभिधं लिङ्गमूले पद्मं चतुर्दलम् ।

---

ख पाठः —

(1) स्तथा । (2) बिन्दुरूपं ।

चादिलान्ताक्षरोपेतं षडस्रं शोणभासुरम् ।
विद्युन्निभं वा बाल्याख्यः सिद्धो देवी च डाकिनी ।
मणिपूराभिधं नाभौ नीलं पद्मं दशच्छदम् ।
रक्तं वा भादिगात्रान्तै-रर्द्धचन्द्रसमाकृतिम् ।
वालिर्नामास्ति सिद्धोत्र [1]लाकिनी चैव देवता ।
हृद्देशेऽनाहतं पद्मं चक्रं वा कनकप्रभम् ।
कादिठान्तान्त संयुक्तं त्रिकोणं द्वादशच्छदम् ।
बाणलिङ्गं च तत्रास्ते [2]काकिनी तत्र देवता ।
सिद्धः पिनाकी च तथा ध्यातव्यं चक्रमीदृशम् ।
विशुद्धं कण्ठहेमाभं पद्मं पूर्णेन्दुवर्त्तुलम् ।
शुक्लमेकेश्वरोपेतं षोड़शच्छदसंयुतम् ।
छागलाण्डस्थितः सिद्धः शाकिनी [3]तत्र देवता ।
आज्ञापद्मं भ्रुवोर्मध्ये [4]हक्षोपेतद्विपत्रकम् ।
चित्रं वा शुक्लवर्णं वा यथा दीपशिखा स्थिता ।
अत्र [5]स्थितो महाकालो देवता हाकिनी स्थिता ।
वाराणसीति चोक्तात्र लिङ्गं विश्वेश्वराभिधम्[6] ।

---

ख पाठः —

(1) डाकिनी । (2) डाकिना । (3) चात्र । (4) भक्षो । (5) सिद्धो ।

(6) विश्वेश्वराभिधम् इति एतदनन्तरम् अधिकः ।
भाले तदूद्ध्वं विन्दुश्च नादशक्तिश्च संस्थिता ।
ऊद्ध्वं × × × × रन्ध्रे सहस्रारं सरोरुहम् ॥
देहाद् बहिरथोवक्त्रं तालुमूले परे जगुः ।
अकलं च समाख्यातं मूलाधारे कुलाभिधम् ॥

**वह्नेः स्थानं तु यत् प्रोक्तं विद्याख्यं कामशब्दितम् ।**

अत्र मूलाधारपद्मादूर्द्ध्वं स्वाधिष्ठानारविन्दमध्यनालवत् स्वाधिष्ठानादिसर्वचक्रमध्यगता सहस्रच्छद पद्ममध्येन विनिर्गत्य ब्रह्मलोकान्तगामिनी मृणालसदृशी सुषुम्णा वर्त्तते । तस्याश्च मूलं स्वाधिष्ठानारविन्दस्याधस्तात् । तां च वेष्टयित्वा कुण्डलिनीसुषुम्णामूलरन्ध्रे मुखं पुच्छं च निवेश्य तिष्ठतीति गुरूपदेशाज्ज्ञात्वा प्राणायाममुपक्रमेत् । वामपादमूले निपीड्य ऊर्वोः सन्धिं वामजानूपरि दक्षजानुदाने निपीड्य ऋजुकायः शनैराकुञ्चनं कृत्वा पानमूर्द्ध्वं नयेत् ।

आधारपद्मस्थाग्निं तेन वायुना वर्द्धितं विचिन्त्य प्रणवं जपन् तत्रैव वायुमग्निं च धारयेत् । पञ्चघटिकापर्य्यन्तं त्रिकालं दिनशः । एवं दशदिनाभ्यासे वायुजयचिह्नं देहलाघवमग्निवृद्धिं प्रसन्नतां ज्ञात्वा कक्षान्तरमुपक्रमेत् ।

आधारपद्मस्थवायुसहितमग्निं गुदाकुञ्चनेन मनसोर्द्ध्वं नयेत् । बहिश्चाधिष्ठानारविन्दमूलगतां सुषुम्णामूलगतां कुण्डलिनीं स्पृशेत् । कुण्डलिनीश्चसंतप्तां सुषुम्णामुखविवरमुखं पुच्छं बहिः कुर्य्यात् । सुषुम्णाविवरे [1]तस्येष्टवायुना सहाग्निः प्रविशति । अधिष्ठानपद्मे वह्निवायुचेतसां प्रणवजपेन त्रिकालं पञ्चनाडीपर्य्यन्तं त्रिकालं धारणम् । एवं कतिभिर्दिवसैस्तत्र पवनसिद्धौ पूर्ववल्लक्षणं ज्ञेयम् । स्वल्पमूत्रपुरीषत्वम् ।

ततः सुषुम्णामार्गेणैव मनः प्राणा हुताशनात् । नाभिस्थ मणिपूरसरोजान्तं नयेत् । तत्र प्रणवजपेन पञ्चघटिकापर्यन्तं त्रिकालं धारणम् । एव कियद्दिनाभ्यासे जयाचिह्नं देहशोभारोग्यबलवृद्धिः तेजोवृद्धिश्च ।

पुनः सुषुम्णामार्गेण वह्निप्राणचेतसां हृत्स्थितानाहतसरोजपर्य्यन्त नयनम् । तत्र प्रणवजपेन पञ्चनाडिकापर्य्यन्तं धारणम् । एवं कतिपयदिनैस्त्रिकालाभ्यासाद् वायुजयचिह्नज्ञानम् । हृदि दीपावलोकनम् ।

---

**ख पाठः —**

(1) स्पष्टे ।

ततोऽग्निवायुचेतसां तन्मार्गेणैव [1]कण्ठविशुद्धाब्जपर्य्यन्तं नयनम् । प्रणवाभ्यासेन तत्र त्रिकालं पञ्चघटिकापर्य्यन्तं धारणम् । तत्र निश्चलत्वे पुनस्तेनैव वह्निवायुचेतसां भ्रूमध्यगताज्ञापद्म यावन्नयनम् । तत्र प्रणवजपेन पञ्चनाडिकापर्य्यन्तं त्रिकालं धारणम् । कतिभिर्दिवसै र्जयचिह्नं ललाटे वा चन्द्रदर्शनम् ।

ततः स्वयमेव वायुर्हृदयाद् ब्रह्मरन्ध्रान्तं गत्वा नाड़ीचिह्नवद्वायुः प्रसरति । तदा स्वयमेव ब्रह्माकारान्तःकरणवृत्तिरुदेति ।

पतञ्जलिरपि प्राणायाम फलमाह—

"ततः क्षीयते प्रकाशावरणम् ।" (२ । ५२)

इति, वासिष्ठे याज्ञवल्क्ये चान्यः प्रकारः ।

गुदं निपीड्याकुञ्चनेनोदानवायुं गुदोद्ध्र्वंद्व्यङ्गुलस्थवह्निशिखां [2]प्रति नयेत् । ततोऽग्नि वायुं च तेजसा नाभिस्थसावित्रमण्डलं यावन्नयेत् । तत्र त्रयाणां पूर्ववद् धारणम् । नाभिकन्दगता सुषुम्णामुखगता कुण्डलिनी स्वं मुखं सुषुम्णाविवराद् बहिःकुर्य्यात् । [3]स्वेष्टे सुषुम्णामुखे प्रविश्य पूर्ववद् वह्निवायुचेतसामूद्ध्र्वं नयनम् । करयोरङ्गुष्ठाभ्यां श्रोत्रे तर्जनीभ्यां चक्षुषा मध्यमाभ्यां नासापुटौ च संपीड्याकुञ्चनाभ्यासेनैव वायोर्ब्रह्मरन्ध्रान्तं नयनम् । ततो नादाभिव्यक्तिः । आदौ शङ्खध्वनिनिभो नादः । मध्ये मेघध्वनिवत् । अन्ते च वीणावेणुध्वनिवदिति ।

अत्र च—

**"केवले कुम्भके सिद्धे रेकपूरकवर्जिते ।**
**योगिनो यतचित्तस्य नासाध्यमिह किञ्चने ।"**

ति वचनात् केवल कुम्भकसिद्धिपर्य्यन्तं संहिताभ्यासः ।

**प्रणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।**
**अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः ।**

---

**ख पाठः —**

(1) कण्ठगत । (2) प्रजनयेत् । (3) स्पष्टे ।

## अथ प्रत्याहारः

पतञ्जलिः —

[A]स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार

इवेन्द्रियाणां प्रत्याहारः । (२ । ५४)

चक्षुरादीनां रूपादिविषयाभिमुखत्यागेन स्वरूपस्थितौ प्रत्याहार उच्यते । स कीदृशः ? चित्तस्वरूपानुकार इव चित्तविषयाभिमुख्यत्याग मनुचरेत्तदा प्रत्याहार इत्यर्थः । निद्रादिना विषयाभिमुखत्यागेन प्रत्याहारः। किन्तु शान्तिपूर्वक इत्युक्तं भवति ।

पञ्चधा प्रत्याहारमाह—

याज्ञवल्क्यः —

विषयासक्तानामिन्द्रियाणां विषयेभ्यो बलादाहरणं प्रथमः । यद् यत्पश्यति तेषामात्मनि [1]स्वमात्मवद्दर्शनं द्वितीयः। नित्यकर्मणां मनसानुचिन्तनं तृतीयः। पादगुल्फ जङ्घ मध्य[2]चित्त मध्यजानूरु मध्यपायुमूल देहमध्यमेढ्र नाभिहृन्मध्यकंठ—जिह्वामूल—नासामूल-नेत्रस्थान -भ्रूमध्यललाट- ब्रह्म-रन्ध्राणि। स्थानेष्वेतेषु मनसा वायु[3]मारोप्य स्थानात्स्थानात् समाकृष्यते चतुर्थः प्रत्याहारः। प्रतिलोमेनायं पञ्चमः [4]इति ।

बहिरङ्गयोगाङ्गानि द्वितीयपादे । तृतीयपादे चतुरङ्गयोगाङ्गानि ।

"[B5]देशसम्बन्धश्चित्तस्य धारणे"ति(३.१) सूत्रम् ।

अत्र भोजदेवः —

भ्रूमध्ये नाभिचक्रादौ चित्तस्य बंधो विषयान्तरपरित्यागेन स्थिरीकरणं धारणा। यमनियमवता जितासनेन परिहृत [6]पापविशेषेण प्रत्याहृते—

---

ख पाठः—

(1) स्व आत्म- (2) चित्तमूल । (3) मारोप्य धारणात् ।

(4) 'इति प्रत्याहारः' इत्यधिकः। (5) देशबन्ध- (6) प्राण ।

मुद्रित पाठः —

A- स्वविषया । B- देशबन्ध ।

न्द्रियेण ऋजुकायेन निर्बाधे प्रदेशे नासाग्रादौ संप्रज्ञातसमाधेरभ्यासाय चेतः स्थिरीकर्त्तव्यम् ।

**विष्णुपुराणे (६।७।४५) –**

**[A]प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।**

**वशीकृत्य ततः कुर्य्याच्चेतःस्थानं शुभाशये ।**

भूषणायुधयुक्त विष्णुमूर्त्तौ चित्तं धृत्वा [1]तत्र स्थैर्य्ये भूषणादिरहिते चित्तधारणम् । तत्र निश्चलत्वे विशिष्टमुखबाहुत्वे चेतः स्थापनम् । [2]तत्रस्थेऽन्यत्र नीतिः ।

पादादिजान्वन्ते भूस्थाने लं बीज पवनकमलयोनोनां पञ्चघटिका-धारणे भूजयः । ततः पाय्वन्ते जलस्थाने वं बाज-वायुनारायणानां पञ्च-घटिकाधारणे जलक्षयेऽरोगित्वम् । पायो[3]र्हृद्यन्ते रं बीजवायुरुद्राणां पञ्चघटिकाधारणे न वह्निर्दहति । हृदो भ्रूमध्यपर्य्यन्ते यं बीजवाय्वेश्वराणां पञ्चघटिकाधारणे व्योमगत्वम् ! भ्रूमध्योद्ध्वं नभःस्थाने हं बीजवायु-सदाशिवानां पञ्चघटिकाध्याने मुक्तो भवति ।

दत्तात्रेये तु—

नाभेरधो गुदादूद्ध्वं पञ्चघटिकापर्य्यन्तं वायुधारणे भूजये न [4]पृथ्वीतो मृत्युः । नाभौ धारणे जलक्षये जले न मृत्युः । नाभ्यूद्ध्वंमण्डले धृतौ नाग्निदाहः । भ्रूमध्यान्ते धृतौ न वायोर्भयम् । भ्रूमध्यधारण आकाशजये कालमृत्युवारणम । इति धारणा ।

---

**ख पाठः –**

(1) चित्त । (2) तत्रस्थावयवनीतिः । (3) हृदन्ते ।

(4) पृथिबीजो ।

**मुद्रित पाठः —**

A- प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये ।

वशीकृते ततः कुर्य्यात् स्थितं चेतः शुभाश्रये ॥

## अथ ध्यानम्

तत्र [1]प्रत्यक्षैकतानता ध्यानम्। यत्र धारणा तत्रैव [2]विश लिश-परिणामत्यागेन निरन्तरं चित्तवृत्तेरुत्पत्तिः सा ध्यानमुच्यते ।

विष्णुपुराणे (६।७।९१)—

[A]तद्रूपप्रत्ययैरेक संततश्चान्यनिस्पृहात् ।
ध्यानं प्रथममङ्गैश्च षड्भिर्निष्पाद्यते नृप ।

शिवगीतायां च —

"वृत्त्यन्तरैरसंस्पृष्टा धंधारा ध्यानमुच्यते ।"

ध्यानं द्विविधम्। सगुणं निर्गुणं च। समन्त्रं सगुणममन्त्रं निर्गुणम् ।

अन्तश्चेतो बहिश्चक्षुरवस्थाप्य सुखासनम् ।
समत्वं च शरीरस्य ध्यानमुद्रातिसिद्धिदा ।

वसिष्ठयोगे —

हृत्पद्मेऽष्टदले कन्दमध्योत्थे प्राणसंयमैः ।
दिक्स्वरेषु हरिं शङ्खचक्रपद्मगदाधरम् ।
किरीटकेयूरयुतं शुद्धस्फटिकसप्रभम् ।
पीतवस्त्रं महादेवं श्रीवत्साङ्कं च संस्मरन् ।
सोऽहमात्मेति विज्ञानं सगुणं ध्यानमुच्यते ।
अथवा हृदयाम्भोजे ध्यायेद् वैश्वानरात्मकम् ।

---

ख पाठः –

(1) प्रत्येकतानता । (2) विंशतिष्वपरिमाण । (3) तद्रूपप्रत्ययेत्रैक ।

मुद्रित पाठः –

A- तद्रूपप्रत्यया चैका सन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥ विष्णुपुराण - ९१

विश्वार्चिषं महावह्निं तापयन्तं [1]स्वकां तनुम् ।
दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ।
नीवारशूकवद्रूपं पीताभं सर्वकारणम् ।
ज्ञात्वा वैश्वानरं त्वेवं सोऽहमस्मीति या मतिः ।
ध्यानाद् वैश्वानरो भूत्वा सह तेनैव मुच्यते ।
अथवा मण्डले भानोः पुरुषं च हिरण्मयम् ।
ध्यात्वैव सोऽहमस्मीति ध्यानं श्रेष्ठमिति स्मृतम् ।
अर्द्धनारीश्वरं भानो-र्मण्डले वा विचिन्तयेत् ।
भ्रुवोर्मध्येन्तरात्मानं भारूपं सर्वकारणम् ।
स्थाणुवद्दूर्ध्वपर्य्यन्तं मध्यदेहात् समुत्थितम् ।
मनसालोक्य सोहं स्यामित्यैतद् ध्यानमुत्तमम् ।
अथवा हृदयाम्भोजे सोममण्डलमध्यगम् ।
स्वात्मानमव्ययाकारं भोक्तृरूपिणमव्ययम् ।
सहस्रदलपद्मोत्थामृतसंप्लावितं परम् ।
अमृतपूर्णदेहोऽहं ब्रह्मास्मीति च भावयेत् ।
अथवा देवमीशानं सोममण्डल मध्यगम् ।
अग्निहोत्रगतं वापि विरूपाक्षं विचिन्तयेत् ।
अथवा हि हरिः साक्षात् सर्वज्ञः पुरुषोत्तमः ।
सहस्रशीर्षा पुरुष इति ध्यानं च चिन्तनम् ।

इति सगुणध्यानम्[2] ।

---

ख पाठः –

(1) स्विकां ।

(2) "इति सगुणध्यानम्" एतत्पर्य्यन्तं ख पुस्तके पाठ आसीत् ।

(निर्गुणध्यानम)

कर्त्तव्यं निर्गुणध्यानं सगुणध्यानतः परम् ।
विज्ञानघनमानन्दमनन्तं ब्रह्म शाश्वतम् ।
सोहमस्मिन् न मत्तोऽन्यत्किञ्चिदस्तीति भावयेत् ।

समाधि ध्यानयोर्विशेषः

धारणा पञ्चघटिका ध्यानं स्यात् षष्टिनाडिकम् ।
दिनद्वादशपर्य्यन्तं समाधिरिति कथ्यते ।
सान्तरं तत्त्वद् ध्यानं समाधिः स्यान्निरन्तरम् ।

दत्तात्रेयः —

शब्दादीनाञ्च तन्मात्रा या च कर्णादिषु स्थिता ।
अवध्यानमिति प्रोक्तं स्यात् समाधिरतः परम् ।

सगुणध्यान-संप्रज्ञातसमाध्योर्विषयभेदादेव भेदः । निर्गुणविषय-समाध्यो र्न समाध्योरुक्तलक्षणः । संप्रज्ञातसमाधेः सगुणध्यानस्य च सान्तरत्वा-दिना भेदः इत्यर्थः ।

नाश्वमेधेन तत्पुण्यं न च वै राजसूयतः ।
यत्पुण्यमेकतानेन लभेद् योगी स्थिरासनः ।
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ।
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं ध्यानमेव परं पदम् ।
सर्वपापप्रसक्तोऽपि ध्यायन् निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावन-पावनः ।

पक्षोपवासाद् यत् पापं पुरुषस्य प्रणश्यति ।
प्राणायामशतेनैव तत् पापं नश्यते ध्रुवम् ।
प्राणायामशतेनैव यत् पापं नश्यते नृणाम् ।
तत् पापं क्षणमात्रेण विष्णोर्ध्यानात् प्रणश्यति ।

इति ध्यानम् ।

## अथ समाधिः

"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमेव समाधिः । (३।३)

अर्थकारसमावेशादुद्भूतार्थरूपं तदद्भूतज्ञानस्वरूपत्वेन स्वरूपशून्यतामिवापद्यते समाधिः । स्वरूपप्रतिसन्धानेऽपि सान्तरत्वप्रसङ्गादित्यभिप्रायः । समाधिर्द्विविधो भवति । स्थूलसूक्ष्मादिविषयदृष्टिदृष्ट विषयसंप्रज्ञात: सविकल्पक इति चोच्यते । तन्मात्रनिष्ठः संस्कारविहीनो निर्विकल्पकोऽसंप्रज्ञातश्चोच्यते । यद्यपि पातञ्जले स्थूलमहाभूतविषयः संप्रज्ञातः सवितर्क उक्त: । सूक्ष्मभूतविषय: सविचार: । चित्तवृत्तिरत्र विषय: । सामान्यचित्तवृत्तिप्रतिबिम्बितश्चैतन्यविषयश्च सास्मित इत्युक्तम् । तथापि केवलभूतविषयसमाधे र्ब्रह्मसाक्षात्कारानुपयोगाच्च चैतन्योपाधित्वेन [1]तेषांसमाधिरिति वक्तव्यम् । एवञ्च स्थूलसमष्ट्युपहितचैतन्यं विराट् । सूक्ष्मसमष्ट्यवच्छिन्न: सूत्रात्मा । अन्तःकरणसंस्कारमात्रावच्छिन्नः प्रज्ञात्मा । तदविरहितत्वेन आत्मा च कारणसद्रूप ईश्वर इति । तेषां क्रमेण समाधि: । सवितर्क: सविचार-सानन्द सास्मित शब्दैरुक्त इति प्रतिभाति । तदूर्ध्वं च यच्छुद्धचिन्मात्रतयावस्थानं स एव निर्विकल्पकः । निर्बीजासंप्रज्ञातश्चोच्यते । यच्च परवैराग्यं निर्विकल्पकसमाधिहेतु: संप्रज्ञातानन्तरमुपपद्यते । परवैराग्यं च—

"तत्परं पुरुषख्याते गुर्णवैतृष्ण्यम् ।" (१।१६)

---

ख पाठ: —

(1) तेषां समाधित्वेन इति तेषामितिपूर्वतः अधिक आसीत् ।

इतिसूत्रोक्तम् । पुरुषःशुद्धोऽनन्तस्तद् विपरीतगुण इत्येवं रूप-धर्ममेघसमाधिसमनन्तरं प्रकृतिगुणेषु वैतृष्ण्यमित्युक्तम् । तत्रायं क्रमः चतुर्विधकथितसंप्रज्ञातानन्तरं संसारस्य विवर्त्तबुद्धिदशायामहं शुद्धः, ब्रह्ममयः, यः कर्त्तृत्वभोक्तृत्वादिरूपः संसारः पूर्वमासीत् स तदामामपिगृह्यैव प्रतिभाति । या विवर्त्तबुद्धिः सैव धर्ममेघसमाधिपदेन पतञ्जलिना निरुच्यते । तदनन्तरं परवैराग्यं निर्बीजसमाधिहेतुः ।

**यथोक्तं संक्षेपशारीरके[A]—**

**कृपणधीः परिणाममुदीक्षते**
**क्षयितकल्मषधीस्तु विवर्त्तताम् ।**
**स्थितमतिः पुरुषः पुनरीक्षते**
**व्यपगतद्वितयं परमं मतम् ॥**

चतुर्विध-सविकल्पक-समाधिपर्य्यन्ते परिणामदृष्टिः । धर्ममेघसमा विवर्त्तदृष्टिः । चैतन्यमात्रस्फुरणे निर्विकल्पकनामकोऽसंप्रज्ञातः । यथोक्तं पतञ्जलिना —

**"तदा द्रष्टुः स्वरूपेऽवस्थान"मिति । (१।३)**

**यत्तु "विवेकख्यातिरविप्लवा हानोपाय" । (२।२६)**

इति सूत्रम् ।

तत्र विवेकख्यातिपदेन कर्त्तृत्वभोक्तृत्वाद्यभिमानरूपसंस्काररहितोऽहमिति यदेव ब्रह्मात्मैक्यज्ञानं तदेव विप्लवरूप तत्संस्काररहितत्वदशायां हानशब्दवाच्य कैवल्याख्यमोक्षोपाय इत्यर्थः ।

तन्मात्रेऽपि हि शुद्धचिन्मात्ररूपस्य ब्रह्मणः कर्त्तृत्वभोक्तृत्वारोपो ऽज्ञानकृतः । स च ज्ञाननिवर्त्तनीय "एव मेव हि" इत्मादि श्रुतेः ।

---

**मुद्रित पाठः —**

A– कृपणधीः परिणाममुदीक्षते क्षपितकल्मषधीस्तु विवर्त्तताम् ।
स्थिरमतिः पुरुषः पुनरीक्षते व्यपगतद्वितयं परमं पदम् ॥

संक्षेपशारीरक— २ । ८९

"ज्ञानादेव कैवस्य" मित्यादि श्रुतेः। स्मृतेश्च सामर्थ्याचावगतमिति ।

तस्याभ्यासेन पाके विरोधिसंस्कारनाशेऽज्ञाननाशेनातः कैवल्यमिति । यच्च प्राथमिकं शास्त्रीयं ब्रह्मज्ञानं तदेव संस्कारशेष विवेकख्याति: प्रसंख्यानं चोच्यते ।

यदुक्तम्—

"प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्याते-
धर्ममेघः समाधि"रिति । (४ । २९)

"ततः क्लेशकर्मनिवृत्ति" रिति । (४ । ३०)

सूत्राभ्यां प्रसंख्यानं प्राथमिकं प्रकृतिगुणाभिन्नत्वेनात्मज्ञानं तत्राप्यकुसीदस्य फलमलिप्सोः सर्वप्रकार विवेकख्यातेः परिशेषाद्धर्ममेघात् धर्मात्मज्ञानम् । मेहति सिञ्चति जनयतीति धर्ममेघ: समाधि: । प्रकृतिगुणेषु विवर्त्तबुद्धिरूप: समाधिर्भवति । अतः परं रागादिक्लेशाः कर्माणि च न कनकरोधिकार भावादिति ।

अतएवोक्तं—

"विशेषदर्शिन आत्मभावभावनानिवृत्तिः ।" (४।२५)

"तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तमिति ।"(४।२६)

प्राथमिक प्रसंख्यामात्र विवेकख्यात्यभिप्रायेण तथा ।

"तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ।" (४।२७)

इति संस्कारं दर्शयति । शास्त्रीयब्रह्मज्ञानमिवेदशं संप्रख्यानशब्देन तैरुच्यते । तदनन्तरं च—

"A प्रसंख्यानेऽप्यकुसीदस्ये"त्युक्तम् ।

---

**मुद्रित पाठः -**

A- प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्याते धर्ममेघ: समाधि: ।

पातञ्जल— ४ । २९

तत्र समाधिप्रकारः गीतायाम् — (६ । १०. १४)

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः । (१०)
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । (११)
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् । (१३)
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः । (१४)

संप्रेक्ष्य नासिकाग्रमिति अन्तर्लीनबहिर्दृष्टिरिति शाम्भवीमुद्रामपेक्ष्य। यद्वा नासाग्रलोचने ऋजुतां ज्ञात्वा पश्चान्निमीलनम् । श्रुतितत्पर्य्यालोचने ब्रह्मात्मनोरैक्यं ज्ञात्वा युक्तितस्तदेव निर्णीतं विचारयति ; अहं नित्यशुद्धचिन्मात्रः पूर्णानन्दमयः अन्तःकरणदेहादिपरिच्छिन्नमतिर्मयि विमृश्य विचार्य्यमाणे देहस्तावत् शिरःपाणिपादाद्यवयवः। त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रशिरामयः। एतेभ्यः पृथक् शरीरं वस्तु नास्ति। अत्र हि मांसादि पृथिवी। रक्तमूत्रादि जलम्। औदर्य्यवह्निस्तेजः। प्राणाद्या वायवः छिद्राण्याकाशः । घ्राणा अश्विनावेव । रसना च वरुणः । चक्षुः सूर्य्यः । त्वग वायुः । दिश श्रोत्रम् । मनश्चन्द्रः । वागग्निः । पादो विष्णुदेवतयः । पायुमित्रः। प्रजापतिरुपस्थः । तेन पृथिव्यादिमहाभूताश्विनादिदेवता परिच्छिन्नो विराडहम् । ब्रह्म स्थूलेष्वेषु प्रतिबिम्बदानेन बिम्बत्वावस्थितोऽनिरुद्धः। एवं विराड्रूपेण चिरं समाधिः। अयञ्च पातञ्जलैः संप्रज्ञातः समाधिः सवितर्काख्य उच्यते ।

अनेन शुद्धसत्त्वस्य पुनर्विचारः। यथा घटे भिन्ने कपालानि। कपाले-भिन्ने चूर्णम्। एवं सर्वस्थूलमूर्त्तिषु स्थूलरूपं विचारासहं सूक्ष्मावस्थैव सत्या । तेन सूक्ष्मरूपाणि लिङ्गशरीराणि भूतसूक्ष्माणि च सत्यानि । तेषु

प्रतिबिम्बितोऽहं हिरण्यगर्भदेहः सूत्रात्मा, तच्च प्रतिबिम्बदानेन बिम्बभूतं ब्रह्म प्रद्युम्न इति। एवं चिरं समाधिः। अयमेव पातञ्जलैः सविचाराख्यः संप्रज्ञातसमाधिरुच्यते।

अस्यां शुद्धौ सत्त्वशुद्ध्या पुनर्विचारः। यदि सूक्ष्माणि वस्तूनि स्युस्ततस्तेषां प्रलयेन विनाशो न स्यात्। कृतत्वान्यकृतागमप्रसङ्गात्म वासनाशेषा एव सर्वे भावाः। प्रलयो वासना च नामरूपाभ्यां वा क्रियते। तेन सुषुप्तौ प्रलये च वासनाविनाशे विद्या तत्प्रतिबिम्बितचैतन्यात्माप्रज्ञात्माहम्। अत्र प्रतिबिम्बदानेन चैतन्यं संकर्षणसमाधिश्चिरं कर्त्तव्यः। अयञ्च पातञ्जलैः सानन्द उच्यते। सुखमयान्तःकरणसंस्कारसम्बन्धात्। अत्र समाधौ सत्ता विदेहा उच्यते। देहाभिमानानिवृत्तेः।

अनेन शुद्धसत्त्वस्य पुनर्विचारः। वासनापि न विचारसहा। वस्तूनामनिर्वचनीयत्वे तज्जन्मवासनानां सुतरामनिर्वचनीयत्वात्। अज्ञानप्रतिबिम्बितो ब्रह्माभिन्नोऽहम्। ब्रह्मज्ञानविषयः वासुदेवाख्यः अनावृत्त ईश्वर इति चिरं समाधिः। अयं च पातञ्जलैः सास्मित इत्युच्यते। अस्मिताख्यसत्त्वप्रधान प्रतीकमात्रासम्बन्धात्। तत्र समाधौ सत्ता प्रकृतिलया उच्यते। प्रकृतावविद्यायां सर्वेषां लयात्।

अनेन शुद्धसत्त्वस्य पुनर्विचारः। शुद्धचिन्मात्रपूर्णानन्दब्रह्मणा ऐक्यमाह श्रुतिः। अज्ञानमेवावयोर्भेदप्रतिभासहेतुः। विचार्य्यमाणं चाज्ञानं न वस्तु भवितुमर्हति। तस्माच्चिन्मात्रः पूर्णः शुद्धोऽहम्। मयि यः संसारः पूर्वं प्रतिभातः स सर्वोऽज्ञानकृतः। अज्ञानं च न वस्तु इति तत्त्वं पदार्थशोधनम्। ब्रह्मापि नानिरुद्धः स्थूलभावे तदुपाधिकरूपाभावात्। एवं सूक्ष्माभावे तदुपाधिकं प्रद्युम्नत्वम्। संस्काराभावे तदुपाधिकं सङ्कर्षणत्वम्। अज्ञानाभावे च तदुपाधिकं वासुदेवत्वमव्याकृतत्वमीश्वरत्वञ्च नास्ति। शुद्धः पूर्णो नित्यानन्दचिन्मय आत्मा ब्रह्म इति तत्पदार्थशोधनम्। एतदनन्तरं ब्रह्माणमहं ब्रह्मेति वाक्यार्थरूपं ज्ञानम्। यत्र यावद् बाध्यत्वेनापि संस्कारः स्फुरति तावत्सविकल्पकपक्षपातः। अयमेव पातञ्जलै धर्ममेघसमाधिरुच्यते।

अभ्यास निःशेष संसार बीजं तत्संस्कारक्षयेऽहं ब्रह्मास्मीति केवल पूर्णानन्दचिन्मात्रविषयं चेज्ज्ञानं तदा निर्बीजः समाधि र्निर्विकल्पकोऽसंप्रज्ञातश्चोच्यते।

तदेतदुक्तम्—

"तस्यापि ^A^निरोधान्निर्बीजः समाधि"रिति। (१।५१)

पतञ्जलिना। अत्र समाधिर्द्वादशदिनपर्य्यन्तमेकरूपो निरन्तरः सेव्यमानः समाधिभावमापद्यते। तस्य चाभ्यासात् सर्ववासनाक्षये क्रमेणापराधो ह्यसाक्षात्काराद‌विद्या निवृत्तौ स्वत एव कैवल्यम्।

अथवा मन्त्रराजेन "वैरंचोक्त"रीत्या समाधिः। प्रथमपादः पृथिवी। द्वितीयपादो जलम्। तृतीयपादस्तेजः। चतुर्थपादो वायुः। समस्तो मन्त्र आकाशः। हुँ बीजं परमात्मा। तत्र प्रथमपादरूपायाः पृथिव्या जले लयः। द्वितीयपादात्मकजलस्य तेजसि लयः। तृतीयपादात्मकतेजसो वायौ। चतुर्थपादात्मकस्य वायोः समस्तमन्त्रात्मके आकाशे लयः। तस्याकाशस्य च समस्तमन्त्रात्मकस्य हुं बीजात्मके परमात्मनि लयः। इति पूर्णानन्दचिदात्मकोऽहमिति चिरं भावनम्।

तथान्यः प्रकारः उत्तरतापनीयश्रुतौ "नारसिंहेन वान्तरीयां जानीया" दित्युपक्रम्य समाधिप्रकार उक्तः। सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्वलः, अविद्याकार्य्यहीनः, स्वासनबन्धकरः, सर्वदा द्वैतरहितः आनन्दमयः सर्वाधिष्ठानचिन्मात्रः, निरस्ताविद्यातमोमोहोऽहमेवेति।

उग्रः सर्वसंहारसमर्थः। अविद्या तत्कार्य्यरूपसंस्कारस्य संहारे चित्स्वभाव आत्मा समर्थ इत्यर्थः। संहारसमर्थोऽपि निर्व्यापारो न संहरेदित्याशङ्क्य वीरपदेन ब्रह्माकारमनोवृत्तिकर्त्तृत्वेन सव्यापारत्वेन परिभवासहत्वमुक्तम्। नन्वेवं वृत्तिरेवाविद्यानाशिका स्यादित्याशङ्क्य बोध एव ज्ञाननाशे प्रभुरिति।

---

**मुद्रित पाठः—**

A- निरोधे सर्वनिरोधान्निर्बीजः—

नन्वज्ञाननाशकत्वे कथं सर्वसंहार इत्याशङ्क्य विष्णुवाक्यार्थव्याख्यानेन वारयति व्याप्त इति। आकाशे ब्रह्मणः सर्वत्र कारणत्वेन व्यापकत्वात्। अज्ञाननाशे सर्वनाश इत्यर्थः। बुद्धिविषयत्वाच्चेद्ब्रह्मणोऽज्ञाननाशकत्वं तदामोक्षानन्तरं धियोऽभावे पुनरज्ञानप्रसङ्ग इत्याशङ्क्य ज्वलन्तमिति पदव्याख्यया निराचष्टे सदोज्वल इति। स्वप्रकाशस्य स्वतएव तमो विरोधि संस्कारकाले चाज्ञानस्य सत्त्वाद् व्यावृत्तिरेव तन्निवर्त्तिका। स्वभावतस्तु स्वप्रकाशचिदात्मनि कुतोऽज्ञानमित्यर्थः।

संहर्त्तापि स्वदेहादिकं स्वकीयाऽनुरागादेव न संहरेदित्याशङ्क्य सर्वतोमुखशब्दार्थकथनेन वारयति। अविद्याकार्य्यहीनः। अविद्याकार्य्यं हि रागादिक परस्य भावाद्देहादिकमपि संहरेत्। चित्स्वभावस्य सर्वत्र चोपलब्धत्वेन तदविरोधिजं सर्वं संहार्य्यमित्यर्थः।

एवंविधः किमर्थं द्वैतजलं संहरेदित्याशङ्क्य नृसिंहपदार्थकथनेनोत्तरमाह। स्वात्मबन्धहर इति। नृपदं पुरुषपरम्। सिञ् बन्धने इति धातोर्बन्धनम्। नुः पुंसः सिं बन्धं हन्तीति नृसिंहः, स्मात्मबन्धहरः। स्वबन्धनाद्वैतं हरतीत्याशयः। नन्वेवं संसारः सत्य एवापतितः, कथमन्यथा तन्निर्णये प्रयास इत्याशङ्क्य भीषणपदार्थकथनेन वारयति, सर्वदा द्वैतरहित इति। असदेव द्वैतं बन्धनमुच्यते। सत्यत्वे नाशस्याशकत्वात्। द्वैतञ्च चित्स्वभावं स्वनाशभिया कदाचिन्न स्पृशति। तेन भयङ्करवाचिभीषणपदस्य सर्वदा द्वैतरहितत्वमित्यर्थः।

ननु द्वैतनाशे तन्मध्यगत विषयसुखनाशात्कथमत्र प्रवृत्तिरित्याशङ्क्य वारयन् भद्रपदार्थमाह आनन्दरूपः। अपरिमितसुखस्वरूपलाभेन विषयसुखवैराग्यमेवास्येत्यर्थः। ननु द्वैतावच्छेदेनेव चित्प्रकाशोपलब्धे द्वैतनाशे तन्नाशः स्याद् यथेन्धनाभिव्यञ्जकाग्निरिन्धननाशे नश्यतीत्याशङ्क्य मृत्युपदस्यार्थमाह। सर्वाधिष्ठानसन्मात्र इति। आनन्दस्यापि चैतन्यावधिरेवनाशोऽन्यथा निष्प्रमाणत्वापत्तेः। चितिनाशे यदि प्रमास्ति तदा सैव चितिनाशः। तदभावोऽचितिनाशो निष्प्रमाणकः। अज्ञानं मृत्युश्चिदात्मा। यस्मादेवं तस्मान्नमामि। मा प्रमा चितिः। मिञ् बन्धन इति बन्धकमज्ञानम्।

मिमाया चितेर्मिता अज्ञानमिति षष्ठीसमासः । नकारः प्रतिषेधार्थः मामि चित्यज्ञानं न नास्तीत्यर्थः। तस्यार्थमाह निरस्ता विद्या तमो मोह इति । निरस्तपदं नञर्थं व्याख्यातम् । मिपदस्यार्थोऽविद्या तमो मोह इति । अन्यपदार्थो माशब्दार्थः । एवं तत्पदार्थं विशोध्याहंपदार्थेनैक्यमहंपदेनोक्तमित्याह अहमेवेति । अहं पदसामान्याधिकरण्यादुग्रादिपदमपि प्रथमान्तम् । "व्यत्ययो बहुलमिति" न्यायात् । तापनीयवार्त्तिके तु सुरेश्वराचार्य्यशिष्येण सनन्दनाचार्य्येण सप्तम्यर्थे द्वितीयेत्युक्तम् । एतादृशे परमात्मनि मामि अज्ञानं नास्त्यहमेव स इति वाक्यार्थः ।

शङ्कराचार्य्यास्तु —

प्रणवेन समाधिमाहुः । वाक् हि मूलाधारे परा । हृदये पश्यन्ती । बुद्धियुता मध्यमा । कण्ठे वैखरी । वैखरीप्रणवानुसन्धानेन विशदात्मा भवेत् । ततो मध्यमाप्रणवध्यानेन हिरण्यगर्भे विराजो लयः । हिरण्यगर्भात्मा भूत्वा पश्यन्तीप्रणवेनाव्याकृतेश्वरे हिरण्यगर्भस्य लयः । ततः पराप्रणवेन सन्मात्रे परमात्मनीश्वरस्य लयं कृत्वा स्वयं सच्चिदानन्दपूर्णात्मा भूत्वा प्रणवेनैव ब्रह्मण्यैक्यं चिन्तयेत् ।

तदुक्तं पद्मपुराणेऽपि —

"एतं विदाह्य करणे करणं निदाने
तत् कारणेकरण कारणवर्जिते च ।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र
तं त्वां हरिं विशदबोधघनं नमामि ।"

विष्णुपुराणे (१।२०।२, ३) —

अहमेवाव्ययानन्तः परमात्मेति चिन्तयेत् । (२)
तस्य तद्भावनायोगात् क्षीणपापस्य वै क्रमात् ।

A शुद्धान्तःकरणे विष्णुस्तस्थौ ज्ञानमयोऽच्युतः । (३)

श्रुतिः । तमात्मानमिवावेद तं ब्रह्मास्मीति । ब्रह्मविद् ब्रह्मैव भवति ।

अत्र च धारणाध्यानसमाधानानां क्रियाणामेव विषयैकतानां संयमसञ्ज्ञां कृत्वा संयमस्य तत्र करणे विभूतयो दर्शिताः । तद्यथा—

"त्रयमेकत्र संयमः ।" (३ ४)

इत्यादिभिर्नवभिः सूत्रैः संयमस्य साकल्येन स्वरूपमुक्त्वा B भूतेन्द्रियेष्वित्यारभ्य त्रयोदशभिः सूत्रैः अतीतानागतसर्वप्राणिभावज्ञान-परचित्तज्ञान-देहान्तरज्ञान--मृत्युज्ञान-मैत्राद्युत्कर्ष-हस्त्यादिबलप्राप्तिसूक्ष्मव्यवहित -विप्रकृष्टज्ञानरूपान् नव सिद्धियोगाननुपयोगिनः अपि योगफलदर्शनेन मुख्यकैवल्यफले विश्वासाय प्रदर्श्य C सूर्य्यसंयमादित्यादिभिस्त्रिभिर्बाह्यसिद्धीः स्वर्गनरकभोगभूम्यादि भुवनज्ञान-चन्द्रताराव्यूहज्ञान तारकागतिज्ञानरूपा बाह्यसिद्धीः त्रिस्रः कथमपि वैराग्यादिद्वारा योगोपयोगिनीरुपदर्श्य -

"नाभिचक्रे कायव्यूहज्ञान" (३।२९)

मित्यादिचतुर्भिः कायगति-नाडीसंस्थानज्ञान-क्षुत्पिपासानिवृत्ति-देहस्थैर्य्य-सिद्धदर्शनरूपान्तरसिद्धः प्राणायामादिद्वारा योगोपयोगिनीमुपदर्श्य-

"प्रातिभाद्वा सर्वं" (३।३३)

मित्यादिभिरष्टभिः सूत्रैः सर्वविषयज्ञान-स्वचित्तपरचित्तवासनाज्ञानरूपख्याति-दिव्यविषयज्ञान-परशरीरप्रवेश-जलादिमज्जन—व्यवहितविप्रकृष्टशक्त्याहरण-व्योमगमन-बहिर्ज्वालागतवदहश्यत्व-चित्तमलक्षयलक्षणाः समाध्युपयोगिनीः अन्तःकरणबहिःकरणप्राणादिभवाः सिद्धीरुपदर्श्य-

"स्थूलस्वरूप सूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः। (३।३४)

---

मुद्रित पाठः —

A- शुद्धेऽन्तःकरणे ।

B- एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ।

पातञ्जल - ३ । १३

C- भुवज्ञानं सूर्य्ये संयमात् । पातञ्जल - ३ । २६

इत्यादिभिः सप्तभिः। साक्षात् समाधित्वे तु भूतम्। भूतजये-न्द्रियजयसत्त्वजयरूपाः सिद्धय उपदर्शिताः। अणिमा अणुत्वम्। महिमा-महत्त्वम्। लघुता तूलपिण्डवल्लघुत्वप्राप्तिः। गरिमा पर्वतवद् गुरुत्वम्। प्राप्तिरङ्गुल्यग्रेण चन्द्रादिस्पर्शनम्। प्राकाम्यम् इच्छानभिघातः। ईशित्वं सर्वत्रेच्छानभिघातः। वशित्वं सर्वे यस्य मतं नातिक्रामन्ति। यत्र कामाव-सायिता यत्रेच्छा तं विषयं समाप्तिपर्य्यन्तं नयत्याशु सिद्धीर्योगोपयोगिन्यः प्रदर्श्य-

"[A]वैराग्यादपिदोषबीजक्षये कैवल्यम्।" (३।५०)

इत्यादि-निखिल-सबीजसमाधिप्रारम्भो मधुमद्भूमौ योगविघ्नप्रसङ्गे तन्नि-वारणोपायः आसक्ताभावो गर्भाभावश्च।

"स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्।" (३।५१)

इत्यनेन दर्शिताः।

तत्र हि विघ्नार्थं देवा दिवि विषयेषु योगिनं प्रलोभयन्ति तद् विषयदोष-दर्शनं प्रतीकार इत्युक्तम्। शिष्टैश्चतुर्भिः सूत्रैः विवेकजज्ञानादिगुणसिद्धानां साक्षात् कैवल्योक्तप्रयोगः सूचितः इति तृतीयपादे। चतुर्थपादे तु योगे प्रवृत्तये योगफलं कैवल्यं प्रदर्श्यते। यद्यपि पूर्वपादे च-

"तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति विवेकजं ज्ञानम्।" (३।५४)

"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्य।" (३।५५)

मिति सूत्राभ्यां कैवल्यसाधनस्वरूपमपि चोक्तप्रायम्, तथापि तारकज्ञानस्य प्राथमशास्त्रीय-ब्रह्मज्ञानस्वरूपस्य भ्रमवासनानिवर्त्तकत्वा—त्तन्मात्रेण कैवल्यानुपपत्तेः कैवल्यस्वरूपस्य स्वमतेनोक्तप्रायत्वेपि मतान्तरेण शङ्कावारणं विना निर्णयाभावात्। सवासनभ्रमनाशकत्वं दृढ़भ्रमिकस्य ज्ञानस्य ज्ञानमात्रस्येति दर्शयितुं विवक्षितं च स्वमतसिद्धं कैवल्यं दर्शयितु-मारम्भः।

---

मुद्रित पाठः —

A- तद् वैराग्यादपि। पातञ्जल - ३।५०

ज्ञानस्य दृढभूमित्वं निर्वाहितम् । निवर्त्तनीयाभावे निवर्त्तनान्वेषण-वैयर्थ्यात् । संसारबीजवासनाभावं प्राचीनं दर्शयित्वा तन्निवर्त्तनशङ्क्यतां दर्शयितुम्—

"[A]कर्म शुक्लं कृष्णं योगिनस्त्रिविधमितरेषाम् ।" (४।७)

ततश्चित्तस्य क्षणिकत्वे किमाधारवासना जगत्कारणमित्याशङ्का-निराकरणाय वादं स्थापयितुम्—

"अतीतानागतं स्वरूपतोऽस्त्यध्व[B]भेदात्कर्मणः" (४।१२)

मित्यादीनि सूत्राणि । एवं चेद्वासनाऽस्ति तर्हि वासनैव ज्ञानोत्पत्तावर्थ एव नास्ति । व्यर्थश्च दुःखमूलोच्छेदाय प्रयत्न इत्याकांक्षां निवर्त्तयितुम्—

"वस्तुसाम्ये चित्तभेदात्तयो [C]र्विविक्तः पन्थाः ।" (४।१५)

इत्यादिभिरेकादशसूत्रैर्ज्ञानव्यतिरिक्तार्थस्वभावं प्रतिपाद्य तद्-दूषणोद्धारद्वारेण वासनासनं चित्तमेव सकलसंसारव्यवहारप्रवर्त्तक-मित्युक्तम् ।

एवं सति पुरुषवैयर्थ्यमाशङ्क्य पुरुषसन्निधानकृतमेव चित्तमित्युक्तम् ।

"तदसंख्येयवासनाभिश्चित्र" (४।२४)

मित्यादिनासूत्रेण । एवं संसारस्वरूपे दर्शिते तस्य हानमशक्यमिति कैवल्यस्वरूपस्यैव सम्भावनापदारोहणीयं नवभिः सूत्रैः । पूर्वकथितमेव सवासनादृढभूमिक ज्ञानस्यैव सवासनसंसारनिवर्त्तकमित्युक्तम् ।

"पुरुषार्थ [D]शून्यगुणानां प्रतिप्रसवः कैवल्यं
[E]स्वरूपनिष्ठा वा चितिशक्ति" (४।३४)

रिति सूत्रेण कैवल्यस्वरूपं निरूपितम् । अयमर्थः —

"तासामनादित्वं चाशिषो नित्यत्वा" (४।१०)

---

मुद्रित पाठः —

A- कर्माशुक्लाकृष्णं । B- भेदाद्धर्माणाम् । C- विभक्तः ।
D- शून्यानां गुणानां । E- स्वरूपप्रतिष्ठा ।

दितिसूत्रोक्तदिशा अनादिसंसारबीजमायानिबद्धानां गुणानां सत्त्वरजस्तमःप्रवृत्तिरनुलमपरिणामरूपः संसारः। यदा च दृढभूमिक विवेकख्यात्या संसारबीजमायानाशस्तथा रागद्वेषाभावे प्रवृत्यनुत्पत्तौ धर्माधर्मरूपवासनानुत्पत्तौ देहान्तरारम्भे पूर्वपुण्यापुण्य ज्ञानावेशारम्भे कायव्यूहेन प्रारब्धभोगेन क्षये निःशेषचित्तसंस्कारनाशे चित्तस्यापि स्वकारणे निरोधात् पुरुषः केवलः शून्योऽवतिष्ठते। स्वरूपनिष्ठा वा चिच्छक्तिरिति लक्षणान्तरम्। किन्तु चित्तव्यापारोपरमस्यैव शब्दद्वयेनोपादानम्। तन्मात्रस्वरूपेण वृत्तिसारूप्यत्यागेनावस्थानं स्वरूपनिष्ठा। अत्र चानन्दस्वरूपस्यानपवादात्। तत् प्रति पुरुषख्यातेर्गुणवैतृष्ण्यमिति परवैराग्यपरसूत्रे च पुरुषज्ञानस्य दुःखमयगुणवैराग्यहेतुत्वकथनात्। सुखस्वरूपं विना च तदसम्भवात्। "विज्ञानमानन्दं ब्रह्म"। "आनन्दो ब्रह्म"। 'यद्येष आनन्दो न स्यात्'। "आनन्दं ब्रह्मणो विद्वान्" इत्यादिश्रुतिसहस्रप्रामाण्यादानन्दमय एवात्मा मोक्ष इत्यग्निचिद्वाजपेयिनरसिंह विरचितो नित्याचारप्रदीपोऽस्तु नरसिंहस्य तुष्टये —

अत्यच्छकौत्सकुलसम्भवसाग्निचित्य-
यज्वा धराधरबुधः स्थित उत्कलेषु।
तन्त्रे रहस्यमवबोधयितुं स्वकीये
किं जैमिनिः स्फुटमसौ कलितावतारः।
विद्याविवेकविनयादिभिरद्वितीय-
स्तस्याथ सूनुरुदियाय मुरारिमिश्रः।
नीलाद्रिनाथचरणाम्बुजसेवकेन
तस्यात्मजेन रचितोऽयमिह प्रदीपः।



इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे अहोरात्रकृत्यं समाप्तम्।

॥ इतिशम् ॥

Printed at Sri Narayan Press, PURI – 752001.